श्रीः

# ऋक्संहिता

## सायणाचार्यविरचितभाष्यसहिता

पदपाठयुताच.

इयंच

तत्त्वविवेचकग्रंथप्रसारकसमित्याप्रेरितः तुकारामतात्याभिख्यः,

गणपतकृष्णाजीमुद्रायंत्रालयाधिपतिः आत्मारामकान्होबाभिख्यः,

इत्येताभ्यां

**बोडसोपाह्वमहामहोपाध्यायराजारामशास्त्रि,**

**गोरेइत्युपाभिधशिवरामशास्त्रिभ्यांशोधयित्वा**

मुंबय्यां

गणपतकृष्णाजीमुद्रायंत्रालयेमुद्रयित्वा

प्रकाशिता.

## तस्याअयंतृतीयोष्टकः


शकाब्दाः १८१०

## ॥ श्रीगणेशायनमः ॥



वागीशाद्याःसुमनसःसर्वार्थानामुपक्रमे । यंनत्वाकृतकृत्याःस्युस्तंनमामिगजाननम् ॥ १ ॥

यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत् । निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥ २ ॥

सोमस्येत्यनुवाकेद्वादशसूक्तानि तत्रप्रयआरुरितिएकादशर्चंसप्तमंसूक्तम् मण्डलद्रष्टाविश्वामित्रऋषिः अनुक्तत्वात् त्रिष्टुप्छन्दः मण्डलादिपरिभाषयाग्निर्देवता प्रातरनुवाकाश्विनशस्त्रयोःसूक्तत्रयस्य प्रत्यग्निरुषसस्त्रीणीतिविनियोगउक्तः तत्रेदंतृतीयंसूक्तम् ।

तस्मिन्नियमृक्प्रथमा—

**ॐम् प्रयआरुःशितिपृष्ठस्यधासेरामातराविविशुःसप्तवाणीः ।**
**परिक्षितापितरासंचरेतेप्रसंस्रातेदीर्घमायुःप्रयक्षे ॥ १ ॥**

प्र । ये । आरुः । शितिऽपृष्ठस्य । धासेः । आ । मातरा ।
विविशुः । सप्त । वाणीः । परिऽक्षिता । पितरा । सम् । चरेते इति ।
प्र । सस्रांते इति । दीर्घम् । आयुः । प्रऽयक्षे ॥ १ ॥

शितिपृष्ठस्यनीलपृष्ठस्यधासेः सर्वस्यधारयितुरग्नेर्येरश्मयः प्रारुः प्रकर्षेणोद्गच्छन्ति ते रश्मयः मातरा मातरौ द्यावापृथिव्यौआविविशुः सर्वतःप्रविष्टाः सप्तसर्पणस्वभावाः वाणीः वननीयाः नदीश्चाविविशुः । परिक्षितापरितोवर्तमाने पितरापितरौ द्यावापृथिव्यौतेनाग्निनासञ्चरेते सम्यग्व्यवहरतः तथाप्रयक्षे प्रकर्षेणयष्टुं दीर्घमायुश्चिरंजीवनं प्रभूतमन्नंवा प्रसस्रातेप्रसारयतः संपादयतइत्यर्थः यद्वा द्यावापृथिव्यौ प्रयक्षे प्रकर्षेणसततंयष्टुर्यजमानस्यदीर्घमायुः संपादयतः ॥ प्र निपातत्वेनआद्युदात्तः तस्यछन्दसिव्यवहिताश्चेतिप्राक्प्रयोगःआरुःइत्यनेनसम्बन्धः । आरुः ऋगतौ लिटयुसिरूपम् यद्वृत्तयोगादनिघातः प्रत्ययस्वरः । शितिपृष्ठस्य पृष्ठशब्दस्थक्प्रत्ययान्तोन्तोदात्तः शितेर्नित्याबह्वज्बहुव्रीहावभसदितिउत्तरपदप्रकृतिस्वरत्वम् । धासेःडुधाञ्धारणपोषणयोः धेट्पानेवा तस्मात्कर्तरिऔणादिकःसिः प्रत्ययस्वरः मातरा नप्तृनेष्टृत्वष्टृ-

तृहोतृपोतृभ्रातृपितृजामातृदुहितृइतितृजन्तत्वेननिपातनादन्तोदात्तः ऋतोङीतिगुणः सुपांसुलुगितिसुपोडादेशः । विविशुः विशप्रवेशने लिटि असंयोगाल्लिट्किदितिकिद्वद्भावाद्गुणाभावः निघातः । सप्त सृप्लृगतौ सप्यशूभ्यांतुट्चेतिसर्पेर्विधीयमानःकनिन्तुडागमश्च बाहुलकादेतस्यापि भवति ऋकारस्याकारश्च नित्त्वेपिव्यत्ययेनान्तोदात्तत्वम् । परिक्षिता क्षिनिवासगत्योःक्विप्चेति क्विप् पित्त्वात्तुगागमः प्रादिसमासः कृदुत्तरपदप्रकृतिस्वरत्वम् सुपांसुलुगितिसुपोडादेशः । चरेते चरगतिभक्षणयोः संपूर्वाच्चरतेः समस्तृतीयायुक्तादित्यात्मनेपदं निघातः । सर्त्राते सृगतौअयमन्तर्भावितण्यर्थः रेफश्छान्दसः ईदूदेदितिप्रगृह्यसंज्ञा निघातः । आयुः इण्गतौ छसिन्नित्यनुवृत्तौएतेर्णिच्चेत्युसिन् णित्त्वाद्वृद्धिः नित्त्वादाद्युदात्तः । प्रयक्षे यजदेवपूजासङ्गतिकरणदानेषु इत्यस्मात्तुमर्थेसेन्प्रत्ययः प्रादिसमासः कृदुत्तरपदप्रकृतिस्वरत्वम् कृन्मेजन्तइत्यव्ययसंज्ञायामव्ययादाप्सुपइतिसुपोलुक् ॥ १ ॥

अथाद्वितीया–

**दिवक्षसोधेनवोवृष्णोअश्वांदेवीरातस्थौमधुमद्वहन्तीः ।**
**ऋतस्यत्वासदसिक्षेमयन्तंपर्येकाचरतिवर्तनिंगौः ॥ २ ॥**

**दिवक्षसः । धेनवः । वृष्णः । अश्वाः । देवीः । आ । तस्थौ । मधुऽमत् । वहन्तीः । ऋतस्य । त्वा । सदसि । क्षेमऽयन्तम् । परि । एका । चरति । वर्तनिम् । गौः ॥ २ ॥**

वृष्णःकामानांवर्षितुरग्नेः अश्वावाहनरूपारोहिताः दिवक्षसः दिवंव्याप्यवर्तमानाधेनवः अग्नेः प्रीणयित्र्योभवन्ति सोयमग्निः मधुमत् माधुर्योपेतमुदकंवहन्तीः देवीः द्योतनशीलानदीः आतस्थौआतिष्ठति प्राप्नोतीत्यर्थः गोशब्दोमाध्यमिकवाग्वाची माध्यमिकांवाचमितिनैरुक्ताइत्यभिधानात्[1] । एकागौः काचिदुक्तविधावाक् ऋतस्योदकस्यसदसिस्थानेन्तरिक्षे क्षेमयन्तं क्षेममात्मानमिच्छन्तंवर्तनिंज्वालाः प्रवर्तयन्तंत्वा हेअग्नेत्वां परिचरतिसेवते ॥ दिवक्षसः वक्षव्याप्तौ दिवंव्याप्नुवन्तीतिदिवक्षसः वक्षरोषे रोषार्थोप्ययंधातुःअत्रव्याप्तौवर्तते दिवंवक्षन्ति व्याप्नुवन्ति सर्वधातुभ्य असुन्नित्यसुन्प्रत्ययः लोपोव्योर्वलीतिवलोपः कृदुत्तरपदप्रकृतिस्वरत्वम् । धेनवः धु-

---

[1] नि० २. ९. ।

रित्यनुवृत्तौ धेटश्चेतिनुप्रत्ययः इकारस्यगुणः प्रत्ययस्वरः । वृष्णः वृषसेचने कनिन्युवृषित-क्षिराजीत्यादिनाकनिन् कित्त्वाद्गुणाभावः नित्त्वादाद्युदात्तः । अश्वाः अशूव्याप्तौ अशूप्रुषिलटि-कणीत्यादिनाक्वन् नित्त्वादाद्युदात्तः । तस्थौ ष्ठागतिनिवृत्तौ छन्दसिलुङ्लङ्लिटइतिवर्तमाने लिट् आतऔणलइत्यौकारः निघातः । मधुमत् निदित्यनुवृत्तौ फलिपाटिनमिमनिजनामित्यादिनामनेरुप्रत्ययः तत्संनियोगेननकारस्यधकारः नित्त्वादाद्युदात्तः । त्वा युष्मच्छब्दस्यद्वितीयैकवचनान्तस्य त्वामावितित्वाआदेशः अनुदात्तश्च । क्षेमयन्तम् क्षिनिवासगत्योः अर्तिस्तुसुहुसृधृक्षीत्यादिनामन् क्षेममावासमात्मनइच्छन्तं सुपआत्मनःक्यजितिक्यच् क्यचिचेतीत्वम् अकृत्सार्वधातुकयोर्दीर्घत्वंच नच्छन्दस्यपुत्रस्येतिप्रतिषिध्यते क्यचश्चित्त्वादन्तोदात्तः तदन्ताच्छतृप्रत्ययः शप् शपःपित्त्वादनुदात्तत्वम् शतुश्चसार्वधातुकस्वरेणतयोःक्यचासहैकादेशेकृते एकादेशउदात्तेनोदात्तइत्येकादेशउदात्तः अम् सुप्त्वादनुदात्तः उदात्तादनुदात्तस्येत्यमःस्वरितत्वम् । एका इण्गतौ इण्भीकापेत्यादिनाकन् तदन्ताट्टाप् नित्स्वरः । वर्तनिम् वृतुवर्तने अन्तर्भावितण्यर्थः वृतेश्चेत्यनिः गुणः व्यत्ययेनान्तोदात्तत्वम् । गौः गम्लृगतौ गमेर्डोइतिडोप्रत्ययः डित्त्वाट्टिलोपः गोतोणिदिति सुपोणित्त्वाद्वृद्धिः प्रत्ययस्वरः ॥ २ ॥

अथतृतीया–

**आ सीमरोहत्सुयमा भवन्तीः पतिश्चिकित्वान्रयिविद्रयीणाम् ।**
**प्र नीलपृष्ठो अतसस्य धासेस्ता अवासयत्पुरुधप्रतीकः ॥ ३ ॥**

आ । सीम् । अरोहत् । सुऽयमाः । भवन्तीः । पतिः । चिकित्वान् । रयिऽवित् । रयीणाम् । प्र । नीलऽपृष्ठः । अतसस्य । धासेः । ताः । अवासयत् । पुरुधऽप्रतीकः ॥ ३ ॥

रयीणां रयिवित् धनानांमध्येविशिष्टधनस्यलम्भयिता चिकित्वान् ज्ञानवान्पतिः अश्वानांपतिरग्निः सीं सर्वतः सुयमाः सुखेननियन्तुंशक्याभवन्तीः यावडवाः आरोहत् आरोहयति स्म नीलपृष्ठः पुरुधप्रतीकः बहुधाविक्षिप्ताङ्गः सोग्निरेवअतसस्यसततगमनस्यधासेः पोषणार्थं ताअश्वाः प्रावासयत् प्रकर्षेणवासयतिस्म निवासेनश्रमेपनीतेसततगमनंपोषयितुंशक्यमित्यर्थः ॥ सीं चादयोनुदात्ताइत्यनुदात्तः । अरोहत् रुहप्रादुर्भावे लङिरूपं निघातः । सुयमाः यमुउपरमे

अस्माच्छन्दस्यार्थेईषद्दुःसुषुइतिखल् कृदुत्तरपदप्रकृतिस्वरत्वम् । पतिः पारक्षणे पातेर्डतिरिति डित्त्वाट्टिलोपः प्रत्ययस्वरः । चिकित्वान् कितज्ञाने क्वसौरूपम् । रयिवित् विद्लृलाभे क्विप् । रयीणाम् नामन्यतरस्यामितिविभक्तेरुदात्तत्वम् । नीलपृष्ठः नीलशब्दोवृषादित्वादाद्युदात्तः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । अतसस्य अतसातत्यगमनेइत्यस्मादत्यविचमितमिनमिरभिलभितपिपतिपनिपाणिमहिभ्यइत्यसन् चित्स्वरः । अवासयत् वसनिवासे हेतुमतीति णिच् लुङ्लङ्लृङ्क्ष्वित्यडागमः तिङ्ङतिङइतिनिघातः । पुरुप्रतीकः पुरुशब्दइहसंख्यावाची संख्यायाविधार्थेधेतिधाप्रत्ययः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ह्रस्वश्छान्दसः ॥ ३ ॥

अथचतुर्थी—

**महिंत्वाष्ट्रमूर्जयन्तीरजुर्यंस्तंभूयमानंवहतोवहन्ति ।**
**व्यङ्गेभिर्दिद्युतानःसधस्थएकामिवरोदसीआविवेश ॥ ४ ॥**

महि । त्वाष्ट्रम् । ऊर्जयन्तीः । अजुर्यम् । स्तभुऽयमानम् । वहतः । वहन्ति । वि । अङ्गेभिः । दिद्युतानः । सधऽस्थे । एकाम्ऽइव । रोदसी इति । आ । विवेश ॥ ४ ॥

ऊर्जयन्तीरवलंबलिनंकुर्वन्त्यः वहतः वहनपरानद्यः महि महान्तं त्वाष्ट्रं त्वष्टुःसुतमजुर्यं जरयितुमनर्हं स्तभूयमानंलोकानांस्तम्भनं धारणमिच्छन्तमग्निंवहन्ति धारयन्ति सधस्थे अपांसमीपेअङ्गेभिरवयवैः दिद्युतानः दीप्यमानःसन्नग्निः रोदसी द्यावापृथिव्यौ व्याविवेशविविधंप्रविष्टवान् रोदस्योः प्रवेशनेदृष्टान्तः —एकामिव यथापुमानेकांस्त्रियंप्रविशतितद्वत् ॥ त्वाष्ट्रं त्वष्टुरपत्यमित्यर्थे तस्यापत्यमित्यण् प्रत्ययस्वरः । स्तभूयमानं स्तभुस्तम्भनंतदिच्छन्तंसुपआत्मनःक्यच् अकृत्सार्वधातुकयोरितिदीर्घः तदन्ताद्व्यत्ययेनशानच् अकारान्तत्वादानेमुक् शानचोलसार्वधातुकस्वरेणानुदात्तत्वेकृतेक्यजन्ताद्धातुस्वरःशिष्यते । अङ्गेभिः बहुलंछन्दसीतिभिसऐसादेशाभावः बहुवचनेझल्येदित्येत्वम् । दिद्युतानः द्युतदीप्तौ छन्दसिलिट् तस्यकानजादेशः द्विर्वचनं हलादिशेषेकृते द्युइत्येतस्याभ्यासस्यद्युतिस्वाप्योःसम्प्रसारणमितिसम्प्रसारणम् सम्प्रसारणाच्चेतिपूर्वरूपत्वं चित्त्वादन्तोदात्तत्वम् । एकामिव इवेनसमासोविभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वंचेतिवचनात्पूर्वपदप्रकृतिस्वरः । विवेश विशप्रवेशनेइत्यस्माल्लिटिरूपं निघातः ॥ ४ ॥

अथपञ्चमी—

जानन्तिवृष्णोअरुषस्यशेवमुतब्रध्नस्यशासनेरणन्ति ।
दिवोरुचःसुरुचोरोचमानाइळायेषांगण्यामाहिनागीः ॥५॥१॥

जानन्ति । वृष्णः । अरुषस्य । शेवम् । उत । ब्रध्नस्य । शासने । रणन्ति । दिवःऽरुचः । सुऽरुचः । रोचमानाः । इळा । येषाम् । गण्या । माहिना । गीः ॥ ५ ॥ १ ॥

वृष्णः कामानांवर्षितुः अरुषस्यरुषाहिंसकास्तद्रहितस्यशत्रुराहित्येनरोचमानस्येत्यर्थः तथाविधस्याग्नेः सम्बन्धिशेवमाश्रयविषयंसुखंजनाजानन्ति उतापिच जानन्तस्तेब्रध्नस्य महतोग्नेःशासनेआज्ञायां सर्वेजनारणन्तिरमन्ते तथाचमन्त्रः—अस्यशासुरुभयासःसचन्तेहविष्मन्तउशिजोयेचमर्ताइति । अपिचयेषांमनुष्याणामग्निविषयामाहिनामहतीइळागीः स्तुतिरूपावाक्गण्यागणनीयापूज्या तेदिवोरुचः द्युलोकस्यरोचकाः सुरुचः शोभनदीप्तयः रोचमानाः देदीप्यमानाभवन्ति ॥ जानन्ति ज्ञाअवबोधने क्र्यादित्वात्तस्यज्ञाजनोर्जातिजादेशः प्रत्ययस्वरः । अरुषस्य रुषरिषहिंसार्थाः रोषन्तीतिरुषाहिंसकाः इगुपधेतिकः नसन्तिरुषायस्यासावरुषः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । शेवम् शीङ्स्वप्ने इण्शीङ्भ्यांवन्निति वन् नित्स्वरः । शासने शासुअनुशिष्टौ अस्माद्भावेल्युट् लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् । रणन्ति निघातः । दिवोरुचः रुचदीप्तौ अस्मात्क्विप् तत्पुरुषेकृतिबहुलमितिषष्ठ्याअलुक् कृदुत्तरपदप्रकृतिस्वरत्वम् । सुरुचः बहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । इळा ईडस्तुतौ ह्रस्वश्छान्दसः पृषावाक्शब्दष्टाबन्तस्तद्वत् पित्त्वादनुदात्तत्वेधातुस्वरः । गण्या गणसंख्याने स्वार्थेण्यन्तादचोयत् यतोनावइत्याद्युदात्तत्वम् । माहिना महेरिनण्चेतीनण् णित्त्वादुपधावृद्धिः व्यत्ययेनाद्युदात्तः । गीः गृशब्दे अस्मात्क्विप् ऋतइद्धातोरितीत्वम् र्वोरुपधायादीर्घः प्रातिपदिकस्वरः ॥ ५ ॥

॥ इतितृतीयस्यप्रथमेप्रथमोवर्गः ॥ १ ॥

अथषष्ठी—

उतोपितृभ्यांप्रविदानुघोषंमहोमहद्भ्यामनयन्तशूषम् ।
उक्षाहयत्रपरिधानमक्तोरनुस्वंधामंजरितुर्ववक्ष ॥ ६ ॥

---

१ ऋ० सं० १. ४. २६. ।

उतो इति । पितृऽभ्याम् । प्रऽविदा । अनु । घोषम् । महः ।
महत्ऽभ्याम् । अनयन्त । शूषम् । उक्षा । ह । यत्र । परि । धानम् ।
अक्तोः । अनु । स्वम् । धाम । जरितुः । ववक्ष ॥ ६ ॥

उतोअपिचमहोमहद्भ्यांमहतोमहद्भ्यांपितृभ्यां द्यावापृथिवीभ्यांप्रविदा प्रवेदनेनअनुघोषं अनुघुष्यमाणं शूषंसुखम् शूषंशुनमितिसुखनामसुपाठात् तत्सुखंयजमानाअग्निमनयन्त अग्निंप्रापितवन्तः सोग्निः यत्रयजमानेषुउक्षावृष्ट्युत्पादनेनोदकस्य सेक्ता अक्तोः अक्तुशब्दोरात्रिमाचष्टे शर्वरीअक्तुरितितन्नामसुपाठात् अज्यतोसिच्यतेनीहारेणजगदस्यामितिव्युत्पत्तेश्च तस्यारात्रेः परिधानंपरितोधारकं स्वमात्मीयंधामतेजः जरितुः स्तोतुः स्तुतिश्रवणार्थम् अनुववक्षह समीपेवहतिखलु संनिहितंकरोतीत्यर्थः ॥ उतो ओदितिप्रगृह्यसंज्ञा एवमादित्वादन्तोदात्तः । घोषम् घुषिर्शब्दने अस्मात्कर्मणिघञ् लघूपधगुणः ञित्स्वरः । महः अकारतकारयोर्लोपश्छान्दसः बृहन्महतोरुपसंख्यानमितिविभक्तेरुदात्तत्वम् । अनयन्त णीञ्प्रापणे इत्यस्यलङिरूपं निघातः । उक्षा उक्षसेचने श्वन्नुक्षन्नित्यादिनाकनिन्प्रत्ययान्तत्वेनोक्षन्शब्दोनिपातितः व्यत्ययेनान्तोदात्तः । ह चादित्वादनुदात्तः । यत्र लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् । अक्तोः अञ्जूव्यक्तिम्रक्षणेष्वित्यस्मात्त्र्याज्यर्तिभ्यःक्तुरितिक्तुः कित्त्वादनिदितामितिनलोपः प्रत्ययस्वरः । ववक्ष वहप्रापणे छन्दसिलुङ्लङ्लिटइतिवर्तमानेलिट् सकारश्छान्दसः तिपोणलादेशः लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् ॥ ६ ॥

अथसप्तमी–

अध्वर्युभिःपञ्चभिःसप्तविप्राःप्रियंरक्षन्तेनिहितंपदंवेः ।
प्राञ्चोमदन्त्युक्षणोअजुर्यादेवादेवानामनुहिव्रतागुः ॥ ७ ॥

अध्वर्युऽभिः । पञ्चऽभिः । सप्त । विप्राः । प्रियम् । रक्षन्ते ।
निऽहितम् । पदम् । वेरिति वेः । प्राञ्चः । मदन्ति । उक्षणः ।
अजुर्याः । देवाः । देवानाम् । अनु । हि । व्रता । गुरिति गुः ॥७॥

उद्गातृवर्गव्यतिरिक्ताद्वादशर्त्विजोभवन्ति तत्रसप्तवषट्कर्तारः पञ्चान्येध्वरंनयन्ति तैः पञ्चभिरध्वर्युभिःसहसप्तविप्रामेधाविनोहोत्रकावेःगमनस्वभावस्याग्नेः प्रियंनिहितमाहवनीया-

स्वंपदंरक्षन्तेपालयन्ति प्राञ्चःसोमपानार्थंप्राङ्मुखागच्छन्तः अजुर्याः जरयितुमशक्याः उक्षणः सोमरसस्यसेक्तारः देवाः स्तोतारःमदन्तिहृष्यन्ति किञ्च तेदेवाःदेवानांसंबन्धीनिव्रतानिव्रता-नियज्ञान्अनुगुः अन्वगच्छन् हिप्रसिद्धौ अग्नेःप्रसादाद्देवायज्ञानलब्धवन्तइत्यर्थः ॥ रक्षन्ते र-क्षपालनेव्यत्ययेनात्मनेपदं निघातः । निहितं डुधाञ्धारणपोषणयोरित्यस्यकर्मणिनिष्ठायां दधातेर्हिरितिहिरादेशः गतिरनन्तरइतिगतेःपूर्वपदप्रकृतिस्वरत्वम् । वेः वीकान्तिगत्यादिषु अ-स्माद्विच् सार्वधातुकार्धधातुकयोरितिगुणः ङसिङसोश्चेतिपूर्वरूपत्वम् । प्राञ्चः अनिगन्तोञ्चता-वितिपूर्वपदप्रकृतिस्वरत्वम् । मदन्ति मदीहर्षे निघातः । गुः इणगतावित्यस्माल्लुङिरूपम् इणो-गालुङीतिगादेशः आतइतिझेर्जुसादेशः बहुलंछन्दसीत्यडभावः हिशब्दयोगान्ननिहन्यते ॥ ७ ॥

अथाष्टमी—

**दैव्याहोताराप्रथमान्यृञ्जेसप्तपृक्षासःस्वधयामदन्ति ।**
**ऋतंशंसन्तऋतमित्तआहुरनुव्रतंव्रतपादीध्यानाः ॥ ८ ॥**

दैव्या । होतारा । प्रथमा । नि । ऋञ्जे । सप्त । पृक्षासः । स्वधया । मदन्ति । ऋतम् । शंसन्तः । ऋतम् । इत् । ते । आहुः । अनु । व्रतम् । व्रतपाः । दीध्यानाः ॥ ८ ॥

दैव्यादैव्यौदेवतारूपौ होताराहोतारौ होमनिष्पादकौ प्रथमाप्रथमौमुख्यौ इमंचामुंचाग्नी न्यृञ्जे ऋञ्जतिःप्रसाधनकर्मेतियास्कः मंत्रद्रष्टाविश्वामित्रोहं प्रसाधयामि सप्तपृक्षासः सप्तहोत्र-काः स्वधयासोमेनमदन्तिहृष्यन्ति ऋतंस्तोत्रंशंसन्तोव्रतपाः व्रतस्ययज्ञकर्मणोरक्षितारः दीध्यानाः दीप्यमानास्तेहोत्रकाः अनुव्रतंयज्ञकर्मणिऋतमित्सत्यमेवाग्निमाहुःवदन्ति ॥ ऋञ्जे ऋजिभृजी भर्जने निपूर्वोयंधातुःप्रसाधनेवर्तते निघातः । स्वधयास्वंलोकंयजमानस्यदधातिविदधातीति स्वधासोमः आतोनुपसर्गेकइतिकप्रत्ययःकृदुत्तरपदप्रकृतिस्वरत्वम् । आहुः ब्रूञ्व्यक्तायांवाची-त्यस्यलटिब्रुवःपञ्चानामादितआहोब्रुवइतिझेरुसादेशः ब्रुवश्चाहादेशः निघातः । दीध्याना दीधीङ्दीप्तिदेवनयोरित्यस्मात्शानच् तस्यचित्त्वादन्तोदात्तत्वेप्राप्तेअभ्यस्तानामादिरित्याद्यु-दात्तत्वम् ॥ ८ ॥

अथनवमी—

वृषायन्तेमहेअत्यायपूर्वीर्वृष्णेचित्रायरश्मयःसुयामाः ।
देवहोतर्मन्द्रतरश्चिकित्वान्महोदेवान्रोदसीएहवक्षि ॥ ९ ॥

वृषऽयन्ते । महे । अत्याय । पूर्वीः । वृष्णे । चित्राय । रश्मयः ।
सुऽयामाः । देव । होतः । मन्द्रऽतरः । चिकित्वान् । महः ।
देवान् । रोदसी इति । आ । इह । वक्षि ॥ ९ ॥

देवदेदीप्यमान होतः देवानामाह्वातः हेअग्ने महेमहतेअत्यायसर्वानप्यतिक्रम्यवर्तमानाय चित्रायनानाविधवर्णाय यद्वा चित्रायदेवैश्चायनीयायपूज्यायवृष्णेकामानांवर्षित्रेतुभ्यंत्वदर्थंपूर्वीः प्रभूताःसुयामाःअतिशयेनविस्तृतारश्मयःसर्वतोव्यापताज्वालाः वृषायन्ते वृषेवाचरन्ति सेचकाइवभवन्ति होतारः ज्वालाभिः समिद्भमग्निंदध्नासोमाज्यपयःप्रभृतीनिहवींषितत्रप्रक्षिपन्तीतिज्वालानांवृषत्वम् यद्वाषष्ठ्यर्थेचतुर्थी तथाचमहतोऽत्यस्यचित्रस्यवृष्णोऽग्नेर्बहवोरश्मयोवृषेवाचरन्ति वृष्ट्युत्पादनद्वारापर्जन्यवदाचरन्तीत्यर्थः अपिचमन्द्रतरः यजमानस्यमादयितृतमः चिकित्वानज्ञानोपेतः सत्वंमहःमहतःपूज्यान्यष्टव्यान्देवान्रोदसीद्यावापृथिव्योचइहवैदिकेऽस्मिन्कर्मणिआवक्षि आवह ॥ वृषायन्ते उपमानादित्यनुवृत्तौकर्तुःक्यङ्सलोपश्चेतिक्यङ् अकृत्सार्वधातुकयोरितिदीर्घः पादादित्वान्ननिघातः धातुस्वरः । महे अकारतकारयोर्लोपश्छान्दसः बृहन्महतोरितिविभक्तेरुदात्तत्वम् । पूर्वीः पॄपालनपूरणयोरित्यस्मात्कुरित्यनुवृत्तौपॄभिदिव्यधिगृधीत्यादिनाकुप्रत्ययः कित्वाद्गुणप्रतिषेधेउदोष्ठ्यपूर्वस्येत्युत्वम् उरण्रपरः तस्माद्वोतोगुणवचनादितिङीष् यणादेशेकृतेहलिचेतिदीर्घः वाछन्दसीतिसवर्णदीर्घः । रश्मयः अशूव्याप्तौ अश्नुवतेसर्वंजगादितिमिरित्यनुवृत्तौअशेरशंचेतिमिप्रत्ययः रशादेशश्च प्रत्ययस्वरः । सुयामाः यमनंयामः भावेघञ् बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । देव अपादादावितिपर्युदासत्वात्षाष्ठिकमाद्युदात्तत्वम् । होतः ह्वयतेस्ताच्छील्किस्तृन् बहुलंछन्दसीतिसम्प्रसारणम् अपादाद्यामन्त्रितत्वान्निघातः । मन्द्रतरः मदिस्तुत्यादिषु स्फायितञ्चिवञ्चीत्यादिनारक् इदित्वान्नुम् तरपःपित्वादनुदात्तत्वेरक्प्रत्ययस्वरः । वक्षि वहप्रापणेइत्यस्यबहुलंछन्दसीतिशपोलुक् ढत्वकत्वषत्वानि निपातः ॥ ९ ॥

पृक्षप्रयजोद्रविणःसुवाचःसुकेतवउषसोरेवदूषुः ।
उतोचिदग्नेमहिनापृथिव्याःकृतंचिदेनःसंमहेदशस्य ॥ १० ॥

पृक्षऽप्रयजः । द्रविणः । सुऽवाचः । सुऽकेतवः । उषसः । रेवत् । ऊषुः । उतो इति । चित् । अग्ने । महिना । पृथिव्याः । कृतम् । चित् । एनः । सम् । महे । दशस्य ॥ १० ॥

हे द्रविणः द्रवतिसततंगच्छतीतिद्रविणशब्देनाग्निरभिधीयते द्रविणः सततगमनस्वभावहेअग्ने पृक्षप्रयजः पृक्षाणिहविर्लक्षणान्यन्नानि प्रकर्षेणयष्टुं प्रक्रम्यन्ते यासूषःसु ताः पृक्षप्रयजः सुवाचः प्रातरनुवाकादिशोभनावाचोयासांताः सुकेतवः वयसांमनुष्याणांचशब्दैः सुप्रज्ञानाः एवंविधाउषसः रेवत् अस्माकंधनयुक्तं यथाभवतितथाऊषुः व्युच्छन्ति उतोचित् अपिच हेअग्ने पृथिव्याः विस्तीर्णायाः ज्वालायाः महिनामहत्त्वेन कृतंसंपादितंचित्यत्किंचिदेनः प्राण्युपघातादिलक्षणंपापंमहे महते यजमानायमह्यंमदर्थं संदशस्य संक्षपय ॥ पृक्षप्रयजः अन्येभ्योपिदृश्यन्तइतिकर्मणिविच् दाशिग्रहणादधिकृतोभवतीत्युक्तं बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरत्वम् । द्रविणः द्रुगतावित्यस्मात् द्रुदक्षिभ्यामिनन्नितीनन्प्रत्ययः गुणावादेशौ संबुद्धौसोर्लोपाभावश्छान्दसः आमन्त्रितत्वान्निघातः । सुवाचः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । रेवत् रयिर्धनमस्मिन्विद्यतइतिमतुप् ह्रस्वनुड्भ्यामितिमतुबुदात्तः छन्दसीरइतिवत्वं रयेर्मतौ बहुलंछन्दसीतिसम्प्रसारणम् परपूर्वत्वेगुणः । ऊषुः उषप्लुषदाहे दाहार्थोप्ययंधातुरत्रप्रकाशनेवर्तते छन्दसिलुङ्लिङ्लिटइतिवर्तमानेलिट् उसिरूपं निपातः । पृथिव्याः प्रथप्रख्यानेइत्यस्मात् प्रथेःषिवन्संप्रसारणंचेतिषिवन्प्रत्ययः तत्सन्नियोगेनधातोःसम्प्रसारणम् षिद्गौरादिभ्यश्चेतिङीष् प्रत्ययस्वरेणान्तोदात्तःउदात्तयणोहल्पूर्वादितिविभक्तेरुदात्तत्वम् । दशस्य निघातः ॥ १० ॥

अथैकादशी–

इळामग्नेपुरुदंससनिंगोःशश्वत्तमंहवमानायसाध ।
स्यान्नःसूनुस्तनयोविजावाग्नेसातेसुमतिर्भूत्वस्मे ॥ ११ ॥ २ ॥

इळाम् । अग्ने । पुरुऽदंसम् । सनिम् । गोः । शश्वत्ऽतमम् ।
हवमानाय । साध । स्यात् । नः । सूनुः । तनयः । विजाऽवा । अग्ने ।
सा । ते । सुऽमतिः । भूतु । अस्मेइति ॥ ११ ॥ २ ॥

हेअग्ने पुरुदंसं अपः अप्नः दंसः वेपइतिकर्मनामसुपठितत्वात् दंसशब्दःकर्मवाची पुरूणि बहूनिदंसांसिकर्माणियस्याःसा तां बहुकर्माणं गोःसनिंगवादिपशूनांप्रदात्रीमिळामेतन्नामिकांगोरूपांदेवतां शश्वत्तमंनिरंतरं हवमानाययजमानायमह्यं साधसाधय किंच नोस्माकंसूनुःपुत्रःतनयःपौत्रःस्याद्भवतुइति तेतवयासुमतिःशोभनाबुद्धिः साविजावाअवन्ध्यासतीअस्मेअस्माकंभूतु भवतु ॥ शश्वत्तमं उञ्छादिषुपाठादन्तोदात्तत्वम् । साध राधसाधसंसिद्धौ अन्तर्भावितण्यर्थोयम् लोटिव्यत्ययेनशप् सेर्ह्यपिच्चेतिहिरादेशः तस्यातोहेरितिलुक् निघातः । विजावा जनीप्रादुर्भावे अस्मादन्येभ्योपिदृश्यन्तइतिवनिप् विड्वनोरनुनासिकस्यादित्यात्वम् कृदुत्तरपदप्रकृतिस्वरत्वम् लिङ्गव्यत्ययः । भूतु भूसत्तायाम् बहुलंछन्दसीतिशपोलुक् भूसुवोस्तिङीतिगुणप्रतिषेधः ॥ ११ ॥

॥ इतितृतीयस्यप्रथमेद्वितीयोवर्गः ॥ २ ॥

अञ्जन्तीत्यष्टमंवैश्वामित्रमेकादशर्चंसूक्तम् अत्रानुक्रमणिका—अञ्जन्तियूपस्तुतिःषष्ठ्याद्याभिर्बहवोन्त्यावाश्विन्यष्टमीवैश्वदेवीवा तृतीयासप्तम्यावनुष्टुभाविति उच्छ्रयस्ववनस्पतेयेवृक्णासइत्येतेतृतीयासप्तम्यावनुष्टुभौ शिष्टास्त्रिष्टुभःकृत्स्नस्यसूक्तस्ययूपोदेवता वनस्पतेशतवल्शइत्यस्याश्छिन्नयूपस्यमूलभूतःस्थाणुर्देवता आदित्यारुद्रावसवइत्यष्टमीवैश्वदेवी यौपीवा अत्र षष्ठ्यादीनांबहवोयूपादेवताः बहूनांस्तूयमानत्वात् शिष्टाएकयूपदेवत्याः यूपोञ्जनेअञ्जन्तित्वामित्येषा प्रेषितायूपायाज्यमानायाञ्जन्तित्वामध्वरेदेवयन्तइतिसूत्रितत्वात् । यूपोच्छ्रयणेसमिद्धस्येतिद्वेऋचौ सूत्रितंच—उच्छ्रयस्ववनस्पतेसमिद्धस्यश्रयमाणःपुरस्तादिति यूपपरिव्ययणेयुवासुवासाःपरिवीतआगादितिपरिदध्यादितिसूत्रितत्वात् यूपोच्छ्रयणेजातोजायतेसुदिनत्वेअह्नामित्यर्धर्चेआरमेदितिसूत्रितम् । यूपैकादशिन्यामन्यत्रापि बहुयूपयुक्तेकर्मणियान्वोनरइत्यादिभिः षड्भिःपञ्चभिर्वासंस्तुयात् संस्तुयादनभिहिंकृत्ययान्वोनरोदेवयन्तोनिमिम्युरितिषड्भिःपञ्चभिर्वेति ॥

तस्मिन्सूक्तेप्रथमा—

अञ्जन्तित्वामध्वरेदेवयन्तोवनस्पतेमधुनादैव्येन ।
यदूर्ध्वस्तिष्ठाद्रविणेहधत्ताद्यद्वाक्षयोमातुरस्याउपस्थे ॥ १ ॥

अञ्जन्ति । त्वाम् । अध्वरे । देवऽयन्तः । वनस्पते । मधुना । दैव्येन । यत् । ऊर्ध्वः । तिष्ठाः । द्रविणा । इह । धत्तात् । यत् । वा । क्षयः । मातुः । अस्याः । उपऽस्थे ॥ १ ॥

वनस्पतेखदिरपलाशादिलक्षणहेयूप अध्वरे यज्ञेदेवयन्तः देवान्कामयमानाअध्वर्य्वादयः दैव्येनमधुनादेवसम्बन्धिनामधुनाघृतेन एतद्वैमधुदैव्यंयदाज्यमित्याम्नानात् । तेनघृतेनत्वामञ्जन्ति त्वयिघृतंसिञ्चन्तीत्यर्थः यत्यदित्वमूर्ध्वस्तिष्ठाः उन्नतस्तिष्ठसि । यद्वायदिवामातुरस्याः मातृभूतायाः पृथिव्याः उपस्थे उत्सङ्गेतेक्षयोनिवासः यदूर्ध्वस्तिष्ठसियदिवाभूमौशयानोवर्तसे उभयथापित्वं इहास्मासुद्रविणानिधनानिधत्तात्धेहि ब्राह्मणेनेयमृग्व्याख्याता—अञ्जन्ति त्वामध्वरेदेवयन्तइत्यन्वाहाध्वरेह्येनंदेवयन्तोञ्जन्तिवनस्पतेमधुनादैव्येनेत्येतद्वैमधुदैव्यंयदाज्यं यदूर्ध्वस्तिष्ठाद्रविणेहधत्ताद्यद्वाक्षयोमातुरस्याउपस्थइतियदिचतिष्ठासियदिचशयासैद्रविणमेवास्मासुधत्तादित्येवतदाहेति । तथाचनिरुक्तमपि— अञ्जन्तित्वामध्वरेदेवान्कामयमानावनस्पतेमधुना दैव्येनचघृतेनचयदूर्ध्वःस्थास्यसिद्रविणानिचनोधास्यासियद्वातेकृतःक्षयोमातुरस्याउपस्थ उपस्थानइति ॥ अञ्जन्ति अञ्जूव्यक्तिम्रक्षणकान्तिगतिषु रुधादित्वात्श्नम् तस्यलङ्क्षेङित्त्वादनिदितामित्युपधालोपः श्नसोरल्लोपइत्यल्लोपः प्रत्ययस्वरेणमध्योदात्तः । त्वाम् अमियुष्मच्छब्दस्यत्वमावेकवचनेइतित्वादेशः द्वितीयायांचेत्याकारः एकादेशउदात्तेनोदात्तइत्येकादेशस्योदात्तत्वम् । अध्वरे नविद्यतेध्वरोहिंसायस्येतिबहुव्रीहौपूर्वपदप्रकृतिस्वरेप्राप्तेनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । देवयन्तः देवानात्मनइच्छन्तः सुपआत्मनइतिक्यच् क्यचिचेतीत्वम् अकृत्सार्वधातुकयोरितिदीर्घत्वंच नच्छन्दस्यपुत्रस्येत्यनेनप्रतिषिध्यते तदन्ताच्छतृप्रत्ययः शपःपित्वादनुदात्तत्वे सार्वधातुकस्वरेणचानुदात्तत्वेकृतेतयोरेकादेशउदात्तेनोदात्तइतिक्यचएवस्वरः । वनस्पते आमन्त्रितस्यचेत्याद्युदात्तत्वम् । मधुना फलिपाटिनमिमनीत्यादिनाउप्रत्ययः । निदित्यनुवृत्तेराद्युदात्तत्वम् । दैव्येन देवाद्यञञावितियञ् ञित्वादादिवृद्धिः यस्येतिलोपः ञित्वादाद्युदात्तः । तिष्ठाः ष्ठागतिनिवृत्तौ लेटिसिप् इतश्चलोपइतीलोपः शपःशित्वात्पाघ्रेत्यादिनातिष्ठादेशः लेटोडाटावित्यडागमः यच्छब्दयोगान्निघाताभावः तिष्ठादेशस्याद्युदात्तत्वेननिपातितत्वादाद्युदात्तः । द्रविणा द्रुदक्षिभ्यामिनन्नितीनन्प्रत्ययः सुपांसुलुगितिसुपो-

१ ऐ० ब्रा० २. २. । २ ऐ० ब्रा० २. २. । ३ नि० ८. १८. ।

डादेशः । नित्त्वादाद्युदात्तः । इह इदंशब्दात्सप्तम्यर्थे इदमोहइतिहः इदमइशितीशादेशः शित्वात्सर्वादेशः प्रत्ययस्वरः । धत्तात् डुधाञ्धारणपोषणयोरित्यस्यप्रार्थनेलोट् सिप् तस्य सेर्ह्यपिच्चेतिहिरादेशः तुह्योरितितातङादेशः श्नाभ्यस्तयोरातइत्याकारलोपः दधस्तथोश्चेतिभष्भावः अस्वचत्वे निपातः । वा चादित्वादनुदात्तः । क्षयः क्षियन्तिनिवसन्त्यस्मिन्निति अधिकरणेघः क्षयोनिवासेइत्याद्युदात्तत्वम् । मातुः नप्तृनेष्ट्रइत्यादिनातृजन्तत्वेननिपातनादन्तोदात्तः ऋतउदितिङसःपूर्वपरयोरुकारः । अस्याः ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम् । उपस्थे ष्ठागतिनिवृत्तौ आतश्चोपसर्गेइतिकः तत्पुरुषेतुल्यार्थेतिमरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम् ॥ १ ॥

अथद्वितीया—

**समि॑द्धस्य॒श्रय॑माणःपु॒रस्ता॒द्ब्रह्म॑वन्वा॒नोअ॒जरं॑सु॒वीर॑म् ।**
**आ॒रेअ॒स्मदम॑तिं॒बाध॑मान॒उच्छ्र॑यस्वमह॒तेसौभ॑गाय ॥ २ ॥**

सम्ऽइ॑द्धस्य । श्रय॑माणः । पु॒रस्ता॑त् । ब्रह्म॑ । व॒न्वा॒नः । अ॒जर॑म् । सु॒ऽवीर॑म् । आ॒रे । अ॒स्मत् । अम॑तिम् । बाध॑मानः । उत् । श्र॒य॒स्व॒ । म॒ह॒ते । सौभ॑गाय ॥ २ ॥

हेयूप समिद्धस्यदीप्यमानस्याहवनीयस्याग्नेः पुरस्तात्प्राच्यांदिशिश्रयमाणः तत्रवर्तमानः ब्रह्मअन्नं ब्रह्मवर्चइत्यन्ननामसुपाठात् अजरंजरारहितंसमृद्धंसुवीरंशोभनापत्ययुक्तंब्रह्मान्नंवन्वानः प्रयच्छन् अस्मदमतिमस्माकंशत्रुभूतामशनायाम् अशनायावैपाप्मामतिरितिश्रवणात् तादृशींशत्रुमारेदूरेबाधमानः अपनुदंस्त्वंमहतेसौभगायधनादिसंपत्त्यर्थमुच्छ्रयस्व उच्छ्रितोभव । उक्तार्थेब्राह्मणम्— [1]समिद्धस्यश्रयमाणःपुरस्तादितिसमिंद्धस्यह्येषएतत्पुरस्ताच्छ्रयतेब्रह्मवन्वानोअजरंसुवीरमित्याशिषमेवाशास्तआरेअस्मदमतिंबाधमानइत्यशनायावैपाप्मामतिस्तामेवतदारान्नुदतेयज्ञाच्चयजमानाच्चोच्छ्रयस्वमहतेसौभगायेत्याशिषमेवाशास्तइति ॥ समिद्धस्य ञिइन्धीदीप्तौ कर्मणिनिष्ठायांश्वीदितोनिष्ठायामितीट्प्रतिषेधः सम्यागिद्धइतिगतिरनन्तरइतिपूर्वपदप्रकृतिस्वरत्वम् । श्रयमाणः श्रिञ्सेवायामित्यस्यलटःशानच् तस्यलसार्वधातुकस्वरेणानुदात्तत्वे

१ ऐ० ब्रा० २. २.

कृतेधातुस्वरःशिष्यते पुरस्तात्पूर्वशब्दस्यादिक्शब्देभ्यःसप्तमीपंचमीत्यादिनाअस्तातिप्रत्ययः अस्तातिचेतिपूर्वस्यपुरादेशः प्रत्ययस्वरः । ब्रह्म नविषयस्यानिसन्तस्येत्याद्युदात्तः । वन्वानः वनुयाचने अत्रायंधातुर्दानार्थेवर्तते लटःशानच्प्रत्ययः चित्त्वादन्तोदात्तः । अजरम् नञोजरमरमित्रमृताइत्युत्तरपदाद्युदात्तत्वम् । सुवीरम् वीरवीर्यौचेत्युत्तरपदाद्युदात्तत्वम् । आरे एवमादित्वादन्तोदात्तः । अस्मत् युष्यसिभ्यामदिगितिमदिक्प्रत्ययः सुपांसुलुगितिसुपोलुक् मदिक्प्रत्ययस्वरः । अमतिम् तत्पुरुषेइतिपूर्वपदप्रकृतिस्वरत्वम् । उत् निपातत्वेनाद्युदात्तः । श्रयस्वाश्रिञ्सेवायामित्यस्यलोण्मध्यमैकवचनेथास् थासःसेइत्यादेशः सवाभ्यांवामावित्येकारस्यवकारः निघातः । महते वर्तमानेपृषत्बृहन्महदितिनिपातनादन्तोदात्तः बृहन्महतोरुपसंख्यानामितिविभक्तेरुदात्तत्वम् । सौभगाय प्राणभृज्जातिवयोवचनोद्गात्रादिभ्यइत्यञ् हृद्भगसिंध्वन्तेपूर्वपदस्यचेतिवृद्धिः सर्वविधीनांछन्दसिविकल्पितत्वादित्युत्तरपदस्यवृद्धिर्नभवति ञित्स्वरः ॥ २ ॥

अथतृतीया–

उच्छ्रयस्ववनस्पतेवर्ष्मन्पृथिव्याअधि ।
सुमितीमीयमानोवर्चोधायज्ञवाहसे ॥ ३ ॥

उत् । श्रयस्व । वनस्पते । वर्ष्मन् । पृथिव्याः । अधि ।
सुऽमिती । मीयमानः । वर्चः । धाः । यज्ञऽवाहसे ॥ ३ ॥

हेवनस्पते यूप पृथिव्याअधि पृथिव्यांवर्ष्मन् उत्कृष्टेदेवयजनाख्येदेशेउच्छ्रयस्वउच्छ्रितोभव सुमतीशोभमानयाबुद्ध्या अथवाशोभनेनपरिमाणेनमीयमानःइयत्तयापरिच्छिद्यमानः त्वंयज्ञवाहसेयज्ञनिर्वाहकाययजमानायवर्चोधाः अन्नंधेहि अयमेवार्थोब्राह्मणेनदर्शितः–'उच्छ्रयस्ववनस्पतइत्युच्छ्रीयमाणायाभिरूपाययद्यज्ञेभिरूपंतत्समृद्धंवर्ष्मन्पृथिव्याअधीत्येतद्वैवर्ष्मपृथिव्यैयत्रयूपमुन्मिन्वन्तिसुमितीमीयमानोवर्चोधायज्ञवाहसइत्याशिषमाशास्तेइति[1] ॥ वनस्पते अपादादित्वादाष्टमिकमनुदात्तत्वम् । पृथिव्याः उदात्तयणोहल्पूर्वादितिविभक्तेरुदात्तत्वम् । सुमिती माङ्मानेइत्यस्यक्तिनिद्यतिस्यतिमास्थेतीकारादेशः शोभनयामित्यौ तादौचनितिकृत्यतावितिगतेःप्रकृतिस्वरत्वम् सुपांसुलुगितिसवर्णदीर्घः । मीयमानः माङ्मानेइत्यस्यकर्मणियक्

[1] ऐ० ब्रा० २. २.

घुमास्थेतीत्वं प्रत्ययस्वरः ॥ धाः धाधातोर्लेङर्थेछन्दसिलुङ्लङ्लिटिलुङ् इतश्चेतिसिपइकारलोपः गातिस्थेतिसिचोलोपः बहुलंछन्दसीत्यडभावः निघातः । यज्ञवाहसे यज्ञंवहतिप्राप्नोति वहप्रापणेइत्यस्य वहिहाधाञ्भ्यश्छन्दसीत्यसुन् णिदित्युनुवृत्तेरुपधावृद्धिः गतिकारकयोरितिपूर्वपदप्रकृतिस्वरत्वंचेतिपूर्वपदप्रकृतिस्वरः ॥ ३ ॥

अथचतुर्थी--

युवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः ।
तंधीरासःकवयउन्नयन्तिस्वाध्योमनसादेवयन्तः ॥ ४ ॥

युवा । सुऽवासाः । परिऽवीतः । आ । अगात् । सः । ऊँ इति ।
श्रेयान् । भवति । जायमानः । तम् । धीरासः । कवयः । उत् ।
नयन्ति । सुऽआध्यः । मनसा । देवऽयन्तः ॥ ४ ॥

युवादृढाङ्गः अष्टाश्र्यादिलक्षणलक्षितइत्यर्थः सुवासाः शोभनेनवाससारशनयायुक्तः परिवीतस्तयारशनयावेष्टितः एवंविधोयूपआगात्आगच्छति सउसएवयूपः श्रेयान्जायमानः सर्वेभ्योवनस्पतिभ्यउत्कृष्टतयासंपद्यमानोभवति तमेवंविधंयूपंधीरासः प्राज्ञाःमनसादेवयन्तः देवान्कामयमानाःस्वाध्यः सुष्टुसर्वतोध्यानयुक्ताःकवयः क्रान्तदर्शिनोध्वर्य्वादयः उन्नयन्तिउन्नतंकुर्वन्ति एतस्मिन्नर्थेब्राह्मणम्---युवासुवासाःपरिवीतआगादित्युत्तमयापरिदधातिप्राणोवैयुवासुवासाःसोयंशरीरैःपरिवृतःसउश्रेयान्भवतिजायमानइतिश्रेयाञ्छ्रेयान्ह्येषएतद्भवतिजायमानस्तंधीरासःकवयउन्नयन्तिस्वाध्योमनसादेवयन्तइतियेवाअनूचानास्तेकवयस्तएवैनंतदुन्नयन्तीति[1] ॥ युवा यौतेःकनिन्युवृषितक्षीत्यादिनाकनिन्प्रत्ययः कित्त्वाद्गुणाभावः उवङादेशः नित्त्वादाद्युदात्तत्वम् । सुवासाः वसआच्छादने असुन्नित्यनुवृत्तौवसेर्णिदित्यसुन् णित्त्वादुपधावृद्धिः सोर्मनसीइत्युत्तरपदाद्युदात्तत्वम् । परिवीतः व्येञ्संवरणे कर्मणिक्तः यजादित्वात्संप्रसारणम् गतिरनन्तरइतिपूर्वपदप्रकृतिस्वरत्वम् । अगात् इणूगतावित्यस्यलुङिइणोगालुङीतिगादेशः गातिस्थेतिसिचोलोपः अडागमः । श्रेयान् प्रशस्यस्यद्विवचनविभज्योपपदेइतिईयसुन्प्रत्ययः तस्मिन्प्रशस्यस्यश्रइतिश्रादेशः गुणः नित्त्वादाद्युदात्तत्वम् एकादेशआद्युदात्तः । स्वाध्यः ध्यैचिंतायाम् स्वाङोरुपसर्गयोःप्राक्प्रयोगः अन्येभ्योपिदृश्यन्तइतिक्विप् दृशिग्रहणात्संप्रसा-

[1] ऐ० ब्रा० २. २.

रणं सम्प्रसारणाच्चेतिपूर्वरूपत्वं हलइतिदीर्घः जसि एरनेकाचइतियणादेशः कृदुत्तरपदप्रकृतिस्वरत्वम् उदात्तस्वरितयोर्यणइतिजसःस्वरितत्वम् । देवयन्तः सुपआत्मनःक्यजितिक्यच् चित्त्वादन्तोदात्तः ॥ ४ ॥

अथपञ्चमी–

जातोजायतेसुदिनत्वेअह्नांसमर्यआविदथेवर्धमानः ।
पुनन्तिधीराअपसोमनीषादेवयाविप्रउदियर्तिवाचम् ॥५॥३॥

जातः । जायते । सुदिनऽत्वे । अह्नाम् । सऽमर्ये । आ । विदथे । वर्धमानः । पुनन्ति । धीराः । अपसः । मनीषा । देवऽयाः । विप्रः । उत् । इयर्ति । वाचम् ॥ ५ ॥ ३ ॥

जातः पृथिव्यां प्रथममुत्पन्नोयूपः समर्ये मर्याइतिमनुष्यनाम तैःसहिते विदथेवर्धमानः विदथइतियज्ञनाम विदथः सवनमितियज्ञनामसुपाठात् । [1]तस्मिन्यज्ञेआवर्धमानः घृताञ्जनरशनापरिव्ययणादिनासर्वतःशोभमानःसन् अह्नांसुदिनत्वेजायते पशुनियोजनादिद्वारेणयज्ञनिर्वाहकतयाअहानिसुदिनानिकरोतीत्यर्थः अपसःकर्मवन्तः धीराः प्रज्ञानवन्तः अध्वर्य्वादयः मनीषाबुद्ध्यातंयूपंपुनन्ति प्रक्षालनादिभिःशोधयन्ति देवयाः देवानां यष्टादेवानांहवींषिप्रापयितावा विप्रोमेधावीहोताचवाचंयूपविषयांस्तुतिलक्षणांवाचम् उदियर्तिप्रेरयति उच्चारयतीत्यर्थः उक्तार्थेब्राह्मणम्–जातोजायतेसुदिनत्वेअह्नामितिजातोह्येषएतज्जायतेसमर्यआविदथेवर्धमानइतिवर्धयन्त्येवैनंतत्पुनन्तिधीराअपसोमनीषेतिपुनन्त्येवैनंतद्देवयाविप्रउदियर्तिवाचमितिदेवेभ्यएवैनंतन्निवेदयतीति सुदिनत्वं सुदिनानांभावइति तस्यभावस्त्वतलावितित्वः प्रत्ययस्वरः । समर्ये मृङ्प्राणत्यागेइत्यस्माच्छन्दसिनिष्टर्क्येतियत्प्रत्ययान्तत्वेननिपातनाद्गुणः समासस्येत्यन्तोदात्तत्वम् । पुनन्ति पूञ्पवने क्र्यादित्वात्श्ना प्वादित्वाद्ध्रस्वः प्रत्ययस्वरः । देवयाः याप्रापणे अन्येभ्योपिदृश्यन्तइतिविच्प्रत्ययः कृदुत्तरपदप्रकृतिस्वरत्वम् । इयर्ति ऋगतौ जुहोत्यादिः अभ्यासस्यअर्तिपिपर्त्योश्चेतीत्वम् अभ्यासस्यासवर्णेइतीयङादेशः निघातः ॥ ५ ॥

॥ इतितृतीयस्यप्रथमेतृतीयोवर्गः ॥ ३ ॥

[1] ऐ० ब्रा० २. २.

अथषष्ठी—

यान्वोनरोदेवयन्तोनिमिम्युर्वनस्पतेस्वधितिर्वाततक्ष ।
तेदेवासःस्वरवस्तस्थिवांसःप्रजावदस्मेदिधिषन्तुरत्नम् ॥ ६ ॥

यान् । वः । नरः । देवऽयन्तः । निऽमिम्युः । वनस्पते । स्वऽधितिः । वा । ततक्ष । ते । देवासः । स्वरवः । तस्थिऽवांसः । प्रजाऽवत् । अस्मे इति । दिधिषन्तु । रत्नम् ॥ ६ ॥

हेयूपाः देवयन्तः देवान्कामयमानाः नरः कर्मणांनेतारोध्वर्य्वादयः यान्वः यान्युष्मान्निमिम्युः अवटेषुप्राचिक्षिपुः वाअपिचहेवनस्पतेस्वधितिः परशुः त्वदीयान्यूपान्ततक्ष चिच्छेद देवासोदीप्यमानाःस्वरवः स्वरुशब्दःस्वशकलवाची तद्वन्तः लुप्तमत्वर्थीयः तस्थिवांसः तिष्ठन्तस्तेतादृशाःयूपाः अस्मेअस्मैयजमानायप्रजावद्अपत्यसहितंरत्नमुत्तमंधनंदिधिषन्तुधारयन्तु प्रयच्छन्त्वित्यर्थः ॥ निमिम्युः डुमिञ्प्रक्षेपणेइत्यस्यलिट्युसिअसंयोगाल्लिट्किदितिकित्त्वाद्भावाद्गुणाभावः यद्वृत्तयोगादनिघातः सतिशिष्टस्वरोबलीयानितिवचनात्प्रत्ययस्वरः । स्वधितिःस्वशब्दोपपदाद्धाधारणेइत्यस्मात्क्तिन् स्वास्वकीयानिशितधाराधीयतेप्रक्षिप्यतेनेनेतिस्वधितिःखड्गः । ततक्ष तक्षूत्वक्षूतनूकरणेइत्यस्माल्लिटिणलिरूपादनिघातः लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् । स्वरवः स्वृशब्दोपतापयोरित्यस्मान्निदित्यनुवृत्तौशॄस्वृस्निहित्रपीत्यादिनाउप्रत्ययः नित्त्वादाद्युदात्तः । तस्थिवांसः ष्ठागतिनिवृत्तावित्यस्माच्छन्दसिलिट् तस्यक्वसुः वस्वेकाजाद्घसामितीडागमः प्रत्ययस्वरः । प्रजावत् जनीप्रादुर्भावेइत्यस्मादुपसर्गेचसंज्ञायामितिडः ततष्टाप् तदस्यास्तीतिमतुप् तस्य पित्त्वादनुदात्तत्वम् एकादेशस्वरः । अस्मे अस्मच्छब्दस्यसुपांसुलुगितिशेइत्यादेशः । दिधिषन्तु धिषधारणे जुहोत्यादिः निघातः ॥ ६ ॥

अथसप्तमी—

येवृक्णासोअधिक्षमिनिमितासोयतस्रुचः ।
तेनोव्यन्तुवार्यंदेवत्राक्षेत्रसाधसः ॥ ७ ॥

ये । वृक्णासः । अधि । क्षमि । निऽमितासः । यतऽस्रुचः । ते । नः । व्यन्तु । वार्यम् । देवऽत्रा । क्षेत्रऽसाधसः ॥ ७ ॥

अधिक्षमि· क्षमायांभूमौ वृक्णासः परशुनाछिन्नायेयूपाः यतस्रुचइतिऋत्विग्वाची यतस्रुचः मरुतइतिऋत्विङ्नामसुपठितत्वात् यताः स्रुचोयैस्तेयतस्रुचः तैर्ऋत्विग्भिः निमितासः अवटेषुनितरांप्रक्षिप्ताः क्षेत्रसाधसः क्षेत्रस्ययज्ञस्यसाधकाः यथाक्षेत्रंसस्यादिद्वारेणफलंप्रयच्छतितथायज्ञोपिअपूर्वद्वारास्वर्गादिफलंददातीतिक्षेत्रंयज्ञः एवंविधास्तेयूपाः नोस्मदीयंवार्यंवरणीयंसंभजनीयंहविर्देवत्रादेवेषुव्यन्तुगमयन्तु अस्मदीयंहविर्देवाधीनंकुर्वन्त्वित्यर्थः ॥ वृक्णासः ओव्रश्चूछेदनेइत्यस्यनिष्ठायांयस्यविभाषेतीट्प्रतिषेधः क्त्वाङ्ग्रहिज्यावयीत्यादिनासम्प्रसारणम् । ओदितश्चेतिनिष्ठानत्वम् । क्षमि आतोधातोरित्यत्रआतइतियोगविभागादाकारलोपः निमितासः डुमिञ्प्रक्षेपणे कर्मणिक्तः गतिरनन्तरइतिपूर्वपदप्रकृतिस्वरत्वम् । यतस्रुचः बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । व्यन्तु इण्गतावित्यस्यलोटिरूपम् इकारलोपश्छान्दसः अथेमन्तर्भावितण्यर्थः । वार्यं वृङ्संभक्तावित्यस्मादृहलोर्ण्यदितिकर्मणिण्यत् ईडवन्दवृशंसदुहेत्यादिनाद्युदात्तत्वम् । देवत्रा त्रेत्यनुवृत्तौ देवमनुष्यपुरुषपुरुमर्त्येभ्यइत्यादिनाधिकरणेत्राप्रत्ययः । क्षेत्रसाधसः राधसाधसंसिद्धावित्यस्मादौणादिकोसुन् कृदुत्तरपदप्रकृतिस्वरः ॥ ७ ॥

अथाष्टमी—

**आदित्यारुद्रावसवःसुनीथाद्यावाक्षामापृथिवीअन्तरिक्षम् ।**
**सजोषसोयज्ञमवन्तुदेवाऊर्ध्वंकृण्वन्त्वध्वरस्यकेतुम् ॥८॥**

आदित्याः । रुद्राः । वसवः । सुऽनीथाः । द्यावाक्षामा । पृथिवी । अन्तरिक्षम् । सऽजोषसः । यज्ञम् । अवन्तु । देवाः । ऊर्ध्वम् । कृण्वन्तु । अध्वरस्य । केतुम् ॥ ८ ॥

सुनीथाः यज्ञस्यसुष्ठुनेतारः आदित्याः द्वादशादित्याः रुद्राः एकादशरुद्राः वसवः अष्टौवसवः यद्वा सुष्ठुनीथाः सुष्ठुतयः स्तुतशस्त्राणिनीथानिचोक्थामदानिचेतिहिश्रूयते । द्यावाक्षामा द्यावापृथिव्यौ पृथिवी सुब्व्यत्ययः पृथुविस्तीर्णमन्तरिक्षंचसजोषसएतेसर्वेदेवाः ऐकमत्येनपरस्परंसङ्गताभूत्वाइमस्मदीयंयज्ञमवन्तुरक्षन्तु । किञ्च अध्वरस्ययज्ञस्यकेतुंध्वजभूतंप्रज्ञापकंवा इमंयूपंऊर्ध्वंकृण्वन्तु उच्छ्रितंकुर्वन्तु ॥ आदित्याः अदितेरपत्यानि दित्यदित्यादित्यपत्युत्तरपदादितिण्यः णित्वादादिवृद्धिः प्रत्ययस्वरः । रुद्राः रोदयन्तिसर्वानन्त-

काले रौदोर्णिलुक्चेतिरक्प्रत्ययः तत्सन्नियोगेनणिलोपः प्रत्ययस्वरः जसःसुप्त्वादनुदात्तत्वे एकादेशउदात्तेनोदात्तइत्येकादेशस्याप्युदात्तत्वम् । वसवः वसनिवासे निदित्यनुवृत्तौ शृस्वृस्निहित्रप्यसिवसीत्यादिनाउप्रत्ययः नित्त्वादाद्युदात्तः । सुनीथाः णीञ्प्रापणे हनिकुषिनीरमिकाशिभ्यःक्थन् इतिक्थन् कित्त्वाद्गुणः थाथघञ्क्तेत्युत्तरपदान्तोदात्तत्वम् । द्यावाक्षामा द्यौश्चक्षामाच दिवोद्यावाइतिद्यावादेशः देवताद्वन्द्वेचेत्युभयपदप्रकृतिस्वरत्वम् । पृथिवी प्रथप्रख्याने प्रथेःषिवन्संप्रसारणंचेतिषिवन्संप्रसारणंच षिद्गौरादिभ्यश्चेतिङीष् प्रत्ययस्वरेणान्तोदात्तः । अवन्तु अवरक्षणे निघातः । कृण्वन्तु कृविहिंसाकरणयोरित्यस्मात् लोटि धिन्विकृण्व्योरचेत्युप्रत्ययः अकारश्चान्तादेशः निघातः ॥ ८

अथनवमी—

हंसाइवश्रेणिशोयतानाःशुक्रावसानाःस्वरवोनआगुः ।
उन्नीयमानाःकविभिःपुरस्ताद्देवादेवानामपियन्तिपाथः ॥९॥
हंसाःऽइव । श्रेणिऽशः । यतानाः । शुक्रा । वसानाः । स्वरवः ।
नः । आ । अगुः । उत्ऽनीयमानाः । कविऽभिः । पुरस्तात् ।
देवाः । देवानाम् अपि । यन्ति । पाथः ॥ ९ ॥

शुक्राशुक्राणिदीप्तानिवासांसिवसानाः आच्छादयन्तः स्वरवः स्वरुमन्तः श्रेणिशः पङ्क्तिशः यतानाः प्रवर्तमानाः अत्रदृष्टान्तः—हंसाइवेति यथानभसिपङ्क्तिशःपतन्तोहंसाः शोभन्तेतद्वत् शोभनामानास्तेयूपाः नोस्मानागुः प्रापुः अपिचकविभिर्मेधाविभिरध्वर्य्वादयः पुरस्तादाहवनीयस्य पूर्वभागेउन्नीयमानाउच्छ्रीयमाणाः देवादीप्यमानास्तेयूपाः देवानांपाथः देवानांस्थानंमन्तरिक्षम् पाथोन्तरिक्षंपथाव्याख्यातमितियास्कः । पाथोनदीभ्यांड्यणितिसूत्रेपाथोन्तरिक्षमितिवृत्तिकारोप्यवादीत् तादृशमन्तरिक्षमपियन्ति प्राप्नुवन्तिअध्वर्य्वादिभिरुच्छ्रीयमाणायूपाः अतिदैर्घ्यादन्तरिक्षंव्याप्यवर्तन्तइत्यर्थः ॥ हंसाइव इवेनाविभक्त्यलोपइतिवचनात्पूर्वपदस्वरः । श्रेणिशः बह्वल्पार्थादितिशस् प्रत्ययस्वरः । शुक्रा शुचदीप्तावित्यस्मात् ऋज्रेन्द्राग्रेत्यादिनारन्प्रत्ययान्तत्वेननिपातनादन्तोदात्तः । अगुः इणगतौ अस्माल्लुङि रूपम् निघातः ॥ ९ ॥

---

१ नि० ६.७.

अथ दशमी—

श्रृङ्गाणीवेच्छृङ्गिणांसंददृश्रेचषालवन्तःस्वरवःपृथिव्याम् ।
वाघद्भिर्वाविहवेश्रोषमाणाअस्माँअवन्तुपृतनाज्येषु ॥१०॥

श्रृङ्गाणिऽइव । इत् । शृङ्गिणाम् । सम् । ददृश्रे । चषालऽवन्तः ।
स्वरवः । पृथिव्याम् । वाघतऽभिः । वा । विऽहवे । श्रोषमाणाः ।
अस्मान् । अवन्तु । पृतनाज्येषु ॥ १० ॥

स्वरवः स्वरुमन्तः चषालवन्तः प्रतिमुक्तकटकाःएवंविधायूपाः पृथिव्यांशृङ्गिणांमहिषादीनांश्रृङ्गाणीवविषाणानिवसन्ददृश्रेइत् सम्यग्दृश्यन्तएव वा अपिच विहवे विविधंहूयन्तेहवींष्यत्रेतिविहवोयज्ञः तस्मिन्यज्ञेवाघद्भिर्ऋत्विग्भिः वाघतः वृक्तबर्हिषइत्यृत्विङ्नामसुपाठात् । श्रोषमाणाः तैः क्रियमाणांस्तुतिलक्षणंशब्दंशृण्वन्तस्तादृशायूपाः पृतनाज्येषुपृतनाज्यशब्दःसङ्ग्रामवाची आजौपृतनाज्यमितिसङ्ग्रामनामसुपठितत्वात्पृतनाज्येषुसङ्ग्रामेषुवंधस्थलेष्वितियावत् अस्मान्यजमानानवन्तुरक्षन्तु ॥ शृङ्गाणि शृहिंसायामित्यस्मात् , शृणातेर्ह्रस्वश्चेतिगन्नुडागमः धातोर्ह्रस्वश्च नित्स्वरः । ददृश्रे छन्दसिलुङ्लङ्लिटइतिलिङर्थेलिट् इरयोरेइतिइरेचोरेशत्यादेशःनिघातः ॥ १० ॥

अथैकादशी—

वनस्पतेशतवल्शोविरोहसहस्रवल्शाविवयंरुहेम ।
यंत्वामयंस्वधितिस्तेजमानःप्रणिनायमहतेसौभगाय॥११॥४॥

वनस्पते । शतऽवल्शः । वि । रोह । सहस्रऽवल्शाः । वि । वयम् ।
रुहेम । यम् । त्वाम् । अयम् । स्वऽधितिः । तेजमानः ।
प्रऽनिनाय । महते । सौभगाय ॥ ११ ॥ ४ ॥

हेवनस्पते छिन्नयूपमूलभूतस्थाणो शतवल्शः शतशाखःसन्विरोह विशेषेणप्रादुर्भूतोभव वयमपिसहस्रवल्शाः पुत्रपौत्रादिसन्तानपरम्परयासहस्रशाखाःसन्तःविरुहेम, विशेषेणप्रादुर्भूताः-

वेम तेजमानोनिशितधारोयं स्वधितिः परशुः हे स्थाणो यंत्वांमहतेसौभगायमहतेसौभाग्यंबहुशाखत्वलक्षणं प्रणिनाय प्रकर्षेणप्रापयामास ॥ सहस्रवल्शाःसहस्रशब्दःकर्दमादित्वान्मध्योदात्तः बहुव्रीहौपूर्वपदप्रकृतिस्वरः । रुहेम रुहप्रादुर्भावेइत्यस्मादाशीर्लिङि यासुट्परस्मैपदेष्विडितियासुडागमः स्कोःसंयोगाद्योरितिसलोपः लिङ्याशिष्यङित्यङ्प्रत्ययः अतोयेयइतीयादेशः लोपोव्योर्वलीतियलोपः गुणः । प्रणिनाय णीञ्प्रापणेइत्यस्मात् लिटिणलिरूपं पादादित्वादनिघातः लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् ॥ ११ ॥

॥ इतितृतीयस्यप्रथमेचतुर्थोवर्गः ॥ ४ ॥

सखायस्त्वेतिनवर्चंनवमंसूक्तंवैश्वामित्रम् अत्रेयमनुक्रमणिका—सखायोनवबार्हतं त्रिष्टुबन्तमिति अंत्यात्रिष्टुप् शिष्टाअष्टौबृहत्यः प्रातरनुवाकाश्विनशस्त्रयोर्बार्हतेछन्दस्यस्यसूक्तस्यविनियोगः अथैतस्याइतिखण्डेसूत्रितं—सखायस्त्वायमग्निरग्नआयाहीति ।

तस्मिन्सूक्तेप्रथमा—

**सखायस्त्वाववृमहेदेवंमर्तासऊतये ।**
**अपांनपातंसुभगंसुदीदितिंसुप्रतूर्तिमनेहसम् ॥ १ ॥**

**सखायः । त्वा । ववृमहे । देवम् । मर्तासः । ऊतये । अपाम् । नपातम् । सुऽभगम् । सुऽदीदितिम् । सुऽप्रतूर्तिम् । अनेहसम् ॥१॥**

विश्वामित्रःस्तौति—हेअग्ने सखायः सोमाज्यादिहविष्प्रदानेनोपकारकत्वान्मित्राणिमर्तासोमनुष्याऋत्विजोवयम् अपांनपातं अपांनप्तारं सुभगंशोभनधनयुक्तंसुदीदितिंशोभनदीप्तिंसुप्रतूर्तिं शोभनप्रतरणं कर्मानुष्ठातृभिःसुखेनगन्तव्यमनेहसम् उपद्रवरहितमेतादृशं देवंत्वाम् ऊतयेरक्षणायववृमहे वृणीमहे ॥ सखायः ख्याप्रकथने समानेख्यश्चोदात्तइतिसमानेउपपदेडिदित्यनुवृत्तौख्यातेरिण् तस्यडित्वाट्टिलोपः तत्सन्नियोगेनयलोपः समानस्यच्छन्दस्यमूर्धेतिसभावः उपपदस्योदात्तत्वम् । णिदित्यनुवृत्तौ सख्युरसंबुद्धावितिणिद्भावः वृद्ध्यायादेशौ आद्युदात्तः । ववृमहे वृङ्संभक्तौ छन्दसि लुङ्लङ्लिटइतिवर्तमानेलिट् क्रादित्वादिडभावः निघातः । ऊतये अवरक्षणेइत्यस्य उदात्तइत्यनुवृत्तौ ऊतियूतीत्यादिनाक्तिन्नन्तत्वेननिपातनादन्तोदात्तः । अपाम् ऊडिदमितिविभक्तेरुदात्तत्वम् । सुभगम् आद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम् । सुप्रतूर्तिम् क्रत्वादयश्चेति उत्तरपदाद्युदात्तत्वम् ॥ १ ॥

अथद्वितीया

**कायमानोवनात्वंयन्मातृरजंगन्नपः ।**
**नतत्तेअग्नेप्रमृषेनिवर्तनंयद्दूरेसन्निहाभवः ॥ २ ॥**

कायमानः । वना । त्वम् । यत् । मातृः । अजगन् । अपः । न ।
तत् । ते । अग्ने । प्रऽमृषे । निऽवर्तनम् । यत् । दूरे । सन् । इह ।
अभवः ॥ २ ॥

हेअग्ने वनाकाननानिरक्षितुंकायमानः कामयमानः त्वंयद्यस्मात्कारणात्तानिविहायमातृः मातृभूताअपः अजगन्अगमः गतवानसि अप्सुप्रविष्टत्वाच्छान्तोवर्तसे तत्तस्मात्तेतव निवर्तनंनितरां तत्रैववर्तनं तेनचविनाशोलक्ष्यते सविनाशोनप्रमृषे नप्रमृष्यतेनसह्यते । कुतइत्यतआह । यद्यस्मात्कारणाद्दूरेसन्अदृश्यतयावर्तमानस्त्वमिहास्मत्सम्बन्धिष्वरणिरूपेषुकाष्ठेषु अभवः मन्थनात्क्षणमात्रेणास्माकंसमीपेभवासि तस्मात्तवदूरतोवर्तनमस्मभ्यंनरोचते । अस्मिन्नर्थेयास्कः—कायमानश्चायमानःकामयमानइतिवावनानित्वंन्मातृरपोगमउपशाम्यनतत्तेअग्नेप्रमृष्यतेनिवर्तनंदूरेयत्सन्निहभवासिजायमानइति ॥ कायमानः कमुकान्तौ कर्मणिङ् लटःशानच् मकारलोपश्छान्दसः । अजगन् गम्लृगतौइत्यस्यलङिबहुलंछन्दसीतिशपःश्लुः हल्ङ्यादिनासिलोपः मोनोधातोरितिनकारः यच्छब्दयोगादनिघातः अडागमस्वरः । प्रमृषे मृषतितिक्षायाम् व्यत्ययेनकर्मणितप्रत्ययः लोपस्तआत्मनेपदेष्वितितलोपः धातुस्वरः अभवः छन्दसिलुङ्लङ्लिटइतिलङर्थेलङ् यद्योगादनिघातः ॥ २ ॥

अथतृतीया—

**अतितृष्टंववक्षिथाथैवसुमनाअसि ।**
**प्रप्रान्येयन्तिपर्यन्यआसतेयेषांसख्येअसिश्रितः ॥ ३ ॥**

अति । तृष्टम् । ववक्षिथ । अथ । एव । सुऽमनाः । असि ।
प्रऽप्र । अन्ये । यन्ति । परि । अन्ये । आसते । येषाम् । सख्ये ।
असि । श्रितः ॥ ३ ॥

१ नि० ४. १४.

हेअग्ने तृष्टंस्तोतुस्तृष्णामभिलाषंतदुचितफलप्रदानेनसफलंकर्तुंअतिववक्षिथ अतिशयेनवोढुमिच्छसि । अथैवअथापित्वंसुमनाअसिसंतुष्टमनस्कोवर्तसे किंच त्वंयपांषोडशानामृत्विजां सख्येमैत्रेश्रितोसिवर्तसे तेषांमध्येअन्येअध्वर्युप्रभृतयोद्वादशर्त्विजःप्रयन्ति प्रकर्षेणहोतुंगच्छन्ति अन्येउद्गातृप्रभृतयश्चत्वारःपर्यासते परितआसीनावर्तन्ते ॥ ववक्षिथ वहप्रापणेइत्यस्य सनिरूपम् अभ्यासस्यसन्यतइतीत्वाभावश्छान्दसः तदन्ताद्वर्तमानेलिट् थलआर्धधातुकस्येड्वलादेरितीट् कारप्रत्ययादामित्याम्नभवति मन्त्रत्वात् निघातः । प्रप्र प्रसमुपोदइतिद्विर्वचनम् । यन्ति इण्गतावित्यस्यलटिरूपम् एकान्याभ्यांसमर्थाभ्यामित्यन्यशब्दयोगात्पूर्वस्यनिघाताभावः । आसते आसउपवेशनेउत्तरत्वान्निघातः । असि असभुवि तासस्त्योर्लोपइतिसकारलोपः यद्वृत्तयोगान्ननिहन्यते ॥ ३ ॥

अथचतुर्थी–

ई॒यि॒वांस॒मति॒ स्रिधः॒ शश्व॑ती॒रति॑ स॒श्चतः॑ ।
अन्वी॑मविन्दन्निचि॒रासो॑ अ॒द्रुहो॒ऽप्सु सिं॒हमि॑व श्रि॒तम् ॥ ४ ॥

ई॒यि॒ऽवांस॑म् । अति॑ । स्रिधः॑ । शश्व॑तीः । अति॑ । स॒श्चतः॑ ।
अनु॑ । ई॒म् । अ॒वि॒न्द॒न् । नि॒ऽचि॒रासः॑ । अ॒द्रुहः॑ । अ॒प्ऽसु ।
सिं॒हम्ऽइ॑व । श्रि॒तम् ॥ ४ ॥

हेअग्ने अद्रुहः अद्रोग्धारःनिचिरासः नितरांचिरासश्चिरन्तनाः विश्वेदेवाःस्रिधःशोषकान्शत्रून्बलेन अतिअतिक्रम्यईयिवांसंगच्छन्तंशश्वतीर्बह्वीः सश्चतःसङ्गतिकारिणीः सेनाश्चाति अतिक्रम्यगच्छन्तंअप्सुश्रितंतिरोहितम् अतएवसिंहमिव गुहाप्रविष्टं सिंहमिवभीमम्ईमेनंत्वामन्वविन्दन् अनुगम्यअलभन्त ॥ ईयिवांसम् इण्गतावित्यस्यक्वसौ उपेयिवाननाश्वाननूचानश्चेतिनिपातितः प्रत्ययस्वरः । स्रिधः स्रिधेःक्षयार्थस्य शोषणार्थस्य वाक्विप्चेतिक्विप् धातुस्वरः। सश्चतः षस्जगतौ नकारस्यव्यत्ययेनचकारः लटःशत्रादेशः प्रत्ययस्वरः । अविन्दन् विद्लृलाभेइत्यस्यलङिरूपम् । निचिरासः नितरांचिराः आज्जसेरसुगित्यसुक् समासस्वरः । अद्रुहः द्रुहजिघांसायाम् । सत्सूद्विषेत्यादिनाद्भावेक्विप् बहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । श्रितम् श्रिञ्सेवायामित्यस्यश्युकःकितीतीट्प्रतिषेधः प्रत्ययस्वरः ॥ ४ ॥

अथपञ्चमी—

ससृवाँसमिवत्मनाग्निमित्थातिरोहितम् ।
ऐनंनयन्मातरिश्वापरावतोदेवेभ्योमथितंपरि ॥ ५ ॥ ५ ॥

ससृवांसम्ऽइव । त्मना । अग्निम् । इत्था । तिरःऽहितम् ।
आ । एनम् । नयत् । मातरिश्वा । पराऽवतः । देवेभ्यः ।
मथितम् । परि ॥ ५ ॥ ५ ॥

मातरिश्वावायुः इत्थाइत्थं त्मनास्वेच्छयाअप्सुप्रवेशेन तिरोहितंनिलीनंपरिपरितः म-थितंमन्थनेननिष्पादितमेनमग्निंदेवेभ्यः तादर्थ्येचतुर्थी देवार्थं परावतः दूरदेशादानयत्आनी-तवान् तत्रदृष्टान्तः—ससृवांसमिव यथास्वाच्छन्द्येनसमृधांसंसरन्तंगच्छन्तंपुत्रंपिताबलादानयति तद्वत् ॥ ससृवांसमिव सृगतावित्यस्माल्लिटः तस्यक्वसुः इवेनविभक्त्यलोपइत्युक्तत्वात्प्रत्य-यस्वरः । त्मना आत्मनशब्दस्यमंत्रेष्वाङ्यादेरात्मनइत्याकारलोपः । इत्था थाहेतौचच्छन्दसी-तिव्यत्ययेनथाप्रत्ययः प्रत्ययस्वरः । एनम् अन्वादेशेद्वितीयाटौस्स्वेनइत्येनादेशः अनुदात्तश्च । नयत् णीञ्प्रापणेइत्यस्यलङिरूपम् अडभावश्छान्दसः । मातरिश्वा 'मातर्यन्तरिक्षेश्वसि(य)ति श्वन्नुक्षन्नित्यादिनानिपातितः ॥ ५ ॥

॥ इतितृतीयस्यप्रथमेपञ्चमोवर्गः ॥ ५ ॥

अथषष्ठी—

तंत्वामर्ताअगृभ्णतदेवेभ्योहव्यवाहन ।
विश्वान्यद्यज्ञाँअभिपासिमानुषतवक्रत्वायविष्ठ्य ॥ ६ ॥

तम् । त्वा । मर्ताः । अगृभ्णत । देवेभ्यः । हव्यऽवाहन ।
विश्वान् । यत् । यज्ञान् । अभिऽपासि । मानुष । तव ।
क्रत्वा । यविष्ठ्य ॥ ६ ॥

हव्यवाहन हव्यानांवोढः हेअग्ने मर्ताः मनुष्याः अध्वर्युप्रभृतयः तंतादृशमप्सुतिरो-हितं त्वात्वांदेवेभ्यः यष्टव्यदेवतार्थम् अगृभ्णतअगृह्णत मानुष मनुष्याणांहितकारिन् यवि-ष्ठ्य युवतमहेअग्ने तवक्रत्वाकर्मणामाहात्म्येनविश्वान्सर्वान्अस्माभिः क्रियमाणान् यज्ञान्

यत् यस्मात्कारणात्अभिपासि सर्वतःपालयसि तस्मात्त्वामगृभ्णतेतिपूर्वेणान्वयः । अगृभ्णत ग्रहउपादाने क्र्यादित्वात्श्ना ग्रहिज्यावयीतिसम्प्रसारणम् हृग्रहोर्भश्छन्दसीति हकारस्यभकारः तिङ्ङतिङइतिनिघातः । हव्यवाहन वहप्रापणेइतिधातोःल्युडित्यनुवृत्तौ हव्येऽनन्तःपादमितिल्युट् उपधावृद्धिः योरनादेशः अपादादित्वादाष्टमिकमनुदात्तत्वम् । विश्वान् विशप्रवेशनेइत्यस्मात् अशिप्रुषिलटिरणिकणिखदिविशिभ्यःक्वन्नितिक्वन् कित्त्वाद्गुणाभावः नित्त्वादाद्युदात्तत्वम् । अभिपासि पारक्षणे अस्यधातोरक्षणार्थत्वान्नपिबादेशः यच्छब्दयोगान्ननिघातः धातुस्वरः । क्त्वा टा जसादयश्छन्दसिविकल्प्यन्तइतिअत्रनादेशाभावः यणादेशः प्रत्ययस्वरः । यविष्ठ्य युवशब्दादतिशायने तमबिष्ठनौस्थूलदूरयुवेतियणादिपरंलुप्यते पूर्वस्यचगुणः वस्वादित्वात्स्वार्थिकोयप्रत्ययः ॥ ६ ॥

अथसप्तमी–

## तद्भ॒द्रंतव॑दं॒सना॒पाका॑यचिच्छदयति ।
## त्वांयद॑ग्नेप॒शवः॑स॒मास॑ते॒समि॑द्धमपिशर्व॒रे ॥ ७ ॥

तत् । भ॒द्रम् । तव॑ । दं॒सना॑ । पाका॑य । चि॒त् । छ॒द॒य॒ति॒ ।
त्वाम् । यत् । अ॒ग्ने॒ । प॒शवः॑ । स॒म्ऽआस॑ते । सम्ऽइ॑द्धम् ।
अ॒पि॒ऽश॒र्व॒रे ॥ ७ ॥

हेअग्ने तवसम्बन्धितदिदंभद्रंशोभनंदंसनाअग्निहोत्रादिकंकर्मपाकायाचित् चिच्छब्दोप्यर्थे पाकायेतिकर्मणिचतुर्थी पाकोर्भकः तद्भद्रंज्ञमपियजमानं छदयति स्वफलप्रदानेनपूजयति पशुपुत्रादिभिःपरिवृतंकरोतीत्यर्थः छदयतिशब्दोर्चतिकर्मा छन्दयतिछदयतीतितन्नामसु पाठात् यद्वा पाकशब्दःप्रशस्यंवक्ति पाकः वामइतिप्रशस्यनामसुपठितत्वात् तद्भद्रंकर्मप्रशस्यं यजमानम् अभिमतफलंप्रदानेनपूजयतीत्यर्थः यद्यस्मात्कारणात् अपिशर्वरशर्वरीमुखेअग्निविहरणकालेएवसमिद्धंदीप्यमानं त्वांपशवोद्विपदाश्चतुष्पदाश्चोभयेपशवः समासतेपर्युपासतइत्यर्थः तदिदंपश्वादिलक्षणं फलंयजमानायप्रयच्छतीत्यर्थः ॥ भद्रं भदिकल्याणेइत्यस्माद्धातोरुपरिरक्प्रत्ययेननिपातनादन्तोदात्तत्वम् । पाकाय पारक्षणेइत्यस्मादिण्भीकापाशल्येत्यादिनाकन् पायतेरक्ष्योराजादिनेतिपाकः नित्त्वादाद्युदात्तः । छदयति छदअपवारणे स्वार्थेणिच् अदन्तत्वाद्वृद्ध्यभावः निघातः । समासते आसउपवेशने अदादित्वाच्छपोलुक् । अनकारान्तत्वात् झस्यादादेशः यद्योगादनिघातः तिङिचोदात्तवतीतिगतेर्निघातः धातुस्वरः ॥ ७ ॥

अथाष्टमी—

आजुहोतास्वध्वरंशीरंपावकशोचिषम् ।
आशुंदूरमंजिरंप्रत्नमीड्यंश्रुष्टीदेवंसपर्यत ॥ ८ ॥

आ । जुहोत । सुऽअध्वरम् । शीरम् । पावकऽशोचिषम् ।
आशुम् । दूरम् । अजिरम् । प्रत्नम् । ईड्यम् । श्रुष्टी ।
देवम् । सपर्यत ॥ ८ ॥

ऋत्विजोयजमानःप्रेरयति हेऋत्विजः पावकशोचिषम् शोधकदीप्तिम् शीरम् काष्ठेष्वोषधीषुचानुशायिनं स्वध्वरं शोभनयज्ञोपेतमिममग्निमाजुहोत आहुतिभिरासमन्तात्तर्पयत अपिच आशुम् कर्मणिव्याप्तंदूतम् आह्वानकारित्वेन देवानां दूतम् अजिरंक्षिप्रंगन्तारं प्रत्नंपुरातनम् ईड्यं स्तोतव्यं देवंद्योतमानमिममग्निंश्रुष्टी सपर्यत श्रुष्टीतिक्षिप्रनामेतियास्कः—क्षिप्रंपूजयत ॥ जुहोत हुदानादनयोः अस्माद्धातोर्लोट् जुहोत्यादिभ्यःश्लुरितिशपःश्लुः श्लावितिद्विर्वचनं लोटोलङ्वदितिलङ्वद्भावेतस्थस्थमिपामितितस्यतादेशः छन्दसीत्यनुवृत्तौ थस्यतप्तनप्तनथनाश्चेतितबादेशः पित्त्वाद्गुणः निघातः । स्वध्वरम् बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । शीरम् शीङ् स्वप्ने अस्माद्धातोः स्फायितञ्चिवञ्चीत्यादिनारक्प्रत्ययः किग्त्वाद्गुणाभावः प्रत्ययस्वरः । पावकशोचिषमित्यत्रपवनं पावःशुद्धिः तंकायतीतिपावकः आतोनुपसर्गेकः प्रत्ययस्वरः बहुव्रीहौप्रकृत्यापूर्वपदमितिपूर्वपदप्रकृतिस्वरत्वम् । आशुम् अशूव्याप्तौ अस्माद्धातोःकृवापाजिमीत्यादिनाउण् उपधावृद्धिः प्रत्ययस्वरः । अजिरम् अजगतिक्षेपणयोरित्यस्माद्धातोरजिरशिशिरशिथिलेतिकिरच् प्रत्ययान्तत्वेन निपातनादन्तोदात्तत्वत् । प्रत्नम् प्रगस्यच्छन्दसिगलोपश्चेतिगलोपः चकारात्नप्रत्ययः प्रत्ययस्वरः । ईड्यम् ईडस्तुतावस्माण्ण्यत् ईडवन्देत्यादिनाद्युदात्तत्वम् । सपर्यत सपरशब्दात् कण्ड्वादिभ्योयक्पूजायांवर्तते लोण्मध्यमपुरुषबहुवचनम् शप् अतोगुणेइति पररूपत्वं निघातः ॥ ८ ॥

अथनवमी—

त्रीणिशतात्रीसहस्राण्यग्निंत्रिंशच्चदेवानवचासपर्यन् ।
औक्षन्घृतैरस्तृणन्बर्हिरस्माआदिद्धोतारंन्यसादयन्त ॥ ९ ॥ ६ ॥

त्रीणि । शता । त्री । सहस्राणि । अग्निम् । त्रिंशत् । च । देवाः । नव । च । असपर्यन् । औक्षन् । घृतैः । अस्तृणन् । बर्हिः । अस्मै । आत् । इत् । होतारम् । नि । असादयन्त ॥ ९ ॥ ६ ॥

त्रीणिशता त्रीणिशतानि त्रीसहस्राणि त्रीणिसहस्राणित्रिंशच्चनवचएकोनचत्वारिंशदधिकशतत्रयोपेतत्रिसहस्रसङ्ख्याकादेवाः इममग्निमसपर्यन् अपूजयन् किंच तेदेवाः घृतैरिमममग्निमौक्षन्असिञ्चन् तथा अस्मैअग्नयेतदर्थंबर्हिरस्तृणन् बर्हिषाआस्तरणं वेद्याच्छादनमकुर्वन् आदित् अनन्तरमेवतेदेवास्तस्मिन्बर्हिषिएनमग्निंहोतारं कृत्वान्यसादयन्त उपावेशयन् देवैः पूज्यमिममग्निंसपर्यतेतिपूर्वेणान्वयः देवसंख्या...दाहरणं...महिता—महिमानमेवैषाम् एतेत्रयस्त्रिंशत्त्वेवदेवाइति कतमेतेत्रयस्त्रिंशदष्टौवसवएकादशरुद्राद्वादशादित्यास्तएकत्रिंशदिन्द्रश्चैवप्रजापतिश्चत्रयस्त्रिंशादिति ॥ शता दशानांदशतांशभावस्तश्चप्रत्ययःदशदशतः परिमाणमेषां शतानि सुपांसुलुगित्यादिनासुपोडादेशः प्रत्ययस्वरः । त्री सुपांसुलुगितिपूर्वसवर्णदीर्घःफिट्स्वरः । सहस्राणि कर्दमादित्वान्मध्योदात्तः । त्रिंशत् त्रयाणां दशतांत्रिन्भावःशच्चप्रत्ययः त्रयोदशतः परिमाणमस्यतत्रिंशत् प्रत्ययस्वरः । नव कनिन्नित्यनुवृत्तौ णुस्तुतावित्यस्माद्धातोर्णुदंशोर्नुदश्चेति कनिन्गुणश्च नित्त्वादाद्युदात्तः । असपर्यन् लङिरूपं निघातः । औक्षन् उक्षसेचने लङिआडजादीनामित्याडागमः वृद्धिः पादादित्वान्ननिहन्यते आगमस्वरः । अस्तृणन् स्तृञ्आच्छादने लङ् बहुवचने क्र्यादित्वात्श्ना झेरन्तादेशः नित्यंङितइतीकारलोपः संयोगान्तलोपः श्नाभ्यस्तयोरातइत्याकारलोपः लुङ्लङ्लृङ्क्ष्वित्यडागमः सचोदात्तः आगमस्वरः वाक्येत्यनुवृत्तौचादित्वान्निघाताभावः । बर्हिः इसिरित्यनुवृत्तौबृंहेर्नलोपश्चेतीसिः तत्संनियोगेननलोपः प्रत्ययस्वरः । असादयन्त षद्लृविशरणगत्यवसादनेषु अस्माद्धेतुमतिचेतिणिच् उपधावृद्धिःणिचश्चेत्यात्मनेपदम् लङिबहुवचनेरूपं निघातः ॥ ९ ॥

॥ इतितृतीयस्यप्रथमेषष्ठोवर्गः ॥ ६ ॥

त्वामग्नइतिनवर्चंदशमंसूक्तं वैश्वामित्रमौष्णिहमाग्नेयम् त्वामग्नऔष्णिहमित्यनुक्रान्तत्वात् प्रातरनुवाकाश्विनशस्त्रयोरौष्णिहेछन्दसिअस्यसूक्तस्यविनियोगः अथैतस्याइतिखण्डेसूत्रितम्—पुरुत्वात्वामग्नइति ।

तस्मिन्सूक्तेप्रथमा—

त्वामग्ने मनीषिणः सम्राजं चर्षणीनाम् । देवं मर्तास इन्धते समध्वरे ॥ १ ॥

त्वाम् । अग्ने । मनीषिणः । सम्ऽराजम् । चर्षणीनाम् ।
देवम् । मर्तासः । इन्धते । सम् । अध्वरे ॥ १ ॥

हेअग्ने मनीषिणोधीमन्तोध्वर्युप्रभृतयोमर्तासोमनुष्याः चर्षणीनां प्रजानां सम्राजमधिपतिं देवंद्योतमानं त्वाम् अध्वरे यज्ञेसमिन्धतेसोमाज्यपयःप्रभृतिभिराहुतिभिः सम्यग्दीपयन्ति ॥ .म-नीषिणः मनीषाएषामस्तीतिव्रीह्यादिभ्यश्चेतिइनिः यस्येतिचेत्यवर्णलोपः प्रत्ययस्वरः । सम्राजं राजृदीप्तौ संपूर्वादस्माद्धातोः सत्सूद्विषेतिक्विप् क्विलोपः समोमकारस्यमोनुस्वारइत्यनुस्वारे प्राप्तेमोराजिसमःक्वाविति समोमकारः कृदुत्तरपदप्रकृतिस्वरत्वम् । चर्षणीनाम् नामन्यतरस्यामि-तिविभक्तेरुदात्तत्वम् । इन्धते ञिइन्धीदीप्तौ अस्माद्धातोर्हेतुमतिचेतिणिच् लट्झस्यआत्मनेपदेष्वनतः इत्यदादेशः छन्दस्युभयथेतिझस्यार्धधातुकत्वात्णेरनिटीतिणिलोपः निघातः ॥ १ ॥

अथद्वितीया–

त्वांयज्ञेष्वृत्विजमग्नेहोतारमीळते।गोपाऋतस्यदीदिहिस्वेदमे॥२॥

त्वाम् । यज्ञेषु । ऋत्विजम् । अग्ने । होतारम् । ईळते ।
गोपाः । ऋतस्य । दीदिहि । स्वे । दमे ॥ २ ॥

हेअग्ने अध्वर्य्वादयःयज्ञेष्वग्निष्टोमादिषुत्वांहोतारमृत्विजंहोतृनामकमृत्विजमीळतेस्तुवन्ति तादृशस्त्वमृतस्यसत्यस्ययज्ञस्यवागोपाः गोपायितासन्स्वेदमेस्वकीयेगृहेयज्ञशालायां दीदि-हिदीप्यस्व । दीदिहि दिवुक्रीडादौ यङ्लुक् लोट् तुजादित्वादभ्यासस्यदीर्घत्वम् संज्ञापूर्वको विधिरनित्यइत्यभ्यासस्यगुणाभावेलोपोव्योर्वलीतिवलोपः ॥ २ ॥

अथतृतीया–

सघायस्तेददाशतिसमिधाजातवेदसे।सोअग्नेधत्तेसुवीर्यंसपुष्यति ३

सः । घ । यः । ते । ददाशति । सम्ऽइधा । जातऽवेदसे ।
सः । अग्ने । धत्ते । सुऽवीर्यम् । सः । पुष्यति ॥ ३ ॥

हेअग्ने योयजमानः जातवेदसेजातप्रज्ञायतेतुभ्यंसमिधासमिन्धनकारीणिआज्यपुरोडा-शादिहवींषिददाशतिददाति सघसखलुसुवीर्यंशोभनसामर्थ्योपेतंपुत्रंधत्तेधारयति अपिच सःपु-

एवपुष्यातिपशुपुत्रादिभिःसमृद्धोभवति घ चादयोनुदात्ताइत्यनुदात्तः । ददाशति दाशृदानेइत्यस्माद्धातोः कर्तरिशप् तिप् द्विर्वचनंछान्दसं यद्वृत्तयोगादनिघातः अभ्यस्तानामादिरित्याद्युदात्तः । समिधा ञिइन्धीदीप्तौ अस्मात्क्विप्चेतिक्विप् उपधालोपः सुपांसुलुगिति शाड्डादेशः कृदुत्तरपदप्रकृतिस्वरत्वम् । जातवेदसेबहुव्रीहौप्रकृत्यापूर्वपदमितिप्रकृतिस्वरत्वम् । सुवीर्यम् वीरवीर्यौचेत्युत्तरपदाद्युदात्तत्वम् । पुष्यति पुषपुष्टौ अस्मात्श्यन् ङित्त्वाद्गुणाभावः निघातः ॥ ३ ॥

अथचतुर्थी—

**सकेतुरध्वराणामग्निर्देवेभिरागमत् । अञ्जानःसप्तहोतृभिर्हविष्मते ४**

सः । केतुः । अध्वराणाम् । अग्निः । देवेभिः । आ । गमत् ।
अञ्जानः । सप्त । होतृऽभिः । हविष्मते ॥ ४ ॥

अध्वराणांयज्ञानांकेतुःप्रज्ञापकः सोग्निः सप्तसप्तभिर्होतृभिर्वषट्कर्तृभिः अञ्जानः सोमाज्याहुतिभिरज्यमानःसन्हविष्मतेयजमानार्थंदेवेभिर्यष्टव्यैः देवैःसहआगमत्आगच्छतु । गमत् लोडर्थेछन्दसिलुङ्लङ्लिटइतिलुङ् लृदित्वादङ् बहुलंछन्दस्यमाङ्योगेपीत्यडभावः निघातः । अञ्जानः अञ्जूव्यक्तिगतिम्रक्षणेषु व्यत्ययेनकर्मणिशानच् चित्त्वादन्तोदात्तत्वम् । हविष्मते जुहोतेरर्चिशुचीत्यादिनाइसिप्रत्ययान्तोहविःशब्दोन्तोदात्तः स्वरविधौव्यञ्जनमविद्यमानवदितिपरिभाषानाश्रयणाद्ध्रस्वनुड्भ्यामितिमतुपउपदात्तत्वाभावः इसिप्रत्ययस्वरः ॥ ४ ॥

अथपञ्चमी—

**प्रहोत्रेपूर्व्यंवचोग्नयेभरताबृहत् । विपांज्योतींषिबिभ्रतेनवेधसे ।५।७।**

प्र । होत्रे । पूर्व्यम् । वचः । अग्नये । भरत । बृहत् ।
विपाम् । ज्योतींषि । बिभ्रते । न । वेधसे ॥ ५ ॥ ७ ॥

यजमानोहोत्रादीन्प्रतिब्रूते हेहोत्रादयः विपांविप्राणांमेधाविनामध्वर्य्वादीनां ज्योतींषि सत्कर्मानुष्ठानसंपाद्यानितेजांसिबिभ्रतेनिमित्ततयाकुर्वाणायवेधसेजगतोविधात्रे होत्रेदेवानामाह्वात्रे अग्नये बृहन्महत् पूर्व्यं पूर्वैःकृतंपुरातनंवचः स्तोत्रशस्त्रादिकंवाक्यंप्रभरत प्रकर्षेण संपादयत नेत्ययंपादपूरणः अन्वयाभावात् यद्वा वेधसेन यथावेधाः जगद्विधातापरमेश्वरः आ-

दित्यादीनिज्योतींषिकरोति तद्वदिति ॥ प्रशब्दस्य छन्दसि व्यवहिताश्चेति भरतेत्यनेनसंबन्धः । पूर्व्यं पूर्वैःकृतमित्यर्थे पूर्वैःकृतमिनयौचेतियप्रत्ययः .भसंज्ञकत्वादवर्णलोपः प्रत्ययस्वरः । भरत भृञ्भरणे भौवादिकः निघातः । बृहत् वर्तमानेपृषन्महद्बृहदित्तिनिपातनादन्तोदात्तः । बिभ्रते भृञ्भरणे जुहोत्यादिभ्यःश्लुः भृञामिदित्यभ्यासस्यइत्वे 'अभ्यस्तानामादिरित्याद्युदात्तत्वम् ॥ ५ ॥

॥ इतितृतीयस्यप्रथमेसप्तमोवर्गः ॥ ७ ॥

अथषष्ठी—

अग्निंवर्धन्तुनोगिरोयतोजायतउक्थ्यः ।
महेवाजायद्रविणायदर्शतः ॥ ६ ॥

अग्निम् । वर्धन्तु । नः । गिरः । यतः । जायते । उक्थ्यः ।
महे । वाजाय । द्रविणाय । दर्शतः ॥ ६ ॥

योयमग्निः यतःयाभिःस्तुतिरूपाभिर्गीर्भिः उक्थ्योजायते उक्थ्यशब्दःप्रशस्यवाची अनभिशस्त्यः(स्ताः) उक्थ्यइतितन्नामसुपाठात् अतिशयेनस्तुत्योभवतीत्यर्थः । यश्चायमग्निः महेमहते वाजायान्नायद्रविणाय धनायचदर्शतः दर्शनीयोभवति तमिममग्निंनोगिरः अस्माकंस्तुतिरूपास्तावाचः वर्धन्तुवर्धयन्तु पूजयन्त्वित्यर्थः ॥ वृधन्तु वृधुवर्धने अस्माण्णिच् लघूपधगुणः छन्दस्युभयथेतिझेरार्धधातुकत्वाण्णिलोपः झेरन्तादेशःएरुरित्युकारः निघातः । उक्थ्यः वचपरिभाषणे अस्मात्पातृतुदिवचिरिचीत्यादिनाथक् किस्वाद्वचिस्वपीत्यादिनासम्प्रसारणम् उक्थं शास्त्रंतेनस्तुत्यत्वेनतत्रभवउक्थ्यः भवेछन्दसीतियत् यस्येतिअलोपः तित्स्वरितमितिस्वरितः । दर्शतः भृमृदृशियजीतिअतच्प्रत्ययःचित्त्वादन्तोदात्तः ॥ ६ ॥

अथसप्तमी—

अग्नेयजिष्ठोअध्वरेदेवान्देवयतेयज ।
होतामन्द्रोविराजस्यतिस्रिधः ॥ ७ ॥

अग्ने । यजिष्ठः । अध्वरे । देवान् । देवऽयते । यज ।
होता । मन्द्रः । वि । राजसि । अति । स्रिधः ॥ ७ ॥

हेअग्ने यजिष्ठः यष्टृतमस्त्वम् अध्वरेयज्ञेदेवयते देवानात्मनइच्छते यजमानायदेवान्यज त-दर्थंयष्टव्यानग्न्यादीन्देवान्पूजय । किञ्च होतादेवानामाह्वातामन्द्रः यजमानस्यमादयितासत्वं स्त्रिधःक्षपयितॄनशत्रूंनतिअतिक्रम्यविराजसि विशेषेणशोभसे ॥ यजिष्ठः तुश्छन्दसीतिइष्ठन् तु-रिष्ठेमेयःस्वितितृचोलोपः नित्त्वादाद्युदात्तः । देवयते क्यच् चित्त्वादन्तोदात्तत्वम् शपःपित्त्वादनुदा-त्तत्वं शतुश्चलसार्वधातुकस्वरेणतयोःक्यचासहैकादेशे एकादेशउदात्तेनोदात्तइतिअन्तोदात्तोदे-वयच्छब्दः ततः शतुरनुमइतिविभक्तेरुदात्तत्वम् । यज यजदेवपूजासङ्गतिकरणदानेषु अस्मा-ल्लोट्सिप् शप् सिपोहिरादेशः अतोहेरितिहेर्लुक् निघातः । राजसि राजृदीप्तौ निघातः ॥ ७ ॥

अथाष्टमी—

**सनः॑पावकदीदिहि॒द्युमद॒स्मेसु॒वीर्य॑म् ।**
**भवा॑स्तो॒तृभ्यो॒अन्त॑मःस्व॒स्तये॑ ॥ ८ ॥**

सः । न॒ः पा॒व॒क॒ । दी॒दि॒हि॒ । द्यु॒ऽमत् । अ॒स्मे इति॑ । सु॒ऽवीर्य॑म् ।
भव॑ । स्तो॒तृऽभ्यः॑ । अन्त॑मः । स्व॒स्तये॑ ॥ ८ ॥

नःपावकअस्मत्सम्बन्धिनःपापस्यशोधक हेअग्ने सपूर्वमन्त्रेप्रतिपादितस्त्वंद्युमत्कान्ति-युक्तंसुवीर्यंशोभनसामर्थ्योपेतदानभोगार्हंधनमस्मेअस्मभ्यंदीदिहि यद्वा द्युमत्तेजोयुक्तं सुवीर्यंशोभनवीर्योपेतंचयथाभवतितथाअस्मेअस्मदर्थंत्वंदीदिहिदीप्यस्व किञ्च स्तोतृभ्यः ष-ष्ठ्यर्थेचतुर्थी त्वद्विषयस्तुतिकारिणांहोत्रादीनां स्वस्तयेअविनाशायक्षेमाय अन्तमः अन्तिकतमः तेषामतिशयेनसमीपवर्तीभव ॥ पावक पूञ्पवने अस्माद्धातोर्ण्वुच् णित्त्वाद्वृद्धिः योरकादेशः आवादेशः आमंत्रितत्वादाष्टमिकमनुदात्तत्वम् । दीदिहि दिवुक्रीडादौअस्माद्यङ् तुजादीनामि-त्यभ्यासस्यदीर्घत्वम् संज्ञापूर्वकोविधिरनित्यइतिअभ्यासस्यगुणाभावः बहुलंछन्दसीतियङोलुक् लोटिसिप्चर्करीतंपरस्मैपदमदादिवच्चेतिवचनाच्छपोलुक् सिपोहिरादेशः लोपोव्योर्वलीतिवलो-पः हेरपित्त्वाद्गुणाभावः निघातः । द्युमत् दिवउदित्युकारः ह्रस्वनुड्भ्यामितिमतुपउदात्तत्वम् । सुवीर्यम् वीरवीर्यौचेत्युत्तरपदाद्युदात्तत्वम् । अन्तमः अन्तोस्यास्तीत्यान्तिकः अतइनिठनावि-तिठन् अतिशयेनान्तिकइत्यतिशायनेतमबितितमप् तमेतादेश्चेतितादिलोपः नित्त्वादाद्युदात्तः । स्वस्तये प्रातिपदिकस्वरः ॥ ८ ॥

अथनवमी–

तंत्वाविप्राविपन्यवोजागृवांसःसमिन्धते ।
हव्यवाहममर्त्यंसहोवृधम् ॥ ९ ॥ ८ ॥

तम् । त्वा । विप्राः । विपन्यवः । जागृऽवांसः । सम् । इन्धते ।
हव्यऽवाहम् । अमर्त्यम् । सहःऽवृधम् ॥ ९ ॥ ८ ॥

हेअग्ने विप्राःस्तुतीनां प्रेरकाः जागृवांसः अग्निहोत्रादिकर्मणिअप्रमत्ततयाप्रबुद्धाः विपन्यवः विपन्युशब्दोमेधाविनमाचष्टे विपश्चित् विपन्युरितितन्नामसुपाठात् । विपन्यवो-मेधाविनःस्तोतारः हव्यवाहंहव्यानांवोढारम् अमर्त्यंमरणधर्मरहितं सहोवृधं सहसामथनरूपेणब-लेनवर्धमानंतादृशंत्वात्वांसमिन्धते सोमाज्याद्याहुतिभिःसम्यग्दीपयन्ति ॥ विप्राः टुवपूबी-जसन्ताने अस्माद्धातोः ऋज्रेन्द्राग्रवज्रविप्रेतिरन्प्रत्ययेन्त्वयोः निपातनादाद्युदात्तत्वम् । वि-पन्यवः विविधंपनंपननंस्तुतिंयातीतिविपन्युः मृगय्वादयश्चेतिकुः अकारलोपश्छान्दसः प्रत्यय-स्वरः । जागृवांसः जागृनिद्राक्षये अस्माल्लिटः तस्यक्वसुः उगिदचामितिनुम् द्विर्वचनाभावश्छा-न्दसः वस्वेकाजाद्घसामितिनियमादिडभावः जाग्रोविचिण्णल्ङित्स्वितिगुणोनभवति तत्र विरित्यत्रक्वसोरपिगृहीतत्वात् प्रत्ययस्वरः । इन्धते ञिइन्धीदीप्तौ अन्तर्भावितण्यर्थोयं निघातः । हव्यवाहं वहप्रापणे वहश्चेतिण्विः उपधावृद्धिः कृदुत्तरपदप्रकृतिस्वरत्वम् । सहोवृधम् वृधु-वर्धने क्विप्चेतिक्विप् ॥ ९ ॥

॥ इतितृतीयस्यप्रथमेष्टमोवर्गः ॥ ८ ॥

अग्निर्होतेतिनवर्चमेकादशंसूक्तंवैश्वामित्रंगायत्रम् आग्नेयम् अग्निर्होतागायत्रमित्यनुक्रा-न्तत्वात् प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रेछन्दसीदंसूक्तम् सूत्रितंहि–अग्निर्होतामइळेतिच-तस्रइति । आधानेप्रथमायांपवमानेष्टौ स्विष्टकृतोयाज्याअग्निर्होतेत्येषा सहव्यवाळमर्त्यइति पुरोनुवाक्या द्वितीयपवमानेष्टौ स्विष्टकृतोनुवाक्यासाह्वानिति । सूत्रितंच साह्वान्विश्वाअभियुजो-ऽग्निमीळेपुरोहितमितिसंयाज्येइति । आभिप्लविकेषूक्थ्येषुतृतीयसवनेमैत्रावरुणशस्त्रे अग्निप्रयां-सीतिवैकल्पिकोनुरूपस्तृचः । अत्रसूत्रम्–प्रवोवाजाअभिद्यवोभिप्रयांसिवाहसेति ।

तस्मिन्सूक्तेप्रथमा—

अ॒ग्निर्होता॑पु॒रोहि॑तो॒ऽध्व॒रस्य॑वि॒चर्॑षणिः । सवे॑दय॒ज्ञमा॑नु॒षक् ॥१॥

अ॒ग्निः । होता॑ । पु॒रःऽहि॑तः । अ॒ध्व॒रस्य॑ । वि॒ऽचर्॑षणिः ।
सः । वे॒द॒ । य॒ज्ञम् । आ॒नु॒षक् ॥ १ ॥

विश्वामित्रःस्तौति—होतादेवानामाह्वातापुरोहितः पुरतएवाभिमतफलसम्पादकत्वेनहितकारीयद्वा पुरःपूर्वभागेआहवनीयादिरूपेणहितोनिहितइतिपुरोहितः अध्वरस्ययज्ञस्यविचर्षणिः विशेषेणद्रष्टा विचर्षणिः विश्वचर्षणिरितितन्नामसुपाठात् सतथाविधोऽग्निः आनुषक्आनुपूर्व्येणसक्तंयज्ञमग्निष्टोमादिकंवेदजानाति । वेद विदज्ञाने विदोलटोवेतितिपोणलादेशः लघूपधगुणः निघातः । आनुषक् आसमन्तादनुषजतीत्यानुषक् षञ्जसङ्गे धातुषकारस्यसकारः क्विप्चेतिक्विप् अनिदितामित्युपधालोपः उपसर्गात्सुनोतीतिषत्वम् ॥ १ ॥

अथद्वितीया—

सह॒व्य॒वाळम॑र्त्य॒उ॒शिग्दू॒तश्चनो॑हितः । अ॒ग्निर्धि॒यासमृ॑ण्वति ॥२॥

सः । ह॒व्य॒ऽवाट् । अम॑र्त्यः । उ॒शिक् । दू॒तः । चनः॑ऽहितः ।
अ॒ग्निः । धि॒या । सम् । ऋ॒ण्व॒ति ॥ २ ॥

हव्यवाट् हविषांवोढाअमर्त्यः मरणधर्मरहितःउशिक्हविःकामयमानः दूतोदेवानांदूतः चनसेहविर्लक्षणान्नायहितोनिहितः यद्वा चनोहितः चनःअन्नंहविर्लक्षणंहितमस्येतिचनोहितः सतथाविधोऽग्निः धियाप्रज्ञयासमृण्वतिसङ्गच्छते कर्मविषयप्रज्ञान्वितोऽग्निरस्मानपिताहक्प्रज्ञान्वितान्करोत्वित्याशास्ते ॥ हव्यावाट् वहप्रापणे वहश्चेतिण्विः ढत्वजश्त्वचर्त्वानि कृदुत्तरपदप्रकृतिस्वरत्वम् । उशिक् वशकान्तौ इजिरित्यनुवृत्तौ वशेःकिच्चेतिइजिप्रत्ययः तस्यकित्त्वाद्ग्रहिज्येतिसंप्रसारणं प्रत्ययस्वरः । चनोहितः चनःशब्दः चायतेरन्नेह्रस्वश्चेत्यसुन्नन्तः चकाराद्नुडागमः तस्मिन्यलोपः नित्त्वादाद्युदात्तः पुनश्चनसोऽश्छन्दसिगतिसंज्ञावक्तव्येतिगतिसंज्ञायां गतिरनन्तरइतिप्रकृतिस्वरत्वम् बहुव्रीहौतुपूर्वपदप्रकृतिस्वरत्वम् । धिया सावेकाचइतिविभक्तेरुदात्तत्वम् । ऋण्वति ऋणुगतौ लेटि तनादित्वादुप्रत्ययः लेटोडाटावित्यडागमः ॥ २ ॥

अथतृतीया—

अग्निर्धियासचेततिकेतुर्यज्ञस्यपूर्व्यः । अर्थंह्यस्यतरणि ॥ ३ ॥

अग्निः । धिया । सः । चेतति । केतुः । यज्ञस्य । पूर्व्यः ।
अर्थम् । हि । अस्य । तरणि ॥ ३ ॥

यज्ञस्याग्निष्टोमादेःकेतुः प्रज्ञापकःपूर्व्यः पूर्वेभवःचिरन्तनः सतथाविधोग्निःधियाप्रज्ञया चेततिसर्वंजानीते अस्यैतादृशस्याग्नेरर्थंगमनस्वभावंतेजः आकाशेदृश्यमानस्यतमसः तरणिहि तारकंखलु निवर्तकमितियावत् ॥ चेतति चितीसंज्ञाने निघातः । अर्थम् ऋगतौ उषिकुषिगार्तिभ्यस्थनइतिथन् गुणः नित्त्वादाद्युदात्तः । तरणि तॄप्लवनतरणयोः अर्तिसृधृधमीत्यादिनानिप्रत्यये गुणः प्रत्ययस्वरः ॥ ३ ॥

अथचतुर्थी—

अग्निंसूनुंसनश्रुतंसहसोजातवेदसम् । वह्निंदेवाअकृण्वत ॥ ४ ॥

अग्निम् । सूनुम् । सनऽश्रुतम् । सहसः । जातऽवेदसम् ।
वह्निम् । देवाः । अकृण्वत ॥ ४ ॥

सहसःसूनुंबलस्यपुत्रंमथनरूपेणबलेननिष्पाद्यमानत्वात्सनश्रुतंसनातनत्वेनप्रसिद्धम् जातवेदसंजातप्रज्ञंतमिममग्निंदेवाः हविर्भुजोदेवाः वह्निंहविषांवोढारमकृण्वताकुर्वत ॥ सनश्रुतम् श्रुश्रवणे कर्मणिक्तः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् । वह्निं वहप्रापणे निरित्यनुवृत्तौ वहिश्रीत्यादिनानिप्रत्ययः । अकृण्वत कृविहिंसाकरणयोः इदित्त्वान्नुम् धिन्विकृण्व्योरचेत्युप्रत्ययः अकारश्चान्तादेशः छन्दिव्यत्ययेनात्मनेपदं निघातः ॥ ४ ॥

अथपञ्चमी—

अदाभ्यःपुरएताविशामग्निर्मानुषीणाम् ।
तूर्णीरथःसदानवः ॥ ५ ॥ ९ ॥

अदा॑भ्यः । पु॒रः॒ऽए॒ता । वि॒शाम् । अ॒ग्निः । मानु॑षीणाम् ।
तूर्णिः । रथः । सदा॑ । नवः ॥ ५ ॥ ९ ॥

मानुषीणांमनोर्जातानांविशांप्रजानांपुरएतासन्मार्गप्रदर्शनेनाग्रतोगन्ताअतएवतूर्णिः ताः प्रजाः वैदिककर्मप्रवर्तकत्वेनानुग्रहीतुंत्वरायुक्तः आलस्यरहितः रथः हविषांवहनाद्रथसदृशः सदासर्वदातत्कर्मणिनवोनूतनः पुनर्मथनादभिनवः एवंविधोग्निः अदाभ्यःअहिंस्यः नकेनापितिरस्कार्यइत्यर्थः ॥ अदाभ्यः दम्भुदम्भने दभेश्चेतिवक्तव्यमितिकर्मणिण्यत् उपधावृद्धिः । अदाभ्यः नञासमासेतत्पुरुषेतुल्यार्थेतिपूर्वपदप्रकृतिस्वरत्वम् । पुरएता इणुगतौ ण्वुल्तृचावितितृच् गुणः चित्त्वादन्तोदात्तः । मानुषीणां मनोर्जातावञ्यतौषुक्चेतिअञ् टिड्ढाणञितिङीप् ञित्त्वादाद्युदात्तः । तूर्णिः ञित्वरासंभ्रमेइतिधातोर्निरित्यनुवृत्तौवहिश्रिश्रुयुद्रुग्लाहात्वरिभ्योनिदितिनिप्रत्ययः ज्वरत्वरेत्यादिनाऊठ् तस्यनित्त्वादाद्युदात्तः संहितायां ढ्लोपेपूर्वस्येतिदीर्घः । रथः हनिकुषिनीरमिकाशिभ्यइतिक्थन्प्रत्ययः किल्वादनुदात्तोपदेशेत्यादिनानुनासिकलोपः नित्त्वादाद्युदात्तः । सदा स्वरादिषुआद्युदात्तत्वेनपठितत्वादाद्युदात्तः ॥ ५ ॥

॥ इतितृतीयस्यप्रथमेनवमोवर्गः ॥ ९ ॥

अथषष्ठी—

सा॒ह्वान्विश्वा॑अ॒भि॒यु॒जः॒क्रतु॑र्दे॒वाना॒ममृ॑क्तः ।
अ॒ग्निस्तु॒विश्र॑वस्तमः ॥ ६ ॥

सा॒ह्वान् । विश्वाः । अ॒भि॒ऽयुजः॑ । क्रतुः॑ । दे॒वाना॑म् । अमृ॑क्तः ।
अ॒ग्निः । तु॒विश्र॑वःऽतमः ॥ ६ ॥

अभियुजःअभियोक्त्रीः विश्वाःसर्वाःसेनाःसाह्वान्सहमानः स्वबलेनतिरस्कुर्वाणः अमृक्तः शत्रुभिरहिंसितः देवानांक्रतुःकर्ताहविष्प्रदानेनपोषकःएवंभूतोग्निः तुविश्रवस्तमःतुविशब्दोबहुवाची तुविपुरुइतितन्नामसुपाठात् श्रवःशब्दोन्नवाची श्रवइत्यन्ननामश्रूयतइतिनिरुक्तेभिधानात् अतिशयेनबहुविधान्नोपेतोवर्तते यस्मादेवंतस्मादस्मानपिबहुविधान्नोपेतान्करोत्वितिभावः । साह्वान् षहमर्षणे इत्यस्यक्वसौ दाश्वान्साह्वान्मीढ्वांश्चेतिनिपातनाद्द्विर्वचनमिडागमश्च

नभवतिपरस्मैपदंचभवति क्वसुस्वरः । ऋतुः कृञःकतुः कित्त्वाद्गुणाभावः प्रत्ययस्वरः । तुविश्रव-स्तमः तुवृत्तिहिंसापूर्तिषु अस्मादौणादिकःकिप्रत्ययः कित्त्वाद्गुणाभावः उवङादेशः, अन्तोदात्तः । श्रवः श्रुश्रवणे श्रूयतेन्नमितिकर्मणिअसुन्प्रत्ययः अतिशयेमतुविश्रवाइतिअतिशायनेतमबिति तमप् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ ६ ॥

अथसप्तमी—

अभिप्रयांसिवाहसादाश्वाँअश्नोतिमर्त्यः । क्षयंपावकशोचिषः ॥७॥

अभि । प्रयांसि । वाहसा । दाश्वान् । अश्नोति । मर्त्यः ।
क्षयम् । पावकऽशोचिषः ॥ ७ ॥

दाश्वान्हविषांदातामर्त्योमनुष्योयजमानोवाहसाहविषां वाहकेनाग्निनाप्रयांस्यन्नानिअ-भ्यश्नोतिअभितःसर्वतःप्राप्नोति किंच पावकशोचिषःशोधकदीप्तेरग्नेःसकाशात्क्षयंगृहंचा-भ्यश्नोति ॥ प्रयांसि प्रीञ्प्रीणनेअस्माद्धातोरन्तर्भावितण्यर्थादसुन्प्रत्ययः प्रीणयन्तिभक्षकमि-तिप्रयांस्यन्नानि नित्त्वादाद्युदात्तः । वाहसा णिदित्यनुवृत्तौवहिहाधाञ्भ्यश्छन्दसीत्यसुन्णि-त्त्वादुपधावृद्धिः नित्स्वरः । दाश्वान् दाशृदानेइत्यस्यक्वसौदाश्वान्साह्वान्मीढ्वानितिनिपातनादिडागमो द्विर्वचनंचनभवति क्वसुप्रत्ययस्वरः । अश्नोति अशूव्याप्तौ व्यत्ययेनपरस्मैपदम् निघातः ॥ ७ ॥

अथाष्टमी—

परिविश्वानिसुधिताग्नेरश्यामनन्मभिः । विप्रासोजातवेदसः ॥८॥

परि । विश्वानि । सुऽधिता । अग्नेः । अश्याम । मन्मऽभिः ।
विप्रासः । जातऽवेदसः ॥ ८ ॥

जातवेदसः जातप्रज्ञाः विप्रासः विप्रामेधाविनोहोत्रादयोवयमग्नेः तवसंबन्धिभिः मन्म-भिर्मननीयैःस्तोत्रैर्विश्वानिसर्वाणिसुधितासुहितानिसुष्ठुहितान्यभिलषितानिवसूनिपर्यश्याम स-र्वतः प्राप्नुयाम । जातवेदसइत्यग्नेर्वाविशेषणम् जातानिसर्वाणिवेत्तीतिजातवेदाः सर्वज्ञइत्यर्थः एतादृशंजातवेदस्त्वमग्नेरेवोचितमितितद्विशेषणत्वंयुक्तम् ॥ सुधिता डुधाञ्धारणपोषणयोरित्य-स्माद्धातोर्निष्ठायांछन्दसीत्यनुवृत्तौ सुधितवसुधितेत्यादिनानिपातितः शेश्छन्दसिबहुलमितिशे-

र्लुक् गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । अश्याम अशूव्याप्तौ बहुलंछन्दसीतिश्नुप्रत्ययस्यलुक् व्यत्ययेनपरस्मैपदम् यासुट्परस्मैपदेषूदात्तइतियासुट् लिङःसलोपइतिसलोपः अदन्तत्वाभावादियादेशोनभवति मसःसकारस्यनित्यंङ्तिइतिलोपः निघातः । मन्मभिः मनुअवबोधने अन्येभ्योपिदृश्यन्तइतिमनिन् नित्स्वरः ॥ ८ ॥

अथनवमी–

**अग्ने॒विश्वा॑नि॒वार्या॒वाजे॑षुसनिषामहे । त्वेदे॒वास॒एरि॑रे ॥ ९ ॥ १० ॥**

अग्ने॑ । विश्वा॑नि । वार्या॑ । वाजे॑षु । स॒नि॒षा॒म॒हे॒ । त्वे इति॑ ।
दे॒वासः॑ । आ । ई॒रि॒रे ॥ ९ ॥ १० ॥

हेअग्ने वार्यावरणीयानिसम्भजनीयानिविश्वानिसर्वाणिधनानिवाजेषुयुद्धेषुसनिषामहेवयं संभजामहे यतःकारणात्देवासः पूर्वमस्माभिरिष्टादेवाअस्मदभिमतफलप्रदानायत्वेत्वयिएरिरे आसमन्तादगमन् त्वयिप्रविष्टाइत्यर्थः सर्वथापित्वत्तःसकाशात्फलंलभेमहीतिभावः ॥ वार्यावृङ्संभक्तौ ऋहलोर्ण्यदितिण्यत् शेश्छन्दसिबहुलमितिशेर्लुक् ईडवन्देत्यादिनाद्युदात्तः । वाजेषुवृषादित्वादाद्युदात्तः । सनिषामहे वनषणसंभक्तौ धात्वादेःषःसःलेटिसिब्बहुलमितिसिप् सिपआर्धधातुकत्वादिडागमः लेटोडाटावित्यडागमः व्यत्ययेनात्मनेपदं निघातः । त्वे युष्मच्छब्दस्य सप्तम्यांत्वादेशः सुपांसुलुगितिशेआदेशः शेइतिप्रगृह्यसंज्ञा । ईरिरे ईरगतावित्यस्मात्परस्यलिटोझस्यइरेजादेशः इजादेश्चगुरुमतइत्याम्नभवति मन्त्रत्वात् निघातः ॥ ९ ॥

॥ इतितृतीयस्यप्रथमेदशमोवर्गः ॥ १० ॥

इन्द्राग्नीइतिनवर्चंद्वादशंसूक्तंवैश्वामित्रमैन्द्राग्नम् तथाचानुक्रम्यते–इन्द्राग्नीऐन्द्राग्नमिति । गायत्रंत्वितितुशब्दादिदमपिसूक्तंगायत्रम् इन्द्राग्नीदेवता आभिप्लविकेष्वहःसु प्रातःसवनेच्छावाकशस्त्रेआवापार्थमिदंसूक्तम् । अभिप्लवपृष्ठ्याहानीतिखण्डेसूत्रितम्–इन्द्राग्नीआगतंताहुवेययोरिदमिति । अग्निष्टोमेच्छावाकशस्त्रेइन्द्राग्नीआगतमितिस्तोत्रियस्तृचः तस्यैवाच्छावाकस्याद्यशस्त्रियाज्या इन्द्राग्नीआगतंसुतमितियाज्येइतिसूत्रितत्वात् चतुर्विंशेहनिप्रातःसवने–च्छावाकशस्त्रेइन्द्राग्नीआगतंसुतमितिषळहःस्तोत्रियः इन्द्राग्नीआगतमिन्द्रेअग्नानमोबृहदितिसू-

त्रितम् अग्निष्टोमाच्छावाकशस्त्रेतोशावृत्रहणाहुवइत्याद्यास्तिस्रः । सूत्रितञ्च—तोशावृत्रहणाहुवइत्याद्यास्तिस्रइति । अग्निष्टोमेच्छावाकशस्त्रेइन्द्राग्नीअपसस्परीत्यनुरूपः सूत्रितञ्च—इन्द्राग्नीआगतंसुतमिन्द्राग्नीअपसस्परीति ।

तस्मिन्सूक्तेप्रथमा—

इन्द्राग्नीआगतंसुतंगीर्भिर्नभोवरेण्यम् ।
अस्यपातंधियेषिता ॥ १ ॥

इन्द्राग्नी इति । आ । गतम् । सुतम् । गीःऽभिः । नभः ।
वरेण्यम् । अस्य । पातम् । धिया । इषिता ॥ १ ॥

इन्द्रश्चअग्निश्चइन्द्राग्नी हेइन्द्राग्नीदेवौ सुतमभिषवादिसंस्कारैःसंस्कृतम् अतएववरेण्यं वरणीयंसंभजनीयमिमंसोमंप्रति गीर्भिःअस्मदीयाभिः स्तुतिरूपाभिर्वाग्भिराहूतौसन्तौनभः नभसः स्वर्गस्थानादागतमागच्छतम् आगत्यचधियास्माभिःक्रियमाणेकर्मणिइषिताप्रेरितौयुवामस्यपातामिमंसोमंपिबतम् यद्वा धियाऽस्मदीययाबुद्ध्याइषितौप्राप्तौअस्मद्भक्त्याप्रेरितौ युवामिमंसोमंपिबतम् ॥ इन्द्राग्नी इन्द्रश्चाग्निश्च द्वन्द्वेचीतिअग्निशब्दस्यपूर्वनिपातेप्राप्ते अजाद्यदन्तमितिइन्द्रशब्दस्यपूर्वनिपातः पादादित्वान्निघातप्रतिषेधः षाष्ठिकस्वरः । गतम् गम्लृगतौ बहुलंछन्दसीतिशपोलुकिसति अनुदात्तोपदेशेत्यादिनामकारलोपः निघातः । वरेण्यं वृङ्संभक्तौ वृङएण्यः वृषादित्वादाद्युदात्तः । पातं पापाने सर्वेविधयश्छन्दसिविकल्प्यन्तेइतिनपिबादेशः । इषिता इषगतावित्यस्माद्धातोर्निष्ठायां तीषसहेतीडागमः आगमाअनुदात्ताइतिइटोनुदात्तत्वात् क्तस्वरःशिष्यते ॥ १ ॥

अथद्वितीया—

इन्द्राग्नीजरितुःसचायज्ञोजिगातिचेतनः ।
अयापातमिमंसुतम् ॥ २ ॥

इन्द्राग्नी इति । जरितुः । सचा । यज्ञः । जिगाति ।
चेतनः । अया । पातम् । इमम् । सुतम् ॥ २ ॥

हेइन्द्राग्नी जरितुः, स्तोतुःसत्यास्वर्गादिलक्षणफलप्राप्तौसहायभूतःयज्ञः ज्योतिष्टोमादियज्ञसाधनभूतः चेतनः इन्द्रियाणांचेतयिताआप्यायनकारीसन् असौसोमः जिगातियुवामभिगच्छति अयाअस्मदीयायास्तुतिलक्षणयानयावाचाआहूतौसन्तौसुतमभिषवादिसंस्कारोपेतमिमंसोमंपातंपिबतम् ॥ जिगाति गास्तुतावित्ययंधातुरत्रगमनेवर्तते छन्दसिजुहोत्यादिः बहुलंछन्दसीत्यभ्यासस्येत्वं निघातः । चेतनः चितीसंज्ञाने कर्तरि बहुलवचनात्ल्युट् लितीत्याद्युदात्तत्वम् । अया इदंशब्दस्यतृतीयायाःसुपांसुलुगितियाजादेशः अनादेशप्राप्तौहलिलोपः । पातं पापाने निघातः ॥ २ ॥

अथतृतीया—

इन्द्र॑म॒ग्निं क॑वि॒च्छदा॑ य॒ज्ञस्य॑ जू॒त्या वृ॑णे । ता सोम॑स्ये॒ह तृ॑म्पताम् ॥३॥

इन्द्र॑म् । अ॒ग्निम् । क॒वि॒ऽछदा॑ । य॒ज्ञस्य॑ । जू॒त्या ।
वृ॒णे । ता । सोम॑स्य । इ॒ह । तृ॒म्प॒ता॒म् ॥ ३ ॥

अस्ययज्ञस्यसाधनभूतस्यसोमस्यजूत्या जूतिःप्रेरणंसोमस्तावद्यजमानंप्रेरयति साधनमुपलभ्यतत्साध्येक्रतौयजमानःप्रवर्ततइतिहितस्यप्रेरकत्वम् तयाप्रेरणरूपयाजूत्याप्रेरितोहंकविच्छदाकवीनांस्तोतॄणामुचितफलप्रदानेनोपच्छन्दकौइन्द्रमग्निंचयुवांवृणे सोमपानार्थमिहकर्मणि आगच्छतमितिसंभजे आगतौचताविन्द्राग्नीइहकर्मणिसोमस्यसोमपानेनतृम्पतांतृप्यताम् ॥ इन्द्रम् इदिपरमैश्वर्ये अस्माद्धातोःऋज्रेन्द्राग्रेतिरन्प्रत्ययान्तत्वेननिपातनादाद्युदात्तत्वम् । कविच्छदा छद अपवारणे अस्मात्क्विप् सुपांसुलुगितिसुपोडादेशः कृदुत्तरपदप्रकृतिस्वरत्वम् । जूत्या जूइतिसौत्रोधातुः अस्मादुदात्तइत्यनुवृत्तौ ऊतियूतिजूतीत्यादिनानिपातनादन्तोदात्तत्वम् उदात्तयणोहल्पूर्वादितिविभक्तेरुदात्तत्वम् । वृणे वृङ्संभक्तौ श्नाप्रत्ययः टितआत्मनेपदानामितिटेरेत्वं निघातः । ता सुपांसुलुगितिडादेशः । सोमस्य षुञ्अभिषवे अस्मादर्तिस्तुसुहुसृधृक्षीत्यादिनामन्प्रत्ययः नित्स्वरः । तृम्पताम् तृपप्रीणने लोटि मुचादित्वान्नुमागमः निघातः ॥ ३ ॥

अथचतुर्थी—

तो॒शा वृ॑त्र॒हणा॑ हुवे स॒जित्वा॒नाप॑राजिता । इ॒न्द्रा॒ग्नी वा॑ज॒सात॑मा ॥४॥

तोशा । वृत्रऽहना । हुवे । सऽजित्वाना । अपराऽजिता ।
इन्द्राग्नी इति । वाजऽसातमा ॥ ४ ॥

तोशा शत्रूणांबाधकौवृत्रहणावृत्रस्यपापस्यहन्तारौ सजित्वानासमानजेतारौपरस्परापेक्षयाजयशीलौ अपराजिताकेनाप्यतिरस्कृतौ वाजसातमा अन्नस्यातिशयेनदातारौ इन्द्राग्नीयुवांहुवेइहकर्मणिसोमपानार्थमहमाह्वयामि ॥ वृत्रहणा हनहिंसागत्योः ब्रह्मभ्रूणवृत्रेषुक्विबिति क्विप् एकाजुत्तरपदेणइतिणत्वम् कृदुत्तरपदप्रकृतिस्वरत्वम् । हुवे ह्वयतेर्बहुलंछन्दसीतिशपोलुकि सति ह्वःसम्प्रसारणमित्यनुवृत्तौ बहुलंछन्दसीतिसम्प्रसारणम् . उवङादेशः . अपदत्वेनात्मनेपदं निघातः । सजित्वाना जिजये शीङ्क्रुशिरुहिजिक्षिसृधृभ्यइतिक्वनिप् कित्त्वाद्गुणाभावः पित्त्वात्तुगागमः समानस्यच्छन्दस्यमूर्धेतिसमानस्यसभावः कृदुत्तरपदप्रकृतिस्वरत्वम् । अपराजिता नञ्समासे तत्पुरुषेतुल्यार्थेतिपूर्वपदप्रकृतिस्वरत्वम् । इन्द्राग्नी देवताद्वन्द्वेचेत्युभयपदप्रकृतिस्वरत्वेप्राप्ते नोत्तरपदेनुदात्तादावितिप्रतिषेधात्समासस्वरः । वाजसातमा षणुदाने अस्माज्जनसनखनक्रमगमइतिविट् विड्वनोरनुनासिकस्यादित्याकारः अतिशायनेतमबिष्ठनाविति तमप् . कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ ४ ॥

अथपञ्चमी–

प्रवामर्चन्त्युक्थिनोनीथाविदोजरितारः । इन्द्राग्नीइषआवृणे ५।११

प्र । वाम् । अर्चन्ति । उक्थिनः । नीथऽविदः । जरितारः ।
इन्द्राग्नी इति । इषः । आ । वृणे ॥ ५ ॥ ११ ॥

हेइन्द्राग्नी उक्थिनः उक्थं शस्त्रं तद्वन्तः शस्त्रिणोहोत्रादयः वांयुवांप्रार्चन्ति इहकर्मणि स्तुतिरूपाभिर्वाग्भिःपूजयन्ति तथानीथाविदः स्तोत्राभिज्ञाः सामगानकुशलाः जरितारः स्तोतारः उद्गात्रादयः अभिलषितफलावाप्तयेयुवामर्चन्ति अहमपिइषेअन्नस्यलाभार्थम् इन्द्राग्नी युवामावृणे, सर्वतःसंभजे पूजयामीत्यर्थः ॥ वां युष्मच्छब्दस्य द्वितीयायांपदात्परत्वाद् युष्मदस्मदोःषष्ठीचतुर्थीद्वितीयाइत्यादिनावामित्यादेशः अनुदात्तश्च । अर्चन्ति अर्चपूजायां निघातः । उक्थिनः वचपरिभाषणे पातॄतुदिवचिरिचिसिचिभ्यस्थक् वचिस्वपीत्यादिनासम्प्रसारणम्, उक्थंशस्त्रम् उक्थंयेषांते अतइनिठनाविति इनिः यस्येतिअलोपः प्रत्ययस्वरः । नीथाविदः णीञ्प्रापणे हनिकुषिनीरमीत्यादिनाक्थन् कित्त्वाद्गुणाभावः विदज्ञाने क्विप्चेतिक्विप्. कृदुत्तरपद-

प्रकृतिस्वरत्वम् । इन्द्राग्नी आमन्त्रितत्वादाद्युदात्तत्वम् । वृणे वृङ्संभक्तौ निघातः ॥ ५ ॥

॥ इतिद्वितीयस्यप्रथमेएकादशोवर्गः ॥ ११ ॥

अथषष्ठी–

इन्द्राग्नीनवतिंपुरोदासपत्नीरधूनुतम् । साकमेकेनकर्मणा ॥६॥

इन्द्राग्नी इति । नवतिम् । पुरः । दासऽपत्नीः । अधूनुतम् । साकम् । एकेन । कर्मणा ॥ ६ ॥

हेइन्द्राग्नी दासपत्नीः दासयन्तिउपक्षपयन्तीतिदासाउपक्षपयितारः शत्रवस्तेपतयः पालकायासांताः दासपत्नीः नवतिं नवतिसंख्याकाः पुरः एवंविधाः शत्रूणांपुरीः एकेनकर्मणाएकेनैवोद्योगेनयुवांसाकंसहयुगपद् अधूनुतमकम्पयतम् ताविन्द्राग्नीआह्वयामीतिशेषः ॥ नवतिनवानांदशतांनवभावः तिश्चप्रत्ययः प्रत्ययस्वरेणान्तोदात्तः । दासपत्नीः दसुउपक्षये दासयतीतिदासः पचाद्यजन्तः चित्त्वादन्तोदात्तः तेपतयोयासां नित्यंसपत्न्यादिषुदासाच्चेत्युक्तत्वाद्विभाषासपूर्वस्येतिङीप् इकारस्यनकारः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । अधूनुतम् धूञ्कम्पने लङि स्वादिभ्यःश्नुः निघातः । एकेन इण्गतौ इण्भीकापाशल्यतिमर्चिभ्यःकन्निति कन् नित्त्वादाद्युदात्तः ॥ ६ ॥

अथसप्तमी–

इन्द्राग्नीअपसस्पर्युपप्रयन्तिधीतयः । ऋतस्यपथ्या३अनु ॥७॥

इन्द्राग्नी इति । अपसः । परि । उप । प्र । यन्ति । धीतयः । ऋतस्य । पथ्याः । अनु ॥ ७ ॥

हेइन्द्राग्नी धीतयः सोमस्यधातारः पातारोहोत्रादयः ऋतस्यकर्मफलस्यपथ्यापथोमार्गाननुलक्षीकृत्यअपसः अस्माभिःक्रियमाणस्यकर्मणः परिसर्वतः उपप्रयन्ति समीपेप्रकर्षेण वर्तन्ते अतःसोमपानार्थंयुवामागच्छतमितिभावः यद्वा धीतयः स्तुतयः ऋतस्य यज्ञस्यमार्गाननुलक्षीकृत्यकर्मणःपरितःप्रवर्तन्ते अतःस्तोतव्यतयायुवामागतमिति ॥ यन्ति इण्गतौ यणादेशः निघातः । धीतयः धेट्पानेइत्यस्मात्कर्तरि क्तिच्क्तौचसंज्ञायामितिक्तिच् घुमास्थेतीत्वम् चित्त्वादन्तोदात्तः ॥ ७ ॥

अथाष्टमी—

इन्द्राग्नीतविषाणिवांसधस्थानिप्रयांसिच । युवोरप्तूर्यंहितम् ॥ ८ ॥

इन्द्राग्नी इति । तविषाणि । वाम् । सधऽस्थानि । प्रयांसि । च । युवोः । अप्ऽतूर्यम् । हितम् ॥ ८ ॥

हेइन्द्राग्नी वांयुवयोः तविषाणिबलानिप्रयांस्यन्नानिचसधस्थानिपरस्परमवियुज्यवर्तन्ते तथाअप्तूर्यंवृष्टिद्वाराअपांप्रेरकत्वंयुवोः युवयोरेवहितंनिहितंवर्तते । तस्मात्सोमपानप्रभृतिपुसर्वकर्मसुइन्द्राग्न्योः सहैववर्तमानत्वमितिभावः । वां षष्ठीद्विवचनेवामित्यादेशः । सधस्थानि, ष्ठागतिनिवृत्तौ आतोनुपसर्गेकः सधमादस्थयोश्छन्दसीतिसहस्यसधादेशः ॥ ८ ॥

अथनवमी—

इन्द्राग्नीरोचनादिवःपरिवाजेषुभूषथः । तद्वांचेतिप्रवीर्यम् ॥ ९ ॥ १२

इन्द्राग्नी इति । रोचना । दिवः । परि । वाजेषु । भूषथः । तत् । वाम् । चेति । प्र । वीर्यम् ॥ ९ ॥ १२ ॥

हेइन्द्राग्नी दिवोरोचना स्वर्गस्यरोचकौ प्रकाशकौयुवां वाजेषुसङ्ग्रामेषुपरिभूषथः परितःसर्वतः अलंकृतौभवथः शत्रून्पराजित्यसर्वतोविजयमानौवर्तेथे वांयुवयोःवीर्यंसामर्थ्यमेवतत्तादृशंसंग्रामविजयं प्रचेतिप्रकर्षेणज्ञापयति यद्वा युवां वाजेषु संग्रामेषु परिभूषथः शत्रून्परिभवथः शेषंपूर्ववत् ॥ रोचना रुचदीप्तावित्यस्य अनुदात्तेतश्चहलादेरितियुच् चित्त्वादन्तोदात्तः । भूषथः भूष भूषणे निघातः । चेति चितीसंज्ञाने अयमन्तर्भावितण्यर्थः । बहुलंछन्दसीतिशपोलुक् तकारलोपश्छान्दसः ॥ ९ ॥

॥ इतितृतीयस्यप्रथमेद्वादशोवर्गः ॥ १२ ॥

॥ इतितृतीयेमण्डलेप्रथमोनुवाकः ॥ १ ॥

द्वितीयेनुवाकेसप्तसूक्तानि तत्रप्रवोदेवायेतिसप्तदशर्चमाद्यंसूक्तम् विश्वामित्रपुत्रऋषभस्यार्षम् अग्निदेवताकम् आनुष्टुभम् । अत्रानुक्रमणिका—प्रवःसप्तऋषभस्त्वानुष्टुभमितिविश्वामित्रपुत्रऋषभऋषिः मण्डलादिपरिभाषयाग्निर्देवता अग्निष्टोमेद्वंदंसूक्तमाज्यशस्त्रम् .परा-

ङध्वर्यावावृत्तइतिखण्डेसूत्रितम्—प्रवोदेवायेत्याज्यमुपसन्तनुयादिति । इदमेवसूक्तंप्रातरनुवाकेआश्विन शस्त्रेचविनियुक्तम् सूत्रञ्च—प्रवोदेवायाग्नेकदातइतिपञ्चेति । अभ्युदयेष्टौसयन्तेत्यग्नेः प्रदातुर्याज्या सूत्रितञ्च—सयन्त।विप्रएपदीर्वस्तेअस्त्वक्तुशइति ।

तस्मिन्सूक्तेप्रथमा—

**प्रवोदेवायाग्नयेबर्हिष्ठमर्चास्मै ।**
**गमद्देवेभिरासनोयजिष्ठोबर्हिरासदत् ॥ १ ॥**

प्र । वः । देवाय । अग्नये । बर्हिष्ठम् । अर्च । अस्मै ।
गमत् । देवेभिः । आ । सः । नः । यजिष्ठः । बर्हिः । आ । सदत् ॥ १ ॥

यजमानोहोत्रादीन्प्रतिब्रूते—हेहोत्रादयोवोयुष्मत्संबन्धिनेदेवायद्योतमानायअस्मै अस्मिन्कर्मणिस्तुत्यायाग्नयेबर्हिष्ठं वृद्धतमंप्रभूतमिदंस्तुतिरूपं स्तोत्रशस्त्रादिवोक्यजातंप्रार्चउच्चारयत एवंस्तुतः सोग्निर्देवेभिर्यष्टव्यदेवैःसहितःसन् नोस्मान्प्रतिआगमत् आगच्छतु आगत्यचयजिष्ठः यष्टृतमःसोग्निर्बर्हिःअस्माभिर्वेद्यांस्तीर्णे बर्हिषिआसदत् आसीदतु उपविशतु ॥ बर्हिष्ठं बर्हिवृशब्दात्तुश्छन्दसीत्यतिशायनेइष्ठन् । अर्च अर्चपूजायां भौवादिकः बहुवचनस्यैकवचनं निघातः । गमत् गम्लृगतौ अस्य छन्दसिलुङ्लङ्लिटइतिलोडर्थेलुङ् लृदित्वात् च्लेरङ् नित्यंङितइतीकारलोपःपादादित्वान्ननिघातः । यजिष्ठः यष्टृशब्दात्तुश्छन्दसीतीष्ठन् तुरिष्ठेमेयस्स्वितितृचोलोपः नित्स्वरः । सदत् पूर्ववल्लोडर्थेलुङ् षद्लृविशरणगत्यवसादनेष्वित्यस्यलृदित्वादङ् निघातः ॥ १ ॥

अथद्वितीया—

**ऋतावायस्यरोदसीदक्षंसचन्तऊतयः ।**
**हविष्मन्तस्तमीळतेतंसनिष्यन्तोवसे ॥ २ ॥**

ऋतऽवा । यस्य । रोदसी इति । दक्षम् । सचन्ते । ऊतयः ।
हविष्मन्तः । तम् । ईळते । तम् । सनिष्यन्तः । अवसे ॥ २ ॥

यस्यपूर्वमन्त्रेप्रतिपादितस्याग्नेः रोदसीइमेद्यावापृथिव्यौवशेभवतःअग्नेःप्रकाशकत्वेनतदधीनप्रकाशकेभवतइत्यर्थः किञ्च ऊतयःयजयानस्यफलप्रदानेनरक्षितारोदेवाः दक्षं

यस्याग्नेर्बलंसचन्तेसेवन्ते सचन्तेसेवन्तइतियास्कः । अग्नेर्यजमानदत्तहविषांप्रदातृत्वेनतदधीना-इत्यर्थः एवंभूतःसोग्निर्ऋतावासत्यकर्मासत्यसंकल्पइत्यर्थः किञ्च हविष्मन्तःसंभृतहविष्कायज-मानाः हविर्वहनार्थंतमेवाग्निमीळते स्तुतिरूपाभिर्वाग्भिःपूजयन्ति किञ्च सनिष्यन्तः धनादिला-भमिच्छन्तस्तमवसेरक्षणायतमेवाग्निमाश्रयन्ते ॥ ऋतावा ऋतशब्दात्तदस्यास्तीतिछन्दसीव-निपौवक्तव्याविितिवनिप् अन्येषामपिदृश्यतइतिदीर्घः वनिपःपित्त्वादनुदात्तत्वे प्रातिपदिकस्वरः । सचन्ते षचसमवाये व्यत्ययेनात्मनेपदम् यद्वृत्तयोगादनिघातः । सनिष्यन्तः सनिर्लाभस्त-मिच्छन्तः सुपआत्मनःक्यच् सर्वप्रातिपदिकेभ्योलालसायांसुग्वक्तव्यइतिक्यचिपरतःसुगागमः क्यचःस्वरः ॥ २ ॥

अथतृतीया–

सयन्ताविप्रंएषांसयज्ञानामथाहिषः ।
अग्निंतंवोदुवस्यतदातायोवनितामघम् ॥ ३ ॥

सः । यन्ता । विप्रः । एषाम् । सः । यज्ञानाम् । अथ । हि । सः ।
अग्निम् । तम् । वः । दुवस्यत । दाता । यः । वनिता । मघम् ॥ ३ ॥

विप्रोमेधावीकर्माभिज्ञःसोग्निः एषांकालापराधेनहविर्निर्वापंकृतवतांयजमानानांयथो-क्तकर्मप्रदर्शनेनतत्रप्रवर्तकः अथ किञ्च यज्ञानांज्योतिष्टोमादीनांसोग्निर्नियन्ताफलप्रदानेन नियामकः हिंप्रसिद्धौ अतएवसर्वस्यनियन्ताखलु किञ्च सोग्निर्दाताज्योतिष्टोमादिकर्मफल-दातामघंमंहनीयंधनं मघंरेक्णइतितन्नामसुपाठात् तद्धनंवनिताप्रयच्छंश्चभवति वःयुष्मत्सम्ब-न्धिनंतादृशमग्निं हेऋत्विजोयूयंदुवस्यत आहुतिप्रदानेनपरिचरत । दुवस्यतिःपरिचरणकर्मा नमस्यतिदुवस्यतीतितन्नामसुपाठात् ॥ यन्ता यमउपरमे इत्यस्यतृचिरूपं ऋदुशनसित्या-दिनाअनङादेशःचित्स्वरः । अथा निपातस्येतिदीर्घः । दुवस्यत दुवःपरिचरणंतदिच्छन्तःसुपः क्यच् तदन्तस्यधातोर्लोटिरूपम् । दाता डुदाञ्दाने ताच्छीलिकस्तृन् नित्त्वादाद्युदात्तः ॥ ३ ॥

अथचतुर्थी–

सनःशर्माणिवीतयेग्निर्यच्छतुशन्तमा ।
यतोनःप्रुष्णवद्वसुदिविक्षितिभ्योअप्स्वा ॥ ४ ॥

---

१ नि० २. ९.

सः । नः । शर्माणि । वीतये । अग्निः । यच्छतु । शम्ऽतमा ।
यतः । नः । प्रुष्णवत् । वसु । दिवि । क्षितिऽभ्यः । अप्ऽसु । आ ॥४॥

सोग्निः नः हविष्प्रदातृभ्योस्मभ्यं शन्तमापशुपुत्रादिसमृद्ध्या अतिशयेनसुखकराणि शर्माणि शर्मशब्दोगृहवाची छायाशर्मेतितन्नामसुपाठात् तथाविधानिगृहाणिवीतये संभजनाय अग्निहोत्रादिकर्मप्राप्त्यर्थं यच्छतुददातु यतोयस्मादग्नेःसकाशात्प्रुष्णवत् समृद्धिमत् दानभोगादिनाव्ययेसत्यपि अतिशयेनवर्धमानंदिविद्युलोकेक्षितिभ्योभूलोकात् अप्सुअन्तरिक्षेचसमुत्पन्नंवसुतत्तल्लोके असाधारण्येनवर्तमानंधनम् आसमन्तादुपनमति यतोग्नेःप्रसादात्त्रिषुलोकेषु विद्यमानं धनमस्मानागच्छति सोग्निरितिपूर्वेणान्वयः ॥ वीतये वीगत्यादिषु मन्त्रेवृषेषपचेत्यादिनाक्तिन् उदात्तत्वेननिपातनादुदात्तः । यच्छतु यमउपरमे इषुगमियमांछइतिमकारस्य छकारः । प्रुष्णवत् प्रुषस्नेहनसेचनपूरणेषु अस्मादौणादिकोनक्प्रत्ययः तदस्यास्तीति मतुप् तस्योदात्तताभावश्छान्दसः ॥ ४ ॥

अथपञ्चमी—

दीदिवांसमपूर्व्यंवस्वीभिरस्यधीतिभिः ।
ऋक्वाणोअग्निमिन्धतेहोतारंविश्पतिंविशाम् ॥ ५ ॥

दीदिऽवांसम् । अपूर्व्यम् । वस्वीभिः । अस्य । धीतिऽभिः ।
ऋक्वाणः । अग्निम् । इन्धते । होतारम् । विश्पतिम् । विशाम् ॥ ५ ॥

ऋक्वाणः स्तुतिंकुर्वाणाः शस्त्रिणोहोत्रादयः दीदिवांसंदीप्यमानम् अपूर्व्यं तेजस्वितयाप्रतिक्षणाभिनवं होतारं देवानामाह्वातारं विशां विश्पतिं प्रजानामतिशयेनपालयितारं तमग्निंवस्वीभिः प्रशस्ताभिः अस्यधीतिभिः अग्निविषयस्तुतिलक्षणाभिर्वाग्भिः यद्वा वस्वीभिः वसुमद्भिः अस्यधीतिभिः एतदुद्देशेन क्रियमाणैःकर्मभिः इन्धतेदीपयन्ति स्तोत्रकरणहविष्प्रदानादिव्यापारेणसमृद्धंकुर्वन्ति ॥ दीदिवांसं दिवुक्रीडादावित्यस्यक्वसौरूपं तुजादीनामित्यभ्यासस्य दीर्घः लोपोव्योरितिवलोपः । वस्वीभिः वसुशब्दात् व्यत्ययेनङीप् नित्स्वरः । धीतिभिः धेट्पाने क्तिच्क्तौचसंज्ञायामितिक्तिच् कित्वाद्घुमास्थेतीत्वं चित्स्वरः । ऋक्वाणः ऋच्शब्दान्मतुबर्थेवनिप् अयस्मयादित्वाद्भसंज्ञकत्वात् कुत्वम् पदसंज्ञाभावाज्जश्त्वाभावः । इन्धते ञिइन्धीदी-

सौ । विश्पतिं परादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वम् । विशाम् सावेकाचइतिविभक्तेरुदात्तत्वम् ॥ ५ ॥

अथषष्ठी—

उतनोब्रह्मन्नविषउक्थेषुदेवहूतमः ।
शंनःशोचामरुद्वृधोग्नेसहस्रसातमः ॥ ६ ॥

उत । नः । ब्रह्मन् । अविषः । उक्थेषु । देवऽहूतमः ।
शम् । नः । शोच । मरुत्ऽवृधः । अग्ने । सहस्रऽसातमः ॥ ६ ॥

उतापिच हेअग्ने नःयज्ञकारिणोस्मान्ब्रह्मन्ब्रह्माणिअस्माभिःक्रियमाणेस्तोत्रेअविषः स्तोत्रविषयन्यूनातिरेकदोषोयथानभवतितथापालय किञ्च देवहूतमः देवानामाह्वातृतमस्त्वमुक्थेषुअस्माभिः क्रियमाणेषुआज्यप्रउगादिशस्त्रेषुअविषः गोपाय किञ्च मरुद्वृधः मरुद्भिर्वर्धमानः सहस्रसातमः सहस्रसंख्याकस्यधनस्यातिशयेनदातात्वंनोस्माकंशमैहिकमामुष्मिकंचसुखंशोच दीपय वर्धयेत्यर्थः ॥ अविषः अवरक्षणादिषुइत्यस्माल्लेटि सिब्बहुलमितिसिप् अस्यार्धधातुकत्वादिट् इतश्चलोपइतिसिपइकारलोपः लेटोडाटावित्यडागमः निघातः । उक्थेषु वचपरिभाषणे अस्मात्कर्मणिपातृतुदिवचीत्यादिनाथक् कित्त्वात्सम्प्रसारणम् प्रत्ययस्वरः । देवहूतमः ह्वयतेःक्विप् बहुलंछन्दसीतिसम्प्रसारणपररूपत्वे हलइतिदीर्घः कृदुत्तरपदप्रकृतिस्वरत्वम् । शोच शुचदीप्तौ अयमन्तर्भावितण्यर्थः निघातः । मरुद्वृधः वृधुवर्धने इगुपधलक्षणःकः मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम् । सहस्रसातमः षणुदाने अस्यजनसनखनक्रमगमोविडितिविड्वनोरनुनासिकस्येत्याकारः कृदुत्तरपदप्रकृतिस्वरः ॥ ६ ॥

अथसप्तमी—

नूनोरास्वसहस्रवत्तोकवत्पुष्टिमद्वसु ।
द्युमदग्नेसुवीर्यंवर्षिष्ठमनुपक्षितम् ॥ ७ ॥ ॥ १३ ॥

नु । नः । रास्व । सहस्रऽवत् । तोकऽवत् । पुष्टिऽमत् । वसु ।
द्युऽमत् । अग्ने । सुऽवीर्यम् । वर्षिष्ठम् । अनुपऽक्षितम् ॥ ७ ॥ १३ ॥

अस्मिन्सूक्तेस्तूयमान हेअग्ने सहस्रवत्सहस्रसंख्योपेतं तोकवत्पुत्रपौत्रादिसहितं पुष्टिमत्पोषणकृत् । अनेनशरीरस्यक्षीरादिद्वाराबलारोग्यप्रदंगवादिकमुपलक्ष्यते द्युमत्दीप्तिमत् अनेनरत्नकनकादिकंपरिगृह्यते सुवीर्यंशोभनसामर्थ्योपेतंतत्तत्कार्येषुव्यवहारयोग्यंवर्षिष्ठमतिशयेनवृद्धंप्रभूतमतएवअनुपक्षितंव्ययेक्रियमाणेप्यनुपक्षीणमेवंभूतंवसु रत्नकनकपश्वादिलक्षणंधनंनोस्मभ्यंनुक्षिप्रमविलंबेनरास्वदत्स्व ॥ नूनः ऋचितुनुघमक्षुतिदीर्घः । रास्व रादाने अस्यलोटिरूपं व्यत्ययेनात्मनेपदम् अदादित्वाच्छपोलुक् निघातः । सहस्रवत् मादुपधायाइति मतुपोवत्वम् कर्दमादित्वान्मध्योदात्तःसहस्रशब्दः । पुष्टिमत् पुषपुष्टौ अस्मात्क्तिन् प्रत्ययस्वरेणान्तोदात्तः ह्रस्वनुड्भ्यामितिमतुपउदात्तत्वम् । वर्षिष्ठम् प्रियस्थिरेत्यादिनावृद्धस्यवर्षइत्यादेशः नित्स्वरः । अनुपक्षितम् क्षिक्षये इत्यस्यदीर्घाभावान्निष्ठानत्वंनभवति तत्पुरुषत्वादव्ययपूर्वपदप्रकृतिस्वरः ॥ ७ ॥

॥ इतितृतीयस्यप्रथमेत्रयोदशोवर्गः ॥ १३ ॥

आहोतेतिसप्तर्चंद्वितीयंसूक्तम् । आहोतेत्यनुक्रमणिका । ऋषभस्त्वितितुशब्दप्रयोगादस्यापिसूक्तस्यऋषभऋषिः अनुक्तत्वात्त्रिष्टुप् अग्निर्देवता एतदादीनिदशसूक्तानितृतीयाष्टमवर्जितानिप्रातरनुवाकेआश्विनशस्त्रेत्रैष्टुभेछन्दसिविनियुक्तानि । अथैतस्याइतिखण्डेसूत्रितम् आहोतेतिदशानांतृतीयाष्टमेउद्धरेदितित्रैष्टुभंमिति ।

तस्मिन्सूक्तेप्रथमा–

**आहोतामन्द्रोविदथान्यस्थात्सत्योयज्वाकवितमःसवेधाः ।**
**विद्युद्रथःसहसस्पुत्रोअग्निःशोचिष्केशःपृथिव्यांपाजोअश्रेत् ॥ १ ॥**

आ । होता । मन्द्रः । विदथानि । अस्थात् । सत्यः । यज्वा । कविऽतमः । सः । वेधाः । विद्युत्ऽरथः । सहसः । पुत्रः । अग्निः । शोचिःऽकेशः । पृथिव्याम् । पाजः । अश्रेत् ॥ १ ॥

ऋषभोग्निंस्तौति–होतादेवानामाह्वाता मन्द्रः स्तोतुर्मादयिता सत्यः सत्यकर्माकवितमः अतिशयेनमेधावी यज्वादेवानांयष्टा वेधाः सर्वस्यजगतोविधाता । एवंविधमहिमोपेतः सोग्निः विदथानिअस्माभिःक्रियमाणान् यज्ञानास्थात् आतिष्ठति प्राप्नोति किञ्च विद्युद्रथः विद्योतमानयानोपेतः शोचिष्केशः शोचींषिज्वालाः केशायस्यसः ज्वालामयकेशोपेतः सह–

सःसूनुर्बलस्यपुत्रः एवंभूतः सोऽग्निः पृथिव्यांविस्तीर्णेअंतरिक्षे पाजः तेजः स्वकीयांप्रभामश्रेत् श्रयतेप्रापयति यद्वा पृथिव्यांभूमौ वर्तमानः पाजोबलंसेवते ॥ मन्द्रः मदिस्तुतिमोदमदस्वप्नकान्तिगतिषु अस्मात्स्फायितंचीत्यादिनारक् इदित्त्वान्नुम् । अस्थात् ष्ठागतिनिवृत्तौ छन्दसिलुङ्लङ्लिटइतिवर्तमानेलुङ् गातिस्थेतिसिचोलोपः निघातः । यज्वा यजदेवपूजासङ्गतिकरणदानेषु सुयजोर्ङ्वनिबितिङ्वनिप् तस्यपित्त्वादनुदात्तत्वेधातुस्वरः । कवितमः कुशब्दे कौतिकूयतेवा अचइरितिकर्तरिभावेवाइप्रत्ययः तमपःपित्त्वादनुदात्तत्वेप्रत्ययस्वरः । शोचिष्केशः शुचदीप्तौ अर्चिशुचिहुसृपिछादिछर्दिभ्यइसिरितीसिः प्रत्ययस्वरेणान्तोदात्तः बहुव्रीहौपूर्वपदप्रकृतिस्वरः । अश्रेत् श्रिञ्सेवायामित्यस्यछन्दसिवर्तमानेलङ् बहुलंछन्दसीति शपोलुक् सार्वधातुकगुणः निघातः ॥ १ ॥

अथद्वितीया–

**अयामितेनमउक्तिंजुषस्वऋतावस्तुभ्यंचेततेसहस्वः ।**
**विद्वाँआवक्षिविदुषोनिषत्सिमध्यआबर्हिरूतयेयजत्र ॥ २ ॥**

अयामि । ते । नमःऽउक्तिम् । जुषस्व । ऋतऽवः । तुभ्यम् ।
चेतते । सहस्वः । विद्वान् । आ । वक्षि । विदुषः । नि । सत्सि ।
मध्ये । आ । बर्हिः । ऊतये । यजत्र ॥ २ ॥

ऋतावः ऋतंसत्यभूतोयज्ञः तद्वन् हेअग्ने तेत्वद्विषयांनमउक्तिंनमस्कारवाक्यमहमयामि प्रेरयामिउच्चारयामि हेसहस्वः सहोबलंतद्वन्नग्नेचेततेचेतयित्रेकर्मणः प्रज्ञापकायतुभ्यंनमउक्तिः क्रियते तांजुषस्वअस्माभिः क्रियमाणांनमस्कारोक्तिंसेवस्व किञ्च विद्वान्आनुपूर्व्येणदेवाह्वानाभिज्ञः विदुषःकर्माभिज्ञान्देवानावक्षिआवह किञ्च यजत्रयष्टव्य हेअग्ने ऊतयेअस्माकंरक्षणायमध्येबर्हिः स्तीर्णस्यबर्हिषोमध्येआनिषत्सि आसमन्तान्निषीद ॥ अयामि इणगतौ भौवादिकः पादादित्वादनिघातः । जुषस्व जुषीप्रीतिसेवनयोः तुदादिःलोटिरूपं निघातः । चेतते चितीसंज्ञाने शतुर्लसार्वधातुकस्वरेणानुदात्तत्वेततोन्तोदात्तताभावाच्छतुरनुमइतिविभक्तेरुदात्तताभावः धातुस्वरः । सहस्वः सहोस्यैतिमतुप् सकारस्यतसौमत्वर्थइतिभसंज्ञकृत्वात्रुर्नभवति मादुपधायाइतिमतुपोवत्वम् उगिदचामितिनुम् हल्ङ्याब्भ्योदिलोपेनकारस्यमतुवसोरुरितिरुत्वम् आमन्त्रितानिघातः । विदुषः विदज्ञानेइत्येतस्मादुत्तरस्यशतुः विदेःशतुर्वसुरितिव-

स्वादेशः मसंज्ञायां वसोःसंप्रसारणं प्रत्ययस्वरः । सत्सि षद्लृविशरणादिषु लटि बहुलंछन्दसीतिशपोलुक् शित्प्रत्ययपरत्वाभावात्सीदादेशाभावः सदिरप्रतेरितिषत्वम् । यजत्र यजदेवपूजादिषु अमिनक्षियजीत्यादिनात्रन्प्रत्ययः आमन्त्रितनिघातः ॥ २ ॥

अथतृतीया–

द्रवतांतउषसांवाजयन्तीअग्नेवातस्यपथ्याभिरच्छ ।
यत्सीमञ्जन्तिपूर्व्यंहविर्भिरावन्धुरेवतस्थतुर्दुरोणे ॥ ३ ॥

द्रवताम् । ते । उषसा । वाजयन्ती इति । अग्ने । वातस्य । पथ्याभिः । अच्छ । यत् । सीम् । अञ्जन्ति । पूर्व्यम् । हविःऽभिः । आ । वन्धुराऽइव । तस्थतुः । दुरोणे ॥ ३ ॥

हेअग्ने वाजयन्तीवाजमन्नंकुर्वाणे उषसा उषासानक्तेअहोरात्रौतौत्वांद्रवतामभिगच्छताम् त्वमपिवातस्यवायोःपथ्याभिर्मार्गैःअच्छ तावहोरात्रौशीघ्रमभिगच्छ यद्यस्मात्कारणादहोरात्र्योः परस्पराभिगमनेनअन्योन्यसंबन्धः तस्मादहोरात्रयोःसायंप्रातःकालयोःपूर्व्यंपुरातनंत्वामृत्विजोहविर्भिराज्यादिभिःसींसर्वतोञ्जन्ति सिञ्चन्ति किञ्चवन्धुरेव यथाकूबरस्थानं परस्परसंसक्तेपार्श्वयोपेतंतद्वत्संसक्तौतावहोरात्रौदुरोणेअस्माकंगृहेअग्निहोत्रादिकर्मसिद्ध्यर्थम् आ आवृत्यपुनःपुनरावर्तमानौ सन्तौतस्थतुः तिष्ठताम् ॥ द्रवतां द्रुगतौइत्यस्यलोटिरूपम् । पथ्याभिः पथिषुसाधवइत्यर्थे तत्रसाधुरितियत् नस्तद्धितेइतिटिलोपः तित्स्वरितइतिस्वरितः । तस्थतुः निष्ठतेर्लिट्युसिरूपं निघातः ॥ ३ ॥

अथचतुर्थी–

मित्रश्चतुभ्यंवरुणःसहस्वोग्नेविश्वेमरुतःसुम्नमर्चन् ।
यच्छोचिषासहसस्पुत्रतिष्ठाअभिक्षितीःप्रथयन्त्सूर्योनॄन् ॥ ४ ॥

मित्रः । च । तुभ्यम् । वरुणः । सहस्वः । अग्ने । विश्वे । मरुतः । सुम्नम् । अर्चन् । यत् । शोचिषा । सहसः । पुत्र । तिष्ठाः । अभि । क्षितीः । प्रथयन् । सूर्यः । नॄन् ॥ ४ ॥

सहस्वःबलवन् हेअग्ने मित्रश्चवरुणश्चमित्रावरुणौ विश्वेमरुतः सर्वेदेवाश्चतुभ्यंत्वदर्थंसुम्नंस्तोत्रम् अर्चन्वहन्ति यद्वा सर्वेदेवाःतुभ्यंत्वांसुम्नंसुखेनअर्चन्पूजयन्ति यद्यस्मात्कारणात्सहसस्पुत्र हेअग्ने सूर्यःसुष्ठुअर्यःस्वामी यद्वा सर्वान्तर्यामितयासुष्ठुप्रेरकः यद्वा सूर्यःशोभनवीर्यः अभिक्षितीः क्षितिशब्दोमनुष्यवाची विशःक्षितयइतितन्नामसुपाठात् मनुष्यानभिलक्ष्यनॄन्मार्गप्रदर्शकत्वेननेतॄन् आत्मनोरश्मीन्प्रथयन् सर्वतोविस्तारयंस्त्वंशोचिषादीप्यासमानःसन् तिष्ठाः तिष्ठसि तस्मादेतेदेवाःपूजयन्ति ॥ अर्चन् अर्चपूजायामित्यस्यलङिरूपम् अडभावश्छान्दसः । तिष्ठाःष्ठागतिनिवृत्तावित्यस्यलेटिरूपम् यद्योगादनिघातः पाघ्रेत्यादिनातिष्ठादेशस्याद्युदात्तत्वेन निपातनादाद्युदात्तः । सूर्यः राजसूयसूर्येतिक्यबन्तत्वेननिपातनात्सर्वेर्थाःसिद्धाभवन्ति ॥ ४ ॥

अथपञ्चमी—

वयंतेअद्यररिमाहिकामंमुत्तानहस्तानमसोपसद्य ।
यजिष्ठेनमनसायक्षिदेवानस्रेधतामन्मनाविप्रोअग्ने ॥ ५ ॥

वयम् । ते । अद्य । ररिम । हि । कामम् । उत्तानऽहस्ताः ।
नमसा । उपऽसद्य । यजिष्ठेन । मनसा । यक्षि । देवान् ।
अस्रेधता । मन्मना । विप्रः । अग्ने ॥ ५ ॥

हे अग्ने उत्तानहस्ताहविःस्वीकरणादुत्तानपाणयोवयंकामंकमनीयं पुरोडाशादिहविःतेतुभ्यम् अद्येदानीमस्मिन्कर्मणिररिम दद्मः नमसानमस्कारेणउपसद्य प्रसन्नोभूत्वायजिष्ठेनयष्टृतमेनयागेच्छावतामनसान्तःकरणेनदेवान्यक्षियजनीयान्देवान्यजपूजय किञ्च विप्रोमेधावीकर्माभिज्ञस्त्वमस्रेधताअक्षीणेनप्रभूतेनमन्मनामन्तव्येन स्तोत्रेणदेवान्पूजय ॥ अद्य सद्यःपरुत्परार्यैषमइत्यादिनानिपातितः अन्तोदात्तश्च । ररिम रादानेइत्यस्यवर्तमानेलिटि परस्मैपदानांणलतुसित्यादिनामसोमादेशः क्रादिनियमादिडागमः आतोलोपइटिचेत्याकारलोपः हियोगादनिघातः आगमाअनुदात्ताइतीटोनुदात्तत्वात्प्रत्ययस्वरः । उपसद्य षद्लृविशरणगत्यवसादनेषु इत्यस्यक्त्वा समासेनञ्पूर्वेक्त्वोल्यबितिल्यप् लित्स्वरः । यक्षि यजदेवपूजासङ्गतिकरणदानेषु लोटिबहुलंछन्दसीतिशपोलुक् षत्वकत्वे सिपोह्यादेशाभावश्छान्दसः । अस्रेधता स्रिधिःक्षयार्थःतत्पुरुषेतुल्यार्थेतिनञ्स्वरः ॥ ५ ॥

अथषष्ठी–

त्वद्धिपुत्रसहसोविपूर्वीर्देवस्ययन्त्यूतयोविवाजाः ।
त्वंदेहिसहस्रिणंरयिंनोद्रोघेणवचसासत्यमग्ने ॥ ६ ॥

त्वत् । हि । पुत्र । सहसः । वि । पूर्वीः । देवस्य । यन्ति । ऊतयः ।
वि । वाजाः । त्वम् । देहि । सहस्रिणम् । रयिम् । नः ।
अद्रोघेण । वचसा । सत्यम् । अग्ने ॥ ६ ॥

सहसस्पुत्र बलस्यपुत्र हे अग्ने देवस्यदेवनशीलस्य कर्मकरणप्रवृत्तस्ययजमानस्य कृते त्वत् त्वत्तःसकाशात्पूर्वीः प्रभूताऊतयोविघ्नपरिहारेणकर्मपरिपालनादिरूपारक्षाः वियन्तिहि विविधंगच्छन्तिखलु तमिमंयजमानं प्राप्नुवन्ति तथा वाजाः अन्नानिवियन्ति एनंयजमानं प्राप्नुवन्ति किञ्च हे अग्ने त्वंसहस्रिणं सहस्रसंख्याकंरयिंधनं नोस्मभ्यं देहि तथा अद्रोघेण द्रोहरहितेन पापशून्येनवचसावाक्येनयुक्तं सत्यंसत्यशीलंसन्मार्गेप्रवर्तमानं पुत्रंचदेहिप्रयच्छ ॥ त्वत् युष्मच्छब्दस्य पञ्चम्येकवचनेत्वादेशः ङसेःएकवचनस्यचेत्यदादेशः एकादेशस्वरः । पुत्रसहसः परमपिच्छन्दसीतिपराङ्गवद्भावात् द्वयोःसर्वानुदात्तत्वम् । देहि डुदाञ्दाने इत्यस्यलोटिघ्वसोरेद्धावितिधातोरेत्वम् अभ्यासलोपश्च निघातः । अद्रोघेण द्रुहजिघांसायां घञ् द्रोघः घकारश्छान्दसः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् ॥ ६ ॥

अथसप्तमी–

तुभ्यंदक्षकविक्रतोयानीमादेवमर्तासोअध्वरेअकर्म ।
त्वंविश्वस्यसुरथस्यबोधिसर्वंतदग्नेअमृतस्वदेह ॥ ७ ॥ १४ ॥

तुभ्यम् । दक्ष । कविक्रतो इति कविऽक्रतो । यानि । इमा ।
देव । मर्तासः । अध्वरे । अकर्म । त्वम् । विश्वस्य । सुऽरथस्य ।
बोधि । सर्वम् । तत् । अग्ने । अमृत । स्वद । इह ॥ ७ ॥ १४ ॥

दक्ष अतिसमृद्धतयासामर्थ्योपेत कविक्रतो अतीन्द्रियविषयप्रज्ञोपेत सर्वज्ञ देवदीप्यमान हेअग्ने मर्तासोयजमानावयं तुभ्यंत्वदर्थंयानीमा यानिइमानिहवींषिअध्वरेयज्ञे अकर्म हविस्त्यागमकार्ष्म त्वंचसुरथस्य शोभनयानोपेतस्यविश्वस्यसर्वस्ययजमानस्य बोधि गोपायिताभवामीतिबुध्यस्व अमृत मरणधर्मरहिताग्ने इहास्मिन्कर्मणि अस्माभिर्दत्तंतत्सर्वंहविः स्वदआस्वादय ॥ अकर्म डुकृञ्करणे इत्यस्यलङि छन्दस्युभयथेतिमसआर्धधातुकत्वेनङित्त्वाभावाद्गुणः यद्वृत्तयोगादनिघातः । बोधि बुधअवगमने छन्दसिलुङ्लिङ्लिट इतिलोडर्थेलुङ् तिङां तिङोभवन्तीतिसिपस्तादेशः दीपजनबुधेत्यादिनाकर्तरिचिण् चिणोलुगितिप्रत्ययस्यलोपः अडभावश्छान्दसः । स्वद स्वदआस्वादने अन्तर्भावितण्यर्थः लोटिरूपं निघातः ॥ ७ ॥

॥ इतितृतीयस्यप्रथमेचतुर्दशोवर्गः ॥ १४ ॥

विपाजसापृथुनेतिसप्तर्चंतृतीयंसूक्तम् त्रैष्टुभमाग्नेयम् अत्रेयमनुक्रमणिका—विपाजसा कात्यउत्कीलस्त्विति कतगोत्रोत्पन्नोत्कीलोनामऋषिः प्रातरनुवाकाश्विनशस्त्रयोराहोतेत्यादिसूक्तदशकंविनियुक्तं तत्रेदंचद्वितीयंसूक्तम् ।

तस्मिन्सूक्तेप्रथमा—

**विपाजसापृथुनाशोशुचानोबाधस्वद्विषोरक्षसोअमीवाः ।**
**सुशर्मणोबृहतःशर्मणिस्यामग्नेरहंसुहवस्यप्रणीतौ ॥ १ ॥**

वि । पाजसा । पृथुना । शोशुचानः । बाधस्व । द्विषः । रक्षसः । अमीवाः । सुऽशर्मणः । बृहतः । शर्मणि । स्याम् । अग्नेः । अहम् । सुऽहवस्य । प्रऽनीतौ ॥ १ ॥

उत्कीलःस्तौति—हेअग्ने पृथुनाविस्तीर्णेनपाजसातेजसाशोशुचानः अत्यर्थंदीप्यमानस्त्वंद्विषः कर्मानुष्ठानविघ्नकारिणः शत्रून्विबाधस्व विशेषेणनाशय तथा अमीवाः रोगराहित्येनसामर्थ्योपेतानिरक्षसः उभयत्रसुब्व्यत्ययः तानिरक्षांसिबाधस्व कर्मविघ्नकारीणितानि न्यपनुदस्व यद्वा अमीवाः आभिमुख्येन आगमनपरागमनपराः पिशाचिकाश्चबाधस्व सुशर्मणः स्वर्गादिलक्षणशोभनसुखहेतोर्बृहतः महतः शत्रुविजयेनप्राप्तमहिम्नः सुधहस्यसुष्ठुआह्वानो-

पेतस्याग्नेःशर्मणिअस्माकं सुखहेतौप्रणीतौ उत्तरवेद्यादिस्थानेषुप्रणयनेप्रकर्षेणनयनं तत्रतत्रानीयप्रक्षेपः एवंभूते तवप्रणयनेअहंस्याम् अग्निप्रणयनपूर्वकेक्रत्वनुष्ठानेभवेयम् ॥ पाजसा पारक्षणे असुन्नित्यनुवृत्तौ पातेर्बलेजुट्चेत्यसुन्जुडागमः नित्त्वादाद्युदात्तः । पृथुना प्रथप्रख्याने उदित्यनुवृत्तौ, प्रथिम्रदिभ्रस्जांसम्प्रसारणमितिउप्रत्ययः तत्सन्नियोगेनसम्प्रसारणं प्रत्ययस्वरः । शोशुचानः शुचदीप्तावित्यस्ययङ्लुकि गुणोयङ्लुकोरित्यभ्यासस्यगुणः व्यत्ययेनशानच् चर्करीत्यस्यादादिवद्भावाच्छपोलुक् चित्त्वादन्तोदात्तत्वेप्राप्ते अभ्यस्तानामादिरित्याद्युदात्तत्वम् । बाधस्व बाधृविलोडनेइत्यस्यलोटिरूपं पादादित्वान्निघाताभावः । सुशर्मणः शृहिंसायाम् दुःखंशृणातीतिऔणादिकोमनिन् सोर्मनसीइत्युत्तरपदाद्युदात्तत्वम् । स्याम् अस्भुवीत्यस्यलिङि यासुट्परस्मैपदेष्वित्यादिनायासुट् लिङःसलोपइतिसलोपः यासुटोङित्त्वात्श्नसोरल्लोपः निघातः ॥ १ ॥

अथद्वितीया—

**त्वंनो॑अ॒स्या उ॒षसो॒व्यु॑ष्टौ॒त्वंसूर॒उदि॑तेबोधिगो॒पाः ।**
**जन्मे॑व॒नित्यं॒तन॑यंजु॒षस्व॒स्तोमं॑मेअग्ने॒त॒न्वा॑सुजात ॥ २ ॥**

त्वम् । नः॑ । अ॒स्याः । उ॒षसः॑ । विऽउ॑ष्टौ । त्वम् । सूरे॑ । उत्ऽई॑ते । बो॒धि॒ । गो॒पाः । जन्म॑ऽइव । नित्य॑म् । तन॑यम् । जु॒षस्व॒ । स्तोम॑म् । मे॒ । अ॒ग्ने॒ । त॒न्वा॑ । सु॒ऽजा॒त ॥ २ ॥

हेअग्ने त्वमस्याः अद्यवर्तमानायाउषसोव्युष्टौव्युच्छनेप्रकाशनेसूरेसूर्येउदितेचसतिनः अग्निहोत्रादिकर्मणिप्रवृत्तानामस्माकंगोपाः गोपायिताभवामीतिबोधिबुध्यस्व केचित्सूर्योदयात्प्रागग्निहोत्रंजुह्वति केचिदुदितेतस्मिञ्जुह्वति तेषामुभयेषांपालयिताभवेत्यर्थः तन्वासुजातज्वालापरिवृतेनशरीरेणसुष्ठुजात देदीप्यमान अथवा तन्वासुजात आत्मनैवसुजातःस्वयंभूरित्यर्थः तादृशस्त्वंमेमदीयंस्तोमंत्रिवृत्पञ्चदशादिलक्षणंस्तोत्रंनित्यं जुषस्व तत्रदृष्टान्तः—जन्मेवेति यथा जन्म जनकः पिता औरसंतनयं पुत्रंपरिष्वङ्गादिभिःसेवतेतद्वदस्माभिःक्रियमाणमिमंसेवस्व ॥ व्युष्टौ उच्छीविवासे तमोविवास्यतेनयेतिकरणेक्तिन् त्रथ्यादिनापत्वम् तादौचनिति

कृत्यतावितिगतेःप्रकृतिस्वरत्वम् । गोपाः गुपूरक्षणे गुपूधूपविच्छिपणिपनिभ्यआयइति आयप्रत्ययः तदन्ताद्धातोःक्विप् अतोलोपइत्यकारलोपः लोपोव्योरितियलोपः धातुस्वरः । जुषस्व जुषीप्रीतिसेवनयोरित्यस्यलोटिरूपं निघातः ॥ २ ॥

अथतृतीया—

त्वंनृचक्षावृषभानुपूर्वीःकृष्णास्वग्नेअरुषोविभाहि ।
वसोनेषिचपर्षिचात्यंहःकृधीनोरायउशिजोयविष्ठ ॥ ३ ॥

त्वम् । नृऽचक्षाः । वृषभ । अनु । पूर्वीः । कृष्णासु । अग्ने ।
अरुषः । वि । भाहि । वसो इति । नेषि । च । पर्षि । च । अति ।
अंहः । कृधि । नः । राये । उशिजः । यविष्ठ ॥ ३ ॥

वृषभ कामानांवर्षितः हेअग्ने नृचक्षाः नृणांमनुष्याणां शुभाशुभकर्मणोद्रष्टाकृष्णासुरात्रिषुअरुषः आरोचमानस्त्वमनुअनुक्रमेणपूर्वीःबह्वीःज्वालाःविभाहिविशेषेणप्रकाशय वसोः सर्वस्य प्रकाशप्रदानेनस्वस्वस्थानेषुवासयितः अग्नेत्वंनोस्मान्नेषिकर्मानुरूपफलानिचप्रापय अंहः अस्माकंदारिद्र्यलक्षणंपापम् अतिपर्षिच अतिपारय निवारयेतियावत् । किञ्च यविष्ठ युवतम हेअग्ने नोस्मान्रायेधनायउशिजः कामयमानान्कृधिकुरु अभिलषितफलप्रदानेनप्राप्तकामान्कुर्वित्यर्थः ॥ नृचक्षाः चक्षिङ्व्यक्तायांवाचि अयमत्रदर्शनेवर्तते असुन्नित्यनुवृत्तौ चक्षेर्बहुलंशिच्चेत्यसुन् शिद्भावात्ख्याञादेशाभावः कृदुत्तरपदप्रकृतिस्वरः । वृषभ वृषसेचने ,अभजित्यनुवृत्तौ ऋषिवृषिभ्यांकिदितिअभच् कित्त्वाद्गुणाभावः अपादादित्वान्निघातः । पूर्वीः पुरुशब्दस्य वोतोगुणवचनादितिङीष् आद्यस्योकारस्यदीर्घश्छान्दसः प्रत्ययस्वरेणान्तोदात्तः । भाहि भादीप्तौ अन्तरर्भावितण्यर्थः लोटिरूपम् । वसो वसनिवासे उरित्यनुवृत्तौशॄस्वृस्निहित्रप्यसिवसीत्यादिनाउप्रत्ययः पादादित्वान्ननिघातः पाष्ठिकमाद्युदात्तत्वम् । नेषि णीञ्प्रापणे छन्दसि लोडर्थेलट् बहुलंछन्दसीतिशपोलुक् आमन्त्रितंपूर्वमविद्यमानवदितिआमन्त्रितस्य अविद्यमानवत्त्वेनपादादित्वान्ननिघातः । पर्षि पृपालनपूरणयोः चादिषुचेतिननिघातः । कृधि डुकृञ्करणे इत्यस्यलोटि सेर्ह्यपिच्चेतिहिरादेशः तस्यश्रुशृणुपृकृवृभ्यश्छन्दसीतिधिरादेशः बहुलंछन्दसीत्युप्रत्ययस्यलुक् पादादित्वान्ननिघातः । राये रादाने रातेर्डैरितिडैप्रत्ययः ऊडिदमित्यादिना

विभक्तेरुदात्तत्वम् । उशिजः वशकान्तौ वशेःकिच्चेतीजिप्रत्ययः कित्वात्सम्प्रसारणम् प्रत्ययस्व- । यविष्ठ युवशब्दादतिशायनेइष्ठन्प्रत्ययः स्थूलदूरयुवेत्यादिनायणादेःपरस्यलोपः पूर्वस्यचगुणः आमन्त्रितत्वान्निघातः ॥ ३० ॥

अथचतुर्थी—

अषाळ्हो अग्नेवृषभोदिदीहिपुरोविश्वाःसौभगासञ्जिगीवान् ।
यज्ञस्यनेताप्रथमस्यपायोर्जातवेदोबृहतःसुप्रणीते ॥ ४ ॥

अषाळ्हः । अग्ने । वृषभः । दिदीहि । पुरः । विश्वाः । सौभगा । समऽजिगीवान् । यज्ञस्य । नेता । प्रथमस्य । पायोः । जातऽवेदः । बृहतः । सुऽप्रनीते ॥ ४ ॥

हेअग्ने अषाळ्हःशत्रुभिरसोढः अपराजितःस्वयंशत्रूनजयतीत्यर्थः वृषभः कामानांवर्षिता एवंभूतस्त्वंविश्वाःसर्वाःपुरःशत्रूणांपुरीः सौभगा तत्रत्यानिशोभनान्युत्तमानिधनानिचसंजिगीवान् सम्यक्जयनदिदीहि सर्वतोज्वालाभिर्दीप्यस्व सुप्रणीतेशोभनप्रणयन जातवेदः जातप्रज्ञ हेअग्ने बृहतःउपदिष्टातिदिष्टद्विविधेतिकर्तव्यताकलापेनमहतः पायोस्तत्फलप्रदानेनरक्षकस्यप्रथमस्यमुख्यतयाप्रथमंक्रियमाणस्य ‘एषवावप्रथमोयज्ञोयज्ञानांयज्ज्योतिष्टोमः’ इतिश्रुतेः । तादृशस्यज्योतिष्टोमाख्यस्यनेताहविर्वहनदेवताह्वानादिक्रियययायागनिर्वाहकोभव ॥ अषाळ्हः षहमर्षणे इत्यस्यनिष्ठायांहोढइतिढकारः झषस्तथोर्धोधइतितस्यधः ष्टुत्वेनढः ढलोपेकृते ढ्रलोपेपूर्वस्यदीर्घइतिदीर्घः ओत्वाभावश्छान्दसः सहेःसाडःसइतिसकारस्यमूर्धन्यादेशः अव्ययपूर्वपदप्रकृतिस्वरे नञ्स्वरः । वृषभः वृषसेचने ऋषिवृषिभ्यांकिदित्यभच् चित्स्वरः । दिदीहि दिवुक्रीडादावित्यस्य यङ्लुकिलोण्मध्यमैकवचनेसंज्ञापूर्वकोविधिरनित्यइत्यभ्यासस्यगुणाभावः सर्वेविधयश्छन्दसिविकल्प्यन्तइतिपूर्वत्रासिद्धमित्यस्याप्रवृत्तौपरत्वाद्धलिचेतिदीर्घत्वं पश्चाद्वलोपः । सौभगा सुभगान्मन्त्रेइतिउद्गात्रादिषुपाठाद्भावार्थेअञ् हृद्भगसिन्ध्वन्तेइतिपूर्वपदस्यवृद्धिः उत्तरपदस्यनवृद्धिर्भवति सर्वविधीनांछन्दसिविकल्पितत्वात् सुपांसुलुगितिसुपोडादेशः तेनचसौभाग्येनधनान्युपलक्ष्यन्ते" ञित्वादाद्युदात्तः । सञ्जिगीवान् जिजये छन्दसिलिट् तस्यक्वसुः सन्लिटोर्जेरितिकुत्वगादेशः प्रत्ययस्वरः दीर्घश्छान्दसः । पायोः पारक्षणे कृवापाजिमीत्यादिनाउण्प्रत्ययः आतोयुक्चिण्कृतोरितियुगागमः प्रत्ययस्वरः ॥ ४ ॥

अथपञ्चमी–

**अच्छिद्राशर्मंजरितःपुरूणिदेवाँअच्छादीद्यानःसुमेधाः ।**
**रथोनसस्निरभिवंक्षिवाजमग्नेत्वंरोदंसीनःसुमेके ॥ ५ ॥**

अच्छिंद्रा । शर्मं । जरितरितिं । पुरूणिं । देवान् । अच्छं ।
दीद्यानः । सुऽमेधाः । रथः । न । सस्निः । अभि । वक्षि । वाजंम् ।
अग्ने । त्वम् । रोदंसी इतिं । नः । सुमेके इतिं सुऽमेके ॥ ५ ॥

जरितः सर्वस्यजगतः अन्तकाले जरयितः हेअग्ने सुमेधाः शोभनप्रज्ञोपेतः दीद्यानः स्वतेजसाप्रकाशमानस्त्वं देवान्यष्टव्यान्देवान् अच्छाभिलक्ष्यतदुद्देशेन क्रियमाणानिपुरूणि बहूनिशर्मस्वर्गादिसुखसाधनभूतान्यग्निहोत्रादीनिकर्माणिअच्छिद्राअच्छिद्राणिकुरु कर्तृकर्मसाधनवैकल्यराहित्येन सम्पूर्णानिकुरु किञ्च हेअग्ने त्वंसस्निः सम्भक्तासंतर्जनीयोवा यद्वा सस्निःसंस्नातःसन्निरुद्धःस्वकीयंसततगमनं सन्निरुध्य हविष्प्रक्षेपपर्यन्तमत्रवर्तमानस्त्वंयजमानोस्माभिर्दीयमानं हविर्लक्षणमन्नमभि देवानभिलक्ष्यवक्षिवहप्रापय तत्रदृष्टान्तः—रथोन रथइव यथारथो धान्यादिकमुद्वातस्वामिनं प्रापयतितद्वत् किञ्च त्वमिमेरोदसीद्यावापृथिव्यौ सुमेके शोभनरूपोपेते स्वकीयप्रभाभिःप्रकाशयुक्तेकुरु ॥ दीद्यानः दीदेतिर्दीप्तिकर्मा तस्मात्शानच् अभ्यस्तानामादिरित्याद्युदात्तत्वम् । सुमेधाः नित्यमसिच्प्रजामेधयोरित्यसिच्प्रत्ययः बहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । सस्निः षसस्वप्ने अस्मादौणादिकोनिन् नित्वादाद्युदात्तः । वक्षि वहप्रापणे अस्यलोटःसिपिबहुलंछन्दसीतिशपोलुक् ढत्वकत्वे हिरादेशश्छान्दसत्वान्नभवति निघातः ॥ ५ ॥

अथषष्ठी–

**प्रपींपयवृषभजिन्ववाजानग्नेत्वंरोदंसीनःसुदोघे ।**
**देवेभिर्देवसुरुचारुचानोमानोमर्तस्यदुर्मतिःपरिष्ठात् ॥ ६ ॥**

प्र । पीपय । वृषभ । जिन्वं । वाजान् । अग्ने । त्वम् । रोदंसी
इतिं । नः । सुदोघे इतिं सुऽदोघे । देवेभिः । देव । सुऽरुचा ।
रुचानः । मा । नः । मर्तस्य । दुःऽमतिः । परि । स्थात् ॥ ६ ॥

वृषभ कामानांवर्षितः हे अग्ने त्वंनोस्माकं प्रपीपयअभिलषितफलानिप्रवर्धय वाजान-न्नानिचजिन्वप्रयच्छ किञ्च देवदीप्यमानहेअग्ने सुरुचाशोभनदीप्त्यारुचानः शोभमानस्त्वं देवे-भिर्यजनीयदेवैःसहितः अस्माकंरोदसी इमेद्यावापृथिव्यौ सुदोघेवृष्टिद्वाराअभिमतफलप्रदाने-नसुष्ठुदोग्ध्र्यौकुरु तथामर्तस्यमनुष्यस्यशत्रोर्दुर्मतिः दुष्टबुद्धिप्रयुक्तोभिभवः नोस्मान्मापरिष्ठात् प-रितोमागच्छतु ॥ पीपय प्यायतेर्यङ्लुगन्तस्य लोटिशपोलुगभावश्छान्दसः पापाने इत्यस्यण्यन्त-स्यलुङिचङिद्विर्वचनाभ्यासदीर्घौ सिपोलोपश्छान्दसः । जिन्व हिविजिविधिविप्रीणनार्थाः एतस्य लोटिइदित्त्वान्नुम् शप् अतोहेरितिहेर्लुक् आमन्त्रितस्याविद्यमानवत्त्वेन अतिङउत्तरत्वाभावान्न निघातः । सुदोघे दोहनंदोघः भावेघञ् कुत्वंछान्दसम् आद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदा-त्तत्वम् । दुर्मतिः मनुअवबोधने मन्यतइतिमतिर्बुद्धिः कर्तरिक्तिन् दुष्टाबुद्धिः अव्ययपूर्व-पदप्रकृतिस्वरत्वेप्राप्ते कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ ६ ॥

अथसप्तमी—

**इळामग्नेपुरुदंसंसनिंगोःशश्वत्तमंहवमानायसाध ।**
**स्यान्नःसूनुस्तनयोविजावाग्नेसातेसुमतिर्भूत्वस्मे ॥ ७ ॥ १५ ॥**

**इळाम् । अग्ने । पुरुऽदंसम् । सनिम् । गोः । शश्वत्ऽतमम् ।**
**हवमानाय । साध । स्यात् । नः । सूनुः । तनयः । विजाऽवा ।**
**अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥ ७ ॥ १५ ॥**

उतोपितृभ्यामित्यस्मिन्वर्गेव्याख्यातेयमृक् ॥ ७ ॥

॥ इतितृतीयस्यप्रथमेपञ्चदशोवर्गः ॥ १५ ॥

अयमग्निरितिचतुर्थपञ्चंचसूक्तमाग्नेयम् अत्रानुक्रमणिका—अयमग्निःषट्प्रागाथमिति । उत्कीलस्त्वितितुशब्दप्रयोगादस्यापिसूक्तस्यसएवऋषिः अत्रविषमसंख्यानामृचांबृहतीछन्दः तृतीयपादस्यद्वादशाक्षरत्वात् समसंख्यानांतुसतोबृहतीप्रथमतृतीयपादयोर्द्वादशाक्षरत्वात् उक्तं-च—अयुजौजागतौसतोबृहतीति ।

तस्मिन्सूक्तेप्रथमा–

अयमग्निःसुवीर्यस्येशेमहःसौभगस्य ।
रायईशेस्वपत्यस्यगोमतईशेवृत्रहथानाम् ॥ १ ॥

अयम् । अग्निः । सुऽवीर्यस्य । ईशे । महः । सौभगस्य ।
रायः । ईशे । सुऽअपत्यस्य । गोऽमतः । ईशे । वृत्रऽहथानाम् ॥१॥

उत्कीलःस्तौति–अयंयजनीयत्वेनांगुल्यानिर्दिश्यमानोग्निः सुवीर्यस्यशोभनसामर्थ्योपेतस्य महोमहतः सौभगस्यसौभाग्यस्यईशेईष्टेईश्वरोभवति सर्वस्यबलारोग्यहेतुतयासौभाग्यकारित्वात् तथागोमतः गवादिपशुयुक्तस्यस्वपत्यस्य शोभनापत्यस्यरायोधनस्येशेईष्टे पुत्रपश्वाद्युद्देशेन क्रियमाणकर्मफलसम्पादकत्वेनतत्स्वामित्वात् तथा एवंभूतोग्निःवृत्रहथानां हननंहथः शत्रुभूतपापविनाशनानामपीशेईष्टे त्वयिसमर्पितकर्मणामस्माकं त्वत्प्रसादात्पापक्षयोभवतीतितस्यापिस्वामी ॥ ईशे ईशऐश्वर्ये अदादित्वाच्छपोलुक् लोपस्तआत्मनेपदेष्वितितलोपः पादादित्वादनिघातः । सौभगस्य सुभगस्यभावःसौभगं उद्गात्रादित्वादञ् सर्वविधीनांछन्दसिविकल्पितत्वादत्रहृद्भगेत्यादिनाप्राप्तायाउत्तरपदवृद्धेरभावः । रायः ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम् । ईशे निघातः । स्वपत्यस्य नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । वृत्रहथानां वृतुवर्तने अस्मात् स्फायितञ्चिवञ्चीत्यादिनारक्प्रत्ययः कित्वादगुणः हनहिंसागत्योरित्यस्मात् हनिकुषिनीरमिकाशिभ्यस्थइतिक्थन् कित्वादनुनासिकलोपः कृदुत्तरपदप्रकृतिस्वरः । सुवीर्यस्य अधीगर्थेत्यादिनाकर्मणिषष्ठी ॥ १ ॥

अथद्वितीया–

इमंनरोमरुतःसश्चतावृधंयस्मिन्रायःशेवृधासः
अभियेसन्तिपृतनासुदूढ्योविश्वाहाशत्रुमादभुः ॥ २ ॥

इमम् । नरः । मरुतः । सश्चत । वृधम् । यस्मिन् । रायः ।
शेऽवृधासः । अभि । ये । सन्ति । पृतनासु । दुःऽध्यः । विश्वाहा ।
शत्रुम् । आऽदभुः ॥ २ ॥

नरः कर्मणां नेतारः हे मरुतो देवा यूयं वृषं पशुपुत्रादिवर्धकमिमम् अस्माभिः स्तूयमानमग्निं सश्चत हविरानयनार्थं सेवध्वं कीदृशोऽग्निः कीदृशास्ते मरुतश्चेत्याकाङ्क्षायामाह—यस्मिन्देवे रायो धनानि शोवृधासः दानभोगाद्युपयोगेन सुखस्य वर्धकानि सन्ति ये च देवाः पृतनासु सेनासु सेनोपलक्षितेषु संग्रामेषु दूढ्यः दुष्टध्यानोपेतानात्मनो हिंसकान्शत्रूनभिसन्ति अभिभवन्ति ये च विश्वाहा विश्वान्यहानि यस्मिन्नखण्डे काले तस्मिन्सर्वदा शत्रुमात्मनो द्वेष्टारमादभुः आदभ्नुवन्ति हिंसन्ति ॥ एवंभूतास्ते सर्वे मरुतो यूयं तमिममग्निं सेवध्वमिति पूर्वेणान्वयः ॥ सश्चत षस्ज सङ्गे इत्यस्माल्लोटि रूपं जकारस्य व्यत्ययेन चकारः निघातः । शोवृधासः वर्णव्यत्ययः शंसुखं वर्धयतीत्यसुन्नित्यसुन् गुणाभावश्छान्दसः गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं चेत्यौणादिकसूत्रात् पूर्वपदप्रकृतिस्वरः । सन्ति असभुवि । दूढ्यः ध्यै चिन्तायाम् अन्येभ्योऽपि दृश्यत इति क्विप् दृशिग्रहणात्सम्प्रसारणं दुरो दाशनाशदभध्येषूत्वं वक्तव्यमुत्तरपदादेश्च ष्टुत्वं चेति उत्वष्टुत्वे छन्दस्युभयथेति शासि इयङादेशं बाधित्वा यणादेशः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः शसः सुत्वादनुदात्तत्वे कृते उदात्तस्वरितयोर्यण इति शसः स्वरितत्वम् । आदभुः दम्भु दम्भने अस्माल्लिटि उसि रूपम् श्रन्थिग्रन्थिदम्भिस्वञ्जीनामुपसङ्ख्यानमिति किद्वद्भावादनुनासिकलोपः द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यमिति द्विर्वचनाभावः यद्वृत्तयोगादनिघातः सतिशिष्टस्वरो बलीयानिति प्रत्ययस्वरः ॥ २ ॥

अथ तृतीया—

**सत्वंनोरायःशिशीहिमीढ्वोअग्नेसुवीर्यस्य ।**
**तुविद्युम्नवर्षिष्ठस्यप्रजावतोनमीवस्यशुष्मिणः ॥ ३ ॥**

**सः । त्वम् । नः । रायः । शिशीहि । मीढ्वः । अग्ने । सुऽवीर्यस्य ।**
**तुविऽद्युम्न । वर्षिष्ठस्य । प्रजाऽवतः । अनमीवस्य । शुष्मिणः ॥ ३ ॥**

हे अग्ने स तथाविधस्त्वं नोऽस्मान्रायः तृतीयार्थे षष्ठी धनेन शिशीहि तीक्ष्णान्कुरु अस्मान्धनसमृद्धान्कुरु किञ्च तुविद्युम्न बहुधनोपेत अत एव मीढ्वः मीढ्वन् कामानां सेक्तः हे अग्ने त्वं वर्षिष्ठस्य वृद्धतमस्य प्रभूतस्य प्रजावतः अपत्ययुक्तस्य अनमीवस्य आरोग्यहेतोः अत एव शुष्मिणः बलहेतोः सुवीर्यस्य शोभनसामर्थ्ययुक्तस्यान्नस्य संबन्धिनोऽस्मान्कुरु यद्वा एतत्सर्वं विशेषणतया योजनीयम् एताः षष्ठ्यस्तृतीयार्थे । एतदुक्तं भवति—धनेनापत्यारोग्यशरीरबलोपेतेनान्नेन चास्मान्त्समृद्धान्कुर्विति ॥ शिशीहि शिञ् निशाने इत्यस्य लोटि बहुलं छन्दसीति विकरणस्य श्लुः वा छन्दसीति

विकल्पेनाङित्त्वादङितश्चेतिहेर्धिरादेशोनभवति दीर्घश्छान्दसः निघातः । मीढ्वःमिहसेचनेइत्यस्यक्वसौ दाश्वान्साह्वान्मीढ्वांश्चेतिनिपातनान्ढत्वम् उपधादीर्घश्च संबुद्धौनुम्कृतेहल्ङ्याद्दिलोपेसंयोगान्तलोपेचकृतेनकारस्यमतुवसोरुसंबुद्धौछन्दसीतिरुः पादादित्वादाद्युदात्तः ॥ ३ ॥

अथचतुर्थी—

चाक्रिर्योविश्वाभुवनाभिसासहिश्चाक्रिर्देवेष्वादुवः ।
आदेवेषुयततआसुवीर्यआशंसउतनृणाम् ॥ ४ ॥

चाक्रिः । यः । विश्वा । भुवना । अभि । ससहिः । चाक्रिः । देवेषु ।
आ । दुवः । आ । देवेषु । यतते । आ । सुऽवीर्ये । आ ।
शंसे । उत । नृणाम् ॥ ४ ॥

योयमग्निःचाक्रिः सर्वस्यजगतःकर्ता सचविश्वाभुवनाविश्वानिभुवनानिअभिआभिविशति 'तत्सृष्ट्वातदेवानुप्राविशत्' इतिश्रुतेः । चाक्रिःकर्तासोग्निः सासहिः पुरोडाशादिहविर्भारसहनशीलःसन् दुवः अस्माभिर्दत्तंहविर्देवेषुयजनीयदेवेषु आ आनयति सचाग्निःदेवेषुदेवनशीलेषुस्तोतृषुआयततेआभिमुख्येनगच्छति यद्वा विश्वानिभुवनानिचाक्रिःअभिसासहिरभिभवनशीलःआकारक्षार्थं देवेषुचदुवः परिचरणंचाक्रिःकर्तायएवंभूतः सआयततेइत्यादिपूर्ववत् ॥ उतापिच नृणांयज्ञस्यनेतृणांशस्त्रिणांशंसे शंसनंशंसःशस्त्रंतस्मिन्सोग्निरागच्छति तथानृणांमनुष्याणांसुवीर्येशोभनवीर्योपेतेयुद्धेतद्रक्षणार्थमागच्छति अनेनाग्नेः सर्वव्यापकताप्रतिपादिताभवति । चाक्रिःडुकृञ्करणे आदृगमहनजनःकिकिनौलिट्चेतिकिन्प्रत्ययः लिड्वद्भावाद्द्विर्वचनम् कित्त्वाद्गुणाभावः नित्स्वरः । सासहिः षहमर्षणेइत्यस्माद्यङन्तात् सहिवहिचलिपतिभ्योयङन्तेभ्यःकिकिनावितिकिः प्रत्ययस्वरः । यतते यतीप्रयत्ने, यद्वृत्तयोगादनिघातः । शंसे भावेघञ् ञित्स्वरः । नृणां नृचेतिविकल्पेनदीर्घाभावः नामन्यतरस्यामितिविभक्तेरुदात्तत्वम् । विश्वेत्यादिपुनलोकाव्ययेतिषष्ठीप्रतिषेधः ॥ ४ ॥

अथपञ्चमी—

मानोअग्नेमतयेमावीरतायैरीरधः ।
मागोतायैसहसस्पुत्रमानिदेपद्वेषांस्याकृधि ॥ ५ ॥

मा । नः । अग्ने । अमंतये । मा । अवीरतायै । रीरधः ।
मा । अगोतायै । सहसः । पुत्र । मा । निदे । अप ।
द्वेषांसि । आ । कृधि ॥ ५ ॥

सहसस्पुत्र बलस्यपुत्र हेअग्ने त्वंनोस्मान् अमतयेशत्रुभूतायदारिद्र्यायमारीरधः संसिद्धान्विषयभूतान्माकुरु तथाअवीरतायैअवीरशब्देनतद्वान्लक्ष्यतेवीरस्यभावोवीरता नवीरता अवीरतातस्यै अस्मानपुत्रतायाविषयभूतान्माकुरु तथात्वमस्मान्अगोतायैगवादिपशुसंपत्त्यभावस्य विषयभूतान्माकुरु किञ्चास्मान्निदेनिन्दायाविषयभूतान्माविधेहि तथात्वंद्वेषांसिकर्मापराधनिमित्तान् द्वेषान् अपाकृधि अपाकुरु निवारय ॥ अवीरतायै वीराअस्यसन्तीतिवीरः अर्शआदित्वादच् तस्यभावःवीरता तस्यभावस्त्वतलाविति तल् नवीरताअवीरता नञःस्वरेप्राप्ते परादिश्छन्दसिबहुलमितिनञउत्तरस्यादेरुदात्तता । रीरधः राधसाधसंसिद्धौअस्माण्ण्यन्ताच्छान्दसेलुङि णिश्रिद्रुस्रुभ्यइतिच्लेश्चङादेशः णेरनिटीतिणिलोपः णौचङ्युपधायाह्रस्वः चङीतिद्विर्वचनं सन्वल्लघुनिचङ्परेइतिसन्वद्भावः सन्यतइत्यभ्यासस्येत्वम् तस्यदीर्घोलघोरिति दीर्घः नमाङ्योगेइत्यडभावः निघातः । अगोतायै गोशब्देनगोमान्लक्ष्यते नगौःअगौःअगोर्भावःअगोता तस्यभावइतितल् लित्स्वरः । सहसस्पुत्र सुबामन्त्रितेपराङ्गवत्स्वरेइतिपराङ्गवद्भावात्सहसस्पुत्रइत्येतयोःसर्वानुदात्तत्वम् । निदे णिदिकुत्सायाम्अस्मात्सम्पदादित्वाद्भावे क्विप् अनित्यमागमशासनमितिनुमभावः सावेकाचइतिविभक्तेरुदात्तता ॥ ५ ॥

अथषष्ठी—

शग्धिवाजंस्यसुभगप्रजावतोग्नेबृहतोअध्वरे ।
संरायाभूयंसासृजमयोभुनातुविद्युम्नयशस्वता ॥ ६ ॥ १६ ॥

शग्धि । वाजस्य । सुऽभग । प्रजाऽवतः । अग्ने । बृहतः । अध्वरे ।
सम् । राया । भूयसा । सृज । मयःऽभुना । तुविऽद्युम्न ।
यशस्वता ॥ ६ ॥ १६ ॥

सुभग शोभनधनोपेत हेअग्ने त्वमध्वरेअस्माभिः क्रियमाणेस्मिन्नग्निष्टोमादिकर्मणि बृहतोमहतः प्रभूतस्यप्रजावतः अपत्योपेतस्यवाजस्यान्नस्यशग्धिईशिषे तादृशमन्नमस्मिन्नध्वरेअस्मभ्यंदेहि किञ्च तुविद्युम्नबहुधनयुक्तहेअग्ने मयोभुना 'मयइतिसुखनाम . शेवृधंमयइतितन्नामसुपाठात् तत् दानाद्युपयोगहेतुतयासुखस्यभावकेन अतएवयशस्त्वताकीर्तिमताभूयसाअतिप्रभूतेनरायाएवंविधेनधनेनास्मान्संसृज संयोजय ॥ . शग्धि शक्लृशक्ताविल्येस्यलोटिबहुलंछन्दसीतिविकरणस्यलुक् हुझल्भ्योहेर्धिरितिधिरादेशः हेरपित्त्वादुदात्तता । राया ऊडिदमितिविभक्तेरुदात्तत्वम् । भूयसा बहुशब्दात् द्विवचनविभज्योपपदेइतिईयसुन् बहोर्लोपोभूचबहोरितिईयसुनःसर्वस्यलोपेप्राप्ते आदेःपरस्येतिप्रत्ययस्यादेर्लोपः बहोर्भूरादेशश्च नित्स्वरः । सृज सृजविसर्गे तुदादिः लोटिरूपं निघातः । मयोभुना भवतेरौणादिकोडुप्रत्ययः । तुविद्युम्न पादादित्वादनिघातः ॥ ६ ॥

॥ इतितृतीयस्यप्रथमेषोडशोवर्गः ॥ १६ ॥

समिध्यमानइतिपञ्चर्चंपञ्चमंसूक्तमाग्नेयंत्रैष्टुभं वैश्वामित्रस्यकतस्यार्षम् . तदुक्तं—समिध्यमानःपञ्चकतोवैश्वामित्रस्त्विति । आहोतेत्यादिसूक्तदशकस्यविनियोगउक्तः प्रातरनुवाकाश्विनशस्त्रयोरिति तत्रेदंचतुर्थम् वाजपेयेबार्हस्पत्येचरात्वग्निंसुदीतिमितिस्विष्टकृतो याज्या वाजपेयेनेत्यादिखण्डेसूत्रितम्—अग्निंसुदीतिंसुदृशंगृणन्तइतिसंयाज्येइति ।

तस्मिन्सूक्तेप्रथमा—

**समिध्यमानःप्रथमानुधर्मासमक्तुभिरज्यतेविश्ववारः ।**
**शोचिष्केशोघृतनिर्णिक्पावकःसुयज्ञोअग्निर्यजथायदेवान्॥१॥**

सम्ऽइध्यमानः । प्रथमा । अनु । धर्म । सम् । अक्तुऽभिः ।
अज्यते । विश्वऽवारः । शोचिःऽकेशः । घृतऽनिर्निक् । पावकः ।
सुऽयज्ञः । अग्निः । यजथाय । देवान् ॥ १ ॥

कतःस्तौति— धर्म धारणाद्धर्मअग्नेःयज्ञनिर्वाहकतयातद्वारकत्वाद्धर्माग्निः तथाचमन्त्रः—धर्माणमग्निंविदथस्यसाधनमिति । तादृशोग्निः प्रथमाप्रथमंयज्ञोपक्रमेअनुअग्न्यायतनेष्वनुक्रमे-

णसमिध्यमानःसम्यक्प्रज्वाल्यमानः यद्वा अनुधर्म धर्मसाधनभूतेषुयज्ञेषुप्रथमंसमिध्यमानः वि-श्ववारः विश्वैःसर्वैर्यजमानैर्येष्टव्यतयावरणीयःशोचिष्केशःशोचींषिज्वालाः केशायस्यसत-थोक्तः घृतनिर्णिक्निर्णिगितिरूपनाम दीप्तिरूपः यद्वा घृतनिर्णिक् घृतस्यतापनद्वारा विला-पनेनशोधकः पावकः अस्मदीयपापशोधकःसुयज्ञः शोभनयज्ञोपेतः एवंभूतोग्निः देवानस्माभि-र्भजनीयान्देवान्यजथाययष्टुम् अक्तुभिरन्नसाधनैर्घृतादिभिःसमज्यते सम्यक्सिच्यते ॥ प्रथमा सुपांसुलुगितिसुपोडादेशः । धर्म धृधारणेइत्यस्मादन्येभ्योपिदृश्यन्तइतिमनिन् ह्रस्वत्वंछान्दसं नित्स्वरः । अक्तुभिः अञ्जूव्यक्तिम्रक्षणकान्तिगतिषु अज्यतेएभिरितिबाहुलकात्क्तुः करणे कि-त्वादुपधालोपः प्रत्ययस्वरः । अज्यते सएवधातुः कर्मणियक् अनिदितामित्युपधालोपः । विश्ववारः विश्वैर्यजमानैर्होतृद्वारावारोवरणंयस्येत्यत्र वृञ्वरणेइत्यस्यण्यन्तस्यरूपं वारः बहुव्रीहौविश्वंसंज्ञायामितिपूर्वपदान्तोदात्तत्वम् । घृतनिर्णिक् णिजिर्शौचपोषणयोः क्विप् घृतंनेनेक्तीतिद्वितीयातत्पुरुषत्वात्पूर्वपदस्वरः । यजथाय यजदेवपूजासङ्गतिकरणदानेषु अस्मादौ-णादिकोथप्रत्ययः तादर्थ्येचतुर्थी प्रत्ययस्वरः ॥ १ ॥

अथद्वितीया-

**यथायजोहोत्रमग्नेपृथिव्यायथादिवोजातवेदश्चिकित्वान् ।**
**एवानेनहविषायक्षिदेवान्मनुष्वद्यज्ञंप्रतिरेममद्य ॥ २ ॥**

**यथा । अयजः । होत्रम् । अग्ने । पृथिव्याः । यथा । दिवः । जातऽवेदः । चिकित्वान् । एव । अनेन । हविषा । यक्षि । देवान् । मनुष्वत् । यज्ञम् । प्र । तिर । इमम् । अद्य ॥ २ ॥**

हेअग्ने त्वंयथापृथिव्याःयजमानभूतायाः पृथिवीदेवतायाःपूर्वंहोतासन् होत्रंहोमसाधनं हविःअयजःअयाक्षीः जातवेदः जातप्रज्ञ हेअग्ने चिकित्वान्कर्मविषयज्ञानवान्त्वंयथादिवः य-जमानभूतायाः द्युदेवतायाः होताभूत्वाहविरयजः एव एवंत्वमस्मिन्कर्मणिहोतासन्अनेन अ-स्माभिर्दीयमानेनहविषादेवान्यक्षियज किञ्च त्वमद्येदानीमस्माभिःक्रियमाणमिमंयज्ञंप्रतिर अनुष्ठानसंपूर्त्यापारंगमय तत्रदृष्टान्तः–मनुष्वदिति यथामनोर्यज्ञमनुष्ठानसंपूर्त्यापारमनैषीस्तद्व-त् इमंयज्ञंपारंनयेत्यर्थः ॥ यथा प्रकारवचनेथाल्इतिथाल् लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् ।

अयजः यजेर्लङिरूपं यच्छब्दयोगादनिघातः । होत्रं हुदानादनयोः हुयामाश्रुभसिभ्यस्त्रन्नि-तित्रन्प्रत्ययेनान्तोदात्तः । दिवः ऊडिदमितिविभक्तेरुदात्तत्वम् । चिकित्वान् कितज्ञानेइत्यस्य. क्वसौरूपं प्रत्ययस्वरः । अनेन इदंशब्दस्यतृतीयैकवचने अनाप्यकइत्यनादेशः । यक्षि. यजेर्लेटिरूपम् । मनुष्वत् तत्रतस्येवेतिवतिः नभोङ्गिरोमनुषांवत्युपसंख्यानमितिभसंज्ञकत्वाद्रुत्वा-भावः । प्रत्ययस्वरः तरतेर्लोटिव्यत्ययेनशः ऋतइद्धातोरितीत्वं निघातः ॥ २ ॥

अथतृतीया–

त्रीण्यायूंषितवंजातवेदस्तिस्रआजानीरुषसंस्तेअग्ने ।
ताभिर्देवानामवोयक्षिविद्वानथाभवयजमानायशंयोः ॥ ३ ॥

त्रीणि । आयूंषि । तव । जातऽवेदः । तिस्रः । आऽजानीः ।
उषसः । ते । अग्ने । ताभिः । देवानाम् । अवः । यक्षि । विद्वान् ।
अथ । भव । यजमानाय । शम् । योः ॥ ३ ॥

हेजातवेदः जातप्रज्ञ तवत्रीण्यायूंषि त्रिविधानिआज्यौपधिसोमात्मकान्यन्नानिआहार-तयाकल्पितानि हेअग्ने तिस्रउषसः एकाहाहीनसत्रगताउषोभिमानिन्यस्तिस्रोदेवताः तेतवआ-जानीर्जनयित्र्योमातरः यद्वा उषोभिमानिन्योदेवतास्तवआजानीः त्वामनुजाताःतिस्रःस्वसारः तथाचस्वसृःप्रकृत्यमन्त्रः–प्रजामेकारक्षत्यूर्जमेकाराष्ट्रमेकारक्षतीति । ताभिरुषोभिमानिनीभिः दे-वताभिः सहितस्त्वम् अवः अस्माभिर्दीयमानंहविर्लक्षणमन्नंदेवनांयक्षि यष्टव्यदेवानांप्रयच्छ अ-थानन्तरंविद्वान्जानंस्त्वं यजमानायशंभव सुखहेतुर्भव योश्चसुखस्यमिश्रयिताचभव ॥ तव यु-ष्मदस्मदोर्ङसीत्याद्युदात्तः । तिस्रः त्रिशब्दस्यस्त्र्यर्थेत्रिचतुरोःस्त्रियामितितिसृइत्यादेशः अचिर-ऋतइतिरेफादेशः तिसृभ्योजसइतिविभक्तेरुदात्तत्वम् । आजानीः जनजनने जनिघसिभ्यामि-णितिकर्तरिइण् णित्त्वादुपधावृद्धिः वाछन्दसीतिसवर्णदीर्घः कृदुत्तरपदप्रकृतिस्वरत्वम् । अवः अवरक्षणे असुन्नित्यसुन् नित्स्वरः । यक्षि यजेर्दानार्थस्यलेटिरूपम् । यजमानाय पूङ्यजोः शानन्नितिशानन् नित्स्वरः । योः युमिश्रणेइत्यस्मादन्येभ्योपिदृश्यन्तइतिविच् आर्धधातुक-लक्षणगुणः कृदुत्तरपदप्रकृतिस्वरः ॥ ३ ॥

अथचतुर्थी—

अ॒ग्निंसु॒दी॒तिंसु॒दृशं॑गृ॒णन्तो॑नम॒स्याम॒स्त्वेड्यं॑जातवेदः ।
त्वांदू॒तम॑र॒तिंह॑व्य॒वाहं॑दे॒वाअ॑कृण्वन्न॒मृत॑स्य॒नाभि॑म् ॥ ४ ॥

अ॒ग्निम् । सु॒ऽदी॒तिम् । सु॒ऽदृश॑म् । गृ॒णन्तः॑ । न॒म॒स्याम॑ः । त्वा॒ ।
ई॒ड्य॑म् । जात॑ऽवेदः । त्वाम् । दू॒तम् । अ॒र॒तिम् । ह॒व्य॒ऽवाह॑म् ।
दे॒वाः । अ॒कृ॒ण्व॒न् । अ॒मृत॑स्य । नाभि॑म् ॥ ४ ॥

जातवेदः जातस्यसर्वस्यवेदितः हेअग्नेगृणन्तः त्वद्विषयांस्तुतिंकुर्वाणाः वयमग्निमङ्गनादिगुणोपेतंसुदीप्तिमतएवसुदृशं सर्वैःसुदर्शनमीड्यंस्तुत्यम् एवंविधंत्वात्वांनमस्यामः हविर्भिः पूजयामः किंच देवाअस्माभिर्यजनीयाइन्द्रादयोदेवाः अरतिंनविद्यतेरतिर्विषयेषुप्रीतिर्यस्यासौ अरतिः विषयेष्वप्यसक्तम् अतएवामृतस्यदेवान्नभूतायाःसुधायाः नाभिं नाभिस्थानंत्वांतादृशंहव्यवाहंदूतमकृण्वन् हविषांवोढारंदूतमकुर्वन् दूतोहिद्विविधः वार्ताहारीकार्यकारीचेति तत्रत्वांकार्यकारिणंदूतमकार्षुरितिभावः ॥ सुदीतिं दीङ्क्षये दीयतेविनाश्यतेआभिस्तमइतिकरणेक्तिन् दीतयोदीप्तयः बहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । सुदृशं दृशिर्प्रेक्षणे तस्माच्छक्त्यार्थे खल् संज्ञापूर्वकोविधिरनित्यइतिगुणाभावः लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् । गृणन्तः गृणातिरर्चतिकर्मा । नमस्यामः नमस्पूजायां नमोवरिवश्चित्रङःक्यजितिक्यच् तदन्ताल्लटिरूपम् पादादित्वादनिघातः । दूतं टुदुउपतापे दुतनिभ्यांदीर्घश्चेतिक्तः तत्सान्नियोगेनधातोर्दीर्घः दूतः इतस्ततःसंचारीत्यर्थः प्रत्ययस्वरः । अरतिम् रमुक्रीडायां भावेक्तिन् । अकृण्वन् कृविर्हिंसाकरणयोरित्यस्यलङि धिन्विकृण्व्योरचेत्युप्रत्ययः अकारश्चान्तादेशः निघातः ॥ ४ ॥

अथपञ्चमी—

यस्त्वद्धोता॒पूर्वो॑अग्ने॒यजी॑यान्द्वि॒ताच॒सत्ता॑स्व॒धया॑च॒शम्भुः॑ ।
तस्या॒नुधर्म॒प्रय॑जाचिकि॒त्वोथा॑नोधाअध्व॒रंदे॒ववी॑तौ ॥ ५ ॥ १७ ॥

यः । त्वत् । होता॑ । पूर्वः॑ । अग्ने॑ । यजी॑यान् । द्वि॒ता । च॒ ।
सत्ता॑ । स्व॒धया॑ । च॒ । श॒म्ऽभुः । तस्य॑ । अनु॑ । धर्म॑ । प्र । य॒ज॒ ।
चि॒कि॒त्वः॒ । अथ॑ । नः॒ । धाः॒ । अ॒ध्व॒रम् । दे॒वऽवी॑तौ ॥ ५ ॥ १७ ॥

हेअग्ने त्वत् त्वत्तोपिपूर्वः प्रथमभावीयजीयान्अतिशयेनयष्टायोयःकश्चिद्धोताहोमनिष्पादकः द्विताद्वैधंमध्यमेचोत्तमस्थानेचस्वधयासोमाख्येनान्नेनसहसत्तानिषण्णःसन्शम्भुः यज्ञानांसुखभूरभूत् द्वितीयपादमेवं यास्कोव्याचख्यौ—द्विताचसत्तास्वधयाचशम्भुः द्वैधंसत्तामध्यमेचस्थानउत्तमेचशम्भुः सुखभूरिति । चिकित्वः धर्मविषयकचेतनावान् हेअग्ने तस्ययः त्वत्तोपिपूर्वभावीहोतानिरूपितः तस्यहोतुः अनुधर्मधर्मोननुतेनानुष्ठितंधर्मानुपलक्ष्य प्रयज प्रकर्षेणदेवान्पूजय अथानन्तरं हेअग्नेत्वंनोस्माकं संबन्धिनमध्वरमिमंयज्ञंदेववीतौ देवानां प्रीत्यर्थं धाः विधेहि । यजीयान् यष्टृशब्दस्यतुश्छन्दसीतिईयसुन् तस्मिन् तुरिष्ठेमेयःस्वितितृलोपः नित्त्वादाद्युदात्तः । द्विता द्विशब्दात्संख्यायाविधार्थेधेतिधाप्रत्ययः धकारस्यतकारश्छान्दसः प्रत्ययस्वरः । सत्ता षद्लृविशरणगत्यवसादनेष्वित्यस्यताच्छीलिकस्तृन् नित्स्वरः । स्वधया स्वंलोकंदधाति यजमानस्येतिस्वधा अतोनुपसर्गेकइतिकप्रत्ययः कृदुत्तरपदप्रकृतिस्वरः । शम्भुःशंसुखम् अस्माद्भवतीति भूसत्तायां विप्रसम्भ्योड्वसंज्ञायामित्यत्रमितद्र्वादेरुपसंख्यानात् डुप्रत्ययः डित्त्वाट्टिलोपः । यज यजेर्लोटिरूपम् । चिकित्वः कितज्ञानेइत्यस्यक्वसौरूपं मतुवसोरुसंबुद्धौछन्दसीतिनकारस्यरुः । अथानः निपातस्यचेतिदीर्घः । धाः डुधाञ्धारणपोषणयोरित्यस्यछान्दसे लुङिरूपम् अडभावश्छान्दसः । देववीतौ देवानांवीतिरशनंयत्रप्रीतौ साप्रीतिर्देववीतिः वीकान्त्यादिषु इत्यस्माद्भावेक्तिन् बहुव्रीहौपूर्वपदस्वरः ॥ १ ॥

॥ इतितृतीयस्यप्रथमेसप्तदशोवर्गः ॥ १७ ॥

भवानोअग्नइतिपञ्चर्चंषष्ठंसूक्तम् भवानइत्यनुक्रमणिका कतोवैश्वामित्रस्त्वितितुशब्दप्रयोगादस्यापिवैश्वामित्रःकतऋषिः अग्निर्देवता प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः प्रवर्ग्येभिष्टवेभवानोअग्नइतिद्वृचोविनियुक्तः सूत्रितंच—भवानोअग्नेसुमनाउपेतावितिद्वृचाइति ।

तस्मिन्सूक्तेप्रथमा—

**भवानोअग्नेसुमनाउपेतौसखेवसख्येपितरेवसाधुः ।**
**पुरुद्रुहोहिक्षितयोजनानांप्रतिप्रतीचीर्दहतादरातीः ॥ १ ॥**

भव । नः । अग्ने । सुऽमनाः । उपऽइतौ । सखाऽइव । सख्ये ।
पितराऽइव । साधुः । पुरुऽद्रुहः । हि । क्षितयः । जनानाम् ।
प्रति । प्रतीचीः । दहतात् । अरातीः ॥ १ ॥

हेअग्ने त्वम् उपेतौअस्माभिः क्रियमाणप्रवर्ग्याख्यकर्मणः आभिमुख्येनागमनेसुमनाः तत्कर्मसिद्ध्यर्थमनुकूलमनस्कोभूत्वानः साधुर्भवअस्मत्संबन्धिकर्मसाधकोभव तत्रदृष्टान्तद्वयम्— सखेवसख्येपितरेवेति यथासखासुहृत्सख्येमित्रायहितोपदेशेनसाधुर्भवति यथाचपितरामातापितरौपुत्रायसन्मार्गोपदेशादिनासाधकौभवतःतद्वत् किंच जनानांमनुष्याणांक्षितयोमनुष्याः पुरुद्रुहोहिनानाविधद्रोहयुक्ताः हिशब्दःकारणपरः यस्माल्लोकेपरस्परमात्सर्यादिनान्योन्यमसहमानाजना वर्तन्ते तस्मात्त्वं प्रतीचीः प्रतीचः प्रतिकूलतयास्मदाभिमुख्येनागच्छतः अरातीः अरातीन्शत्रून्प्रतिदहतात् त्वंप्रतिकूलःसन्भस्मसात्कुरु ॥ भवानः द्व्यचोतस्तिङइतिसंहितायांदीर्घः । उपेतौ इण्गतौ अयनमितिभावेक्तिन् प्रादिसमासः तादौचनितिकृत्यतावितिगतेःप्रकृतिस्वरत्वम् । सख्ये समानेख्यश्चोदात्तइतिइण् डित्वाट्टिलोपः तत्सान्नियोगेनयलोपः समानस्यच्छन्दसीत्यादिनासभावः उदात्तइत्युक्तत्वादुपपदस्योदात्तता । साधुः राधसाधसंसिद्धौ कृवापाजीत्यादिनाउण्प्रत्ययः प्रत्ययस्वरः । प्रतीचीः अञ्चुगतिपूजनयोः ऋत्विग्दधृगित्यादिनाक्विन् स्त्रियाम् उगितश्चेतिङीपिप्राप्ते पुनःधातोरुगितःप्रतिषेधइतिप्रतिषिद्धे अञ्चतेश्चोपसंख्यानमितिप्रतिप्रसवात्ङीप् तस्मिन् भसंज्ञायां अचइत्यकारलोपः चाविति दीर्घः । दहतात् दहभस्मीकरणे इत्यस्य लोण्मध्यमैकवचनेहेःतुह्योस्तातङाशिषीतितातङादेशः निघातः । अरातीः प्रतीचीः उभयत्रलिङ्गव्यत्ययः ॥ १ ॥

अथद्वितीया—

**तपो॒ष्व॑ग्ने॒अन्त॑राँ॒अ॒मित्रा॒न्तपा॒शंस॒मर॑रुषः॒पर॑स्य ।**
**तपो॑वसोचिकिता॒नो॒अ॒चित्ता॒न्वि॒ते॑तिष्ठन्ता॒म॒जरा॑अ॒या॒सः ॥ २॥**

तपो॒ इति॑ । सु । अ॒ग्ने॒ । अन्त॑रान् । अ॒मित्रा॑न् । तप॑ । शंस॑म् । अर॑रुषः । पर॑स्य । तपो॒ इति॑ । व॒सो॒ इति॑ । चि॒कि॒तानः॑ । अ॒चि॒त्तान् । वि । ते॒ । ति॒ष्ठ॒न्ता॒म् । अ॒जराः॑ । अ॒यासः॑ ॥ २ ॥

हेअग्ने अन्तरान्अभिभावुकानमित्रान्शत्रून्सुसुष्ठुयथाभवतितथातपोतपैवबाधस्व किञ्च अररुषः तुभ्यंहविरप्रयच्छतः अतएवपरस्यशत्रुभूतस्यस्वंशंसमभिलाषंतपक्षपय वसोसर्वस्यवासयितः हेअग्ने चिकितानः कर्माभिज्ञस्त्वम् अचितान्सत्कर्मण्यनासक्तमनस्कान्पुरुषान्तपो

सन्तप यस्मादेवंतस्मात्तेतवरश्मयःअजराःजराराहिताःप्रतिबन्धरहिता अतएवअयासःसर्वत्रग-मनस्वभावाःसन्तोवितिष्ठन्तां विशेषेणतिष्ठन्तु ॥ तपो तपउ गुणःउञमवलम्ब्यउञइतिप्रगृह्यसंज्ञा पादादित्वादनिघातः । तप तपसंतापेइत्यस्यलोटिरूपं द्व्यचोतस्तिङइतिसंहितायांदीर्घः । अर-रुषः रादानेइत्यस्यक्वसौवस्वेकाजितिप्राप्तस्येटःसम्प्रसारणंसम्प्रसारणाश्रयंचबलीयइति स-म्प्रसारणबलीयस्त्वान्निवृत्तिः वसोःसम्प्रसारणमितिसम्प्रसारणं समासेनञ्स्वरः । चिकितानः कितज्ञानेइत्यस्यछन्दसिलिट् तस्यलिटःकानज्वेतिकानजादेशः द्विर्वचनं कित्त्वाद्गुणाभावः चित्वादन्तोदात्तः । तिष्ठन्तां ष्ठागतिनिवृत्तौ विपूर्वात्तिष्ठतेःसमवप्रविभ्यःस्थइत्यात्मनेपदं निघातः । अयासः अयगतौ पचाद्यच् चित्स्वरः ॥ २ ॥

अथतृतीया—

**इ॒ध्मेना॑ग्नइ॒च्छमा॑नोघृ॒तेन॑जु॒होमि॑ह॒व्यंतर॑से॒बला॑य ।**
**याव॒दीशे॒ब्रह्म॑णा॒वन्द॑मानइ॒मांधियं॑शत॒सेया॑यदे॒वीम् ॥ ३ ॥**

इ॒ध्मेन॑ । अ॒ग्ने॒ । इ॒च्छमा॑नः । घृ॒तेन॑ । जु॒होमि॑ । ह॒व्यम् । तर॑से । बला॑य । याव॑त् । ईशे॑ । ब्रह्म॑णा । वन्द॑मानः । इ॒माम् । धिय॑म् । श॒त॒ऽसेया॑य । दे॒वीम् ॥ ३ ॥

हेअग्ने इच्छमानः धनंकामयमानोहंयजमानः इध्मेनसमिन्धनकारिसमित्समूहेनघृ-तेनआज्येनसहहव्यंहवनयोग्यंहविः पुरोडाशादिकंजुहोमि किमर्थंतरसेवेगायत्वसततगमनासि-द्ध्यर्थंबलायसामर्थ्यायपुरोडाशादिहविर्भारवहनसिद्ध्यर्थंत्वयिहविःप्रक्षिपामि किञ्च ब्रह्मणा स्तोत्रेणवन्दमानः त्वांस्तुवन्नहंयावदीशेयावद्वन्दनंवोढुंशक्नोमितावद्देहि त्वंचइमामस्माभिः क्रियमाणांधियंत्वद्विषयांस्तुतिंशतसेयायअपरिमितधनपर्यवसानायदेवींदीप्तामतिंप्रभूतांकुरु ॥ इध्मेन ञिइन्धीदीप्तौ इध्यतेनेनाग्निरितिइध्मःकाष्ठविशेषः इषियुधीन्धिदसिश्याधूसूभ्यो मगितिकरणेमक् कित्त्वादनुनासिकलोपः प्रत्ययस्वरः । इच्छमानः इषइच्छायां व्यत्ययेन शानच् इषुगमियमांछइतिछकारः । जुहोमि हुदानादनयोरित्यस्यलटिरूपं पादादित्वादनि-घातः । हव्यं हवमर्हतीतिछन्दसिचेतियप्रत्ययः भसंज्ञायांयस्येतिचेत्यलोपः प्रत्ययस्वरः । या-वत् यच्छब्दाद्यत्तदेतेभ्यःपरिमाणेवतुबितिवतुप् आसर्वनाम्नइत्याकारःआद्युदात्तः । ईशे ईश-ऐश्वर्येइत्यस्यलडुत्तमैकवचने इटः टेरेत्वम् अदादित्वाच्छपोलुक् । शतसेयाय षोन्तकर्मणि

आदेचउपदेशेऽइत्यात्वम् अचोयदितिभावेयत् ईद्यतीतीत्वम् आर्धधातुकलक्षणोगुणः कृदुत्तरपदप्रकृतिस्वरः ॥ ३ ॥

अथचतुर्थी–

उ॒च्छो॒चिषा॑सहसस्पुत्रस्तु॒तोबृ॒हद्वयः॑शशमा॒नेषु॑धेहि ।
रे॒वद॑ग्नेवि॒श्वामि॑त्रेषु॒शंयोर्म॑र्मृज्मातेत॒न्वं१॒॑भूरि॒कृत्वः॑ ॥ ४ ॥

उत । शो॒चिषा॑ । स॒ह॒सः॒ । पु॒त्र॒ । स्तु॒तः । बृ॒हत् । वयः॑ । श॒श॒मा॒नेषु॑ । धे॒हि॒ । रे॒वत् । अ॒ग्ने॒ । वि॒श्वामि॑त्रेषु । शम् । योः । म॒र्मृ॒ज्म । ते॒ । त॒न्व॑म् । भूरि॑ । कृत्वः॑ । ४ ।

सहसस्पुत्रहेअग्ने शोचिषास्वकीययादीप्त्याउत्उद्दीप्यस्व स्तुतः स्तोत्रशस्त्रसाधनभूतैर्मन्त्रैः स्तुतस्त्वं शशमानेषुशशमानःशंसमानइतियास्कः । त्वद्विषयकशंसनंकुर्वाणेषुविश्वामित्रेषुविश्वामित्रगोत्रोत्पन्नेषुविश्वंमित्रमस्येतिविश्वामित्रः एकस्मिन्बहुवचनंपूजार्थम् तथाविधेष्वस्मासुरेवद्धनयुक्तं बृहत्प्रभूतं वयः वयःशब्दोन्नवाची अर्कः वयः क्षद्मेत्यन्ननामसुपाठात् तादृशंप्रभूतमन्नंधेहि विधेहि किञ्च शं रोगाणांशमनमस्मासुविधेहि योः भयानांयावनममिश्रणंचविधेहि शमनंचरोगाणांयावनंचभयानामितियास्कः । कृत्वः अस्माभिःक्रियमाणस्यकर्मणः प्रयोजकत्वेनकर्तः हेअग्ने तेतवतन्वंतनुंभूरिबहुवारंमर्मृज्म पुनःपुनःसोमाज्यपयःप्रभृतिभिराहुतिभिर्वयंसिञ्चामः ॥ शशमानेषु शशप्लुतगतावित्ययंधातुरत्रस्तुत्यर्थः ताच्छील्यवयोवचनशक्तिष्वितिचानश् चितइत्यन्तोदात्तत्वम् । धेहि डुधाञ्धारणपोषणयोरित्यस्यलोटिरूपम् । रेवत् रयिरस्यास्तीति मतुप् ह्रस्वनुड्भ्यांमतुबितिमतुपउदात्तत्वं छन्दसीरइतिमस्यवत्वं रयेर्मतौबहुलंछन्दसीतिसम्प्रसारणंपरपूर्वत्वं गुणः । विश्वामित्रेषु मित्रेचर्षावितिपूर्वपदस्यदीर्घत्वं बहुव्रीहौविश्वंसंज्ञायामितिपूर्वपदान्तोदात्तत्वम् । मर्मृज्म मृजू(ष्)शुद्धावित्यस्यवर्तमानेलिटिउत्तमबहुवचनेमसोमादेशः अनित्यमागमानुशासनमितीडभावः रेफश्छान्दसः पादादित्वादनिघातः प्रत्ययस्वरः । भूरि भूसत्तायाम् अदिशदिभूशुभिभ्यःक्रिन्नितिक्रिन् किन्त्वाद्गुणाभावः नित्स्वरः । कृत्वः डुकृञ्करणे सम्पदादित्वाद्भावेक्विप् तदस्यास्तीतिमतुप् झयइतिमस्यवत्वम् तसौमत्वर्थेइतिभसंज्ञायांतकारस्यजश्त्वाभावः मतुवसोरुरितितकारस्यरुत्वम् ॥ ४ ॥

अथपञ्चमी—

कृधिरत्नंसुसनितर्धनानांसघेदग्नेभवसियत्समिद्धः ।
स्तोतुर्दुरोणेसुभगस्यरेवत्सृप्राकरस्नादधिषेवपूंषि ॥ ५ ॥ १८ ॥

कृधि । रत्नम् । सुऽसनितः । धनानाम् । सः । घ । इत् । अग्ने । भवसि । यत् । सम्ऽइद्धः । स्तोतुः । दुरोणे । सुऽभगस्य । रेवत् । सृप्रा । करस्ना । दधिषे । वपूंषि ॥ ५ ॥ १८ ॥

सुसनितः अभिलषित धनानांसुष्ठुदातः हेअग्ने धनानांकनकपश्वादीनांमध्येरत्नमुत्तमधनंकृधिविधेहि मह्यंदत्स्व यद्यदात्वंसमिद्धःसोमाज्यादिभिःसम्यगिद्धोदीप्तोवर्ततेसेतदासघइत्सताद्दशएवत्वंधनस्यदाताखलुभवसि किञ्च सुभगस्यत्वद्विषयस्तुत्याशोभनधनयुक्तस्यस्तोतुर्यजमानस्य दुरोणेगृहेसृप्रा प्रसर्पणशीलौकर्मकरणार्थंप्रसृतौकरस्नाकर्मणांप्रस्नातारौबाहू करस्नौबाहूकर्मणांप्रस्नातारावितियास्कः । वपूंषिरूपाणिवर्पः वपुरितिरूपनामसुपठितत्वात् तांदृशौबाहूभास्वराणिज्योतींषिच रेवत्धनयुक्तंयथाभवतितथादधिषेधारयासि ॥ सुसनितः षणुदानेइत्यस्यतृचिरूपम् आमन्त्रितनिघातः । सृप्रा सृलृगतौ अस्मात्स्फायितञ्चिवञ्चीत्यादिनारक् कित्त्वादगुणः प्रत्ययस्वरः । करस्ना करोतिफलमितिकरःकर्म पचाद्यजन्तः कर्मणिस्नाशोधनंययोस्तौ यद्वा कर्मणांशोधनंयाभ्यामितिबहुव्रीहौपूर्वपदस्वरः । दधिषे डुधाञ्धारणपोषणयोरित्यस्यलंटि छन्दस्युभयथेतिथासआर्धधातुकत्वादिट् आतोलोपः निघातः ॥ ५ ॥

॥ इतितृतीयस्यप्रथमेऽष्टादशोवर्गः ॥ १८ ॥

अग्निंहोतारमितिपञ्चर्चंसप्तमंसूक्तंत्रैष्टुभमाग्नेयंगाथिनआर्षम् तथाचानुक्रान्तम्—अग्निंहोतारंगाथीहेति । प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः ।

तस्मिन्सूक्तेप्रथमा—

अग्निंहोतारंप्रवृणेमियेधेगृत्संकविंविश्वविदममूरम् ।
सनोयक्षद्देवतातायजीयान्रायेवाजायवनतेमघानि ॥ १ ॥

---

१ नि० ४. १४. ।

अ॒ग्निम् । होता॑रम् । प्र । वृ॒णे॒ । मि॒येधे॑ । गृत्स॑म् । क॒विम् ।
वि॒श्व॒ऽविद॑म् । अमू॑रम् । सः । नः॒ । य॒क्ष॒त् । दे॒व॒ऽता॑ता ।
यजी॑यान् । रा॒ये । वाजा॑य । व॒न॒ते॒ । म॒घानि॑ ॥ १ ॥

गाथीस्तौति हेअग्ने गृत्संगृणन्तंदेवानांस्तुतिंकुर्वन्तंकविंमेधाविनंविश्वविदंसर्वविषयज्ञानोपेतममूरममूढमग्निमङ्गनादिगुणोपेतं [1]त्वांमियेधे अस्माभिःक्रियमाणेस्मिन्यज्ञेहोतारंहोमनिष्पादकंदेवानामाह्वातारंवाहंप्रवृणेप्रकर्षेणसंभजे सतथाविधोग्निःयजीयान्यष्टृतमःसन्नोस्माकंदेवतातायष्टव्यतयासंबन्धिनोदेवान्यक्षत्यजतु किञ्च सोग्निःरायेधनायवाजायान्नायचमघानिमंहनीयानिअस्माभिर्दीयमानानिहवींषिवनतेसंभजताम् ॥ वृणे वृङ्संभक्तौ निघातः । मियेधे मकारैकारयोर्मध्येइयागमश्छान्दसः । गृत्सं गृधुअभिकाङ्क्षायां गृधिपण्योर्दकौचेतिसप्रत्ययः अन्त्यस्यदकारः व्यत्ययेनाद्युदात्तत्वम् । अमूरं मुहवैचित्त्ये इत्यस्यनिष्ठायांरूपं रेफश्छान्दसः नञासमासेतस्यनञ्स्वरः । यक्षत् यजेर्लेटि सिब्बहुलंलेटीतिसिप् लेटोडाटावित्यडागमः इतश्चलोपइतीकारलोपः । देवताता देवशब्दात्स्वार्थेसर्वदेवात्तातिलितितातिल् सुपांसुलुगितिसुपोडादेशः लित्स्वरः । वनते वनषणसंभक्तावित्यस्यलटिव्यत्ययेनात्मनेपदंनिघातः ॥ १ ॥

अथद्वितीया—

**प्र ते॑ अग्ने ह॒विष्म॑तीमि॒यर्म्यच्छा॑ सुद्यु॒म्नां रा॒तिनीं॑ घृ॒ताची॑म् ।**
**प्र॒द॒क्षि॒णिद्दे॒वता॑तिमुरा॒णः सं रा॒तिभि॒र्वसु॑भिर्य॒ज्ञम॑श्रेत् ॥ २ ॥**

प्र । ते॒ । अ॒ग्ने॒ । ह॒विष्म॑तीम् । इ॒यर्मि॑ । अच्छ॑ । सु॒ऽद्यु॒म्नाम् ।
रा॒तिनी॑म् । घृ॒ताची॑म् । प्र॒ऽद॒क्षि॒णित् । दे॒वऽता॑तिम् । उ॒रा॒णः ।
सम् । रा॒तिऽभिः॑ । वसु॑ऽभिः । य॒ज्ञम् । अ॒श्रे॒त् ॥ २ ॥

हेअग्ने सुद्युम्नांसुतेजसंहविष्मतींपुरोडाशादिहविर्युक्तांरातिनीं हविर्दात्रीं घृताचीं घृताचितां जुहूमुपभृतंवा तेतवअच्छ त्वदाभिमुख्येन प्रेयर्मि प्रेरयामि । देवतातिम् देवान्उराणः उरुबहुकुर्वाणः उराणउरुकुर्वाणइतियास्कः [1] । तादृशोभवान्रातिभिर्वसुभिः अस्मभ्यंदेयतयाप्राप्तैर्धनैः सह

---

[1] नि० ६. १७.

प्रदक्षिणित् प्रादक्षिण्येनसमश्रेत् तमिमंयज्ञं सम्यक्सेवताम् ॥ हविष्मती हविरस्यास्तीतिमतुप् तसौमत्वर्थेइतिभसंज्ञायां सकारस्यरुर्नभवति उगितश्चेतिङीप् स्वरविधौव्यञ्जनमविद्यमानवदितिपरिभाषानाश्रयणान्मतुपउदात्तताभावः । इयर्मि ऋगतौ जुहोत्यादिः अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्त्वम् अभ्यासस्यासवर्णेइतीयङादेशः मिपःपित्वाद्गुणः निघातः । अच्छ निपातस्येतिसंहितायांदीर्घः । रातिनी रादानेइत्यस्य नपुंसकेभावेक्तः रातमस्यास्तीतिअतइनिठनावितीनिः प्रययस्वरः । घृताची घृतपूर्वादञ्चतेः ऋत्विग्दधृगित्यादिनाक्विन् अञ्चतेश्चोपसंख्यानमितिङीप् भसंज्ञायाम् अचइत्यकारलोपः चावितिदीर्घः उदात्तनिवृत्तिस्वरेणङीपउदात्तत्वेप्राते चावितिपूर्वपदान्तोदात्तत्वम् । प्रदक्षिणित् प्रदक्षिणंकरोतीतितत्करोतीतिणिजुत्पद्यमानोदक्षिणशब्दाद्भवतिसंग्रामयतेरेवसोपसर्गाण्णिजुत्पत्तिर्नान्यस्मादितितदन्तात्क्विप् ह्रस्वस्यपितीतितुक् णिचोलोपाभावश्छान्दसः णिच्स्वरः । देवतातिम् देवशब्दात्सर्वदेवात्तातिलितितातिल् लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् । उराणः उरुकरोतीति तत्करोतीतिणिच् तदन्ताच्छन्दसिलिट् मन्त्रत्वादाम्नभवति तस्यकानच् णेरनिटीतिणिलोपः वरादेशाभावश्छान्दसः चित्त्वादन्तोदात्तः । अश्रेत् श्रिञ्सेवायां इत्यस्यछान्दसेलङिबहुलंछन्दसीतिशपोलुक् निघातः ॥ २ ॥

अथतृतीया–

**सतेजीयसामनसात्वोतउतशिक्षस्वपत्यस्यशिक्षोः ।**
**अग्नेरायोनृतमस्यप्रभूतौभूयामतेसुष्टुतयश्चवस्वः ॥ ३ ॥**

सः । तेजीयसा । मनसा । त्वाऽऊतः । उत । शिक्ष । सुऽअपत्यस्य । शिक्षोः । अग्ने । रायः । नृऽतमस्य । प्रऽभूतौ । भूयाम । ते । सुऽस्तुतयः । च । वस्वः ॥ ३ ॥

हेअग्ने त्वोतः यस्त्वयारक्ष्यमाणः सतेजीयसाअतिशयेनतीक्ष्णेनसत्कर्मविषयतीक्ष्णबुद्धियुक्तेनमनसान्तःकरणेनयुक्तोभवति उतापिच तस्मैस्वपत्यंस्वपत्यस्यद्वितीयार्थेषष्ठी शोभनापत्योपेतंधनंशिक्षप्रयच्छ शिक्षतिर्दानकर्मा दात्यादिषुदानकर्मसुपठितत्वात् हेअग्ने शिक्षोः अभिमतफलप्रदानेशक्तिमिच्छोः रायोनृतमस्यधनस्य अतिशयेननेतुर्दातुस्तेतवप्रभूतौप्रभावेमहिम्निऐश्वर्येवयंस्याम किञ्च सुष्टुतयः त्वद्विषयशोभनस्तुतिमन्तोवयंवस्वः वसुनोभाजनंभूयाम भूयास्म तेजीयसा तेजितृशब्दादतिशायने ईयसुन् तुरिष्ठेमेयःस्वितितृचोलोपः नित्स्वरः । त्वोतः अवरक्षणे

दिषु निष्ठायां ज्वरत्वरस्रिव्यविमवामुपधायाइत्यूठ् अलोपःत्वयाऊतः तृतीयेतियोगविभागात् समासः टेर्लोपश्छान्दसः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरः शिक्ष शिक्षविद्योपादाने इत्ययमत्र दानार्थः अस्माल्लोटिव्यत्ययेन परस्मैपदम् । शिक्षोः शकॢशक्तावित्यस्य सनिएकाचउपदेशेइतीट्प्रतिषेधः सनिमीमाघुरभलभशकपतपदामचइसीतिधातोरचइसादेशः अत्रलोपोभ्यासस्येत्यभ्यासलोपः सनाशंसभिक्षउगितिउप्रत्ययः प्रत्ययस्वरः । प्रभूतौ भूसत्तायामित्यस्य भावेक्तिन् तादौचनितिकृत्यतावितिगतेःप्रकृतिस्वरत्वम् । भूयाम भूसत्तायामित्यस्याशीर्लिङि किदाशिषीतियासुट् छन्दस्युभयथेति तस्यसार्वधातुकत्वात्सलोपः आगमस्वरः यद्वा तस्मात्प्रार्थनायांलिङि यासुट् बहुलंछन्दसीतिशपोलुक् अनदन्तत्वादियादेशोनभवति । सुष्टुतयः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । वस्वः आगमानुशासनस्यानित्यत्वान्नुमभावः संज्ञापूर्वकस्यविधेरनित्यत्वाद्गुणाभावः यणादेशः ॥ ३ ॥

अथचतुर्थी—

**भूरी॑णि॒हि त्वे द॑धि॒रे अनी॒काग्ने॑ दे॒वस्य॒ यज्य॑वो॒ जना॑सः ।**
**स आ व॑ह दे॒वता॑तिं यविष्ठ॒ शर्धो॒ यद॒द्य दि॒व्यं यजा॑सि ॥ ४ ॥**

भूरी॑णि । हि । त्वे इति॑ । द॒धि॒रे । अनी॑का । अग्ने॑ । दे॒वस्य॑ ।
यज्य॑वः । जना॑सः । सः । आ । व॒ह॒ । दे॒वऽता॑तिम् । य॒वि॒ष्ठ॒ ।
शर्धः॑ । यत् । अ॒द्य । दि॒व्यम् । यजा॑सि ॥ ४ ॥

हेअग्ने देवस्यद्योतमानस्य तवसंबन्धिनः यज्यवोयष्टारोध्वर्युप्रभृतयः जनासोजनाः भूरीणिबहूनि अनीकाअनीकानिसेनारूपतयासर्वत्रप्रसृतानिज्वालारूपाणितेजांसि आहुतिप्रक्षेपेणत्वेत्वयिदधिरेहि विदधिरेखलु चक्रुरितियावत् सताहृशस्त्वंदेवतातिंयष्टव्यदेवानिहकर्मण्यावहआह्वय हेयविष्ठ युवतम यद्यस्मात्कारणात् अद्यास्मिन्कर्मणिदिव्यंदिविभवंदेवसम्बन्धिशर्धस्तेजस्त्वंयजासियजसि तस्माद्देवानाह्वयेतिशेषः ॥ दधिरे दधातेर्लिटिरूपम् हियोगादनिघातः चित्त्वादन्तोदात्तः । यज्यवः यजदेवपूजादिषु यजिमनिशुन्धिदसिजनिभ्योयुजितियुच् व्यत्ययेनाद्युदात्तत्वम् । देवतातिं देवशब्दात्स्वार्थेसर्वदेवात्तातिलितितातिल् लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् । यजासि यजेर्लेट्याडागमः यद्योगादनिघातः ॥ ४ ॥

अथपञ्चमी—

यत्त्वाहोतारमनजन्मियेधेनिषादयन्तोयजथायदेवाः ।
सत्वंनोअग्नेवितेहबोध्यधिश्रवांसिधेहिनस्तनूषु ॥ ५ ॥ १९ ॥

यत् । त्वा । होतारम् । अनजन् । मियेधे । निऽसादयन्तः ।
यजथाय । देवाः । सः । त्वम् । नः । अग्ने । अविता । इह ।
बोधि । अधि । श्रवांसि । धेहि । नः । तनूषु ॥ ५ ॥ १९ ॥

हेअग्ने यजथाययजनार्थंनिषादयन्तः निवसन्तः देवादीप्यमानाऋत्विजोमियेधे मेधे यज्ञेहोतारंदेवानामाह्वातारं त्वा त्वांयद्यस्मादनजनघृताहुतिभिरौक्षन् यद्वा निषादयन्तः होतारं होमनिष्पादकंत्वांबर्हिषिउपवेशयन्तः ऋत्विजः घृतैरसिञ्चन् तस्मात्सतथाविधस्त्वमिहास्मिन्कर्मणि नोस्माकमवितापालयिताभवामीतिबोधिबुध्यस्व किञ्च नस्तनूषुअस्माकंतनूजेष्वपत्येषुश्रवांस्यन्नानिअधिधेहिअधिकंनिधेहि ॥ अनजन् अञ्जूव्यक्तिम्रक्षणेषुअस्माल्लङि रुधादित्वात् श्नम् छान्दसत्वादल्लोपाभावः अनिदितामित्युपधालोपः । निषादयन्तः षद्लृविशरणगत्यवसादनेषु चुरादिः सदिरप्रतेरितिषत्वम् यद्वा हेतुमण्णिच्शतुर्लसार्वधातुकस्वरेणानुदात्तत्वेकृते णिच्स्वरः । बोधि बुधअवगमने लोटि बहुलंछन्दसीतिशपोलुक् सेर्ह्यपिच्चेतिसिपोहिरादेशः वाछन्दसीति विकल्पेनापित्त्वाद्गुणः हुझल्भ्योहेर्धिरितिहेर्धिरादेशः धकारलोपश्छान्दसः निघातः । धेहि दधातेर्लोटिरूपम् ॥ ५ ॥

॥ इतितृतीयस्यप्रथमेएकोनविंशोवर्गः ॥ १९ ॥

अग्निमुषसमितिपञ्चर्चमष्टमंसूक्तंत्रैष्टुभम् अत्रेयमनुक्रमणिका—अग्निमुषसमाद्यान्त्वैश्वदेव्याविति गाथीहेतिहशब्दप्रयोगादस्यापिसूक्तस्यगाथीऋषिः प्रथमापञ्चम्यौवैश्वदेवदेवताके शिष्टास्तिस्रआग्नेय्यः अस्यसूक्तस्योक्तोविनियोगः मरुत्वतीयशस्त्रेअग्निर्नेतेत्येषाधाय्या सूत्रितञ्च—अग्निर्नेतात्वंसोमक्रतुभिःपिन्वन्त्यपइतिधाय्याइति ।

तस्मिन्सूक्तेप्रथमा—

अग्निमुषसमश्विनादधिक्रांव्युष्टिषुहवतेवह्निरुक्थैः ।
सुज्योतिषोनःशृण्वन्तुदेवाःसजोषसोअध्वरंवावशानाः ॥ १ ॥

अग्निम् । उषसम् । अश्विना । दधिऽक्राम् । विऽउष्टिषु । हवते । वह्निः । उक्थैः । सुऽज्योतिषः । नः । शृण्वन्तु । देवाः । सऽजोषसः । अध्वरम् । वावशानाः ॥ १ ॥

गाथीब्रूते वह्निः हविषांप्रापयिताग्निः व्युष्टिषुउषसांव्युच्छनेषुअग्निंयजनीयंदेवमुषसमुषोभिमानिनींदेवतामाश्विनाअश्विनौदेवौदाधिक्रौंदधिक्रावानामकश्चिद्देवः तंदधिक्रावाणमेतान्देवानुक्थैःशस्त्रैः शंसनसाधनैरप्रगीतमन्त्रात्मकैः सूक्तैर्हवतेआह्वयति सुज्योतिषः सुष्ठुद्योतमानानः अध्वरमस्मत्संबन्धिनमिमंयज्ञंवावशानाः कामयमानाः सजोषसः परस्परंसङ्गताभूत्वासर्वेदेवाः तदाह्वानंशृण्वन्तु ॥ दधिक्रां क्रमुपादविक्षेपे दधीत्युपपदेजनसनखनक्रमइतिविट् विड्वनोरनुनासिकस्यादित्याकारः कृदुत्तरपदप्रकृतिस्वरः । व्युष्टिषु उच्छीविवासे भावेक्तिन् व्रश्चादिनाषत्वं तादौचनितिकृत्यतावितिगतेःप्रकृतिस्वरत्वम् । हवते ह्वयतेर्बहुलंछन्दसीतिसम्प्रसारणम् । सुज्योतिषः सुष्ठुद्योतमानाइतिविग्रहे द्युतदीप्तावित्यस्यद्युतेरिसिन्नादेश्चजइतिइसिन्प्रत्ययः दकारस्यजकारः कृदुत्तरपदप्रकृतिस्वरः बहुव्रीहिपक्षेतु नञ्सुभ्यामित्युत्तरपदान्तोदात्ततास्यात् यथा सुज्योतिषोअक्तवस्तामभिष्युरित्यत्रान्तोदात्तता तस्मादत्रनायंसमासः किंतु तत्पुरुषएव । शृण्वन्तु श्रुश्रवणेइत्यस्माच्छ्रुवःशृचेतिश्नुः तत्सन्नियोगेनधातोः शृइत्यादेशः निघातः । वावशानाः वशकान्तावित्यस्ययङ्लुकिरूपम् अभ्यासस्यदीर्घोकितइतिदीर्घः व्यत्ययेनशानच् चित्स्वरः ॥ १ ॥

अथद्वितीया–

**अग्नेत्रीतेवाजिनात्रीषधस्थातिस्रस्तेजिह्वाऋतजातपूर्वीः । तिस्रउतेतन्वोदेववातास्ताभिर्नःपाहिगिरोअप्रयुच्छन् ॥ २ ॥**

अग्ने । त्री । ते । वाजिना । त्री । सधऽस्था । तिस्रः । ते । जिह्वाः । ऋतऽजात । पूर्वीः । तिस्रः । ऊँ इति । ते । तन्वः । देवऽवाताः । ताभिः । नः । पाहि । गिरः । अप्रऽयुच्छन् ॥ २ ॥

---

१ ऋ० सं० ८. ४. १६. ।

हे ... ... त्रीवाग्निना आज्यौषधिसोमात्मकानित्रीण्यन्नानि त्रीषधस्थात्रीणिआग्नीध्रीयादीनि धिष्ण्यानिस्थानानि यद्वा एकाहाहीनसत्राख्यानित्रीणिस्थानानि यद्वा त्रयोलोकाः ऋतजात ऋतेषुसत्यभूतेषुयज्ञेषुसमुत्पन्न हेअग्ने तेतवपूर्वीःदेवानांजिह्वाःसात्त्विकादिभेदेनत्रिप्रकाराः यद्वा त्रयोवाग्नयोहव्यवाहनो देवानांकव्यवाहनः पितॄणांसहरक्षाअसुराणामितिश्रुतेरग्नित्रैविध्यात् जिह्वात्रैविध्यम् यद्वा देवानामुदरपूरयित्र्यस्तिस्रोसुरापित्र्यगार्हपत्याद्याजिह्वाः हेअग्ने तेतवदेववाताः देवैरभिलषितास्तिस्रस्तन्वः पवमानपावकशुच्यात्मकानित्रीणिशरीराणि एवंभूतस्त्वमप्रयुच्छन्अप्रमाद्यन् सावधानोभूत्वाताभिस्तनूभिर्नोस्माकंस्तोतॄणांगिरः स्तोत्रशस्त्रादीनिवाक्यानिपाहिपालय ॥ तिस्रः तिसृभ्योजसइतिजसउदात्तत्वम् । जिह्वाःलिहन्त्याभीरसानितिशेक्यद्वजिह्वाग्रीवाप्वामीवाइतिनिपातनाद्वन् लकारस्यजकारः गुणाभावः व्यत्ययेनान्तोदात्तत्वम् । देववाताः वागतिगन्धनयोः अस्मात्कर्मणिक्तः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरः । पाहि पारक्षणेइत्यस्यलोटिरूपं निघातः । अप्रयुच्छन् युच्छप्रमादे नञ्स्वरः ॥ २ ॥

अथतृतीया–

अग्ने॒भूरी॑णि॒तव॑जातवेदो॒देव॑स्वधावो॒मृत॑स्य॒नाम॑ ।
याश्च॑मा॒याम॒यिनां॑वि॒श्वमि॒न्व॒त्वेपू॒र्वीःसं॒द॒धुःपृ॑ष्टबन्धो ॥ ३ ॥

अग्ने॑ । भूरी॑णि । तव॑ । जात॒ऽवे॒दः । देव॑ । स्व॒धा॒ऽवः॒ । अ॒मृत॑स्य । नाम॑ । याः । च॒ । मा॒याः । मा॒यिना॑म् । वि॒श्व॒म्ऽइ॒न्व॒ । त्वे इति॑ । पू॒र्वीः । स॒म्ऽद॒धुः । पृ॒ष्ट॒ब॒न्धो॒ इति॑ पृष्टऽबन्धो ॥ ३ ॥

हेदेव द्योतमान जातवेदः जातप्रज्ञ स्वधावःअन्नवन् हेअग्ने अमृतस्य मरणधर्मरहितस्य तवसंबन्धिनोदेवाः भूरीणिबहूनि नाम नामानितेजांसित्वेत्वयि संदधुःसंदधिरे किञ्च विश्वमिन्वविश्वस्य संतर्पक पृष्टबन्धो अपेक्षितफलप्रश्नविषयाणांस्तोतॄणांबन्धो हेअग्ने मायिनामसुराणांपूर्वीः भूयसीःयाःमायाःदेवाः त्वेत्वयिसंदधुर्युजिरे तास्त्वयिसन्तितस्माद्यज्ञविघ्नकारिणांमायिनांमायाः परिहृत्यास्मदीयंयज्ञंपालयेतिभावः ॥ स्वधावः स्वधास्यास्तीतिमतुप् मतुवसोरुरितितकारस्यरुः । अमृतस्य नञोजरमरमित्रमृताइत्युत्तरपदाद्युदात्तत्वम् । नाम णमप्रह्वत्वे नामन्सीमन्नित्यादिनामन्निन्प्रत्ययान्तत्वेननिपातनान्मकारलोपः दीर्घश्च नमयन्तिसर्वानपित्वाश्रयभूताःपुरुषानितिनामा-

नितेजांसि सुपांसुलुगितिसुपोलुक् नित्त्वादाद्युदात्तः । मायिनां मायाएषांसन्तीतिव्रीह्यादित्वादिनिः यस्येतिलोपः प्रत्ययस्वरः । विश्वमिन्व इविन्व्याप्तिप्रीणनयोरित्यस्माद्विश्वशब्देउपपदेकर्मण्यणिति अणप्रत्ययः धातूपदेशावस्थायामिदितोनुमितिनुमिप्रासेलघूपधगुणोनभवतिविश्वंमिन्वतिप्रीणयतीतिविश्वमिन्वः तत्पुरुषेकृतिबहुलमितिद्वितीयायाअलुक् आमन्त्रितत्वान्निघातः । संदधुः डुधाञ्धारणपोषणयोरित्यस्यलिट्युसिरूपं यद्वृत्तयोगादनिघातः प्रत्ययस्वरः । पृष्टबन्धो प्रच्छज्ञीप्सायामित्यस्यकर्मणि निष्ठायां ग्रहिज्यावयीत्यादिनासंप्रसारणं व्रश्चादिनाषत्वम् बन्धबन्धनेइत्यस्मात् शृस्वृस्निहीत्यादिनाउप्रत्ययः षष्ठीसमासः आमन्त्रितत्वान्निघातः ॥ ३ ॥

अथचतुर्थी—

अग्निर्नेताभगइवक्षितीनांदैवीनांदेवऋतुपाऋतावा ।
सवृत्रहासनयोविश्ववेदाःपर्षद्विश्वातिदुरितागृणन्तम् ॥ ४ ॥

अग्निः । नेता । भगःऽइव । क्षितीनाम् । दैवीनाम् । देवः । ऋतुऽपाः ।
ऋतऽवा । सः । वृत्रऽहा । सनयः । विश्वऽवेदाः । पर्षत् ।
विश्वा । अति । दुःऽइता । गृणन्तम् ॥ ४ ॥

योयमग्निः क्षितीनांमनुष्याणांदैवीनांदेवसबन्धिनीनांविशांनेता अन्तर्यामितयानियामकः तत्रदृष्टान्तः—ऋतुपाः भगइव यथावसन्ताद्यृतूनांपालकःसूर्यः सर्वस्यप्रकाशप्रदानेनप्रवर्तकस्तद्वत् यश्चाग्निः ऋतावा सत्यकर्मा वृत्रहावृत्रस्यपापस्यहन्ता सनयः सनातनः पुराणः विश्ववेदाः सर्वविषयज्ञानवान्सर्वज्ञः देवोद्योतमानः सतथाविधोग्निःगृणन्तंत्वद्विषयांस्तुतिंकुर्वन्तंतस्तोतारंविश्वादुरितासर्वाणि दुरितान्यतिअतिक्रम्यपर्षत् पारंनयतु ॥ नेता णीञ्प्रापणे इत्यस्यतृचिरूपं चित्स्वरः । क्षितीनां क्षिनिवासगत्योः क्तिच्क्तौचसंज्ञायामितिक्तिच् नामन्यतरस्यामित्यन्तोदात्तत्वम् । दैवीनां देवशब्दात्संबन्धार्थेदेवाद्यञञावित्यञ् अञि टिड्ढाणञितिङीप् ञित्त्वादाद्युदात्तः । ऋतुपाः पारक्षणे इत्यस्मादन्येभ्योपिदृश्यन्तइतिविच् ऋतून्पातीत्युपपदमतिङितिसमासः कृदुत्तरपदप्रकृतिस्वरः । वृत्रहा हनहिंसागत्योः ब्रह्मभ्रूणवृत्रेषुक्विबितिक्विप् । विश्ववेदाः बहुव्रीहौविश्वंसंज्ञायामितिपूर्वपदान्तोदात्तत्वम् । पर्षत् पृपालनपूरणयोरित्यस्यलेटिसिब्बहुलमितिसिप् अडागमः इतश्चलोपइतीकारलोपः पादादित्वादनिघातः । गृणन्तं गृशब्दे लटः शतृ क्र्यादित्वात्श्ना प्वादित्वाद्ध्रस्वः नुमिश्नाभ्यस्तयोरातइत्याकारलोपः शतृप्रत्ययस्वरः ॥ ४ ॥

अथपञ्चमी—

दधिक्रामग्निमुषसंचदेवींबृहस्पतिंसवितारंचदेवम् ।
अश्विनामित्रावरुणाभगंचवसूनुद्राँआदित्याँइहहुवे ॥५॥२०॥

दधिऽक्राम् । अग्निम् । उषसम् । च । देवीम् । बृहस्पतिम् ।
सवितारम् । च । देवम् । अश्विना । मित्रावरुणा । भगम् ।
च । वसून् । रुद्रान् । आदित्यान् । इह । हुवे ॥ ५ ॥ २० ॥

हेदधिक्रावादयःसर्वेदेवाः होताहं दधिक्रांदधिक्रावाणम् अग्निमुषसं देवीमुषोभिमानिनींदेवतांचबृहस्पतिंदेवं द्योतमानं सवितारं सर्वस्यजगतःप्रेरकंदेवंच अश्विनाअश्विनौ देवौ मित्रावरुणौ भगंसूर्यंच वसून् अष्टौवसून् रुद्रानेकादशरुद्रान् आदित्यान् द्वादशादित्यान् एतान्सर्वान्हविर्भुजोयुष्मानिहास्मदीयेकर्मणिहुवेहविःस्वीकरणार्थमाह्वयामि ॥ दधिक्रां दधातीतिदधिः आदृगमहनेत्यादिनाकिप्रत्ययः दधीत्युपपदेक्रमेर्जनसनेत्यादिनाविट् विड्वनोरित्यात्वम् । देवीं देवस्य पत्नीदेवी पुंयोगादाख्यायामितिङीष् यस्येतिलोपः प्रत्ययस्वरेणान्तोदात्तः । बृहस्पतिं तद्बृहतोःकरपत्योरितिसुट्तलोपश्चेति पतिशब्देपरतोबृहच्छब्दतकारलोपः सुडागमश्च उभेवनस्पत्यादिषुयुगपदिति उभयपदाद्युदात्तत्वम् । सवितारम् षूप्रेरणेइत्यस्यतृचि आर्धधातुकस्येड्वलादेरितीडागमः चित्त्वादन्तोदात्तत्वम् । रुद्राँआदित्याँइत्यत्रसंहितायां शसोनकारस्य दीर्घादटिसमानपादे इतिरुत्वम् ततःपूर्वस्यावर्णस्यआतोटिनित्यमित्यनुनासिकत्वम् भोभगोअघोअपूर्वस्य योशीतिरोर्यकारादेशः लोपःशाकल्यस्येतितस्यलोपः यलोपस्यासिद्धत्वात्स्वरसन्धिर्नभवति अतः रुद्राँ आदित्याँ इतिभवति । एवमेकस्मिन्पादे आकारादटिपरतः नकारस्य रुत्वयत्वपूर्वसवर्णानुनासिकादेशाउन्नेयाः । हुवे ह्वयतेर्लटि बहुलंछन्दसीतिसंप्रसारणम् इटः टितआत्मनेपदानामित्येत्वम् उवङादेशः निघातः ॥ ५ ॥

॥ इतितृतीयस्यप्रथमेविंशोवर्गः ॥ २० ॥

इमंनइतिपञ्चर्चंनवमंसूक्तम् अत्रेयमनुक्रमणिका—इमंनउपाद्येअनुष्टुभौ विराड्रूपासतोबृहतीचान्त्येति । द्वितीयातृतीयेअनुष्टुभौ पञ्चमीविराड्रूपासतोबृहतीच अनुक्तत्वात्प्रथमाचतु-

ष्टयौत्रिष्टुभौ . अस्यापिगाथीऋषिः पशौस्तोकानुवचनमिदंसूक्तं सूत्रितंच— जुषस्वसप्रथस्त-मामिमंनोयज्ञमिति ।

तस्मिन्सूक्तेप्रथमा—

इमंनोयज्ञममृतेषुधेहीमाहव्याजातवेदोजुषस्व ।
स्तोकानामग्नेमेदसोघृतस्यहोतःप्राशानप्रथमोनिषद्य ॥ १ ॥

इमम् । नः । यज्ञम् । अमृतेषु । धेहि । इमा । हव्या । जातऽवेदाः । जुषस्व । स्तोकानाम् । अग्ने । मेदसः । घृतस्य । होतरिति । प्र । अशान । प्रथमः । निऽसद्य ॥ १ ॥

गाथीप्रार्थयते—हेजातवेदः जातप्रज्ञाग्ने नोस्माकं संबन्धिनमिमंयज्ञं पशुयागम् अमृतेषुमरणधर्मरहितेषु यष्टव्यदेवेषु धेहि तदधीनतया समर्पय त्वंचइमा इमानिअस्माभिर्दीयमानानिहव्याहव्यानिहवींषि जुषस्व सेवस्व किञ्च होतः देवानामाह्वातः अग्निर्वैदेवानांहोतेत्याम्नानात् तादृश हेअग्ने निषद्यवेद्यामुपविश्य प्रथमः सर्वेषामृत्विजामादिमःसन् मेदसो वपाख्यस्यहविषः घृतस्याज्यस्यचस्तोकानां द्वितीयार्थेषष्ठी मेदोघृतयोर्येस्तोकाबिंदवो विद्यन्तेतान्प्रकर्षेण अशान भक्षय पिबेत्यर्थः ॥ धेहि दधातेर्लोटिरूपम् । जुषस्व जुषीप्रीतिसेवनयोरित्यस्य लोट्यात्मनेपदिनोरूपम् । अशान अशभोजनइत्यस्य लोटिहलः श्नःशानज्झावितिशानजादेशः पश्चात् अतोहेरितिहेर्लुक् निघातः । प्रथम प्रथप्रख्याने प्रथन्तेस्माद्द्वितीयादयइतिप्रथेरमजित्यमच् चित्त्वादन्तोदात्तः । निषद्य षद्लृविशरणगत्यवसादनेष्वित्यस्यल्यपिरूपम् सदिरप्रतेरितिषत्वम् लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् ॥ १ ॥

अथद्वितीया—

घृतवन्तःपावकतेस्तोकाश्चोतन्तिमेदसः ।
स्वधर्मन्देववीतयेश्रेष्ठंनोधेहिवार्यम् ॥ २ ॥

---

१ ऐ० ब्रा० २-१२. ।

घृतऽवन्तः । पावक । ते । स्तोकाः । श्चोतन्ति । मेदसः ।
स्वऽधर्मन् । देवऽवीतये । श्रेष्ठम् । नः । धेहि । वार्यम् ॥ २ ॥

पावक पापशोधक हेअग्ने स्वधर्मन् स्वायत्तधर्मकेसाङ्गेस्मिन्यज्ञे यद्वा स्वधर्मन्निितिसम्बोधनं स्वयमेवधारक तेतवभक्षणार्थंदेववीतयेयजनीयदेवानांभक्षणार्थंचघृतवन्तः घृतोपेताः मेदसोमेदोरूपस्य हविषः स्तोकाबिन्दवः श्चोतन्तिक्षरन्ति अथवा देववीतयेदेवस्यतववीतयेइतियोजनीयम् तस्मात्वार्यंवरणीयंसंभजनीयंश्रेष्ठमुत्तमंधनंनोस्मभ्यं धेहि प्रयच्छ ॥ श्चोतन्ति श्चुतिरक्षरणेइत्यस्यलटिरूपम् । स्वधर्मन् स्वेस्वीयाअङ्गभूताधर्मा (णो) यस्येतिबहुव्रीहौपूर्वपदप्रकृतिस्वरः सुपांसुलुगितिसप्तम्यालुक् । देववीतये देवानांवीतिः प्रीतिर्यस्यांभक्षणक्रियायां सा देववीतिः बहुव्रीहौपूर्वपदप्रकृतिस्वरः । श्रेष्ठं प्रशस्यशब्दादतिशायनेइष्ठन् प्रशस्यस्यश्रइतिश्रादेशः गुणः एकादेशस्वरः । धेहि दधातेर्लोट् । वार्यं वृङ्संभक्तौ ऋहलोर्ण्यदितिण्यत् ईडवन्देत्यादिनाद्युदात्तत्वम् एतिस्तुशास्त्वित्यादिनाक्यप् वृणोतेरेव नवृङः । २ ॥

अथतृतीया—

तुभ्यंस्तोकाघृतश्चुतोग्नेविप्रायसन्त्य ।
ऋषिःश्रेष्ठःसमिध्यसेयज्ञस्यप्राविताभव ॥ ३ ॥

तुभ्यम् । स्तोकाः । घृतऽश्चुतः । अग्ने । विप्राय । सन्त्य ।
ऋषिः । श्रेष्ठः । सम् । इध्यसे । यज्ञस्य । प्रऽअविता । भव ॥ ३ ॥

सन्त्य यष्टृभिःसंभजनीय यद्वा यष्टृभ्यःफलप्रद हेअग्ने विप्रायमेधाविनेतुभ्यं त्वदर्थंघृतश्चुतः घृतक्षरणयुक्ताः स्तोकाःसन्ति ऋषिः अतीन्द्रियार्थदर्शी अतएवश्रेष्ठः सर्वातिशायीत्वं समिध्यसेघृतयुक्तमेदोबिन्दुभिः सम्यक्प्रज्वाल्यसे सत्वंयज्ञस्य अस्माभिःक्रियमाणस्यपशुयागस्यप्राविताप्रकर्षेणपालकोभव ॥ तुभ्यंयुष्मच्छब्दस्यङयि तुभ्यमह्यौङयीतितुभ्यादेशः ङेप्रथमयोरमितिङेरमादेशः ङयिचेत्याद्युदात्तत्वम् । सन्त्य षणसंभक्तौ षणुदानेवा क्तिच्क्तौचसंज्ञायामितिक्तिच् नक्तिचिदीर्घश्चेतिदीर्घनलोपाभावः सन्तौभवः भवेछन्दसीतितत्रसाधुरितिवायत्प्रत्ययः यस्येतिलोपः आमन्त्रितत्वान्निघातः । इध्यसे ञिइन्धीदीप्तौ कर्मणियक् कित्वादनुनासिकलोपः निघातः । प्राविता अवरक्षणादिषु तृचिरूपं समासस्वरः । भव निघातः ॥ ३ ॥

अथचतुर्थी–

तुभ्यंश्चोतन्त्यध्रिगोशचीवःस्तोकासोअग्नेमेदसोघृतस्य ।
कविशस्तोबृहताभानुनागाहव्याजुषस्वमेधिर ॥ ४ ॥

तुभ्यम् । श्चोतन्ति । अध्रिगो इत्यध्रिऽगो । शचीऽवः । स्तोकासः ।
अग्ने । मेदसः । घृतस्य । कविऽशस्तः । बृहता । भानुना ।
आ + अगाः । हव्या । जुषस्व । मेधिर ॥ ४ ॥

अध्रिगो अधृतगमन सततगमनस्वभाव अतएवशचीवः शक्तिमन् हेअग्ने तुभ्यंत्वदर्थंमेदसोमेदोरूपस्यहविषः घृतस्यचस्तोकासोबिन्दवश्चोतन्तिस्रवन्ति तस्मात्कविशस्तःकविभिः कर्माभिज्ञैर्होत्रादिभिः स्तुतस्त्वंबृहताप्रभूतेनभानुनातेजसासहितःसन् आगाः अस्मदीयंपशुयागमभ्यागच्छ आगत्यच मेधिर प्रज्ञावन्नग्ने हव्याअस्माभिर्दीयमानानिवपादीनिहवींषिजुषस्व सेवस्व ॥ अध्रिगो गमनंगौरितिगम्लृसृप्लृगतौइत्यस्यभावे गमेर्डोरितिडोः अधृतागौर्येनेत्यत्र गोस्त्रियोरुपसर्जनस्येतिगोशब्दस्यह्रस्वत्वं धृतशब्दस्यपृषोदरादित्वादध्रिभावः संबोधने संबुद्धौचेतिगुणः अपादादित्वान्निघातः । शचीवः मतुपोमतुवसोरुरितिरुत्वम् । कविशस्तः शंसुस्तुतावित्यस्यनिष्ठायामनुनासिकलोपः यस्यविभाषेतीट्प्रतिषेधः थाथघञ्क्ताजबित्रकाणामित्यन्तोदात्तत्वम् । भानुना भादीप्तौ दाभाभ्यांनुरितिकर्तरिनुः प्रत्ययस्वरः अगाः इणगतावित्यस्य छान्दसेलुङिइणोगेतिगादेशः गातिस्थेतिसिचोलोपः निघातः । मेधिर मेधारथाभ्यामिरन्निरचौ वक्तव्याविताीरन् आमन्त्रितत्वान्निघातः ॥ ४ ॥

अथपञ्चमी–

ओजिष्ठंतेमध्यतोमेदउद्भृतंप्रतेवयंददामहे ।
श्चोतन्तितेवसोस्तोकाअधित्वचिप्रतितान्देवशोविहि ॥५॥२१॥

ओजिष्ठम् । ते । मध्यतः । मेदः । उत्ऽभृतम् । प्र । ते । वयम् ।
ददामहे । श्चोतन्ति । ते । वसो इति । स्तोकाः । अधि । त्वचि ।
प्रति । तान् । देवऽशः । विहि ॥ ५ ॥ २१ ॥

हेअग्ने ओजिष्ठमतिशयेनसारयुक्तंमेदःवपाख्यंहविः मध्यतः पशोर्मध्यमागात् तेत्वदर्थमुद्धृतम् उद्धृतम् अध्वर्य्वादयोवयम् अस्मिन्पशौ तेतुभ्यंप्रददामहे उद्धृतंतद्वपाख्यंहविः प्रयच्छामः वसो सर्वस्यजगतोवासयितः हेअग्ने त्वच्यधि वपायामुपरियेस्तोकाः घृतमिश्राबिंदवस्ते त्वदर्थंश्चोतन्तिस्रवन्ति यद्वा तेतवत्वच्याधि ज्वालाख्यशरीरस्योपरिश्चोतन्ति तानस्तोकानंदेवरः देवेषुप्रतिविहि प्रत्येकंविभजस्व ॥ मध्यतः मध्यशब्दात्पञ्चम्यास्तसिरितितसिः प्रत्ययस्वरः । उद्धृतम् हृञ्हरणे कर्मणिक्तः हृग्रहोर्भश्छन्दसीतिहकारस्यभकारः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । ददामहे दददानेइत्यस्यलटि ङित्वादात्मनेपदम् अतोदीर्घोयञीतिदीर्घः निघातः । श्चोतन्ति श्चुतिरक्षरणे पादादित्वादनिघातः अन्तेर्लसार्वधातुकस्वरेणानुदात्तत्वेकृते धातुस्वरः । त्वचि तनुविस्तारे तनोतेरनश्चवइतिकर्तरिकर्मणिवाचिक् अकारनकारयोर्वकारादेशः तनोति तायते वा त्वक् सावेकाचइतिविभक्तेरुदात्तत्वम् । विहि वीकान्तिगत्यादिष्वित्यस्यलोटिअदादित्वाच्छपोलुक् ह्रस्वश्छान्दसः निघातः ॥ ५ ॥

॥ इतितृतीयस्यप्रथमेएकविंशोवर्गः ॥ २१ ॥

अयंसइतिपञ्चर्चंदशमंसूक्तम् अत्रेयमनुक्रमणिका—अयंसउपान्त्यानुष्टुप्पुरीष्येभ्योग्निभ्यइति ऋषिःकौशिकोगाथी पुरीष्यासइत्यस्याः पञ्चचितिरूपाअग्नयोदेवताः शिष्टाः केवलाग्नेय्यः चतुर्थीअनुष्टुप् , शिष्टास्त्रिष्टुभः प्रातरनुवाकाश्विनशस्त्रयोरुक्तःसूक्तविनियोगः अग्निचयने इष्टकाप्रणयनेपुरीष्यासइत्येषाअनुवचनीया प्रेषितःपुरीष्यचितयेन्वाहेत्युपक्रम्य पुरीष्यासोअग्नयइतित्रिरुपांशुसप्रणवमितिसूत्रितम् ।

तस्मिन्सूक्तेप्रथमा—

**अ॒यंसो अ॒ग्निर्यस्मि॒न्त्सोम॒मिन्द्रः॑सु॒तंद॒धेज॒ठरे॑वावशा॒नः ।**
**स॒ह॒स्रिणं॒वाज॒मत्यं॒नसप्तिं॑ससवा॒न्त्सन्त्स्तू॑यसेजातवेदः ॥ १ ॥**

अ॒यम् । सः । अ॒ग्निः । यस्मि॑न् । सोम॑म् । इन्द्रः॑ । सु॒तम् । द॒धे । ज॒ठरे॑ । वा॒व॒शा॒नः । स॒ह॒स्रिण॑म् । वाज॑म् । अत्य॑म् । न । सप्ति॑म् । स॒स॒ऽवान् । सन् । स्तू॒य॒से । जा॒त॒ऽवे॒दः॒ ॥ १ ॥

गाथीब्रूते अयमुत्तरवेद्यामाहुत्यधिकरणभूताहवनीयरूपतयादृश्यमानोग्निः सतथाविधः खलुवावशानः सोमंकामयमानइन्द्रोयस्मिन्नग्नौसुतमभिषवादिसंस्कारोपेतंसोमंजठरेस्वोदरे दधे दधार तस्मात्तादृशमहिमोपेतः सोग्निरितिपूर्वेणान्वयः किञ्च हेजातवेदः सहस्रिणंसहस्रं नानारूपतांसुद्धेयोभजतिससहस्री तमत्यं वेगवशादतनशीलंसस्निं अश्वमिव यद्वा सहस्रिणमिति वाजविशेषणम् सहस्रसङ्ख्याकंवाजम् आज्यौषधिसोमाद्यनेकप्रकारंहविर्लक्षणमन्नं ससवान् भेजिवान्सन् त्वंस्तूयसे स्तोतृभिरस्माभिःस्तूयमानोवर्तसे ॥ दधे दधातेर्लिटि लिटस्तझयोरेशिरेजितितप्रत्ययस्यएशित्यादेशः यद्वृत्तयोगादनिघातः प्रत्ययस्वरः । वावशानः वशकान्तावित्यस्ययङ्लुकिदीर्घोकितइत्यभ्यासस्यदीर्घः व्यत्ययेनशानच्चित्स्वरः । ससवान् षणसंभक्तौक्सौइडभावः नलोपः प्रत्ययस्वरः । स्तूयसे ष्टुञ्स्तुतौ कर्मणियक् अकृत्सार्वधातुकयोरितिदीर्घः निघातः ॥ १ ॥

अथद्वितीया–

**अग्ने॒यत्ते॑दि॒विवर्चः॑पृथि॒व्यां॑यदोष॑धीष्व॒प्स्वायं॑जत्र ।**
**येना॒न्तरि॑क्षमु॒र्वा॑त॒तन्थ॑त्वे॒षःसभा॒नुर॑र्ण॒वोनृ॒चक्षाः॑ ॥ २ ॥**

अग्ने॑ । यत् । ते॒ । दि॒वि । वर्चः॑ । पृ॒थि॒व्याम् । यत् ।
ओष॑धीषु । अ॒प्ऽसु । आ । य॒ज॒त्र॒ । येन॑ । अ॒न्तरि॑क्षम् । उ॒रु ।
आ॒ऽत॒तन्थ॑ । त्वे॒षः । सः । भा॒नुः । अ॒र्ण॒वः । नृ॒ऽचक्षाः॑ ॥ २ ॥

यजत्र यजनीय अग्ने दिविद्युलोकेयद्वर्चः आदित्याख्यंयज्ज्योतिः तत्तेतवैवज्योतिः पृथिव्याम् आहवमीयादिरूपतया दाहपाकादिकर्तृतयाच वर्तमानंयत्तेजः तत्त्वदीयमेव प्रसिद्धंतेजोभिधायगूढंज्योतिरभिधत्ते यदोषधीष्वप्स्वितिओषधीषुअरणीप्रभृतिषुकाष्ठेषुयत्तेजः यद्वा ओषधीषुवनस्पत्यादिषुसोमाख्यंयत्तेजः अप्सुजलेषु यदौर्वाख्यंतेजः तत्सर्वमासर्वत्रवर्तमानं तेजस्तावकमेव. किञ्च त्वंयेनवायुरूपेणतेजसाअन्तारिक्षमाकाशमुरुआततन्थ आतेनिथ विस्तीर्णीकृतवानसि त्वेषः दीप्तिमान् अतएवभानुः भासमानः नृचक्षाः नृणांसाक्षितयाद्रष्टा अर्णवःसमुद्रवत्महान् सतादृशस्त्वम् अन्तरिक्षमातेनिथेतिपूर्वेणान्वयः उक्तार्थेवाजसनेयकम्–अग्नेयत्तेदिविवर्चइत्यादित्योवास्यदिविवर्चः पृथिव्यामित्ययमग्निः पृथिव्यांयदोषधीष्वप्स्वायजत्रेति । यएवौषधीषुचाप्सुचाग्निस्तमेतदाहयेनान्तरिक्षमुर्वाततन्थेतिवायुः सत्वेषः सभानुरर्णवोनृचक्षाइतिमहान्तस । भानुरर्णवोनृचक्षाइत्येतादिति ॥ पृथिव्यां उदात्तयणोहल्पूर्वादितिविभक्तेरुदात्तत्वम्-

ओषधीषु ओषधेश्चविभक्तावप्रथमायामितिदीर्घत्वम् । अप्सु सावेकाचइतिविभक्तेरुदात्तत्वम् । आततन्थ तनुविस्तारेइत्यस्यलिटिथलिबभूथाततन्थजगृभ्मंववर्थेतिनिपातनादिडेत्वाभ्यासलोपानभवन्ति लितीतिप्रत्ययात्पूर्वस्योदात्तत्वं यद्वृत्तयोगादनिघातः ।, अर्णवः अर्णांस्यस्मिन्सन्तीतिमतुबर्थेवप्रकरणेअन्येभ्योपिदृश्यतइतिवप्रत्ययः अर्णसःसलोपश्चेतिसलोपः , प्रत्ययस्वरः । नृचक्षाः चक्षिङ्व्यक्तायांवाचि अभिव्यक्तवाग्वाच्ययंधातुरत्राभिव्यक्तिमात्रेवर्तते · चक्षेर्बहुलंशिच्चेत्यसुन् कृदुत्तरपदप्रकृतिस्वरः ॥ २ ॥

अथतृतीया–

**अग्ने॑दि॒वोअर्ण॒मच्छा॑जिगा॒स्यच्छा॑दे॒वाँ ऊ॑चिषे॒धिष्ण्या॒ये ।**
**यारो॑च॒नेप॒रस्ता॒त्सूर्य॑स्य॒याश्चा॒वस्ता॑दुप॒तिष्ठ॑न्त॒आपः॑ ॥ ३ ॥**

अग्ने॑ । दि॒वः । अर्ण॑म् । अच्छ॑ । जि॒गा॒सि॒ । अच्छ॑ । दे॒वान् । ऊ॒चि॒षे॒ । धिष्ण्याः॑ । ये । याः । रो॒च॒ने । प॒रस्ता॑त् । सूर्य॑स्य । याः । च॒ । अ॒वस्ता॑त् । उ॒प॒ऽतिष्ठ॑न्ते । आपः॑ ॥ ३ ॥

हेअग्ने त्वंदिवःअर्णंद्युलोकेवर्तमानमर्णः अम्भः अच्छाभिलक्ष्यजिगासि धूमद्वाराप्राप्नोषि किञ्च धिष्ण्याः धियंबुद्ध्युपहितंदेहमुष्णन्ति उष्णीकुर्वन्तीतिधिष्ण्याः प्राणाः यद्वा धिषणा स्तुतिः तदर्हाःप्राणाःयेधिष्ण्याः प्राणाभिमानिनोदेवाः तान्प्राणाख्यान्देवानच्छानुक्रमेण ऊचिषे समवेतान्करोषि समवेताभवतेत्युक्तवानसीत्यर्थः किञ्च सूर्यस्यसूर्यलोकस्य ,परस्तादुपरिरोचनेरोचनोनामायंलोकः यत्राग्नेयंज्योतिस्तपतितस्मिन्भासमानेरोचनाख्येलोकेयाआपोविद्यन्ते अवस्तात्सूर्यलोकादधस्तादन्तरिक्षलोकेयाश्चापउपतिष्ठन्तेवर्तन्ते ताउभयीरपस्त्वं प्रेरयासि उक्तार्थो वाजसनेयिभिःस्पष्टमभिहितः–' आपोवाअस्यदिवोअर्णस्ताएषधूमेनाच्छैत्यच्छादेवाँऊचिषेधिष्ण्यायइति प्राणावैदेवाधिष्ण्यास्तेहिसर्वाधियइष्णन्तियारोचनेपरस्तात्सूर्यस्ययाश्चावस्तादुपतिष्ठन्तआपइतिरोचनोह नामैषलोकोयत्रैषएतत्तपतितद्याश्चैतंपरेणापोयाश्चावरेणताएतदाहेतिताउभयीरपस्त्वंप्रेरयासि'इति ॥ अर्णमृऋगतावित्यस्मात् उदकेनुट्चेत्यसुन्नुडागमश्च अर्यते प्रार्थ्यतेतत्पिपासुभिरित्यर्णः सकारलोपश्छान्दसः नित्त्वादाद्युदात्तः । जिगासि गास्तुतौ छन्दसीत्ययंधातुश्चकारा? द्गमनेवर्तते जुहोत्यादिः बहुलंछन्दसीत्यभ्यासस्येत्वं निघातः । ऊचिषे ब्रूञ्व्यक्तायांवाचि इत्यस्यलिट आर्धधातुकत्वात् ब्रुवोवचिरितिवच्यादेशः असंयोगाल्लिट्किदितिकित्त्वाद्वाद्वचिस्वपीत्यादिनासम्प्र-

सारणम् अभ्यासस्य लिट्यभ्यासस्योभयेषामितिसम्प्रसारणम् आर्धधातुकइट् निघातः । धिष्ण्याः उषुप्लुषदाहे धियःउष्णन्तीति सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्या इतिनिपातनाद्यन्नुडागमधात्वादिलोपोपपदह्रस्वादयःसर्वेसिद्धाभवन्ति नित्त्वादाद्युदात्तः । अवस्तात् अवरशब्दात्दिक्शब्देभ्यःसप्तमीपञ्चमीत्यादिनाअस्तातिः तस्मिन्विभाषावरस्येत्यवादेशः प्रत्ययस्वरः । उपतिष्ठन्ते. छागतिनिवृत्तौ उपपूर्वात्तिष्ठतेरकर्मकाच्चेत्यात्मनेपदं यद्वृत्तयोगादनिघातः ॥ ३ ॥

अथचतुर्थी–

पुरीष्यासोअग्नयःप्रावणेभिःसजोषसः ।
जुषन्तांयज्ञमद्रुहोनमीवाइषोमहीः ॥ ४ ॥

पुरीष्यासः । अग्नयः । प्रवणेभिः । सऽजोषसः ।
जुषन्ताम् । यज्ञम् । अद्रुहः । अनमीवाः । इषः । महीः ॥४॥

पुरीष्यासः पुरीषमर्हन्तीति पुरीषेभवावापुरीष्याः । सिकतासंमिश्राअग्नयः चित्याग्नयःप्रवणेभिः मृत्खननसाधनभूतैरभ्र्यादिभिःसहिताः सजोषसः परस्परसंगताःसन्तः यज्ञं अस्माभिः क्रियमाणमग्निचयनपूर्वकमिमंसोमयागं जुषन्तां सेवन्तां किञ्च अद्रुहः अद्रोग्धारोयूयं अनमीवाः रोगादिवर्जिताः महीर्महत्यः इषःऊर्जःरोगादिरहितानिप्रभूतान्यन्नान्यस्मभ्यंप्रयच्छन्ताम् ॥ पुरीष्यासः पृपालनपूरणयोः ईषन्नित्यनुवृत्तौ शॄपृभ्यांकिदितीषन्प्रत्ययःकित्त्व क्त्वािद्गुणेप्रतिषिद्धे उदोष्ठ्यपूर्वस्येत्युत्त्वं रपरत्वम् पृणातिपूर्यतेवेतिपुरीषम् पुरीषंपृणातेःपूरयतेर्वेतियास्कः । तस्माद्भवेछन्दसीतियत् तित्स्वरितः तदर्हन्तीतिपुरीष्याः छन्दसिचेतियप्रत्ययः यचिभमितिभसंज्ञायांयस्येतिलोपः प्रत्ययस्वरः । प्रावणेभिः वनषणसंभक्ताविंत्यस्मात्पुंसि संज्ञायांघःप्रायेणेति करणे घप्रत्ययः प्रकर्षेणवन्यतेसंभज्यतेसंश्लिष्यतेमृदेभिरितिप्रवणानिखनित्राणि प्रनिरन्तइत्यादिनाणत्वं वनंसमासेइत्यन्तोदात्तत्वं कृदुत्तरपदप्रकृतिस्वरत्वम् यद्वा प्रुङ्गतौ प्रवन्तेगच्छन्तिमृत्खननंप्रतीति चलनशब्दार्थादकर्मकादितियुच् चितस्वरः पूर्वस्मिन्पक्षेअवग्रहाभावश्छान्दसइतिवक्तव्यम् । जुषन्तां जुषीप्रीतिसेवनयोरित्यस्यलोटिरूपं पादादित्वादनिघातः । महीः महच्छब्दादुगितश्चेतिङीप् तकारलोपश्छान्दसः प्रत्ययस्वरेणान्तोदात्तः ॥ ४ ॥

---

१ नि० २. २२ ।

अथपञ्चमी—

इळांमग्नेपुरुदंसंसनिंगोःशश्वत्तमंहवमानायसाध ।
स्यान्नःसूनुस्तनयोविजावाग्नेसातेसुमतिर्भूत्वस्मे ॥ ५ ॥ २२ ॥

इळाम् । अग्ने । पुरुऽदंसम् । सनिम् । गोः । शश्वत्ऽतमम् ।
हवमानाय । साध । स्यात् । नः । सूनुः । तनयः । विजाऽवा ।
अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥ ५ ॥ २२ ॥

एषाऋक्पूर्वमेवव्याख्यायि ॥ ५ ॥

॥ इतितृतीयस्यप्रथमेद्वाविंशोवर्गः ॥ २२ ॥

निर्मथितःसुधितइतिपञ्चर्चमेकादशंसूक्तम् अत्रानुक्रमणिका—निर्मथितोदेवश्रवादेववातश्चभारतौतृतीयासतोबृहतीति भरतस्यपुत्रोदेवश्रवादेववातश्चेत्युभावस्यऋषी तृतीयासतोबृहती शिष्टास्त्रिष्टुभः अग्निर्देवता आहोतेत्यादिसूक्तदशकस्यउक्तोविनियोगः प्रातरनुवाकाश्विनशस्त्रयोः इळामग्नइत्यस्याविनियोगः असकृदुपदिष्टः ।

तस्मिन्सूक्तेप्रथमा—

निर्मथितःसुधितआसधस्थेयुवाकविरध्वरस्यप्रणेता ।
जूर्यत्स्वग्निरजरोवनेष्वत्रादधेअमृतंजातवेदाः ॥ १ ॥

निःऽमथितः । सुऽधितः । आ । सधऽस्थे । युवा । कविः ।
अध्वरस्य । प्रऽनेता । जूर्यत्ऽसु । अग्निः । अजरः । वनेषु ।
अत्र । दधे । अमृतम् । जातऽवेदाः ॥ १ ॥

भारतावृषीस्तोत्रंकुर्वाते योग्निर्निर्मथितः अग्निष्टोमादिकर्मस्वरण्योर्नितरांमथितःसन् सधस्थेयजमानगृहेसुधितः गार्हपत्यादिषुत्रिषुकुण्डेषुसुष्ठुनिहितः निधायचकाष्ठप्रक्षेपेणप्रज्वाल्यमानोयुवा नित्यतरुणः प्रबुद्धः अतएवाध्वरस्यज्योतिष्टोमादेःप्रणेताप्रकर्षेणनेतानिर्वाहकः नेतृत्वादेवकविः क्रान्तदर्शी तथाविधोजातवेदाः सर्वविषयाभिज्ञानवान् सोग्निः वनेषुमहारण्येषु जूर्यत्सु दावाग्निसंबन्धाज्जूर्यमाणेषु जरांनाशंप्राप्नुवत्स्वपि स्वयम् अजरः जरारहितः प्रत्युत दीप्यमानः सन् अत्र एवंस्तुतिंकुर्वाणेषु यजमानेषु अमृतंक्षयरहितंप्रभूतमन्नमादधेनिदधाति ॥ सुधितः दधातेःकर्मणि-

निष्ठायां सुधितवसुधितनेमधितेत्यादिना निपातनाद्धिइत्यादेशः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । जूर्यत्सु जूरींघूरींहिंसावयोहान्योः व्यत्ययेनशतृप्रत्ययः दिवादित्वात्श्यन् नित्त्वादाद्युदात्तः । अजरः जॄवयोहानावित्यस्माद्भावे ऋदोरप्इतिअप्प्रत्ययः गुणः नञोजरमरमित्रमृताइत्युत्तरपदाद्युदात्तत्वम् । दधे दधातेर्वर्तमानेलिटिरूपम् । जातवेदाः जनीप्रादुर्भावेइत्यस्यक्ते जनसनखनांसञ्झलोरित्याकारः बहुव्रीहौपूर्वपदप्रकृतिस्वरः ॥ १ ॥

अथद्वितीया—

अमन्थिष्टांभारतारेवदग्निंदेवश्रवादेववातःसुदक्षम् ।
अग्नेविपश्यबृहताभिरायेषांनोनेताभवतादनुद्यून् ॥ २ ॥

अमन्थिष्टाम् । भारता । रेवत् । अग्निम् । देवऽश्रवाः । देवऽवातः ।
सुऽदक्षम् । अग्ने । वि । पश्य । बृहता । अभि । राया ।
इषाम् । नः । नेता । भवतात् । अनु । द्यून् ॥ २ ॥

हेअग्ने भारता भारतौ भरतस्यपुत्रौ देवश्रवाः देववातश्चेत्युभौसुदक्षंशोभनसामर्थ्योपेतं रेवत् रयिमन्तम् अग्निम् अङ्गनादिगुणोपेतंत्वाम् अमन्थिष्टाम् अग्निष्टोमादिकर्मप्राप्त्यर्थम् अलूलुडतां मथनेनत्वामुत्पादितवन्तावित्यर्थः तादृशस्त्वंबृहताप्रभूतेनरायाधनेनसहितः सन्अभिअभिमुखोभूत्वाविपश्य अस्मान्विशेषेणानुग्रहदृष्ट्यावीक्षस्व किञ्च अनुद्यून्शब्दोहर्वाची वस्तोः द्युः इतितन्नामसुपाठात् द्यूननुसर्वेषुदिवसेषुनोस्माकमिषामन्नानांनेता आनेताभवतात्भव ॥ अमन्थिष्टां मन्थविलोडने इत्यस्माल्लुङिसिच् वदव्रजहलन्तस्याचइतिवृद्धौप्राप्तायांनेटीतिप्रतिषेधः तस्थस्थमिपामित्यादिनातसस्तामादेशः पादादित्वादनिघातः अट्स्वरः । भारता भरतस्यापत्यमित्यर्थेउत्सादित्वादञ्तद्धितेष्वचामादेरित्यादिवृद्धिः ञित्स्वरः । रेवत् रयिशब्दान्मतुप् वत्वोदात्तत्वसम्प्रसारणपरपूर्वत्वगुणसुब्लोपाः । देवश्रवाःश्रुश्रवणे असुन्नितिकर्मण्यसुन् देवैः श्रूयतेप्रख्याप्यतेसावितिदेवश्रवाः ऋषिः कृदुत्तरपदप्रकृतिस्वरत्वेप्राप्तेगतिकारकयोरपिपूर्वपदप्रकृतिस्वरत्वंचेत्यौणादिकसूत्रात्पूर्वपदस्वरः । देववातः वागतिगन्धनयोरस्मात्कर्मणिक्तः देवैरिष्यमाणतयाप्राप्तः देववातऋषिः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरः । द्यून् द्युअभिगमने द्युतदीप्तौवा डिच्चेत्यनुवृत्तौ द्युयुंभ्यांचोतिभोजसूत्रेणडुप्रत्ययःडिच्च द्युतेःअश्वादयश्चेतिडुन्प्रत्ययः अभिगच्छन्त्यस्मिन्स्वंस्वमभिमतंदेशंप्रापितइतिद्योत्यते किरणसंबन्धादितिवा द्युः दिवसः प्रथमयोरितिपूर्वसवर्णदीर्घः तस्माच्छसोनःपुंसीतिसकारस्यनकारः एकादेशस्वरः ॥ २ ॥

अथतृतीया–

दशक्षिपःपूर्व्यंसीमजीजनन्त्सुजातंमातृषुप्रियम् ।
अग्निंस्तुहिदैववातंदेवश्रवोयोजनानामसद्वशी ॥ ३ ॥

दश । क्षिपः । पूर्व्यम् । सीम् । अजीजनन् । सुऽजातम् ।
मातृषु । प्रियम् । अग्निम् । स्तुहि । दैवऽवातम् । देवऽश्रवः ।
यः । जनानाम् । असत् । वशी ॥ ३ ॥

हेअग्ने देववातस्य क्षिपः क्षिप्यन्ते कर्मकरणार्थमितिक्षिपोङ्गुलयः ताश्चदश बाहुद्वयस्य मथनसाधनत्वेनतत्रत्याअङ्गुल्योदशसङ्ख्याकाः तादृश्योङ्गुलयः पूर्व्यंपुरातनं सीमेनंत्वामजीजनन् उदपीपदन् हेदेवश्रवः मातृषुमातृभूतारण्योःसुजातंसुष्ठूत्पन्नम् अतएव प्रियं कमनीयं दैववातं देववातेनममभ्रात्रामथितमेनमग्निंस्तुहि योग्निः जनानांस्तोतॄणांयजमानानांवशी वशवर्ती कर्मणांस्वातंत्र्येणप्रवर्तकः असत् भवति तंस्तुहीतिपूर्वेणान्वयः ॥ दश दंशदशने कनिन्नित्यनुवृत्तौ नुदशोर्गुणश्चेतिकनिन् नित्स्वरः । क्षिपः क्षिपप्रेरणे औणादिकः कर्मणिक्विप् क्षिप्यन्ते प्रेर्यन्ते कर्मस्वितिक्षिपोङ्गुलयः धातुस्वरः । अजीजनन् जनीप्रादुर्भावे हेतुमण्ण्यन्तस्यलुङिचङि द्विर्वचनसन्वद्भावाभ्यासेत्वदीर्घाः निघातः । स्तुहि ष्टुञ्स्तुतावित्यस्यलोटिरूपम् अदादित्वाच्छपोलुक् निघातः । दैववातम् देववातेन निर्वृत्तमित्यर्थे तेननिर्वृत्तमित्यण् प्रत्ययस्वरः । असत् अस्भुवीत्यस्य लेटचडागमः यद्वृत्तयोगादनिघातः ॥ ३ ॥

अथचतुर्थी–

नित्वादधेवरआपृथिव्याइळायास्पदेसुदिनत्वेअह्नाम् ।
दृषद्वत्यांमानुषआपयायांसरस्वत्यांरेवदग्नेदिदीहि ॥ ४ ॥

नि । त्वा । दधे । वरे । आ । पृथिव्याः । इळायाः । पदे ।
सुदिनऽत्वे । अह्नाम् । दृषत्ऽवत्याम् । मानुषे । आपयायाम् ।
सरस्वत्याम् । रेवत् । अग्ने । दिदीहि ॥ ४ ॥

हेअग्ने इळायाः गोरूपधारिण्याः पृथिव्याः भूमेर्वरे वरिष्ठेश्रेष्ठेपदेनाभिस्थाने उत्तरवेद्याम् अह्नांसुदिनत्वेयजनीयदिवसानांशोभनदिनत्वार्थंयेषुदिनेषु इन्द्रादयोवरीयांसोदेवाइज्यं–

न्ते तांनिसुदिनानि तदर्थत्वात्त्वाम् आनिदधे आसमन्तान्निदधामि उत्तमानिस्थानानिदर्शयति दृषद्वत्यां दृषद्वतीनामकाचिन्नदी तस्यांमानुषेमनुष्यसञ्चारविषयेतीरे आपयायामापयानामकाचिन्नदी तस्यांसरस्वत्यांनद्यांच एतेषूत्तमेषुस्थानेषु त्वंरेवत् धनयुक्तंयथाभवतितथादिदीहि दीप्यस्व महर्षयः सरस्वतीतीरेखलुयज्ञादिकर्माण्यकार्षुः तथाचब्राह्मणम्—ऋषयोवैसरस्वत्यांसत्रमासत[1]इति ॥ दधे दधातेर्लट्युत्तमैकवचनेरूपम् । वरे वृञ्वरणे ग्रहवृदृनिश्चिगमश्चेत्यप् पित्त्वादनुदात्तत्वेधातुस्वरः । दृषद्वत्यां दृविदारणे दृणातेःषुकूहस्वश्चेत्यादिनाषुगागमः धातोर्ह्रस्वश्च दृषदउपलाअस्यांसन्तीतिमतुप् झयइतितस्यवत्वम् स्वरविधौ व्यञ्जनमविद्यमानवदित्यस्याः परिभाषायाअनाश्रयणान्मतुपउदात्तताभावः आदिप्रत्ययस्वरः । सरस्वत्यां सरःशब्दःअसुन्नन्तत्वादाद्युदात्तः तदस्यास्तीतिमतुप् अदुपधत्वान्मस्यवत्वम् उदित्त्वात्ङीप् । दिदीहि दिवुक्रीडादावित्यस्ययङ्लुकिरूपम् ॥ ४ ॥

अथपञ्चमी—

इळांमग्नेपुरुदंसंसनिंगोःशश्वत्तमंहवमानायसाध ।
स्यान्नःसूनुस्तनयोविजावाग्नेसातेसुमतिर्भूत्वस्मे ॥ ५ ॥ २३ ॥

इळाम् । अग्ने । पुरुऽदंसम् । सनिम् । गोः । शश्वत्ऽतमम् ।
हवमानाय । साध । स्यात् । नः । सूनुः । तनयः । विजाऽवा ।
अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥ ५ ॥ २३ ॥

व्याख्यातेयमित्युपेक्षिता ॥ ५ ॥

॥ इतितृतीयस्यप्रथमेत्रयोविंशोवर्गः ॥ २३ ॥

अग्नेसहस्वेतिपञ्चर्चं द्वादशंसूक्तम् अत्रानुक्रमणिका—अग्नेसहस्वगायत्रमाद्यानुष्टुबिति ऋषिर्गाथिनोविश्वामित्रः अग्निर्देवता आद्यानुष्टुप् शिष्टागायत्र्यः सूक्तविनियोगोलैङ्गिकः प्रातरनुवाकआश्विनशस्त्रेचप्रथमावर्जितस्यसूक्तस्यविनियोगः अथैतस्याद्यनिखण्डेसूत्रितम्—अग्नइळेतिचतस्रइति । अभ्युदयेष्टावग्नेर्दातुरनुवाक्या अग्नेदादाशुषइत्येषा अथाग्नेय्यइतिखण्डेसूत्रितम्—अग्नेदादाशुषेरयिंसयन्ताविप्रएषामिति ।

---

१ ऐ० ब्रा० २. १९. ।

तस्मिन्सूक्तेप्रथमा—

अग्नेसहस्वपृतनाअभिमातीरपास्य ।
दुष्टरस्तरन्नरातीर्वर्चोधायज्ञवाहसे ॥ १ ॥

अग्ने । सहस्व । पृतनाः । अभिऽमातीः । अप । अस्य ।
दुस्तरः । तरन् । अरातीः । वर्चः । धाः । यज्ञऽवाहसे ॥ १ ॥

विश्वामित्रःस्तौति—हेअग्ने पृतनाअभियोक्त्रीःसेनाः सहस्व अभिभव अभिमातीः अभिमानिनः कर्मविघ्नकारिणः शत्रूनपास्यअपनुद किञ्च दुष्टरः नकेनापितरितुंशक्यः अतएव अरातीः अरातीन् शत्रूनतरनस्वतेजसातिरस्कुर्वन् त्वं यज्ञवाहसे यज्ञनिर्वाहकाययजमानायवर्चोधाः अन्नंधेहि कुरु ॥ सहस्व षहमर्षणेइत्यस्यलोटिरूपम् आमन्त्रितस्याविद्यमानवत्त्वेनपादादित्वादनिघातः । अभिमातीःमाङ्माने मानंमातिः भावेक्तिन् अस्यालुग्विकरणस्वादीत्वेत्वे नभवतः अभितोमानंयेषांतेइतिबहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । अस्य असुक्षेपणे दिवादिः लोटिरूपम् । दुष्टरः तॄप्लवनतरणयोः अस्मादकृच्छ्रार्थेखल् सुपामादित्वाद्विसर्जनीयस्यसकारस्यषत्वंलित्स्वरः । तरन् तरतेःशतरिरूपम् अदुपदेशाल्लसार्वधातुकस्वरेणशतुरनुदात्तत्वेकृते धातुस्वरः । धाः दधातेश्छन्दसिलुङिरूपम् निघातः ॥ १ ॥

अथद्वितीया—

अग्नेइळासमिध्यसेवीतिहोत्रोअमर्त्यः । जुषस्वसूनोअध्वरम् ॥ २ ॥

अग्ने । इळा । सम् । इध्यसे । वीतिऽहोत्रः । अमर्त्यः ।
जुषस्व । सु । नः । अध्वरम् ॥ २ ॥

हेअग्ने वीतिहोत्रः वीतिःप्रीतिविषयंहोत्रमग्निहोत्रादिकंयस्यासौवीतिहोत्रः यज्ञेषुप्रीतिमानित्यर्थः अमर्त्यः मरणधर्मरहितस्त्वम् इळा इळायाम् ईड्यायामुत्तरवेद्यांसमिध्यसे आज्याहुतिप्रक्षेपेणसम्यक्प्रज्वाल्यसे तादृशस्त्वं नोस्माकमध्वरमिमंयज्ञंसुसुष्ठुजुषस्व आहुतिस्वीकरणेनसेवस्व ॥

वीतिहोत्रः वीकान्त्यादिषु अस्मात्कर्मणि मन्त्रेवृषेषपचेत्यादिनाक्तिन्नुदात्तः बहुव्रीहौपूर्वपदप्रकृतिस्वरः। जुषस्व जुषतेर्लोटिरूपम् शस्वरः। सु निपातस्यचेतिसंहितायांदीर्घः ॥ २ ॥

अथतृतीया—

अग्नेद्युम्नेनजागृवेसहसःसूनवाहुत । एदंबर्हिःसदोममं ॥ ३ ॥

अग्ने । द्युम्नेन । जागृवे । सहसः । सूनो इति । आऽहुत ।
आ । इदम् । बर्हिः । सदः । मम ॥ ३ ॥

द्युम्नेन स्वतेजसासह जागृवेजागर्तीतिजागृविः तस्यसंबुद्धिः लोकरक्षार्थंस्वतेजसा सहसर्वदाजागरणोपेत आहुत देवताह्वानार्थमस्माभिराहुत सहसःसूनो बलस्यपुत्र हेअग्ने त्वं ममसम्बन्धिन्यस्मिन्यज्ञे यद्वेद्यामास्तीर्णमिदंबर्हिः तत्रआसदः आसीद ॥ जागृवे जागृनिद्राक्षये जॄशॄस्तॄजागृभ्यःक्विन्निनितिक्विन् किस्वादगुणः जागर्तीतिजागृविः जागृविर्जागरणादितियास्कः। संबुद्धौचेतिगुणः एङ्ह्रस्वादितिसोर्लोपः निघातः। सहसःसूनो सुपआमन्त्रितेपराङ्गवद्भावादनुदात्तत्वे पादादित्वादनिघातः। सदः षद्लृविशरणगत्यवसादनेषुइत्यस्यछान्दसेलुङि लृदित्वादङ् निघातः। मम अस्मच्छब्दस्यषष्ठ्येकवचनेममादेशः युष्मदस्मदोर्ङसीत्याद्युदात्तत्वम् ॥ ३ ॥

अथचतुर्थी—

अग्नेविश्वेभिरग्निभिर्देवेभिर्महयागिरः । यज्ञेषुयउचायवः ॥४॥

अग्ने । विश्वेभिः । अग्निऽभिः । देवेभिः । महय । गिरः । यज्ञेषु ।
ये । ऊँ इति । चायवः ॥ ४ ॥

हेअग्ने देवेभिः द्योतमानैः विश्वेभिः सर्वैरग्निभिः यष्टव्यतयास्थितैरग्निभिः सहितस्त्वंचायवः उक्तविषयस्तुतिरूपाभिर्वाग्भिरनन्यमनस्कतयापूजकायेविद्यन्ते तेषां यज्ञेषुज्योतिष्टोमादिषु गिरःस्तोत्रशस्त्रादिलक्षणानिवाक्यानिमहयपूजय ॥ महय महपूजायां चुरादिः अदन्तत्वादुपधावृद्ध्यभावः निघातः। चायवः चायृपूजानिशामनयोः मृगय्वादयश्चेतिकुप्रत्ययः प्रत्ययस्वरः ॥ ४ ॥

अथपञ्चमी--

अग्नेदादाशुषेरयिंवीरवन्तंपरीणसम्।शिशीहिनःसूनुमतः॥५॥२४॥

अग्ने। दाः। दाशुषे। रयिम्। वीरऽवन्तम्। परीणसम्। शिशीहि। नः। सूनुमऽतः॥ ५ ॥ २४ ॥

हेअग्ने दाशुषे हविर्दत्तवतेयजमानाय वीरवन्तं पुत्रयुक्तं परीणसं प्रभूतंरयिंधनं दाः देहि सूनुमतः पुत्रपौत्रादिसहितान्नोस्मान् शिशीहि धनप्रदानेनतीक्ष्णान्कुरु ॥ दाः डुदाञ् दानेइत्यस्यछान्दसेलुङिरूपम् आमन्त्रितस्याविद्यमानत्वेनपादादित्वादनिघातः । दाशुषे दाशृदाने इत्यस्यक्वसौ दाश्वान्साह्वान्मीढ्वांश्चेतिनिपातनाद्विर्वचनाभावः इडभावश्च भसंज्ञायां संप्रसारणं प्रत्ययस्वरः । परीणसं परिपूर्वान्नसतेर्व्याप्त्यर्थात्क्विप् अन्येषामपिदृश्यतइतिदीर्घः । शिशीहि शिञ्निशाने व्यत्ययेनश्लुः दीर्घश्छान्दसः हेरपित्त्वादन्तोदात्तत्वम् ॥ ५ ॥

॥ इतितृतीयस्यप्रथमेचतुर्विंशोवर्गः ॥ २४ ॥

अग्नेदिवइतिपञ्चर्चंत्रयोदशंसूक्तंवैश्वामित्रम् अत्रेयमनुक्रमणिका—अग्नेदिवोवैराजमुपान्त्याग्नइन्द्रइति विराट्छन्दः अग्नइन्द्रश्चेत्येषाइन्द्राग्निदेवताका शिष्टाआग्नेय्यः अग्निष्टोमेआज्यशस्त्रे अग्नइन्द्रश्चेतियाज्या अग्नइन्द्रश्चदाशुषोदुरोणइतियाज्येतिसूत्रितत्वात् ।

तस्मिन्सूक्तेप्रथमा—

अग्नेदिवःसूनुरसिप्रचेतास्तनापृथिव्याउतविश्ववेदाः।
ऋधग्देवाँइहयजाचिकित्वः ॥ १ ॥

अग्ने। दिवः। सूनुः। असि। प्रऽचेताः। तना। पृथिव्याः। उत। विश्वऽवेदाः। ऋधक्। देवान्। इह। यज। चिकित्वः॥१॥

विश्वामित्रःस्तौति—हेअग्ने विश्ववेदाः सर्वविषयज्ञानवान्प्रचेताः कर्मविषयज्ञानवान्त्वं दिवःद्युलोकाभिमानिदेवतायाः सूनुरसि पुत्रोभवसि उतअपिच पृथिव्याः पृथिव्यभिमानिदेवतायाः तना तनयोसि किञ्च चिकित्वः चेतनावन् हेअग्ने इहास्माभिः क्रियमाणेस्मिन्कर्मणि

देवान्यजनीयानिन्द्रादिदेवानृक्षथक् पृथक्क्रमेणयज हविष्प्रदानेनपूजय ॥ असि असभुवीत्यस्य लटि तासस्त्योर्लोपइतिसलोपः निघातः । विश्ववेदाः बहुव्रीहौविश्वंसंज्ञायामितिविश्वस्यातोदात्तत्वम् ॥ १ ॥

अथद्वितीया

अ॒ग्निः स॑नोति वी॒र्या॑णि वि॒द्वान्त्स॒नोति॒ वाज॑म॒मृता॑य॒ भूष॑न् ।
स नो॑ दे॒वाँ एह व॑हा पुरुक्षो ॥ २ ॥

अ॒ग्निः । स॒नो॒ति॒ । वी॒र्या॑णि । वि॒द्वान् । स॒नोति॑ । वाज॑म् ।
अ॒मृता॑य । भूष॑न् । सः । नः॒ । दे॒वान् । आ । इ॒ह । व॒ह॒ ।
पु॒रु॒क्षो॒ इति॑ पुरुऽक्षो ॥ २ ॥

विद्वान्कर्माभिज्ञोयोग्निः वीर्याणि पशुपुत्रादिसंपद्रूपाणिसामर्थ्यानि सनोति यजमानाय ददाति यश्चाग्निः भूषन् स्वतेजसासर्वंजगद्भूषयन् अलङ्कुर्वन् अमृताय मरणधर्मरहितायेन्द्रादिदेवाय वाजंहविर्लक्षणमन्नं सनोतिप्रयच्छति पुरुक्षो पुरोडाशादिबहुविधान्नोपेत हे अग्ने स तादृशस्त्वंनोस्माकंसंबन्धिनिइहास्मिन्यज्ञे देवान् यजनीयान्देवानावह आह्वय ॥ सनोति षणुदाने तनादित्वादुप्रत्ययः प्रत्ययस्वरः पादादित्वादनिघातः । भूषन् भूषअलङ्कारे. अन्तर्भावितण्यर्थः शतुर्लसार्वधातुकस्वरेणानुदात्तत्वेधातुस्वरःशिष्यते । वह वहेर्लोटिरूपम् । पुरुक्षो पुरवःक्षुधोन्नानियस्येतिपुरुक्षुः अन्त्यलोपश्छान्दसः संबुद्धौचेतिगुणः ॥ २ ॥

अथतृतीया–

अ॒ग्निर्द्यावा॑पृथि॒वी वि॒श्वज॑न्ये॒ आ भा॑ति दे॒वी अ॒मृते॒ अमू॑रः ।
क्षय॒न्वाजैः॑ पुरुश्च॒न्द्रो नमो॑भिः ॥ ३ ॥

अ॒ग्निः । द्यावा॑पृथि॒वी इति॑ । वि॒श्वज॑न्ये॒ इति॑ वि॒श्वऽज॑न्ये ।
आ । भा॒ति॒ । दे॒वी इति॑ । अ॒मृते॒ इति॑ । अमू॑रः । क्षय॑न् ।
वाजैः॑ । पु॒रु॒ऽच॒न्द्रः । नमः॑ऽभिः ॥ ३ ॥

अमूरः अमूढः सर्वज्ञः क्षयन् ईशानः सर्वस्यजगतः अतएवपुरुश्चन्द्रः पुरुचन्द्रः बहुहिरण्योपेतः यद्वा बहुदीप्तिस्वरूपःवाजैर्बलैर्नमोभिः अन्नैश्वसहितः सोग्निः विश्वजन्ये विश्वस्य जनयित्र्यौ यद्वा विश्वंजन्यमुत्पाद्यंयाभ्यांतेदेवी द्योतमाने अमृते मरणधर्मरहितेद्यावापृथिवीद्यावापृथिव्यौ आभाति आसमन्तात्प्रकाशयाति ॥ द्यावापृथिवी दिवःशब्दस्य दिवोद्यावेतिद्यावादेशः, आद्युदात्तः पृथिवीशब्दोङीषन्तत्वेनान्तउदात्तः देवताद्वन्द्वेचेत्युभयाः प्रकृतिस्वरत्वम् । विश्वजन्ये बहुव्रीहौविश्वंसंज्ञायामितिपूर्वपदान्तउदात्तः तत्पुरुषेतु, स्वरश्चिंतनीयः । आभाति भादीप्तौ अन्तर्भावितण्यर्थः । क्षयन् क्षिऐश्वर्ये शतुर्लसार्वधातुकस्वरेणानुदात्तत्वेधातुस्वरः । पुरुश्चन्द्रः ह्रस्वाच्चन्द्रोत्तरपदेमन्त्रेइतिसुडागमः श्चुत्वेनशकारः उत्तरपदान्तोदात्तप्रकरणे त्रिचक्रादीनांछन्दस्युपसंख्यानमितिउत्तरपदान्तोदात्तत्वम् यद्वा समासस्येत्यन्तोदात्तत्वम् ॥ ३ ॥

अथचतुर्थी—

**अग्नइन्द्रंश्चदाशुषोदुरोणेसुतावतोयज्ञमिहोपयातम् ।**
**अमर्धन्तासोमपेयायदेवा ॥ ४ ॥**

**अग्ने । इन्द्रः । च । दाशुषः । दुरोणे । सुतऽवतः । यज्ञम् ।**
**इह । उप । यातम् । अमर्धन्ता । सोमऽपेयाय । देवा ॥ ४ ॥**

हेअग्ने त्वमिन्द्रश्चोभौ देवा देवौ युवाम् अमर्धन्ता अनागमनेनयज्ञहिंसामकुर्वन्तौसन्तौ सुतवतः सोमाभिषवंकुर्वतः दाशुषः हविर्दत्तवतोयजमानस्येहदुरोणेगृहेक्रियमाणमिमंयज्ञमभिलक्ष्य सोमपेयाय सोमपानार्थम् उपयातम् उपसमीपे आगच्छतम् ॥ यातं याप्रापणेइत्यस्य लोटि रूपं निघातः । अमर्धन्ता मृधुहिंसायामित्यस्यशतरिरूपम् नञासमासः सुपोडादेशः तत्पुरुषे नञ्स्वरः । सोमपेयाय पापाने अचोयदितियत् ईद्यतीतीकारादेशः आर्धधातुकलक्षणोगुणः कृदुत्तरपदप्रकृतिस्वरः ॥ ४ ॥

अथपञ्चमी—

**अग्नेअपांसमिध्यसेदुरोणेनित्यःसूनोसहसोजातवेदः ।**
**सधस्थानिमहयमानऊती ॥ ५ ॥ २५ ॥**

अग्ने॑ । अ॒पाम् । सम् । इ॒ध्य॒से॒ । दु॒रो॒णे । नित्यः॑ । सू॒नो॒ इति॑ ।
स॒ह॒सः॒ । जा॒त॒ऽवे॒दः॒ । स॒ध॒ऽस्थानि॑ । म॒हय॑मानः । ऊ॒ती ॥ ५ ॥ २५ ॥

सहसःसूनो बलस्यपुत्र जातवेदः जातप्रज्ञ हेअग्ने नित्यः अविनाशी ऊती ऊत्या रक्षणेनसधस्थानि प्राणिनांनिवासभूतान्लोकान्महयमानः परिचरंस्त्वम् अपांदुरोणे अपांस्थानेन्तरिक्षेसमिध्यसे सम्यग्दीप्यसे ॥ दुरोणे अवरक्षणेइत्यस्मादौणादिकोनक्प्रत्ययः ज्वरत्वरेत्यादिनाऊठ् गुणः दुरोणइतिगृहनाम दुरवाभवन्तीतियास्कः प्रत्ययस्वरः । महयमानः महपूजायां व्यत्ययेनशानच् शानचोलसार्वधातुकस्वरेणानुदात्तत्वे णिच्स्वरः । ऊती अवरक्षणादिषु ऊतियूतीत्यादिनानिपातनादन्तोदात्तः सुपांसुलुगितितृतीयायाः सवर्णदीर्घः ॥ ५ ॥

॥ इतितृतीयस्यप्रथमेपञ्चविंशोवर्गः ॥ २५ ॥

वैश्वानरंमनसेतिनवर्चंचतुर्दशंसूक्तम् तत्रानुक्रमणिका—वैश्वानरंनव त्र्यृचौवैश्वानरीयमारुतौजागतौ द्व्यृचआत्मस्तुतिर्वा पूर्वोत्तमगीतान्त्योपाध्यायस्तुतिरिति वैश्वानरंमनसेत्याद्यौत्र्यृचौ जागतौ प्रथमस्य वैश्वानरोग्निर्देवता सप्तम्याद्यास्तिस्रस्त्रिष्टुभः अग्निरस्मीतिद्व्यृचस्याग्निः परंब्रह्मवदेवता नवम्यास्तु विश्वामित्रोपाध्यायस्यस्तुत्यत्वात्सएवदेवता सप्तमीवर्जितस्य सूक्तस्य विश्वामित्रऋषिः सप्तम्याः ब्रह्मवाक्यत्वाद्यस्यवाक्यंसऋषिरितिन्यायेनब्रह्मऋषिः वैश्वानरंमनसेत्याद्यस्त्र्यृचआभिप्लविकेचतुर्थेहनिआग्निमारुतेवैश्वानरीयेनिविद्धानेविनियुक्तः तृतीयस्येतिखण्डेसूत्रितम्—वैश्वानरंमनसेतितिस्रइति । अयमेवत्र्यृचोबृहस्पतिसवेप्याग्निमारुते वैश्वानरीयेनिविद्धानीयः प्रयन्तुवाजाइतिद्वितीयत्र्यृचोबृहस्पतिसवेमारुतनिविद्धानीयःउभयमपिउशनसः स्तोमेनेतिखण्डेसूत्रितम्—वैश्वानरंमनसाग्निंनिचाय्यप्रयन्तुवाजास्तविषीभिरग्नयइति । अग्निचयने सञ्चिताग्न्यनुशंसने अग्निरस्मीत्येषा अथाग्निसञ्चितमनुगीतमनुशंसेदित्युपक्रम्यसूत्रितम्—अग्निरस्मिजन्मनाजातवेदाइतित्रिर्मध्यमयावाचेति ।

तस्मिन्सूक्तेप्रथमा—

वैश्वा॒न॒रंमन॑सा॒ग्निंनि॒चाय्या॑ह॒विष्म॑न्तो॒अनु॒षत्यं॒स्व॒र्विद॑म् ।
सु॒दा॒नुं॑दे॒वंर॑थि॒रंव॑सू॒यवो॑गी॒र्भीर॒ण्वंकु॑शि॒कासो॑हवामहे ॥ १ ॥

१ नि०, ४. ५. ।

वैश्वानरम् । मनसा । अग्निम् । निऽचाय्य । हविष्मन्तः ।
अनुऽसत्यम् । स्वःऽविदम् । सुऽदानुम् । देवम् । रथिरम् ।
वसुऽयवः । गीःऽभिः । रण्वम् । कुशिकासः । हवामहे ॥ १ ॥

विश्वामित्रःस्तौति—हेअग्ने हविष्मन्तःसंभृतहविष्काः वसूयवः धनमात्मनइच्छन्तः कुशिकासः कुशिकगोत्रोत्पन्नावयं वैश्वानरं विश्वेनराअग्निप्रणयनादिक्रियायाः नेतारोयस्येतिविश्वानरोग्निः तस्यसबन्धीवैश्वानरः अपत्यामितियावत् यद्वा विश्वानरएववैश्वानरः तद्धितोनन्यार्थः राक्षसवायसादिवत् तम् अनुषत्यं सत्येनानुगतं कर्मानुरूपफलप्रदानेप्रत्यप्रतिज्ञं स्वर्विदं स्वर्गादिलक्षणफलस्यज्ञातारम् अतएवसुदानुं सुष्ठुफलस्यदातारं रथिरं रथवन्तम् अतएव रण्वं यज्ञान्गच्छन्तं देवंद्योतमानं तमिममग्निंमनसानिचाय्य अन्तःकरणेन एवंविधगुणविशिष्टस्त्वमितिज्ञात्वा गीर्भिःस्तुतिलक्षणाभिर्वाग्भिःहवामहे इहकर्मणित्वामाह्वयामः ॥ वैश्वानरं नरेसंज्ञायामितिपूर्वपदस्यदीर्घत्वं विश्वानरस्येदमित्यर्थे तस्येदमित्यण् प्रत्ययस्वरः । निचाय्य चायृपूजानिशामनयोरित्यस्यल्यपिरूपं लित्स्वरः । अनुषत्यम् अनुगतंसत्येन अत्यादयः क्रुष्टाद्यर्थेतृतीययेतिसमासः सुषामादित्वात्षत्वं निरुदकादित्वादन्तोदात्तम् ॥ सुदानुं डुदाञ्दाने दाभाभ्यांनुरितिकर्तरिनुप्रत्ययः परादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वम् । रथिरं रथशब्दान्मतुबर्थे मेघारथाभ्यामिरन्निरचौवक्तव्यावितीरच् चित्स्वरः । वसूयवः वस्वात्मनइच्छन्तइति सुपआत्मनःक्यच् अकृत्सार्वधातुकयोरितिदीर्घः क्याच्छन्दसीत्युप्रत्ययः अतोलोपःप्रत्ययस्वरः । रण्वं रविर्गत्यर्थः रण्वतियज्ञान्गच्छतीतिरण्वः पचाद्यजन्तः चित्स्वरः । कुशिकासः कुशिकशब्दाद्गोत्रमित्यर्थेबिदादित्वादञ् तस्यबहुषु यञञोश्चेतिलुक् । हवामहे ह्वयतेर्बहुलंछन्दसीतिसम्प्रसारणं निघातः ॥ १ ॥

अथद्वितीया—

तंशुभ्रमग्निमवसेहवामहेवैश्वानरंमातरिश्वानमुक्थ्यम् ।
बृहस्पतिंमनुषोदेवतातयेविप्रंश्रोतारमतिथिंरघुष्यदम् ॥ २ ॥

तम् । शुभ्रम् । अग्निम् । अवसे । हवामहे । वैश्वानरम् ।
मातरिश्वानम् । उक्थ्यम् । बृहस्पतिम् । मनुषः । देवऽतातये ।
विप्रम् । श्रोतारम् । अतिथिम् । रघुऽस्यदम् ॥ २ ॥

योऽग्निःपूर्वमन्त्रेप्रतिपादितः तंशुभ्रं द्योतमानंवैश्वानरं विश्वानरसंबन्धिनं मातरिश्वा-नं मातर्यन्तरिक्षेश्वसितिविद्युदादिरूपतयाचेष्टतइतिमातरिश्वाग्निः तमुक्थ्यम् उक्थैःशस्त्रैःशं-सनीयं बृहस्पतिं बृहतोयज्ञस्यपतिं पालकतयास्वामिनं विप्रं मेधाविनंश्रोतारंस्तोत्रशस्त्रादि-मन्त्रवाक्यंशृण्वन्तमतिथिम् आतिथेयपूजार्हतयायदृच्छयाप्राप्तं रघुष्यदं लघुस्यदं रघुःलघुः स्य-दोवेगोऽस्येति क्षिप्रगन्तारम् यद्वा स्यदशब्देन अध्वालक्ष्यते रघुस्यदः क्षिप्रगन्तेत्यर्थः तमेवं-विधगुणयुक्तमग्निमवसे अस्माकंरक्षणाय हवामहे कुशिकगोत्रजावयमाह्वयामः किंच मनुषो मनुष्यस्यदेवतातये यज्ञार्थंत्वामाह्वयामः ॥ शुभ्रं शुभदीप्तावित्यस्मात् स्फायितञ्चिवञ्चीत्या-दिनाकर्तरिरक् कित्त्वाद्गुणाभावः प्रत्ययस्वरः । मातरिश्वानं निर्माणहेतुत्वान्मातान्तरिक्षं तत्र श्वसितिप्राणितीतिमातरिश्वाग्निः श्वन्नुक्षन्नित्यादिनामातरिश्वन्शब्दस्यकन्प्रत्ययान्तत्वेननिपात-नात्पूर्वपदान्तोदात्तत्वम् । उक्थ्यम् उक्थेनस्तोत्रेणस्तुत्यः तत्रभवइत्यर्थे भवेछन्दसीतियत् ति-त्स्वरितमितिस्वरितः । देवतातये देवएवदेवतातिः स्वार्थिकस्तातिल् देवतातिशब्देनयज्ञोल-क्ष्यते तत्संप्रदानकत्वाद्यज्ञस्य लित्स्वरः । रघुष्यदं स्यन्दूप्रस्रवणेइत्यस्मात्घञितदन्तः स्यदश-ब्दः स्यदोजवेइतिनिपातनादनुनासिकलोपः कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ २ ॥

अथतृतीया

**अश्वोनक्रन्दञ्जनिंभिःसमिध्यतेवैश्वानरःकुशिकेभिर्युगेयुंगे ।**
**सनोअग्निःसुवीर्यंस्वश्व्यंदधातुरत्नममृतेषुजागृंविः ॥ ३ ॥**

अश्वः । न । क्रन्दन् । जनिंऽभिः । सम् । इध्यते ।
वैश्वानरः । कुशिकेभिः । युगेऽयुगे । सः । नः । अग्निः ।
सुऽवीर्यम् । सुऽअश्व्यम् । दधातु । रत्नम् । अमृतेषु । जागृंविः ॥ ३ ॥

योवैश्वानरोऽग्निःकुशिकेभिः स्तोत्रंकुर्वाणैर्होत्रादिभिर्युगेयुगेप्रतिदिनं समिध्यते आज्या-द्याहुतिप्रक्षेपेणसम्यग्दीप्यते तत्रदृष्टान्तः—अश्वोनेति यथाजातोऽश्वः क्रन्दन् हेषारवंकुर्वन् ज-निभिर्जनयित्रीभिर्वडवाभिः स्तन्यप्रदानेनप्रतिदिनंसम्यक्पोष्यते तद्वत् अमृतेषु मरणधर्मरहि-तेषुदेवेषुमध्ये जागृविः ज्वालयाजाग्रद्दीप्यमानः सोऽग्निः सुवीर्यं शोभनापत्ययुक्तं स्वश्व्यं शो-भनाश्वादिपशुयुक्तंरत्नमुत्तमंधनंनोऽस्माकंदधातुविदधातु प्रयच्छतु ॥ युगेयुगे नित्यवीप्सयोरि-

तिद्विर्वचनं परस्याम्रेडितत्वादनुदात्तत्वेपूर्वपदप्रकृतिस्वरत्वम् ॥ स्वश्व्यं अश्वशब्दः क्वन्प्रत्ययान्तआद्युदात्तः बहुव्रीहौ आद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम् यकारोपजनश्छान्दसः यद्वा अश्वेषुसाधवः अश्व्याः तत्रसाधुरितियत् यतोनावइत्याद्युदात्तत्वम् बहुव्रीहौपूर्वोक्तस्वरः । दधातु दधातेर्लोटिरूपम् । रत्नं रमुक्रीडायामित्येतस्माद्रमेस्तनेति अधिकरणेनप्रत्ययः तकारश्चान्तादेशः रमन्तेस्मिन्निितिरत्नं निदित्यनुवृत्तौ आद्युदात्तः । जागृविः क्रिन्प्रत्ययान्तः नित्त्वादाद्युदात्तः ॥ ३ ॥

अथचतुर्थी–

प्रयन्तुवाजास्तविषीभिरग्नयःशुभेसंमिश्लाःपृषतीरयुक्षत ।
बृहदुक्षोमरुतोविश्ववेदसःप्रवेपयन्तिपर्वताँअदाभ्याः ॥ ४ ॥

प्र । यन्तु । वाजाः । तविषीभिः । अग्नयः । शुभे ।
सम्ऽमिश्लाः । पृषतीः । अयुक्षत । बृहत्ऽउक्षः । मरुतः ।
विश्वऽवेदसः । प्र । वेपयन्ति । पर्वतान् । अदाभ्याः ॥४॥

वाजाः वेगवन्तोग्नयः प्रयन्तु जलमभिलक्ष्यगछन्तु गताश्चतेग्नयः तविषीभिर्बलयुक्तैर्मरुद्भिः शुभेजलेसंमिश्राः परस्परंसंगताःसन्तः पृषतीःबिंदूनयुक्षत अयुञ्जन् जलबिन्दूनकुर्वन् यद्वा वाजावेगवन्तोग्नयःतविषीभिर्बलयुक्तैर्मरुद्भिः जलमनुलक्ष्यप्रयन्तुगछन्तु तेचमरुतः शुभेजलेसंमिश्राः अग्निभिःसंगताः सन्तः पृषतीश्चित्रवर्णावाहनरूपावडवाः अयुक्षत रथेमेघभेदनार्थे ताअयौक्षुः रथारुढास्तोविश्ववेदसः प्राणिकृतकर्माभिज्ञानयुक्ताः अदाभ्याः केनाप्यतिरस्कार्याः मरुतः एवंविधावायवः बृहदुक्षः प्रभूतजलसेक्तॄन् पर्वतान्मेघान्प्रवेपयन्ति यथाप्रभूतावृष्टिर्भवति तथामेघान्चालयन्ति ॥ तविषीभिः तवगतावितिसौत्रो धातुः अस्मात्तवेर्णिद्वेतिटिषच्निच्च तवन्तिसंचरन्तिआकाशेइतितविषावायवः टिड्ढाणञितिङीप् अत्रलिङ्गव्यत्ययः नित्त्वादाद्युदात्तः । पृषतीः पृषुसेचने पृपालनपूरणयोरिति इत्यस्माद्वावर्तमाने पृषन्महद्बृहदितिनिपातनादतिप्रत्ययःशतृवद्भवति उगितश्चेतिङीप् पर्षन्तीतिपृषतः शीकराः पृणन्ति पालयन्तीतिपृषत्योवडवाः । अयुक्षत युजिर्योगेइत्यस्यलुङिसिचिरूपं निघातः । बृहदुक्षः उक्षसेचनेइत्यस्मात्क्विप् कृदुत्तरपदप्रकृतिस्वरः । वेपयन्ति टुवेपृकम्पने निघातः ।

पर्वतान् पर्वपूरणेइत्यस्मात् भृमृदृशीत्यादिनाअतच् पर्वतिपूरयतिभूमिमुदकेनेतिपर्वतोमेघः व्यत्ययेनाद्युदात्तः ॥ ४ ॥

अथपञ्चमी—

अग्निश्रियोमरुतोविश्वकृष्टयआत्वेषमुग्रमवईमहेवयम् ।
तेस्वानिनोरुद्रियावर्षनिर्णिजःसिंहानहेषक्रतवःसुदानवः॥५।२६।

अग्निऽश्रियः । मरुतः । विश्वऽकृष्टयः । आ । त्वेषम् ।
उग्रम् । अवः । ईमहे । वयम् । ते । स्वानिनः । रुद्रियाः ।
वर्षऽनिर्निजः । सिंहाः । न । हेषऽक्रतवः । सुऽदानवः ॥५॥२६॥

अग्निश्रियः वैद्युतमग्निंश्रयन्तोविश्वकृष्टयः विश्वस्यवृक्षादेः कृष्टिराकर्षणंनमनोन्नमनादिलक्षणंकर्मयेभ्योभवतितेविश्वकृष्टयः एवंविधायेमरुतोविद्यंते तेषांचमरुतां त्वेषं दीप्तमुग्रमुद्गूर्णम् अवोरक्षणम् आईमहे कुशिकावयमासमंतात्याचामहे ते मरुतः रुद्रियारुद्रपुत्राः वर्षनिर्णिजः निर्णिक्शब्दोरूपवाची निर्णिग्वव्रिरितितन्नामसुपाठात् वर्षणरूपःस्वभावोयेषांतेवर्षनिर्णिजोवर्षकाः हेषक्रतवः हेषारवस्यक्रतुःकरणंयेषांते कृतहेषारवाः सिंहान सिंहाइव स्वानिनः शब्दवन्तः एवंविधास्तेमरुतः सुदानवः सुष्ठुजलस्यदातारोभवन्ति ॥ अग्निश्रियः श्रिञ् सेवायां वचिप्रच्छीत्यादिनाक्विप् सम्प्रसारणाभावः धातोर्दीर्घश्च जसि इयङादेशः कृत्स्वरः । उग्रं गम्लृगतौ उत्पूर्वः ऋज्रेन्द्राग्रेतिनिपातनाद्रक्प्रत्ययः मकारलोपः उपसर्गस्यान्तलोपश्च उद्गच्छतीत्युग्रः प्रत्ययस्वरः । ईमहे ईकान्त्यादिषु व्यत्ययेनात्मनेपदम् अदादित्वाच्छपोलुक् निघातः । स्वानिनः स्वानःघञन्तः तद्वन्तः अतइनिठनावितीनिः प्रत्ययस्वरः । रुद्रियाः रुद्रशब्दाच्छान्दसोघः तस्येयादेशः प्रत्ययस्वरः ॥ ५ ॥

॥ इतितृतीयस्यप्रथमेषड्विंशोवर्गः ॥२६॥

अथषष्ठी—

व्रातंव्रातंगणंगणंसुशस्तिभिरग्नेर्भामंमरुतामोजईमहे ।
पृषदश्वासोअनवभ्रराधसोगन्तारोयज्ञंविदथेषुधीराः ॥ ६ ॥

व्रातम्ऽव्रातम् । गणम्ऽगणम् । सुशस्तिऽभिः । अग्नेः ।
भामम् । मरुताम् । ओजः । ईमहे । पृषत्ऽअश्वासः ।
अनवभ्रऽराधसः । गन्तारः । यज्ञम् । विदथेषु । धीराः ॥६॥

कुशिकावयम् अग्नेर्भामंभासकंमरुतामोजस्तेजः व्रातंव्रातं व्रातेव्रातेप्रतिसमूहं गणङ्गणंगणेगणे महतिसमूहे क्रियमाणाभिःसुशस्तिभिःशोभनाःशस्तयः स्तुतयोयैर्मन्त्रैः क्रियन्तेतेसुशस्तयः तैर्मन्त्रैरीमहे तादृशंमारुतंतेजोयाचामहे यद्वा व्रातंव्रातंवारकंगणङ्गणंमरुतांसप्तगणान् ओजोबलं याचामहे पृषदश्वासः पृषत्यश्चित्रवर्णाः अश्वायेषांतेतादृशाः अनवभ्रराधसः नविद्यतेअवभ्रंशो यस्यतदनवभ्रम् अनवभ्रंराधोधनंयेषांतेअनवभ्रधनाः संपूर्णधनाइतियावत् धीराः कर्माभिज्ञास्ते मरुतःविदथेषुयज्ञेषुयज्ञंयजनीयंहविरभिलक्ष्यगन्तारोगमनशीलाभवन्ति ॥ गणङ्गणं गणसंख्याने पचाद्यच् नित्यवीप्सयोरितिद्विर्वचनम् । परस्याम्रेडितत्वादनुदात्तत्वेपूर्वपदस्वरः । सुशस्तिभिः बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । भाम भादीप्तावित्यस्मादर्तिस्तुसुहुसृस्वित्यादिनामन् नित्स्वरः । ओजः उब्जआर्जवे उब्जेर्बलेबलोपश्चेत्यसुन् तत्सन्नियोगेनबकारलोपः आर्धधातुकलक्षणोगुणः नित्स्वरः । ईमहे ईकान्त्यादिषु निपातः । अनवभ्रराधसः अनवभ्रं नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् उत्तरपदबहुव्रीहौपूर्वपदस्वरः । गन्तारः ताच्छीलिकस्तृन् । विदथेषु विदज्ञाने रुदिविदिभ्यांकिदित्यथप्रत्ययः कित्त्वादगुणः विदन्त्यस्मिन्कर्मजातमध्वर्य्वादयइतिविदथोयज्ञः प्रत्ययस्वरः ॥ ६ ॥

अथसप्तमी—

अग्निरस्मिजन्मनाजातवेदाघृतंमेचक्षुरमृतंमआसन् ।
अर्कस्त्रिधातूरजसोविमानोजस्रोघर्मोहविरस्मिनाम ॥७॥

अग्निः । अस्मि । जन्मना । जातऽवेदाः । घृतम् । मे ।
चक्षुः । अमृतम् । मे । आसन् । अर्कः । त्रिऽधातुः रजसः ।
विऽमानः । अजस्रः । घर्मः । हविः । अस्मि । नाम ॥ ७ ॥

साक्षात्कृतपरतत्त्वस्वरूपोग्निः दृचेनस्वात्मनः सर्वात्मकत्वानुभवमाविष्करोति हेकुशिकाः भोक्तृभोग्यभावेनद्विविधमिदंसर्वंजगदेतावद्वाइदमन्नंचैवान्नादश्च सोमएवान्नमग्निरन्नादइतिश्रुतेः ।

तत्रसकलभोक्तृवर्गरूपेणान्नादोग्निः सचअग्निवाय्वादित्यभेदेनत्रिधाभूत्वापृथिव्यन्तरिक्षद्युलोकानधितिष्ठति । तदुक्तंवाजसनेयके—सत्रेधात्मानंव्यभजत् आदित्यंतृतीयंवायुंतृतीयमिति । तत्रसोग्निरहंजन्मनैवजातवेदाअस्मि श्रवणमननादिसाधननिरपेक्षेणस्वभावतएवसाक्षात्कृतपरतत्त्वस्वरूपोस्मि घृतंमेचक्षुःयदेतद्विश्वस्यविभासकंममस्वभावभूतप्रकाशात्मकंचक्षुस्तद्घृतम् इदानीमत्यन्तंदीप्तंयदेतदमृतंकर्मफलंदिव्यादिव्यविविधविषयोपभोगात्मकंतन्मेमम आसन्नास्येवर्तते सकलभोक्तृरूपात्मनास्वयमेवावस्थानात् एवंस्वात्मनःपृथिव्यधिष्ठातृरूपतामभिधायवाय्वात्मनान्तरिक्षाधिष्ठातृतामाह—अर्कोजगत्स्रष्टाप्राणः सोर्चन्नचरत् तस्यार्चतआपोजायन्तअर्चतैवमेकमभूदिति तदेवार्कस्यार्कत्वमितिश्रुतेः सप्राणोहंत्रिधातुःत्रेधात्मानंविभज्यतत्रवाय्वात्मनारजसोन्तरिक्षस्यविमानःविमाताअधिष्ठातास्मि ,तथाआदित्यरूपेणद्युलोकाधिष्ठातृतामाह—अजस्रोघर्मइति अजस्रःअनुपक्षीणोघर्मः प्रकाशात्माद्युलोकाधिष्ठाताआदित्योप्यहमस्मि एवंभोक्तृरूपमात्मनोनुसंधायभोग्यरूपतामप्यनुसंधत्ते यद्धविर्भोग्यंप्रसिद्धमस्तितदप्यहमेवास्मि यद्वा अहमग्निरस्मिदेवानांहविष्प्रापणादञ्जनादिगुणयुक्तोस्मि किञ्च जन्मनाउत्पत्त्याजातवेदाः जातज्ञानोस्मि उत्पत्तिक्षणएवसर्वज्ञोहमस्मि अथवा जातंसर्वंस्वात्मरूपतयावेत्तीतिजातवेदाः सर्वात्मकइत्यर्थः तत्कथमित्युच्यते—घृतंमेचक्षुः यदेतद्घृतंप्रसिद्धमस्तितन्मेचक्षुःस्थानीयं यथालोके चक्षुर्भासकम् एवंघृतंमयिप्रक्षिप्तंज्वालामुत्पादयत् ममभासकम् अमृतंप्रभारूपंयदमृतमविनाशिज्योतिःमेममआसन आस्येवर्तते त्रिधातुः प्राणापानव्यानात्मनात्रिधावर्तमानःअर्कोर्चनीयोयःप्राणोस्तिसोप्यहमस्मि तथारजसोन्तरिक्षस्यविमानःविशेषेणमातापरिच्छेत्तावायुश्चाहमस्मि किञ्च अजस्रोघर्मः नैरन्तर्येणसन्तापकारीसूर्यश्चाहमस्मि किंबहुना आज्यपुरोडाशादिरूपंयदेतद्धविरस्तितदुपलक्षितंसर्वमप्यहमस्मि सर्वंखल्विदंब्रह्मेतिश्रुतेः । नामशब्दः प्रसिद्धौ तदनेनाग्नेःसर्वात्मकत्वप्रतिपादनेनपरब्रह्मत्वमुक्तंभवति ॥ चक्षुः चक्षिङ्व्यक्तायांवाचि उसिन्नित्यनुवृत्तौ चक्षेःशिच्चेत्युसिन् शिद्भावात्ख्याञादेशाभावः नित्स्वरः । आसन् आस्यशब्दस्य पद्दन्नोमासित्यादिनाआसन्नादेशः सुपांसुलुगितिसप्तम्यालुक् । विमानः माङ्माने कृत्यल्युटोबहुलमितिकर्तरिल्युट् लित्स्वरः । अजस्रः जसुमोक्षणे नञ्पूर्वः नमिकम्पिस्म्यजसकमहिंसदीपोरइतिताच्छीलिकोरप्रत्ययः नञ्पूर्वोजसिर्नैरन्तर्येवर्तते नञ्स्वरः जसउपक्षयेवा ॥ ७ ॥

अथाष्टमी—

त्रिभिः॑ प॒वित्रै॒रपु॑पो॒द्ध्य१॒॑र्कं हृ॒दा म॒तिं ज्योति॒रनु॑ प्रजा॒नन् ।
वर्षि॑ष्ठं॒ रत्न॑मकृत स्व॒धाभि॒रादिद्द्यावा॑पृथि॒वी पर्य॑पश्यत् ॥ ८॥

त्रि॒ऽभिः । प॒वित्रैः । अपु॑पोत् । हि । अ॒र्कम् । हृदा । म॒तिम् ।
ज्योतिः । अनु॑ । प्र॒ऽजा॒नन् । वर्षि॑ष्ठम् । रत्न॑म् । अ॒कृ॒त ।
स्व॒धाभिः॑ । आत् । इत् । द्यावा॑पृथि॒वी इति॑ । परि॑ । अ॒प॒श्य॒त् ॥८॥

सर्वात्मकोग्निः हृदा अन्तःकरणवृत्त्या मतिंमननीयंज्योतिः स्वप्रकाशरूपंपरब्रह्मज्योतिः अनुप्रजानन् श्रवणमननादिक्रमेणप्रकर्षेणसंशयाविपर्यासभावनाबुद्धिनिरासेनस्वात्मरूपतयाजानानःसन् पवित्रैःपावनैस्त्रिभिरग्निवायुसूर्यैरर्कमर्चनीयंनिरतिशयानन्दलक्षणंस्वात्मानमपुपोद्धि तेभ्योपिनिर्मलतयापावनंपरिचिच्छेदखलु यथादशापवित्रेणसोमंपावयतितद्वत् एवंजानानोग्निः वर्षिष्ठमुत्तमंस्वात्मानंस्वधाभिः स्वेनलोकान्दधातीतिस्वधाः तैरग्निवायुसूर्यैः रत्नंरमणीयम् अकृत अकार्षीत्आदित् अनन्तरमेवमात्मनिविज्ञातेसति द्यावापृथिवीतत्रपरिकल्पिते द्यावापृथिव्यौतदुपलक्षितंसर्वंजगच्चपर्यपश्यत् परितःसर्वतःस्वात्मतयादर्शत् आत्मनिविज्ञातेसर्वमिदंविज्ञातंभवतीतिश्रुतेः ॥ पवित्रैःपूञ्पवनेइत्यस्मात्कर्तरिचर्षिदेवतयोरितिदेवतायामभिधेयायांकर्तरि इत्रप्रत्ययः पुनन्तीतिपवित्राअग्निवायुसूर्याः प्रत्ययस्वरः । अपुपोत्पूञ्पवनेइत्यस्य यङ्लुगन्तस्यरूपं संज्ञापूर्वकस्यविधेरनित्यत्वादभ्यासस्यगुणाभावः युष्मितुपरंछन्दसीतिननिघातः । अर्कम् अर्चपूजायां कृदाधारार्चिकलिभ्यःकइतिकप्रत्ययः । हृदा हृदयशब्दस्यपद्दन्नोमासित्यादिनाहृदादेशः । मतिं मनज्ञानेइत्यस्मान्मन्त्रेवृषेषपचेत्यादिनाकर्मणिक्तिन्उदात्तः अकृत करोतेर्लुङिसिच् तस्यह्रस्वादङ्गादितिलोपः । द्यावापृथिवी देवताद्वन्द्वेचेत्युभयपदप्रकृतिस्वरः ॥ ८ ॥

अथनवमी—

श॒तधा॑रमु॒त्समक्षी॑यमाणंविप॒श्चितं॑पि॒तरं॒वक्त्वा॑नाम् ।
मे॒ळिंमद॑न्तंपि॒त्रोरु॒पस्थे॒तंरो॑दसीपिपृतंसत्य॒वाचम् ॥९॥२७॥

श॒त॒ऽधा॑रम् । उ॒त्सम् । अक्षी॑यमाणम् । वि॒पः॒ऽचित॑म् । पि॒तर॑म् ।
वक्त्वा॑नाम् । मे॒ळिम् । मद॑न्तम् । पि॒त्रोः । उ॒पऽस्थे॑ । तम् ।
रो॒द॒सी॒ इति॑ । पि॒पृ॒तम् । स॒त्य॒ऽवाच॑म् ॥ ९ ॥ २७ ॥

यस्मादुपाध्यायाद्विश्वामित्रोवैश्वानराख्यंपरब्रह्माज्ञासीत् तमिममुपाध्यायमनयर्चास्तौति-हेरोदसी द्यावापृथिव्यौ शतधारं अपरिमितजलधारायुक्तम् अक्षीयमाणं नकदापिविच्छिन्नप्रवाहम् उत्सं लुप्तोपममेतत् उत्समिवसततप्रवाहोपेतं स्रोतइवाविच्छिन्नवाक्सरणीसमेतं विपश्चितंमेधाविनं सकलशास्त्राभिज्ञं पितरंशिष्याणांविद्योपदेशेनपालकं वक्त्वानांवक्तव्यानां वेदवाक्यानांमेळिंमेलकंनानाशाखागतानांवाक्यानामेकस्मिन्नर्थेसंकलय्यवक्तारं पित्रोर्द्यावापृथिव्योरुपस्थेसमीपेमदन्तंज्ञानातिशयेनहृष्यन्तम् अतएवसत्यवाचम् आज्ञातार्थाभावात्परप्रतारणे च कारणाभावात्सत्यवादिनं तमिममुपाध्यायंपिपृतम् अपेक्षितफलप्रदानेनसंपूर्णंकुरुतम् यद्वा पालयतम् ॥ उत्सम् उन्दीक्लेदने अस्मादुन्दिमिगुधिकुषिभ्यःकिदितिसप्रत्ययः कित्त्वान्नकारलोपः उनत्तीत्युत्सः व्यत्ययेनाद्युदात्तः । विपश्चितं विशेषेणपातीतिविपा वाक् विपोवाचश्चिनोतीति क्विप् ह्रस्वस्यपितीतितुक् तत्पुरुषेकृतिबहुलमितिबहुलवचनाद्द्वितीयायाअलुक् कृदुत्तरपदस्वरः । वक्त्वानां वचपरिभाषणेइत्यस्मात्कृत्यार्थेतवैकेन्केन्यत्वनइतित्वन्प्रत्ययः चोःकुरितिकुत्वम् नित्स्वरः । मेळिम् मिलिःसंपर्कार्थोधातुः अस्मादौणादिकइप्रत्ययः । रोदसी आमन्त्रितत्वान्निघातः । पिपृतम् पृपालनपूरणयोः छान्दसोजुहोत्यादिः अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वम् निघातः ॥ ९ ॥

॥ इतितृतीयस्यप्रथमेसप्तविंशोवर्गः ॥ २७ ॥

प्रवोवाजाइतिपञ्चदशर्चंपञ्चदशंसूक्तम् अत्रानुक्रमणिका—प्रवःपञ्चोनागायत्रंत्वृतव्यावाद्याइति विश्वामित्रऋषिः छन्दोगायत्री अग्निर्देवता आद्याऋतुदेवत्यावा प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रेछन्दस्यस्यसूक्तस्यविनियोगः प्रवोवाजाउपसद्यायेतिसूत्रितम् । आभिप्लविकेषूक्थ्येषु प्रवोवाजाइतिवैकल्पिकःस्तोत्रियस्तृचः सूत्रितम्—प्रवोवाजाअभिद्यवोभिप्रयांसिवाहसेति । सूक्तस्याद्यासामिधेनी सूत्रितञ्च—प्रवोवाजाअभिद्यवोग्नआयाहिवीतयइति । सामिधेनीषुसमिध्यमानइत्येका सूत्रितञ्च—समिध्यमानोअध्वरेसमिद्धोअग्नआहुतेतिद्वेइति । आधाने तृतीयायामिष्टौ सामिधेनीषु इध्यमानेद्वत्योर्मध्येपृथुपाजाइतिद्वेधाय्ये सूत्रितञ्च—प्रागुपोत्तमायाःपृथुपाजाअमर्त्यइतिद्वेइति । एवमन्यत्रापि यत्रयत्रसप्तदशसामिधेन्यः तत्रतत्रैतेधाय्येइतिद्रष्टव्यम् । विषुवतिएकविंशतिःसामिधेन्यः तत्रपृथुपाजाअमर्त्यइतिषडृचोधाय्याः पृथुपाजाअमर्त्यइतिषड्धाय्याःसामिधेनीनामितिसूत्रम् महाव्रतेपिपञ्चविंशतिसंख्याकाःसामिधेन्यः तत्रान्यताःषडृचोद्रष्टव्याः अग्नीषोमप्रणयनेहोतादेवोअमर्त्यइतितृचः सूत्रितञ्च—होतादेवोअमर्त्यः

पुरस्तादुपत्वाग्नेदिवेदिवइति । ईळेन्योनमस्यास्तिरइतितिस्रःसामिधेन्यः सूत्रितश्च—ईळेन्योनमस्यस्तिरोग्निंदूतंवृणीमहइति ।

तस्मिन्सूक्तेप्रथमा—

**प्रवोवाजाअभिद्यवोहविष्मन्तोघृताच्या । देवाञ्जिगातिसुम्नयुः ॥ १ ॥**

प्र । वः । वाजाः । अभिऽद्यवः । हविष्मन्तः । घृताच्या ।
देवान् । जिगाति । सुम्नऽयुः ॥ १ ॥

हेऋतवःवाजाःवजन्तिगच्छन्तीतिवाजामासाः अभिद्यवः अभितोद्यवोदिवसायेषुइति अभिद्यवोर्धमासाश्च हविष्मन्तोहविर्भाजोदेवाः घृताच्या घृतमञ्चतिक्षारयतीतिघृताचीगौः तथाचतैत्तिरीयकम्—देवाहविष्मन्तोगौर्घृताचीति । यद्वा हविष्मन्तःहविषःक्षीरादेःप्रदातारः पशवः घृताच्याघृतमञ्चतिप्राप्नोतीतिघृताचीस्रुक् तथावाजसनेयकम्—पशवोहविष्मन्तःस्रुग्घृताचीति । तयाघृताच्यासहिताहविष्मन्तोदेवाःपशवश्चमासाअर्धमासाश्चैतेसर्वेवोयुष्माकंयज (मा) नार्थं प्र प्रभवन्ति तेषुवाजादिषुप्रभवत्सुसत्सु सुम्नयुः सुखमात्मनइच्छन् यजमानोदेवान्जिगाति यज्ञद्वारादेवान्प्राप्नोति उक्तार्थेतैत्तिरीयकब्राह्मणम्—प्रवोवाजाइत्यन्वाहमासावैवाजाअर्धमासाअभिद्यवोदेवाहविष्मन्तोगौर्घृताचीयज्ञोदेवाञ्जिगातियजमानःसुम्नयुरिति । आग्नेयपक्षे हेअग्ने वः त्वदर्थमभिद्यवोभिगतदीप्तयोहविष्मन्तआसादितैश्चरुपुरोडाशादिभिःसहितावाजाअन्नानि समिल्लक्षणानिघृताच्या जुह्वासहप्रक्रम्यन्ते प्रवोवाजाइत्यन्वाहान्नंवैवाजइति देवान्देव त्वं समानमन्यत् ॥ अभिद्यवः बहुव्रीहौपूर्वपदप्रकृतिस्वरः । घृताच्या घृक्षरणदीप्त्योरित्यस्मादञ्जिघृषिभ्यःक्तइतिकर्मणिक्तः घृतमाज्यमञ्चतीतिऋत्विग्दधृगित्यादिनाक्विन् अनिदितामित्युपधालोपः अञ्चतेश्चोपसंख्यानमितिङीप् चावितिपूर्वपदान्तोदात्तत्वम् । जिगाति गातिर्गत्यर्थः छान्दसोजुहोत्यादिः निघातः । सुम्नयुः सुम्नंसुखमात्मनइच्छन्नितिसुपआत्मनःक्यच् क्याच्छन्दसीत्युप्रत्ययः प्रत्ययस्वरः ॥ १ ॥

अथद्वितीया—

**ईळेअग्निंविपश्चितंगिरायज्ञस्यसाधनम् । श्रुष्टीवानंधितावानम् ॥ २ ॥**

---

१ तै० सं० २. ५. ७. । तै० सं० २. ५. ७. ।

ई॒ळे । अ॒ग्निम् । वि॒पः॒ऽचित॑म् । गि॒रा । य॒ज्ञस्य॑ ।
साध॑नम् । श्रु॒ष्टी॒ऽवान॑म् । धि॒तऽवा॑नम् ॥ २ ॥

विपश्चितंमेधाविनंयज्ञस्यसाधनंनिर्वाहकं श्रुष्टीवानं सुखवन्तम् यद्वा वेगवन्तं धितावानं वानंवननीयंधनंधितं निहितं यस्यतंनिहितधनं तमिममग्निंगिरास्तुतिलक्षणयावाचाईळे वि-श्वामित्रोहं स्तौमि ॥ ईळे ईडस्तुतौ । श्रुष्टीवानं वनसंभक्तावित्यस्माद्विच् श्रुष्टीवनतीतिश्रुष्टीवा कृदुत्तरपदस्वरः । धितावानं दधातेर्निष्ठायांधिरादेशश्छान्दसः वनसंभक्तौकर्मणिघञ् बहुव्रीहौ निष्ठेतिधितशब्दस्यपूर्वनिपातः पूर्वपदप्रकृतिस्वरः यद्वा उभयत्रछन्दसीवनिपावितिवनिप् ॥ २ ॥

अथतृतीया—

**अग्ने॑श॒केम॑ते॒व॒यंयमं॑दे॒वस्यं॑वा॒जिनः॑ । अति॒द्वेषां॑सितरेम ॥३॥**

अग्ने॑ । श॒केम॑ । ते॒ । व॒यम् । यम॑म् । दे॒वस्य॑ । वा॒जिनः॑ ।
अति॑ । द्वेषां॑सि । त॒रे॒म ॥ ३ ॥

हेअग्ने वाजिनःसंभृतहविष्काः वयंदेवस्यद्योतमानस्यते तवयमंयमनमायज्ञसमाप्तेरत्राव-स्थानंकर्तुंशकेम शक्याःस्म वाजिनोवेगवतोदेवस्येतिवायोजनीयम् ततःकारणाद्द्वेषांसि अस्म-दीयानिपापानि अतितरेम पापेभ्यउत्तीर्णाभवेम ॥ शकेम शकॢशक्तावित्यस्मादाशीर्लिङि लि-ङ्याशिष्यङित्यङ्प्रत्ययः यासुट्सलोपेयादेशयलोपगुणसलोपाः आमन्त्रितस्याविद्यमानत्वे-नपादादित्वादनिघातः उदात्तनिवृत्तिस्वरः । यमम् यमउपरमेइत्यस्मात्भावेघञ् यमउपरमे इतिनिपातनाद्वृद्ध्यभावः ञित्स्वरः । तरेम तॄप्लवनतरणयोरिति प्रार्थनेलिङिरूपं निघातः ॥३॥

अथचतुर्थी—

**स॒मि॒ध्यमा॑नोअध्व॒रे॒३॒ऽग्निः पा॑व॒कईड्यः॑ । शो॒चिष्के॑शस्तमी॑महे ।४।**

स॒म्ऽइ॒ध्यमा॑नः । अ॒ध्व॒रे । अ॒ग्निः । पा॒व॒कः । ईड्यः॑ ।
शो॒चिःऽके॑शः । तम् । ई॒म॒हे॒ ॥४॥

योग्निःअध्वरेयज्ञेसमिध्यमानःघृताद्याहुतिभिःसम्यक्प्रज्वाल्यमानः अतएवशोचिष्केशः ज्वालाकेशः पावकः शोधकः ईड्यःस्तोतृभिःप्रशस्योभवति तमिममभिमतफलार्थम् ईमहे वयं याचामहे ॥ ईड्यः ईडस्तुतावित्यस्मात्ण्यत् अस्यतिस्त्वरितामितिस्वरितत्वेप्राप्ते ईडवन्देत्यादिनाद्युदात्तत्वम् । ईमहे ईकान्त्यादिष्वित्ययंधातुरत्रयाञ्चार्थः निघातः ॥ ४ ॥

अथपञ्चमी—

पृथुपाजाअमर्त्योघृतनिर्णिक्स्वाहुतः।अग्निर्यज्ञस्यंहव्यवाट्।५।२८।

पृथुऽपाजाः । अमर्त्यः । घृतऽनिर्निक् । सुऽआहुतः ।
अग्निः । यज्ञस्य । हव्यऽवाट् ॥५॥२८॥

पृथपाजाः प्रभूततेजोरूपः अमर्त्यःमरणधर्मरहितः घृतनिर्णिक् घृतस्यविलापनद्वारा शोधनंयेनेतिघृतनिर्णिक् स्वाहुतः सुष्टु होत्रादिभिःसम्यगिष्टः एवंभूतोग्निः यज्ञस्यज्योतिष्टोमादेर्हव्यवाट् हव्यानांवोढाभवति ॥ पृथुपाजाः कृदुत्तरपदस्वरः । स्वाहुतः जुहोतेःकर्मणिक्तः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । हव्यवाट् वहश्चेतिण्विः ॥ ५ ॥

॥ इतितृतीयस्यप्रथमेष्टाविंशोवर्गः ॥ २८ ॥

अथषष्ठी—

तंसबाधोयतस्रुचइत्थाधियायज्ञवन्तः। आचक्रुरग्निमूतये ॥ ६ ॥

तम् । सऽबाधः । यतऽस्रुचः । इत्था । धिया । यज्ञऽवन्तः ।
आ । चक्रुः । अग्निम् । ऊतये ॥ ६ ॥

सबाधःरक्षोघ्नमन्त्रोच्चारणेनतद्विषयबाधयासहवर्तन्तइतिसबाधःयज्ञवन्तः यजनीयहविर्युक्ताः यतस्रुचः यताः संयताः स्रुचोजुह्वाद्यायैस्तेयतस्रुचऋत्विजः इत्था इत्थमनेनप्रकारेणाक्रियमाणयाधियास्तुत्यातमेवंभूतमाग्निम् ऊतयेराक्षसवधाद्रक्षणाय आ अभिमुखंचक्रुः कुर्वन्ति ॥ सबाधःबाधृविलोडनेइत्यस्माक्तिप् कृदुत्तरपदस्वरः । इत्था इदंशब्दात्प्रकारार्थेइदमस्थमुः त-

स्यसुपांसुलुगितिडादेशः उदात्तनिवृत्तिस्वरेणान्तोदात्तः । चक्रुः डुकृञ्करणेइत्यस्यलिट्युसि यणादेशेकृते तस्यद्विर्वचनेचीतिस्थानिवद्भावाद्द्विर्वचनं निघातः ॥ ६ ॥

अथसप्तमी–

होतादेवोअमर्त्यःपुरस्तादेतिमायया । विदथानिप्रचोदयन् ॥ ७ ॥

होता । देवः । अमर्त्यः । पुरस्तात् । एति । मायया ।
विदथानि । प्रऽचोदयन् ॥ ७ ॥

होताहोमनिष्पादकः अमर्त्योमरणधर्मरहितःदेवोद्योतमानःविदथानिवेदितव्यानिकर्माणिप्रचोदयन् प्रकर्षेणप्रेरयन् सोग्निःमाययाकर्मविषयाभिज्ञानेनयुक्तःसन् पुरस्तात्कर्मप्रारम्भकालेएव एति आस्मानागच्छति ॥ एति इण्गतौ । मायया माङ्मानेशब्देचेत्यस्मान्माच्छाससिसूभ्योयइतिकर्तारिकर्मणिवायप्रत्ययः मिमीतेजानीते कर्म मीयतेनयेतिवामाया कर्मविषयज्ञानं प्रत्ययस्वरः । विदथानि विद्ज्ञानेइत्यस्मात् रुदिविदिभ्यांकिदितिकर्मण्यथप्रत्ययः कित्वाद्गुणः प्रत्ययस्वरः ॥ ७ ॥

अथाष्टमी–

वाजीवाजेषुधीयतेध्वरेषुप्रणीयते । विप्रोयज्ञस्यसाधनः ॥ ८ ॥

वाजी । वाजेषु । धीयते । अध्वरेषु । प्र । नीयते । विप्रः ।
यज्ञस्य । साधनः ॥ ८ ॥

वाजीबलवानग्निःवाजेषुयुद्धेषुधीयतेदेवैःशत्रुहननार्थंनिधीयते किञ्च अध्वरेषुअग्निहोत्रादिषुप्रणीयतेध्वर्य्वादिभिःप्रकर्षेणाहवनीयादिस्थानेषुप्रक्षिप्यते अतएवविप्रोमेधावीसन्नग्निः यज्ञस्याग्निहोत्रादेःसाधनःसाधकोभवति ॥ धीयते डुधाञ्धारणपोषणयोरित्यस्मात्कर्मणियक् घुमास्थागापेत्यादिनाईत्वं निघातः । नीयते णीञ्प्रापणेइत्यस्यकर्मणियकिरूपम् उपसर्गादसमासेपिणोपदेशस्येतिणत्वम् । साधनः साधसंसिद्धौ नन्द्यादित्वात्कर्तरिल्युः लित्स्वरः ॥ ८ ॥

अथनवमी–

धियाचक्रेवरेण्योभूतानांगर्भमादधे । दक्षस्यपितरंतना ॥ ९ ॥

धिया । चक्रे । वरेण्यः । भूतानाम् । गर्भम् । आ । दधे ।
दक्षस्य । पितरम् । तना ॥ ९ ॥

योग्निर्धिया आधानपवमानेष्टिरूपेणकर्मणाचक्रे आहवनीयरूपतयाकृतोभूत् अतएववरेण्यःसर्वैर्यजमानैःकर्माङ्गत्वेनवरणीयः यश्चाग्निः भूतानांस्थावरजङ्गमात्मकानांभूतजातानामन्तर्गर्भस्वात्मानमेवगर्भरूपतयाआदधे सर्वत्रदधार पितरं सर्वस्यजगतःपालकं तमिममग्निंदक्षस्यदक्षप्रजापतेःतना तनया वेदिरूपाभूमिः दर्शपूर्णमासाग्निहोत्रादिकर्मसिद्ध्यर्थंधारयति भूमेर्दक्षदुहितृत्वेमन्त्रवर्णः—अदितिर्ह्यजनिष्टदक्षयादुहितातवेति ॥ चक्रे करोतेःकर्मणिलिटिरूपम् । गर्भं गॄनिगरणेइत्यस्माद्‌र्तिगॄभ्यांभन्निितिभन् गिरतिगीर्यतेवागर्भः निंत्वादाद्युदात्तः । दधेद्धातेर्लिटिरूपम् । पितरं पारक्षणे नप्तृनेष्टृइत्यादिनातृजन्तत्वेननिपातनादित्त्वं पातिपालयतीति पितापालकः चित्स्वरः । तना यलोपश्छान्दसः ॥ ९ ॥

अथदशमी–

नित्वांदधेवरेण्यंदक्षस्येळासहस्कृत।अग्नेसुदीतिमुशिजंम् ।१०।२९।

नि । त्वा । दधे । वरेण्यम् । दक्षस्य । इळा । सहःऽकृत ।
अग्ने । सुऽदीतिम् । उशिजंम् ॥ १० ॥ २९ ॥

उक्तोर्थोनयर्चाविव्रियते सहस्कृत मथनाख्येनबलेननिष्पन्न हेअग्ने सुदीतिंशोभनदीप्तियुक्तम् उशिजं पुरोडाशादिहविःकामयमानं यद्वा कर्मार्थिभिः काम्यमानम् अतएव वरेण्यं तैर्वरणीयं त्वा एवंविधंत्वां दक्षस्यदुहिताइळावेद्यादिलक्षणाभूमिः निदधे अग्निहोत्रादिकर्मसमृद्ध्यर्थंनितरांदधार ॥ इळा ईडस्तुतौ पुंसिसंज्ञायामित्यत्रप्रायिकवचनात्स्त्र्यर्थेपिघप्रत्ययः ह्रस्वश्छान्दसः संज्ञापूर्वकस्यविधेरनित्यत्वाद्गुणः यद्वा घञर्थेकविधानमित्यधिकरणेकः ईड्य-

१ ऋ० सं० ८. ३. १.।

तेस्तूयन्तेस्यांयजमानैर्देवाइतीळाभूमिः उदात्तनिवृत्तिस्वरेणान्तोदात्तः प्रत्ययस्वरः । उशिजं वशकान्तावित्यस्माद्वशःकिच्चेती जिप्रत्ययः कित्त्वात्सम्प्रसारणम् । वष्टि हविः कामयते उश्यते काम्यतेकर्मार्थिभिरितिवाउशिगग्निः प्रत्ययस्वरः ॥१०॥

॥ इतितृतीयस्यप्रथमेएकोनात्रिंशोवर्गः ॥ २९ ॥

अथैकादशी–

अग्निंयन्तुरंमप्तुरंमृतस्ययोगेवनुषः । विप्रावाजैःसमिन्धते ॥ ११ ॥

अग्निम् । यन्तुरम् । अप्ऽतुरम् । ऋतस्य । योगे । वनुषः ।
विप्राः वाजैः । सम् । इन्धते ॥ ११ ॥

वनुषः कर्मसिद्ध्यर्थं संभजमानाः विप्रामेधाविनोध्वर्य्वादयः यन्तुरंसर्वस्यनियन्तारं यद्वा क्षिप्रंगन्तारम् अप्तुरम् अपांप्रेरकंतामिममग्निम् ऋतस्यसत्यभूतस्य ज्योतिष्टोमादेः योगे प्रयोगार्थं वाजैर्हविर्लक्षणैरन्नैः समिन्धते सम्यग्दीपयन्ति ॥ यन्तुरं वर्णव्यत्ययः यन्तारमित्यर्थः । अप्तुरं तुरत्वरणे अपस्तुतोर्तित्वरयतीतिक्विप् कृदुत्तरपदप्रकृतिस्वरः । योगे युजिर्योगे भावेघञ् चजोःकुघिण्ण्यतोरितिकुत्वं ञित्स्वरः । वनुषः वनषणसंभक्तौ जनेरुसिरित्यधिकारे बहुलवचनादस्मादप्युसिःप्रत्ययः प्रत्ययस्वरः । इन्धते ञिइन्धीदीप्तौ निघातः ॥ ११ ॥

अथद्वादशी–

ऊर्जोनपातमध्वरेदीदिवांसमुपद्यवि । अग्निमीळेकविक्रतुम् ॥१२॥

ऊर्जः । नपातम् । अध्वरे । दीदिऽवांसम् । उप । द्यवि ।
अग्निम् । ईळे । कविऽक्रतुम् ॥१२॥

ऊर्जोनपातंहविर्लक्षणैरन्नैःसमिध्यमानत्वेनान्नस्यपुत्रम् यद्वान्नस्याहुत्यर्थं यथान्नादाहुतिः आहुतेरादित्यआदित्यादग्निरिति उपद्यवि अन्तरिक्षसमीपे दीदिवांसमतिशयेनदीप्यमानंकविक्रतुं कवयोमेधाविनोध्वर्य्वादयोमथनेनक्रतवः कर्तारोयस्येति अध्वर्य्वादिभिर्निष्पाद्यमानंतामिममग्निमध्वरेस्मिन्यज्ञेईळेस्तुतिलक्षणाभिर्गीर्भिरहंस्तौमि ऊर्जः ऊर्जबलेइत्यस्माद्भ्राजभासेत्यादिना

ताच्छीलिकःक्विप्प्रत्ययः ऊर्जयतिशरीरमितिऊर्क्अन्नं सावेकाचइतिविभक्तेरुदात्तत्वम् । द्य-वि द्युतदीप्तावित्यस्मादौणादिकोडुन्प्रत्ययः द्योततेऽर्कसंबन्धादितिद्युरन्तरिक्षं ञित्स्वरः ईळे ईडस्तुतावित्यस्यलटिरूपम् ॥ १२ ॥

अथत्रयोदशी—

ईळेन्यो॑नम॒स्य॑स्ति॒रस्तमां॑सिद॒र्श॒तः । सम॒ग्निरि॑ध्यते॒वृषा॑ ॥१३॥

ई॒ळेन्यः॑ । न॒म॒स्यः॑ । ति॒रः । तमां॑सि । द॒र्श॒तः । सम् ।
अ॒ग्निः । इ॒ध्य॒ते॒ । वृषा॑ ॥ १३ ॥

ईळेन्यः स्तोतृभिरीड्यः अतएवनमस्यःसर्वैर्नमस्कार्यःतमांसितिरः ध्वान्तानिस्वप्रभाभिस्तिरस्कुर्वन् दर्शतःकमनीयतयासर्वैर्दर्शनीयः तादृशोग्निः वृषा यजमानस्यकामानांवर्षितासमिध्यते आहुतिप्रक्षेपेणप्रज्वाल्यते उक्तार्थेवाजसनेयकम्—ईडेन्योह्येषनमस्योह्येषास्तिरस्तमांसिदर्शेसामिद्धइति ॥ ईळेन्यः ईडस्तुतौ कृत्यार्थेतवैकेन्केन्यत्वनइतिकेन्यप्रत्ययः प्रत्ययस्वरः । नमस्यः नमस्यतेरचोयादितियत् अतोलोपयलोपौ तित्स्वरितमितिस्वरितः । दर्शतः दृशिर्प्रेक्षणे इत्यस्मात् भृमृदृशीत्यादिनाकर्मण्यतच्प्रत्ययः चित्स्वरः । वृषा वृषुसेचनेइत्यस्मात् कनिन्युवृषीत्यादिनाकनिन् कित्त्वाद्गुणः नित्त्वादाद्युदात्तः ॥ १३ ॥

अथचतुर्दशी—

वृषो॑अ॒ग्निःस॒मि॑ध्य॒तेऽश्वो॒नदे॑व॒वाह॑नः । तंह॒विष्म॑न्तईळते ॥ १४ ॥

वृ॒षो इति॑ । अ॒ग्निः । सम् । इ॒ध्य॒ते॒ । अश्वः॑ । न । दे॒व॒ऽवाह॑नः ।
तम् । ह॒विष्म॑न्तः । ई॒ळ॒ते॒ ॥ १४ ॥

वृषौवृषैवकामानांवर्षितादेववाहनः देवान्हवींषिवावहतिप्रापयतीतिदेववाहनः तत्रदृष्टान्तः—अश्वोनेति यथाश्वोराजानंवाहयतिस्वपुरंप्रापयतीतिवाहनमश्वः तद्वत्वाहनभूतोयोग्निः समिध्यते आहुतिप्रदानेनसम्यग्दीप्यते तं तादृशमग्निंहविष्मन्तः संभृतहविष्कायजमानाईळतेकर्मसिद्ध्यर्थंस्तुवन्ति । वृषा उ गुणः उञमवलम्ब्यप्रगृह्यसंज्ञा देववाहनः वहप्रापणेइत्यस्मात्ण्यन्तान्नन्द्यादित्वात्कर्तरिल्युःलित्स्वरः समासेकृदुत्तरपदस्वरः ॥ ईळते ईडस्तुतौ ॥१४॥

अथपञ्चदशी—

वृषणंत्वावयंवृषन्वृषणःसमिधीमहि। अग्नेदीद्यतंबृहत् ॥१५॥३०॥

वृषणम्। त्वा। वयम्। वृषन्। वृषणः। सम्। इधीमहि।
अग्ने। दीद्यतम्। बृहत् ॥ १५ ॥ ३० ॥

वृषन्कामानांवर्षितः हेअग्ने वृषणःवृषाणःघृताद्याहुतीनांसेक्तारोवयंवृषणमाहुतिद्वाराउदकस्य सेक्तारं तदाहस्मृतिः—अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते । आदित्याज्जायतेवृष्टिर्वृष्टेरन्नं ततःप्रजाःइति। दीद्यतं दीप्यमानं बृहत् अतएवमहान्तमिममग्निंसमिधीमहि सम्यग्दीपयामः ॥ इधीमहि ञिइन्धीदीप्तावित्यस्यप्रार्थनेलिङिनकारलोपश्छान्दसः निपातः ॥ दीद्यतं दीदेतिर्दीप्तिकर्मा तस्यशतरिरूपम् अभ्यस्तानामादिरित्याद्युदात्तत्वम् ॥ १५ ॥

॥ इतितृतीयस्यप्रथमेत्रिंशोवर्गः ॥ ३० ॥

अग्नेजुषस्वेतिषडृचंषोडशंसूक्तंवैश्वामित्रमाग्नेयम् अत्रानुक्रमणिका—अग्नेजुषस्वषट् तृतीयाद्युष्णिक्त्रिष्टुप्जगत्यइति पूर्वसूक्तेगायत्रंत्वित्युक्तत्वादेतदपिगायत्रं तृतीयातूष्णिक् चतुर्थीत्रिष्टुप् पञ्चमीजगती अग्नेजुषस्वेतिसवनीयपुरोडाशेस्विष्टकृतः प्रातःसवनीयानुवाक्या सूत्रितञ्च—अथस्विष्टकृतोग्नेजुषस्वनोहविरिति । अतिरात्रेआश्विनशस्त्रेपरिहितेसार्तिचमसगणैः सहाश्विनोर्द्विकपालःपुरोडाशःसर्वहुतोहोतव्यः यदिपुरोडाशमवशेष्यस्विष्टकृतंकुर्युस्तस्यस्विष्टकृतः पुरोळाअग्नइत्येषायाज्या यद्येतस्यपुरोळाशस्यस्विष्टकृतंचरेयुः पुरोळाअग्नेपचतइतिसूत्रितम् माध्यंदिनेसवनेसवनीयपुरोडाशेस्विष्टकृतोनुवाक्या माध्यंदिनेसवनइत्येषा सूत्रितञ्च—अग्नेजुषस्वनोहविर्माध्यंदिनेसवनेजातवेदइति । तृतीयसवने सवनीयपुरोडाशस्यस्विष्टकृतोनुवाक्या अग्नेतृतीयेसवनेइत्येषा सूत्रितञ्च—अग्नेतृतीयेसवनेहिकानिषइत्यनुसवनमनुवाक्येति आश्विनपुरोडाशस्यस्विष्टकृतोयाज्याअग्नेवृधानइत्येषा सूत्रितञ्च—अग्नेवृधानआहुतिमितिसंयाज्येति।

तस्मिन्सूक्तेप्रथमा—

अग्नेजुषस्वनोहविःपुरोळाशंजातवेदः। प्रातःसावेधियावसो ॥१॥

अग्ने। जुषस्व। नः। हविः। पुरोळाशम्। जातऽवेदः।
प्रातःऽसावे। धियावसो इति धियाऽवसो ॥ १ ॥

विश्वामित्रःस्तौति—जातवेदः जातप्रज्ञ धियावसो धियास्तोत्रेणवसुधनंयस्माद्भवतिसोयं धियावसुः तस्यसंबुद्धिःकर्मानुरूपधनप्रद हे अग्ने प्रातःसावे अग्निष्टोमेप्रातःसवनेनोस्मत्संबन्धिपुरोळाशं पुरोडाशाख्यंहविःजुषस्वसेवस्व ॥ जुषीप्रीतिसेवनयोरित्यस्यलोटिरूपम् आमन्त्रितस्याविद्यमानवत्त्वेनपादादित्वादनिघातः । प्रातःसावे षुञ्अभिषवेसवनंसावः भावेघञ् थाथघञ्क्ताजबित्रकाणामित्यन्तोदात्तत्वम् । धियावसो विभक्त्यलोपश्छान्दसः आमन्त्रितत्वान्निघातः ॥ १ ॥

अथद्वितीया—

पुरोळाअग्नेपचतस्तुभ्यंवाघापरिष्कृतः । तंजुषस्वयविष्ठ्य ॥ २ ॥

पुरोळाः । अग्ने । पचतः । तुभ्यम् । वा । घ । परिऽकृतः ।
तम् । जुषस्व । यविष्ठ्य ॥ २ ॥

यविष्ठ्य युवतम हेअग्ने यःपुरोळाः पुरोडाशन्तेध्वर्य्वादयएनमितिपुरोळाः पुरोडाशः पचतःकपालयोःपक्वोस्तिसचतुभ्यंत्वदर्थंपरिष्कृतोवाव पर्यग्निकरणादिभिरलङ्कृतःखलु तमिमंपुरोडाशंजुषस्वसेवस्व ॥ पुरोळाः दाशृदाने इत्यस्मात्पुरस्पूर्वान्मन्त्रेश्वेतवहोक्थशस्पुरोडाशोण्विन्निति कर्मणिण्विनिकृतेश्वेतवहादीनांडस्पदस्येतिडस्प्रत्ययेकृते अवयाःश्वेतवाःपुरोडाश्चेतिनिपातनाद्दकारस्यडत्वं पुरोळाशन्तएनमितिपुरोळाः पुरोडाशः डकारस्यळकारोबह्वृचसांप्रदायिकः कृदुत्तरपदप्रकृतिस्वरः । पचतः डुपचष्पाकेइत्यस्माद्भृमृदृशीत्यादिनाकर्मण्यतच्प्रत्ययः पच्यतेसाविति पचतःपक्वः चित्स्वरः । घ ऋचितुनुघेत्यादिनासंहितायांदीर्घः । परिष्कृतः संपर्युपेभ्यः करोतौभूषणेइतिकरोतेःसुडागमः गतिरनन्तरइतिगतेः प्रकृतिस्वरत्वम् । यविष्ठ्य यविष्ठएवयविष्ठ्यः पादार्घाभ्यांचेत्यत्रचकारेणवस्वादीनांस्वार्थेयत्प्रत्ययस्योपादानाद्यविष्ठ्येत्यत्रस्वार्थिकोयत्प्रत्ययः आमन्त्रितत्वान्निघातः ॥ २ ॥

अथतृतीया—

अग्नेवीहिपुरोळाशमाहुतंतिरोअह्न्यम् । सहसःसूनुरस्यध्वरेहितः ॥ ३ ॥

अग्ने । वीहि । पुरोळाशम् । आऽहुतम् । तिरःऽअह्न्यम् ।
सहसः । सूनुः । असि । अध्वरे । हितः ॥ ३ ॥

हेअग्ने तिरोअह्न्यं अह्नितिरोहितेसति आहुतमासमन्ताद्धुतंपुरोळाशंपुरोडाशाख्यंहविः वीहि भक्षय अध्वरोस्मिन्यज्ञेसहसःसूनुःबलस्यपुत्रस्त्वंहितोसि आहवनीयादिस्थानेष्वस्माभिर्निहितोसि तस्माद्वीहीतिशेषः ॥ वीहि वीकान्त्याद्यिष्वित्यस्यलोटिरूपंहेरपित्त्वादन्तोदात्तत्वम् । आहुतम् जुहोतेःकर्मणिक्ते गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । तिरोअह्न्यं अह्निभवमह्न्यं भवेच्छन्दसीतियत् तिरोभूतमह्न्यंयस्मिन्कालेसतिरोअह्न्यःरात्रिकालइत्यर्थः कालाध्वनोरत्यन्तसंयोगेइतिद्वितीया प्रकृत्यान्तःपादमव्यपरेइत्येङःप्रकृतिभावः बहुव्रीहौपूर्वपदप्रकृतिस्वरः ॥ ३ ॥

अथचतुर्थी–

माध्यंदिनेसवनेजातवेदःपुरोळाशमिहकवेजुषस्व ।
अग्नेयह्वस्यतवभागधेयंनप्रमिनन्तिविदथेषुधीराः ॥४॥

माध्यंदिने । सवने । जातऽवेदः । पुरोळाशम् । इह । कवे ।
जुषस्व । अग्ने । यह्वस्य । तव । भागऽधेयम् । न । प्र । मिनन्ति ।
विदथेषु । धीराः ॥ ४ ॥

कवे मेधाविन् हेजातवेदः इहास्मिन्नग्निष्टोमाख्येकर्मणितत्रचमाध्यंदिनेमध्यंदिनसम्बन्धिनिसवनेपुरोडाशंमाध्यंदिनसवनीयपुरोडाशंजुषस्वसेवस्व हेअग्ने विदथेषुयज्ञेषुधीराःकर्मकुशलाःअध्वर्य्वादयः यह्वस्य यान्तिप्राप्नुवन्तिदेवाहवींष्यनेनेतियह्वोमहानग्निः यह्वस्यमहतस्तवभागधेयंभागतयापरिकल्पितमिमंपुरोडाशंनप्रमिनन्ति नहिंसन्ति किन्तु तुभ्यंप्रयच्छन्ति तेजुषस्वेतिशेषः ॥ माध्यंदिने मध्यंदिनस्येदमित्यर्थेउत्सादित्वादञ् ञित्त्वादादिवृद्धिः ञित्त्वादेवाद्युदात्तत्वम् । यह्वस्य याप्रापणेइत्यस्मात्शेवयह्वजिह्वेतिनिपातनात्करणेवन्प्रत्ययः हुगागमधातुह्रस्वौ यान्त्यनेनेतियह्वोग्निः व्यत्ययेनान्तोदात्तः । भागधेयं भागशब्दात्स्वार्थे भागरूपनामभ्योधेयप्रत्ययोवक्तव्यइतिधेयप्रत्ययः प्रत्ययस्वरः । मिनन्ति मीञ्हिंसायामित्यस्यक्र्यादित्वात्श्ना तस्मिन्मीनातेर्निगमेइतिह्रस्वत्वम् हिनुमीनेतिणत्वंनभवति सर्वविधीनांछन्दसि विकल्पितत्वादिति ॥ ४ ॥

अथपञ्चमी–

अग्नेतृतीयेसवनेहिकानिषःपुरोळाशंसहसःसूनवाहुतम् ।
अथादेवेष्वध्वरंविपन्ययाधारत्नवन्तममृतेषुजागृविम् ॥५॥

अग्ने । तृतीये । सवने । हि । कानिषः । पुरोळाशम् । सहसः । सूनो इति । आऽहुतम् । अथ । देवेषु । अध्वरम् । विपन्यया । धाः । रत्नऽवन्तम् । अमृतेषु । जागृविम् ॥ ५ ॥

सहसःसूनो बलस्यपुत्र हेअग्ने त्वंतृतीयेसवनेआहुतंहूयमानंपुरोळाशं कानिषःकामयसे अथानन्तरम् अध्वरम् अविनाशिनं रत्नवन्तं रत्नशब्देनस्वर्गादिलक्षणमुत्तमंफलमभिधीयते तद्वन्तं फलप्रदं जागृविं जागरणकारिणं प्रातःसोमोजागृविर्भवतिस्वप्ननिवारकइति तमिमंसोमं विपन्यया स्तुतिलक्षणयावाचा स्तुतस्त्वं अमृतेषुमरणधर्मरहितेषुदेवेष्विन्द्रादिषु धाः धेहि ॥ तृतीये त्रिशब्दात्पूरणात्रेःसंप्रसारणमितितीयप्रत्ययः तत्संनियोगेनसंप्रसारणं हलइतिदीर्घोनभवति अणइतितत्रानुवर्तनात् प्रत्ययस्वरः । कानिषः कनीकान्त्यादिष्वित्यस्यलेटिसिब्बहुलमिति सिप् तस्यआर्धधातुकत्वादिडागमः कान्तिरभिलाषः अकारस्याकारोव्यत्ययेन हियोगादनिघातः धातुस्वरः । विपन्यया पनस्तुतौ भावेक्विप् विपनंयातीतिकप्रत्ययः प्रत्ययस्वरः । धाः दधातेश्छान्दसेलुङिरूपम् पादादित्वादनिघातः । जागृविं क्विनप्रत्ययान्तोजागृविशब्दःनित्स्वरः ॥ ५ ॥

अथषष्ठी–

अग्नेवृधानआहुतिंपुरोळाशंजातवेदः । जुषस्वतिरोअह्न्यम् ।६।२१।

अग्ने । वृधानः । आऽहुतिम् । पुरोळाशम् । जातऽवेदः । जुषस्व । तिरःऽअह्न्यम् ॥ ६ ॥ २१ ॥

जातवेदः जातप्रज्ञ हेअग्ने वृधानःआहुतिभिर्वर्धमानस्त्वंतिरोअह्न्यम् अह्निभवमह्न्यं दिवसकृत्यं तिरोभूतमह्न्यंयस्मिन्कालेसतिरोअह्न्यःरात्रिकालः तस्मिन्काले आहुतिम् आहुतंपुरोळाशंपुरोडाशाख्यंहविर्जुषस्वसेवस्व ॥ आहुतिं जुहोतेःकर्मणिक्तिन् तादौचनितिकृत्यतावितिगतेःप्रकृतिस्वरत्वम् । जुषस्व जुषीप्रीतिसेवनयोरित्यस्यलोटिरूपम् ॥ ६ ॥

॥ इतितृतीयस्यप्रथमेएकत्रिंशोवर्गः ॥ २१ ॥

अस्तीदमितिषोडशर्चंसप्तदशंसूक्तंवैश्वामित्रम् अत्रानुक्रमणिका—अस्तीदंषोळशाद्यानुष्टुब्दशमीद्वादश्योनुष्टुभः षष्ठ्येकादश्युपान्त्येचजगत्यः पञ्चम्यृतिगभ्योवेति आद्याचतुर्थीद-

शमीद्वादश्योनुष्टुभः षष्ठीएकादशीचतुर्दशीपंचदशीजगत्यः शिष्टाअष्टौत्रिष्टुभः पञ्चमीमन्थतानरइत्येषाऋत्विग्देवताका अग्निदेवत्याकावा शिष्टाअग्निदेवताकाः सूक्तविनियोगोलैङ्गिकः वरुणप्रघासेष्वग्निप्रणयनेइळायास्त्वापदइत्येषा सूत्रितञ्च—इळायास्त्वापदेवयमग्नेविश्वेभिःस्वनीकदेवैरित्यर्धर्चआरभेदिति । तत्रैवाग्निप्रणयनेउत्तरवेद्यामग्नौस्थापितेसतिसीदहोतरित्येषा । निहितेग्नौसीदहोतःस्वउलोकेचिकित्वानितिसूत्रितम् । अरण्यामग्निसमारोपणेअयन्तेयोनिरित्येषासूत्रितञ्च—अयन्तेयोनिर्ऋत्वियइत्यरणीगार्हपत्येप्रतितपेत्पाणीवेति ।

तस्मिन्सूक्तेप्रथमा—

**अस्तीदमधिमन्थनमस्तिप्रजननंकृतम् ।**
**एतांविश्पत्नीमाभराग्निंमन्थामपूर्वथा ॥ १ ॥**

अस्ति । इदम् । अधिऽमन्थनम् । अस्ति । प्रऽजननम् । कृतम् ।
एताम् । विश्पत्नीम् । आ । भर । अग्निम् । मन्थाम । पूर्वऽथा ॥ १ ॥

यजमानोध्वर्य्वादीन्प्रतिब्रूते । इदमध्यर्थंपूपशकलमस्ति अधिमन्थनमरण्याउपरिनिधेयंमन्थनसाधनभूतंदण्डरज्ज्वादिकमस्ति प्रजननमग्निजननसाधनभूतंदर्भपिञ्जूलैकृतंसंपादितमस्ति यद्वा प्रजननंमन्थनदण्डस्यविन्यासविशेषः यस्मादेतानियूपशकलादीन्यग्निमन्थनसाधनान्याहृतानिसन्ति तस्मात् विश्पत्नीं विशांप्रजानामग्निसाध्याग्निहोत्रद्वारास्वर्गादिफलसंपादनेनपालयित्रीमेतामरणीमाभर हेअध्वर्यो आहर तस्यामाहृतायांपूर्वथा यथा वयमाधानकालेअग्निममथ्नीम यथावा पूर्वेमहर्षयोग्निममन्थिषुः तद्वदयमनमग्निमस्मिन्कर्मणिमन्थाम मन्थनेननिष्पन्नंकरवाम ॥ अस्तीतिपदद्वयस्यपादादित्वादनिघातः । विश्पत्नीं पतिशब्दस्यविभाषासपूर्वस्येतिङीप् नकारश्चान्तादेशः परादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वम् । भर हृञ् हरणे इत्यस्य लोटि हृग्रहोर्भश्छन्दसीतिभकारः । मन्थाम मन्थविलोडनेइत्यस्यलोटिरूपं निघातः । पूर्वथा पूर्वशब्दादिवार्थेप्रत्नपूर्वविश्वेमात्थाल्छन्दसीतिथाल्प्रत्ययः लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् ॥ १ ॥

अथद्वितीया—

**अरण्योर्निहितोजातवेदागर्भइवसुधितोगर्भिणीषु ।**
**दिवेदिवईड्योजागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥ २ ॥**

अरण्योः । निऽहितः । जातऽवेदाः । गर्भःऽइव । सुऽधितः ।
गर्भिणीषु । दिवेऽदिवे । ईड्यः । जागृवत्ऽभिः । हविष्मत्ऽभिः ।
मनुष्येभिः । अग्निः ॥ २ ॥

जातवेदाःसर्वविषयज्ञानवानयमग्निःअरण्योर्निहितःदेवैर्यज्ञार्थंनितरांस्थापितोऽस्ति । अत्रदृष्टान्तः—गर्भइवेति यथागर्भोगर्भिणीषुस्त्रीषुसुधितःसुष्ठुनिहितोवर्ततेतद्वत् सतादृशोऽग्निः हविष्मद्भिःसंभृतहविष्कैः अतएवजागृवद्भिः कर्मणिजागरूकैर्मनुष्येभिर्मनुष्यैरस्माभिर्दिवेदिवेप्रत्यहमुत्पत्त्यर्थमीड्यः स्तुतिरूपाभिर्गीर्भिःस्तोतव्यः ॥ अरण्योः ऋगतौ अर्तिसृधृधम्यम्यश्यवितृभ्योऽनिरित्यादिनाऽनिप्रत्ययः प्रत्ययस्वरः । निहितः दधातेःकर्मणिनिष्ठायां दधातेर्हिरितिहिरादेशः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । सुधितः दधातेःकर्मणिनिष्ठा तस्मिन्सुधितवसुधितेत्यादिनानिपातनाद्धिइत्यादेशः । दिवेदिवे दिवुक्रीडादौ इगुपधलक्षणःकः नित्यवीप्सयोरितिद्विर्वचनम् तस्याम्रेडितत्वादनुदात्तत्वेपूर्वपदस्वरः । जागृवद्भिः जागृनिद्राक्षये इत्यस्यक्वसोरूपं द्विर्वचनप्रकरणेछन्दसिवेतिवक्तव्यामितिविकल्पितत्वाद्द्विर्वचनाभावः वसुस्रंसुध्वंस्वनडुहांदइतिवसोःसकारस्यदत्वं प्रत्ययस्वरः ॥ २ ॥

अथतृतीया—

उत्तानायामवभराचिकित्वान्त्सद्यःप्रवीतावृषणंजजान ।
अरुषस्तूपोरुशदस्यपाजइळायास्पुत्रोवयुनेऽजनिष्ट ॥ ३ ॥

उत्तानायाम् । अव । भर । चिकित्वान् । सद्यः । प्रऽवीता ।
वृषणम् । जजान । अरुषऽस्तूपः । रुशत् । अस्य । पाजः ।
इळायाः । पुत्रः । वयुने । अजनिष्ट ॥ ३ ॥

चिकित्वान् ज्ञानवानध्वर्युस्त्वम् उत्तानायामधरारण्याम् उत्तानशयायांमुत्तरारणिम् अवभर अधोमुखांधारय अनन्तरंसाधरारणिःसद्यःप्रवीतातदानीमेवानिषिक्तरेतस्कासती वृषणं कामानांवर्षकमग्निंजजान जनयतु आथास्याग्नेःरुशत् तमोविनाशयत् पाजस्तेजोमात्रंतत्राभूत् अनन्तरंअरुषस्तूपःआरोचमानतेजःसंघोपेतःइळायास्पुत्रःउत्तरवेद्यांउत्पन्नोऽग्निःवयुनेअरण्यांयोनिस्थाने अजनिष्ट अजनि ॥ जजान जनजननेइत्यस्यलोडर्थेलिटिबहुलमन्यत्रापिसंज्ञाछन्दसोरितिणिलोपः प्रत्ययान्तत्वाभावादाम्नभवति निघातः । अरुषस्तूपः नविद्यतेरुषः

क्रोधोयस्येत्यरुषः क्रोधराहित्येनरोचमानइत्यर्थः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् ष्टुञ्स्तुतौ स्तौतेर्दीर्घश्चेतिपप्रत्ययःकिच्चधातोर्दीर्घश्च १ स्तूयतेइतिस्तूपस्तेजःसंघःअरुषआरोचमानस्ते. जःसंघोयस्येतिबहुव्रीहौपूर्वपदप्रकृतिस्वरः । रुशत् रुशहिंसायांशतरिरूपम् । वयुने अजग-तिक्षेपणयोरित्यस्मादजियमिशीङ्भ्यश्चेत्युनन् नित्संज्ञकःअजतिवीयतेवावयुनमङ्गं प्रत्यय-स्यव्यत्ययेनाद्युदात्तत्वम् । अजनिष्ट जनीप्रादुर्भावेइत्यस्यलुङिसिचिरूपम् निघातः ॥ ३ ॥

अथचतुर्थी—

इळायास्त्वापदेवयंनाभापृथिव्याअधि ।
जातवेदोनिधीमह्यग्नेहव्यायवोळ्हवे ॥ ४ ॥

इळायाः । त्वा । पदे । वयम् । नाभा । पृथिव्याः । अधि ।
जातऽवेदः । नि । धीमहि । अग्ने । हव्याय । वोळ्हवे ॥ ४ ॥

जातवेदः जातप्रज्ञ हेअग्ने अध्वर्य्वादयोवयंपृथिव्याअधिभूमेरुपर्युत्तरवेद्यां नाभा नाभौ तस्यानाभिस्थानेमध्यप्रदेशे तदेवस्थानंविशिष्यते इळायाःपदे मानव्याइळायागोःपदे इडा-पदरूपेउत्तरवेद्यात्मकेस्थाने त्वात्वांहव्याय वोळ्हवे पुरोडाशादिलक्षणंहविर्वोढुंनिधीमहि नि-दधीमहि उक्तार्थेब्राह्मणम्—इळायास्त्वापदेवयंनाभापृथिव्याअधीत्येतद्वाइळायास्पदंयदुत्तरवे-दीनाभिर्जातवेदोनिधीमहीतिनिधास्यन्तोह्येनंभवन्त्यग्नेहव्यायवोळ्हवइतिहव्यंहिवक्ष्यन्भवतीति ॥ नाभा णहबन्धने इञित्यनुवृत्तौनहोभश्चेतीञ् मकारश्चान्तादेशः ञित्वादुपधावृद्धिः नह्यतीतिनाभिः मध्यस्थानं सुपांसुलुगितिसप्तम्याडादेशः ञित्स्वरः । धीमहि दधातेर्लिङि रूपम् लिङःसीयुडितिसीयुट् द्विर्वचनाभावश्छान्दसःनिघातः । वोळ्हवे वहप्रापणेइत्यस्मात्तु-मर्थेतवेन् सहिवहोरोदवर्णस्येतिधात्वकारस्यौत्वम् ढत्वधत्वष्टुत्वढलोपाः नित्त्वादाद्युदात्तः ॥ ४ ॥

अथपञ्चमी—

मन्थतानरःकविमद्वयन्तंप्रचेतसममृतंसुप्रतीकम् ।
यज्ञस्यकेतुंप्रथमंपुरस्तादग्निंनरोजनयतासुशेवम् ॥५॥३२॥

---

१ ऐ० ब्रा० १. २८.

मन्थत । नरः । कविम् । अद्वयन्तम् । प्रऽचेतसम् । अमृतम् ।
सुऽप्रतीकम् । यज्ञस्य । केतुम् । प्रथमम् । पुरस्तात् । अग्निम् ।
नरः । जनयत । सुऽशेवम् ॥ ५ ॥ ३२ ॥

नरः कर्मणांनेतारो हेअध्वर्य्वादयः कविंक्रान्तदर्शिनमद्वयन्तं द्वयमनाचरन्तम् अद्वैतंकुर्वाणंमनसावाचाचएकविधमेवकर्मकुर्वाणम् अतएवप्रचेतसं प्रकृष्टज्ञानोपेतममृतंमरणधर्मरहितं सुप्रतीकंशोभनैरङ्गैर्ज्वालाभिः समेतंतामिममग्निंमन्थतमन्थनेननिष्पादयत किञ्च हेनरः कर्मणांनेतारोध्वर्य्वादयः यूयं यज्ञस्यज्योतिष्टोमादेःकेतुंप्रज्ञापकं प्रथमंमुख्याङ्गभूतम् अग्निपूर्वकत्वात्सर्वेषामुत्तरक्रतूनां सुशेवं शोभनसुखोपेतं तादृशमाग्निंपुरस्तात्कर्मणःप्रारम्भेजनयत तमिममग्निमेवंविधगुणयुक्तंकुरुतेतिभावः ॥ मन्थत मन्थविलोडनेइत्यस्यलोटिरूपं पादादित्वादनिघातः । नरः णीञ्प्रापणेइत्यस्मात्नयतेर्डिच्चेतिऋप्रत्ययः डित्त्वाट्टिलोपः नयन्तिकर्माणिनीयन्तेकर्माण्येभिरितिवानरः आमन्त्रितत्वान्निघातः । अद्वयन्तं द्वयमिवाचरतीत्यर्थे सर्वप्रातिपदिकेभ्यःक्विब्वक्तव्यइत्याचारार्थेक्विप् द्वयति तस्यशतरिरूपंद्वयन्निति नद्वयन्अद्वयन् तं तत्पुरुषेनञ्स्वरः । सुप्रतीकम् बहुव्रीहौक्त्वादयश्चेत्युत्तरपदाद्युदात्तत्वम् । जनयत जनीप्रादुर्भावेइत्यस्यणिच् अतउपधायाइतिवृद्धौप्राप्तायां जनीजॄष्क्नसुरञ्जोमन्ताश्चेतिमित्त्वान्मितांह्रस्वइतिह्रस्वः निघातः । सुशेवम् शेवशब्दोवन्प्रत्ययान्तआद्युदात्तः बहुव्रीहौ आद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम् ॥ ५ ॥

॥ इतितृतीयस्यप्रथमेद्वात्रिंशोवर्गः ॥ ३२ ॥

अथषष्ठी—

**यदीमन्थन्तिबाहुभिर्विरोचतेश्वोनवाज्यरुषोवनेष्वा ।**
**चित्रोनयामन्नश्विनोरनिवृतःपरिवृणक्त्यश्मनस्तृणादहन् ॥ ६ ॥**

यदि । मन्थन्ति । बाहुऽभिः । वि । रोचते । अश्वः । न । वाजी ।
अरुषः । वनेषु । आ । चित्रः । न । यामन् । अश्विनोः । अनिऽवृतः ।
परि । वृणक्ति । अश्मनः । तृणा । दहन् ॥ ६ ॥

• यद्यध्वर्य्वादयः बाहुभिः स्वकीयैर्हस्तैरग्निं मन्थन्ति मथ्नन्ति ततः सजातोऽग्निः वनेषु काष्ठेषु वाजी शीघ्रगमनवान् अरुषः आरोचमानः सर्वेषां प्रीतिकरः सन् आविरोचते आसमन्ताद्विशेषेण दीप्यते तत्र दृष्टान्तः—अश्वो नेति यथाऽश्वो वनेषु वननीयेषु वाह्यालीस्थानेषु वेगवान् आरोचमानो वर्ततेतद्वत् तत्रैव दृष्टान्तान्तरम्-चित्रोनेति यथा यामन् यामनि वेगगमने अश्विनोर्देवभिषजोश्चित्रो नानाविधवर्णो रथ आरोचमानो वर्ततेतद्वत् अनिवृतः केनाप्यप्रतिबद्धगमनः सोयमग्निः अश्मनः उपलान् तृणानि च दहन्भस्मसात्कुर्वन्परिवृणक्ति दग्धस्थानानि परितो वर्जयति तादृशोऽग्निः आविरोचत इति पूर्वेणान्वयः ॥ मन्थन्ति मन्थ विलोडने अस्य लटि रूपं यद्वियोगादनिघातः । रोचते रुच दीप्तौ भौवादिकः लटि रूपं निघातः । यामन् या प्रापणे आतो मनिन्क्वनिब्वनिपश्चेति मनिन् सुपां सुलुगिति सप्तम्या लुक् नित्स्वरः । अनिवृतः वृञ् वरणे इत्यस्य निष्ठायां यस्य विभाषेतीट्प्रतिषेधः निपूर्वो वृणोतिर्निवारणे वर्तते नानिवृतः अनिवृतः नञ्स्वरः । वृणक्ति वृजी वर्जने रुधादिः चोः कुरिति कुत्वं निघातः । तृणा तृह हिसि हिंसायाम् तृहेः क्नः किवादगुणः हलोपश्च तृहेर्नेतक्त्वादिभिरिति तृणं नित्स्वरः ॥ ६ ॥

अथसप्तमी-

**जातो अग्नी रोचते चेकितानो वाजी विप्रः कविशस्तः सुदानुः ।**
**यं देवास ईड्यं विश्वविदं हव्यवाहमदधुरध्वरेषु ॥ ७ ॥**

जातः । अग्निः । रोचते । चेकितानः । वाजी । विप्रः । कविऽशस्तः ।
सुऽदानुः । यम् । देवासः । ईड्यम् । विश्वऽविदम् ।
हव्यऽवाहम् । अदधुः । अध्वरेषु ॥ ७ ॥

जातः मन्थनानन्तरमुत्पन्नः स च चेकितानः सर्वं जानानः सन् वाजी सततगमनस्वभावः विप्रः कर्माभिज्ञः अत एव कविशस्तः कविभिर्मेधाविभिर्होतृभिः स्तुतः सुदानुः सुष्ठु कर्मफलस्य दाता एवंविधोऽग्निः रोचते दीप्यते देवासो देवा इन्द्रादयः ईड्यं होत्रादिभिः स्तुत्यं विश्वविदं सर्वस्य जगतो वदितारं यमग्निमध्वरेषु ज्योतिष्टोमादियज्ञेषु हव्यवाहं हव्यानां वोढारम् अदधुः व्यदधुः सोऽग्निर्दीप्यत इति पूर्वेणान्वयः ॥ चेकितानः कित ज्ञाने इत्यस्य यङ्लुकि गुणो यङ्लुकोरित्यभ्यासस्य गुणः अभ्यस्तानामादिरित्याद्युदात्तत्वम् । कविशस्तः थाथघञ्क्ताजबित्रकाणामित्यन्तोदात्तत्वम् । अदधुः दधातेर्लङि झेः सिजभ्यस्तविदिभ्यश्चेति जुस् यद्वृत्तयोगादनिघातः अडागमस्वरः ॥ ७ ॥

अथाष्टमी—

सीदंहोतःस्वउंलोकेचिकित्वान्त्सादयायज्ञंसुकृतस्ययोनौ ।
देवावीर्देवान्हविषायजास्यग्नेबृहद्यजमानेवयोधाः ॥ ८ ॥

सीद । होतरिति । स्वे । ऊँ इति । लोके । चिकित्वान् ।
सादय । यज्ञम् । सुऽकृतस्य । योनौ । देवऽअवीः । देवान् । हविषा ।
यजासि । अग्ने । बृहत् । यजमाने । वयः । धाः ॥ ८ ॥

यजमानोब्रूते होतः होमनिष्पादक हेअग्ने स्वेस्वकीयेलोकेउत्तरवेद्यां नाभौसीद त्वंहोमनिमित्तमुपविशैव तथा चिकित्वान् ज्ञानवांस्त्वंसुकृतस्य सुकृतजन्योपभोगस्ययोनौस्थाने उत्तमलोके यज्ञंयज्ञस्यकर्तारं यजमानं सादय स्थापय किञ्च देवावीः देवान्हविष्प्रदानेनअवतीतिदेवावीः तादृशस्त्वं हविषापुरोडाशादिलक्षणेनहव्येनदेवान्यजासि यज अथत्वं यजमानेयागंकुर्वाणेमयिबृहत्प्रभूतं पशुपुत्रादिसमेतंवयोन्नंधाः विधेहि ॥ सीद सदेर्लोटिरूपम् । सादय सदेर्ण्यन्तस्यलोटिरूपं णिचःस्वरः । देवावीः अवरक्षणादिषु अवितृस्तृतन्त्रिभ्यईरितीप्रत्ययः कृदुत्तरपदप्रकृतिस्वरः । यजासि यजेर्लेट्याडागमः । धाः दधातेश्छान्दसेलुङिरूपम् ॥ ८ ॥

अथनवमी—

कृणोतधूमंवृषणंसखायोस्रेधन्तइतनवाजमच्छ ।
अयमग्निःपृतनाषाट्सुवीरोयेनदेवासोअसहन्तदस्यून् ॥ ९ ॥

कृणोत । धूमम् । वृषणम् । सखायः । अस्रेधन्तः । इतन ।
वाजम् । अच्छ । अयम् । अग्निः । पृतनाषाट् । सुऽवीरः । येन ।
देवासः । असहन्त । दस्यून् ॥ ९ ॥

यजमानोध्वर्य्वादीन्प्रतिब्रूते हेसखायः कर्मसहकारिणोध्वर्य्वादयोयूयंवृषणंकामानां वर्षितारं धूमं धुनोतिकम्पयतीतिधूमोग्निः एवंविधमग्निंकृणोतकुरुत मन्थनेनोत्पादयत यदाग्निर्नजायतेतदानीमाह अस्रेधन्तः अक्षीणाः अनुपरतसामर्थ्याः सन्तोयूयं वाजमन्थनलक्षणंयुद्धम् अच्छाभ्याभिमुख्येन इतन प्राप्नुत सुवीरः शोभनसामर्थ्योपेतोयमग्निः पृतनाषाट्

पृतनोपलक्षितंयुद्धं सहमानोभवति येनयुद्धंसहमानेनाग्निना देवासोदेवाः दस्यून् उपक्षपयितॄनसुरान् असहन्त अभ्यभवन् तस्मादक्षीणबलायूयं मन्थनं कुरुतेतिभावः ॥ कृणोत कृविहिंसाकरणयोरित्यस्यलोटि तप्रत्ययस्य तप्तनप्तनथनाश्चेतितबादेशः पित्वाद्गुणः पादादित्वादनिघातः उप्रत्ययस्वरः । धूमं धूञ्कम्पने इत्यस्मादिषियुधीन्धिदसिइत्यादिनामक् कित्त्वाद्गुणाभावः धुनोतिकम्पयतिदाह्यानीतिधूमोग्निः प्रत्ययस्वरः । इतन इण्गतावित्यस्यलोटि तप्रत्ययस्यतनादेशः निघातः । पृतनाषाट् षहमर्षणेइत्यस्मात् छन्दसिसहइतिण्विः णित्त्वादुपधावृद्धिः सहेःसाडःसइतिषत्वम् कृदुत्तरपदप्रकृतिस्वरः । असहन्त षहमर्षणेइत्यस्यलङि रूपम् यद्योगादनिघातः । दस्यून् दसुउपक्षये यजिमनिशुन्धिदसिजनिभ्योयुजितियुच् दस्यन्तीतिदस्यवः शत्रवः व्यत्ययेनाद्युदात्तत्वम् ॥ ९ ॥

अथदशमी–

**अ॒यन्ते॒योनि॑र्ऋ॒त्वियो॒यतो॑जा॒तोअरो॑चथाः ।**
**तंजा॒नन्न॑ग्नआसी॒दाथा॑नोवर्धया॒गिरः॑ ॥ १० ॥ ३३ ॥**

अ॒यम् । ते॒ । योनिः॑ । ऋ॒त्वियः॑ । यतः॑ । जा॒तः । अरो॑चथाः । तम् । जा॒नन् । अ॒ग्ने॒ । आ । सी॒द॒ । अथ॑ । नः॒ । व॒र्धय॒ । गिरः॑ ॥ १० ॥ ३३ ॥

हेअग्ने ऋत्वियः वसन्ताद्यृतौभवः अयमङ्गुल्यानिर्दिश्यमानःपलाशाश्वत्थादिमयः काष्ठविशेषोरणिः तेतवयोनिरुत्पत्तिस्थानं यतोरणेर्जातस्त्वमरोचथाः अशोभथाः जानंस्त्वंतमरणिरूपंकाष्ठविशेषमासीद तस्यामरण्यामारोपितःसन्नैरन्तर्येणतिष्ठ अथानन्तरंनोस्माकंगिरः स्तुतिलक्षणावाचःवर्धय यद्वा गीःशब्देनतद्वन्तो लक्ष्यन्ते तथास्तोतॄनस्मान्वर्धय पशुपुत्रादिभिः समृद्धान्कुरु ॥ योनिः युमिश्रणे वहिश्रीस्त्वादिनानिप्रत्ययः निदित्युक्तत्वादाद्युदात्तः । ऋत्वियः छन्दसिघसितिऋतुशब्दात्प्राप्तार्थेघस्प्रत्ययः घस्यइयादेशः सितीतिपदसंज्ञायामोर्गुणइतिभसंज्ञाधीनोगुणोनभवति प्रत्ययस्वरः । अरोचथाः रुचदीप्तावित्यस्यलङिरूपम् यद्वृत्तयोगादनिघातः । सीद षद्लृविशरणादिषु लोटि पाघ्रेत्यादिनासीदादेशः निघातः । अथा निपातस्यचेतिसांहितिकोदीर्घः । वर्धय वृधुवर्धने हेतुमतिणिच् निघातः ॥ १० ॥

॥ इतितृतीयस्यप्रथमेत्रयस्त्रिंशोवर्गः ॥ ३३ ॥

अथैकादशी–

तनूनपादुच्यतेगर्भआसुरोनराशंसोभवतियद्विजायते ।
मातरिश्वायदमिमीतमातरिवातस्यसर्गोअभवत्सरीमणि ।११।

तनूनपात् । उच्यते । गर्भः । आसुरः । नराशंसः । भवति ।
यत् । विऽजायते । मातरिश्वा । यत् । अमिमीत । मातरि ।
वातस्य । सर्गः । अभवत् । सरीमणि ॥ ११ ॥

योग्निर्यदागर्भः अरणीषु गर्भरूपतयावर्तते तदासोग्निस्तनूनपादुच्यते यष्टॄणांतनूःशरीराणिनपातयतिनदहतीतिव्युत्पत्तेः यद्वा तनूशब्देनापोऽभिधीयन्ते नपाच्छब्देनैकान्तरिताःप्रजाः तथाचापांनप्ताकथमेतदापः तताअन्तरिक्षेताभ्यओषधिवनस्पतयोजायन्ते तेभ्योह्येषइति । यत्यदाविजायतेविशेषेणप्रत्यक्षतयाजायतेतदाआसुरः कर्मविघ्नकारिणामसुराणांहन्ता अतएवनराशंसः नरैः कर्मणांनेतृभिरध्वर्य्वादिभिःशंसनीयोभवति यद्यदामातर्यन्तरिक्षेस्वंतेजःअमिमीत निर्मिमीते तदामातरिश्वाभवति मातर्यन्तरिक्षेश्वसितिचेष्टतइतिव्युत्पत्तेः एवंविधस्याग्नेःसरीमणिसरणे शीघ्रगमनेवातस्यवायोःसर्गःसृष्टिरभवद्भवति । एतदुक्तंभवति यदाग्निररणीषुगर्भरूपतयावर्ततेतदातनूनपान्नामकोभवति यदाजायतेतदानराशंसनामकोभवति यदान्तरिक्षेविद्योततेतदामातरिश्वनामकोभवतीति ॥ तनूनपात् तनुविस्तारेइत्यस्मात्कृषिचमितनिसनिखर्जिभ्यऊरित्यूप्रत्ययः व्यत्ययेनाद्युदात्तः । नपात् पारक्षणे पतॢगतौ वाण्यन्तात्क्विप् नपातिनपातयतीतिवानपात् नभ्राण्नपान्नवेदाइत्यादिनानिपातनान्नञःप्रकृतिभावः नञ्स्वरः तनूंनपातीतितनूनपात् कृदुत्तरपदप्रकृतिस्वरत्वेप्राप्ते उभेवनस्पत्यादिषुयुगपदिति उभयपदप्रकृतिस्वरत्वम् । आसुरः–असुरस्यायमासुरः अहितकारित्वेनसंबन्धी तस्येदमित्यण् प्रत्ययस्वरः । नराशंसः नॄनयेइत्यस्मात्ऋदोरबित्यप्प्रत्ययः प्रत्ययस्यापित्त्वान्नरशब्दआद्युदात्तः शंसुस्तुतावित्यस्माद्घञन्तआद्युदात्तः नरशब्दस्यान्येषामपिदृश्यतइतिदीर्घः वनस्पत्यादित्वादुभयोःप्रकृतिस्वरत्वम् । विजायते जनीप्रादुर्भावे दिवादित्वात्श्यन् धातुस्वरः । अमिमीत माङ्मानेशब्देचजुहोत्यादिः भृञामिदित्यभ्यासस्येत्वं यद्योगादनिघातः । सरीमणि सृगतौ हृभृसृस्तृसृभ्यइइतिइमनिन्प्रत्ययः नित्स्वरः ॥ ११ ॥

अथद्वादशी–

सुनिर्मथानिर्मथितःसुनिधानिहितःकविः ।
अग्नेस्वध्वराकृणुदेवान्देवयतेयज ॥ १२ ॥

सुनिःऽमथा । निःऽमथितः । सुनिधा । निऽहितः । कविः ।
अग्ने । सुऽअध्वरा । कृणु । देवान् । देवऽयते । यज ॥ १२ ॥

हेअग्ने कविर्मेधावी सुनिर्मथा शोभनेनमन्थनेननिर्मथितः नितरांमथितोसि तथा सुनिधा शोभनेननिहितोसि उत्तरवेद्यादिस्थानेसुनितरांप्रक्षिप्तोसि किञ्च स्वध्वरा अस्माभिःक्रियमाणानिकर्माणिसुष्ठुहिंसारहितानि कृणु कुरु तथा देवयते देवान्कामयमानाययजमानायदेवान्यजनीयानिन्द्रादीन् यज पूजय ॥ सुनिर्मथा मथेविलोडनेआस्मात्सम्पदादिलक्षणोभावेक्विप् प्रादिसमासः कृदुत्तरपदप्रकृतिस्वरः ! निर्मथितः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । सुनिधा निपूर्वस्यदधातेर्भावेआतश्चोपसर्गेइत्यङ् सुपांसुलुगितितृतीयायाअलुक् कृदुत्तरपदप्रकृतिस्वरः ! कृणु कृविहिंसाकरणयोरित्यस्यलोटि धिन्विकृण्व्योरचेत्युप्रत्ययः उतश्चप्रत्ययादितिहेर्लुक् निघातः ॥ १२ ॥

अथत्रयोदशी–

अजीजनन्नमृतंमर्त्यासोस्रेमाणंतरणिंवीळुजंम्भम् ।
दशस्वसारोअग्रुवःसमीचीःपुमांसंजातमभिसंरभन्ते॥१३॥

अजीजनन् । अमृतम् । मर्त्यासः । अस्रेमाणम् । तरणिम् ।
वीळुऽजम्भम् । दश । स्वसारः । अग्रुवः । सम्ऽईचीः ।
पुमांसम् । जातम् । अभि । सम् । रभन्ते ॥ १३ ॥

मर्त्यासोमर्त्याऋत्विजः अमृतंमरणधर्मरहितम् अतएवास्रेमाणं क्षयरहितं वीळुजम्भंहविर्भक्षणार्थंदृढदन्तं तरणिं तरन्तियजमानाःपापमनेनेतितरणिरग्निः तमजीजनन् मन्थनेनोदपीपदन् अथ जातंतमग्निमभिलक्ष्य स्वसारःस्वयंसरन्त्यःदशादशसंख्याकाः अग्रुवः कर्मकरणा-

थेमङ्गन्तीतिअग्रुवोङ्गुलयः ताद्दशाङ्गुलयःसमीचीः परस्परंसंगताःसत्यः संरभन्ते शब्दंकुर्वते जातमग्निंदृष्ट्वाध्वर्य्वादयोहर्षाद्धस्तद्वयसम्पुटेनशब्दंकुर्वन्तीत्यर्थः तत्रदृष्टान्तः—पुमांसमिति यथा-जातंपुत्रमुपलभ्यतत्रत्याःपित्रादयोहर्षादुद्घोषयन्तितद्वत् ॥ अजीजनन् जनीप्रादुर्भावेइत्यस्यण्य-न्तस्यलुङिचङिरूपम् । अस्रेमाणम् स्त्रिवुगतिशोषणयोरित्यस्माद्भावेमनिन्निमनिन्प्रत्ययः लघूपधगुणोलोपोव्योर्वलीतिवलोपः बहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । तरणिं तॄप्लव-नतरणयोः अर्तिसृधृधम्यम्यश्यवितृभ्योनिरित्यनिप्रत्ययः गुणः प्रत्ययस्वरः । स्वसारः असु-क्षेपणेइत्यस्मात्सुञ्यसेरृन्निितिऋन्प्रत्ययः सुष्ठुअस्यन्तिकर्मसुपदार्थानितिस्वसारः नषट्स्वस्रा-दिभ्यइतिङीपःप्रतिषेधः नित्त्वादाद्युदात्तः । अग्रुवः अगिगतौ जत्वादयश्चेतिरुप्रत्ययः नि-पातनान्नलोपः जसि तन्वादित्वादुवङादेशः प्रत्ययस्वरः । समीचीः इण्गतौइत्यस्मात्समीणइ-तिचट्प्रत्ययः धातोर्दीर्घश्च टित्वाट्टिड्ढाणञित्यादिनाङीप् संयन्तीतिसमीच्यः यद्वा संपूर्वस्याञ्च-तेःक्विप् समःसमीतिसमिइत्यादेशः अञ्चतेश्चोपसंख्यानमितिङीप् अचइत्यकारलोपः चावि-तिदीर्घः वाछन्दसीतिपूर्वसवर्णदीर्घः एकादेशस्वरः । पुमांसं पारक्षणेइत्यस्मात् पातेर्डुम्सुन्निति डुम्सुन्प्रत्ययः पुंसोसुङितिअसुङादेशः पातिकुलमितिपुमान् नित्स्वरः । रभन्ते रभशब्देइत्यस्य लटिरूपं निघातः ॥ १३ ॥

अथचतुर्दशी—

**प्रसप्तहोतासनकादरोचतमातुरुपस्थेयदशोचदूधनि ।**
**ननिमिषतिसुरणोदिवेदिवेयदसुरस्यजठरादजायत ॥१४॥**

प्र । सप्तऽहोता । सनकात् । अरोचत । मातुः । उपऽस्थे ।
यत् । अशोचत् । ऊधनि । न । नि । मिषति । सुऽरणः ।
दिवेऽदिवे । यत् । असुरस्य । जठरात् । अजायत ॥ १४ ॥

सनकात् सनातनोग्निः सप्तहोतारोहोत्रकायस्यासौसप्तहोतासन् प्रारोचत गार्हपत्य-स्थानेआदीप्यत यद्यदामातुःपृथिव्याउपस्थेउत्सङ्गे तत्रापिऊधनिऊधःस्थाने उत्तरवेद्यामशो-चत् अशोभत तदासोग्निःसुरणःसुष्ठुरणतिशब्दयतीतिसुरणः सर्वैःकमनीयतयाद्दश्यमानःसन् दिवेदिवे प्रतिदिनंनानिमिषति ननिद्राति किंतुसर्वदायज्ञार्थंजागर्त्येव यद्यस्मादसुरस्याग्नेः

प्रेरकस्यारणीरूपस्यकाष्ठस्यजठरादुदराद्जायत कर्मार्थमुदपद्यत तस्मान्ननिमिषतीतिपूर्वेणान्वयः॥ अरोचत रुचदीप्तावित्यस्यलङिरूपं निघातः । अशोचत् शुचदीप्तौ । ऊधनि सकारस्यनकारश्छान्दसः मिषति मिषुसेचनेइत्यस्यलटिरूपम् । सुरणः रणशब्दे तत्करोतीतिणिच् तस्माद्कृच्छ्रार्थेखल् लित्स्वरः । असुरस्य असुक्षेपणेइत्यस्मादसेरुरन्नितिउरन्प्रत्ययः अस्यतीत्यसुरः नित्स्वरः । जठरात् जनीप्रादुर्भावेइत्यस्मात् जनेररष्ठचेत्यरप्रत्ययःठकारश्चान्तादेशः प्रत्ययस्वरः । अजायत जनीप्रादुर्भावेइत्यस्यलङि श्यनि ज्ञाजनोर्जेतिधातोर्जादेशः यद्योगादनिघातः ॥ १४ ॥

अथपञ्चदशी—

अ॒मि॒त्रा॒यु॒धो॑म॒रुतां॑मिवप्र॒याःप्र॑थ॒म॒जाब्रह्म॑णो॒विश्व॒मिद्वि॑दुः ।
द्यु॒म्नव॒द्ब्रह्म॑कुशि॒कास॒एरि॑र॒एक॑एको॒दमे॑अ॒ग्निंसमी॑धिरे ॥१५॥

अ॒मि॒त्रऽयुधः । म॒रुताम्ऽइव । प्र॒ऽयाः । प्र॒थ॒मऽजाः । ब्रह्म॑णः । विश्व॑म् । इत् । वि॒दुः । द्यु॒म्नऽव॑त् । ब्रह्म॑ । कु॒शि॒कासः । आ । ई॒रि॒रे॒ । एकः॑ऽएकः । दमे॑ । अ॒ग्निम् । सम् । ई॒धि॒रे॒ ॥ १५ ॥

अमित्रायुधः अमित्रैः कर्मविघ्नकारिभिरसुरैःसहयोद्धारः यद्वा अमित्राणिपापानितैःसहयोद्धारः तत्रदृष्टान्तः—मरुतामिवप्रयाइति यथामरुतांदेवानांप्रयाः प्रकर्षेणशत्रूनभियान्तीतिप्रयाःबलानिशत्रूणांहन्तॄणितद्वत् कर्मविघ्नकारिणांपापानांचहन्तारः ब्रह्मणःसर्वस्यजगतःस्रष्टुः प्रथमजाःप्रथममुत्पन्नाः कुशिकासः कुशिकगोत्रोत्पन्नाःऋषयः विश्वंस्थावरजङ्गमात्मकंसर्वजगद्विदुरित् जानन्त्येव तेअमी कुशिकाःद्युम्नवत्हविर्युक्तंब्रह्मस्तोत्रमेरिरे अग्नयेआसमन्तात्प्रेरयन्ति तेच दमेस्वेस्वेगृहे एकएकः एकैकोभूत्वा अग्निंसमीधिरे आज्याद्याहुतिभिःसम्यग्दीपयन्ति ॥ अमित्रायुधः युधसम्प्रहारे क्विप् कृदुत्तरपदप्रकृतिस्वरः संहितायांपूर्वपदस्यदीर्घश्छान्दसः । प्रयाः याप्रापणे अन्येभ्योपिदृश्यन्तइतिविच् । प्रथमजाः जनीप्रादुर्भावे जनसनेत्यादिनाविट् विड्वनोरित्यात्वम् । विदुः विदेर्लटि विदोलटोवेतिझेरुसादेशः । ईरिरे ईरगतावित्यस्यलिटिरूपं मन्त्रत्वादाम्नभवति । दमे दमुउपशमने करणेघञ् नोदात्तोपदेशस्येतिवृद्धिप्रतिषेधः ञित्स्वरः । ईधिरे ञिइन्धीदीप्तौ इत्यस्यलिटि इन्धिभवतिभ्यांचेतिकित्त्वाद्वानलोपः निघातः ॥ १५ ॥

अथषोडशी—

यदुद्यत्वांप्रयतियज्ञेअस्मिन्होतंश्चिकित्वोवृणीमहीह ।
ध्रुवमंयाध्रुवमुताशंमिष्ठाःप्रजानन्विद्वाँउपंयाहिसोमंम् ।१६।३४।

॥ इतितृतीयाष्टके ऋ० सं० प्रथमोऽध्यायः ॥ १ ॥

यत् । अद्य । त्वा । प्रऽयति । यज्ञे । अस्मिन् । होतरिति ।
चिकित्वः । अवृणीमहि । इह । ध्रुवम् । अयाः । ध्रुवम् । उत ।
अशमिष्ठाः । प्रऽजानन् । विद्वान् । उप । याहि । सोमम् ।१६।३४।

होतः होमनिष्पादक चिकित्वःकर्मविषयज्ञानवन् हेअग्ने अद्येदानीं प्रयति प्रवर्तमानेस्मिञ्ज्योतिष्टोमादौयज्ञे त्वा त्वां यद्यस्मात्कारणात् अवृणीमहि त्वद्विषयंवरणमकुर्म तस्मात्तादृशस्त्वमिहकर्मणिदेवानध्रुवमयाः ध्रुवंयथाभवतितथाअस्माभिर्दत्तानिहवींषिप्रापय उतापिच अशमिष्ठाः हविःस्वीकरणात्तृतैर्देवैःशान्तस्त्वम् अकारिष्ठाः अथप्रजानन्इमंयज्ञंसम्यक्जानन् विद्वान्यत्किञ्चित्सर्वंजानानःत्वंसोममस्माभिः क्रियमाणमिमम् अभिषुतंसोममभिलक्ष्य उपयाहि समीपेआगच्छ ॥ प्रयति इण्गतावित्यस्यशतरिरूपम् शतुरनुमइतिविभक्तेरुदात्तत्वम् । अवृणीमहि वृञ्वरणे क्र्यादित्वात्श्ना लङ्युत्तमपुरुषबहुवचने ईहल्यघोरितीत्वम् आमन्त्रितस्याविद्यमानवत्त्वेन पादादित्वादनिघातः । अयाः याप्रापणेइत्यस्यलङिसिपिरूपं निघातः । अशमिष्ठाः शमुउपशमने इत्यस्यण्यन्तस्यकर्मणिलुङि स्यसिच्सीयुडितिविकल्पेनेडागमः तस्यासिद्धत्वात्णेरनिटीति णिलोपः निघातः । प्रजानन् ज्ञाअवबोधने शतरिरूपम् ! याहि यातेर्लोटिरूपम् ॥ १६ ॥

॥ इतितृतीयस्यप्रथमेचतुस्त्रिंशोवर्गः ॥३४॥

॥ इतितृतीयेमंडलेद्वितीयोनुवाकः ॥ २ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् ॥ पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेणसायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येतृतीयाष्टकेप्रथमोध्यायः ॥ १ ॥

॥ श्रीगणेशायनमः ॥



॥ यस्यनिःश्वसितंवेदायोवेदेभ्योऽखिलंजगत् ॥ निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥ १ ॥

तृतीयेनुवाकेनवसूक्तानि इच्छन्तित्वेतिद्वाविंशत्यृचंप्रथमंसूक्तम् तत्रेयमनुक्रमणिका- इच्छन्तिद्व्यधिकैन्द्रमितिमण्डलद्रष्टाविश्वामित्रऋषिः इन्द्रोदेवता अनुक्तत्वात्त्रिष्टुप्छन्दः आभिप्लवि- केप्रथमेहनिदशरात्रेप्रथमेहनिचमाध्यंदिनेसवनेअच्छावाकशस्त्रेऽहीनसूक्तस्थानेद्वितीयमिदंसंपातसूक्तम्. अभिप्लवपृष्ठ्याहानीतिखण्डेसूत्रितम्—इमामूष्विच्छन्तित्वाशासद्वह्निरितिसंपाताइति इन्द्रस्यवृत्रघ्नः संबन्धिनिपशौसहदानुमितिवपायायाज्या सहदानुंपुरुहूतक्षियन्तंस्तुतइन्द्रोमघवायद्धवृत्रेतिसूत्रितम् । स्वस्तयेवाजिभिश्चैषाऐन्द्रेपशौहविषोयाज्या सूत्रितंच—स्वस्तयेवाजिभिश्चप्रणेतःशुचीवोहव्यामरुतः शुचीनामिति शुनासीरीयेवैकल्पिकस्येन्द्रस्यशुनस्यशुनंहुवेमेत्यनुवाक्या सूत्रितंच—शुनंहुवेममघवानमि- न्द्रमश्वायन्तोगव्यन्तोवाजयन्तइति ।

तस्मिन्सूक्तेप्रथमामृचमाह—

ॐम् इच्छन्तित्वासोम्यासःसखायःसुन्वन्तिसोमंदधतिप्रयांसि । तितिक्षन्तेअभिशस्तिंजनानामिन्द्रत्वदाकश्चनहिप्रकेतः ॥१॥

इच्छन्ति । त्वा । सोम्यासः । सखायः । सुन्वन्ति । सोमम् । दधति । प्रयांसि । तितिक्षन्ते । अभिऽशस्तिम् । जनानाम् । इन्द्र । त्वत् । आ । कः । चन । हि । प्रऽकेतः ॥ १ ॥

विश्वामित्रःस्तौति हेइन्द्र सोम्यासः सोमार्हाः ब्राह्मणाःत्वात्वां शंसितुमिच्छन्ति अतएवसखायस्तेब्राह्मणाः त्वदर्थंसोमंसुन्वाति अभिषुण्वन्ति प्रयांसि इतराण्यपिहवींषि- दधति त्वदर्थंधारयन्ति त्वयाप्रेरिताःसन्तः जनानांसपत्नानामभिशस्तिंतत्कृतांहिंसांतितिक्ष- न्ते सहन्ते एवमनुग्राहकः त्वत्त्वत्तोऽन्यःकश्चनहि कोनामपुरुषःखलु आप्रकेतः सर्व- तोनगतिप्रकेत्यतेज्ञाप्यतेइतिप्रकेतः प्रज्ञापितोविद्यते ॥ सोम्यासः सोममर्हतीत्यर्थेसोममर्हतिय- इतियः प्रत्ययस्वरः । सुन्वन्ति षुञ्अभिषवे स्वादित्वात्श्नुप्रत्ययः सतिशिष्टस्वरोबलीया- निनितिश्निप्रत्ययस्वरः । दधति दधातेर्लटिरूपम् । समानवाक्येयुष्मदस्मदादेशानिघाताइति सोम

पदस्योत्तरवाक्येनान्वयान्ननिघातः अभ्यस्तानामादिरित्याद्युदात्तत्वम् । तितिक्षन्ते तिजनिशाने क्षमायांचेत्यस्य गुप्तिज्किद्भ्यःसन्नितिसन्प्रत्ययः अभ्यस्तस्वरः । अभिशस्तिं शसुहिंसायामित्यस्माद्भावेक्तिन् तादौचनितिकृत्यतावितिगतेःप्रकृतिस्वरत्वम् । प्रकेतः कितज्ञाने कर्मणि घञन्तः थाथघञ्क्तेत्यन्तोदात्तत्वम् ॥ १ ॥

अथद्वितीयामृचमाह– ,

नतेदूरेपरमाचिद्रजांस्यातुप्रयाहिहरिवोहरिभ्याम् ।
स्थिरायवृष्णेसवनाकृतेमायुक्ताग्रावाणःसमिधानेअग्नौ ॥२॥

न । ते । दूरे । परमा । चित् । रजांसि । आ । तु । प्र । याहि । हरिऽवः । हरिऽभ्याम् । स्थिराय । वृष्णे । सवना कृता । इमा । युक्ताः ।। ग्रावाणः । सम्ऽइधाने । अग्नौ ॥ २ ॥

हरिवः हरिद्वर्णावश्वौयस्यसोयंहरिवानिन्द्रः हेहरिवः परमाचित् परमाणिदूरेवर्तमानान्यपिरजांसिस्थानानि ते तव दूरेनभवन्ति यस्मात्तस्मात् हरिभ्यामश्वाभ्यामुपेतस्त्वंतु क्षिप्रमाप्रयाहि अस्मदीयंयज्ञमभिलक्ष्यागच्छ स्थिरायफलदानेदृढचित्ताय अतएववृष्णे कामानांवर्षित्रे तुभ्यम् इमा इमानि सवना सवनानिप्रातरादीनि कृता कृतानि किंच अग्नावाहवनीयेसमिधानेआहुत्यधिकरणतयासम्यग्दीप्यमानेसति ग्रावाणउपलायुक्ताःसोमाभिषवार्थमुद्युक्ताः अतस्त्वं क्षिप्रमागच्छेतिभावः ॥ याहि याप्रापणेइत्यस्यलोटिरूपम् । हरिवः हरीअस्यस्तइतिमतुप् छन्दसीरइतिमस्यवत्वम् आमन्त्रितत्वान्निघातः । स्थिराय ष्ठागतिनिवृत्तावित्यस्मादजिरशिशिरेत्यादिनाकिरच्प्रत्यान्तत्वेननिपातनादाकारलोपः चित्स्वरः । सवना षुञ् अभिषवेइत्यस्माद्धिकरणेल्युट्चेतिल्युट् सूयतेसोमोयत्रेतिसवनानिप्रातरादीनि ञ्नित्स्वरः । समिधाने ञिइन्धीदीप्तावित्यस्य कानचिरूपं कित्त्वान्नकारलोपः चित्स्वरः ॥ २ ॥

अथतृतीया–

इन्द्रःसुशिप्रोमघवातरुत्रोमहाव्रातस्तुविकूर्मिर्ऋघावान् ।
यदुग्रोधाबाधितोमर्त्येषुक्व १ त्यातेवृषभवीर्याणि ॥३॥

इन्द्रः । सुऽशिप्रः मघऽवा । तरुत्रः । महाऽव्रातः । तुविऽकूर्मिः ।
ऋघावान् । यत् । उग्रः । धाः । बाधितः । मर्त्येषु । क्व ।
त्या । ते । वृषभ । वीर्याणि ॥ ३ ॥

वृषभ कामानांवर्षक हेइन्द्र यस्त्वंमिन्द्रः परमैश्वर्यसंपन्नः सुशिप्रः शिप्रशब्देन शिरस्त्राणमभिधीयते शोभनशिरस्त्राणोपेतः यद्वा शोभनहनुमान् शिप्रेहनूनासिकेवेतियास्कः । मघवा धनदान् तरुत्रः तरन्त्यनेनशत्रून्देवाइतितरुत्रइन्द्रः महाव्रातः मरुद्भिर्महान्व्रातःसमूहोयस्यस-तथोक्तः तुविकूर्मिः संग्रामेनानाविधकर्मणांकर्ता ऋघावान् शत्रुविषयहिंसावान् अतएव उग्रः शत्रूणांभयंकरः सतादृशस्त्वंबाधितः असुरैःसंग्रामेबाधितःसन् मर्त्येषु मारयितृष्वसुरेषु यत् यानिवीर्याणिधाः व्यधाः इदानीं ते तव त्या तानि वीर्याणिक्व क्वासते वद ॥ सुशिप्रः सृप्लृगतौ औणादिकोरन्प्रत्ययः बाहुलकात्सृइत्यस्यशिइत्यादेशः बहुव्रीहौ आद्युदात्तंद्व्यच्-छन्दसीत्युत्तरपदाद्युदात्तत्वम् । तरुत्रः तरतेरशित्रादिभ्यइत्रोत्रावित्युत्रप्रत्ययः व्यत्ययेनाद्युदात्तः । महाव्रातः आन्महतइत्याकारादेशोमहतस्तकारस्य । तुविकूर्मिः करोतेरौणादिकोमिप्रत्ययः गुणेकृते करोतेरकारस्यउत्वंछान्दसं हलिचेतिदीर्घः । ऋघावान् ऋघ्नन्तीतिऋघाः अन्येभ्योपिदृश्यन्तइतिविच् दृशिग्रहणान्नलोपोहकारस्यघत्वं तदस्यास्तीतिमत्वर्थे छन्दसीवनिपावितिवनिप् व्यत्ययेनाद्युदात्तः । क्व किंशब्दस्यसप्तम्यर्थेकिमोदित्यत्प्रत्ययः तस्मिन्क्वातीतिक्वादेशः तित्स्वरः ॥ ३ ॥

अथचतुर्थी—

त्वंहिष्माच्यावयन्नच्युतान्येकोवृत्राचरसिजिघ्नमानः ।
तवद्यावापृथिवीपर्वतासोनुव्रतायनिमितेवतस्थुः ॥ ४ ॥

त्वम् । हि । स्म । च्यवयन् । अच्युतानि । एकः । वृत्रा ।
चरसि । जिघ्नमानः । तव । द्यावापृथिवी इति । पर्वतासः ।
अनु । व्रताय । निमिताऽइव । तस्थुः ॥ ४ ॥

हेइन्द्र त्वमेकः असहायएव अच्युतानि च्युतिरहितानि दृढमूलान्यपि तवप्रतिपक्षभूतानि रक्षांसिच्यावयन् स्वस्वस्थानात्पातयन् तथा वृत्रा वृत्राणि पापानिजिघ्नमानः हिंसन्चरसि हिस्म वर्तसेखलु किंच एवंविधसामर्थ्योपेतस्यतववृत्रायकर्मणे आज्ञायै द्यावापृथिवी द्यावापृथिव्यौ पर्वतासः पर्वताश्च निमितेव निखातानिश्चलाइवानुतस्थुः तिष्ठन्ति ॥ स्म चादित्वादनुदात्तः । च्यावयन् च्युङ्गतावित्यस्यण्यन्तस्यशतरिरूपं णिच्स्वरः । चरसि चरगतिभक्षणयोः हियोगादनिघातः । जिघ्नमानः हनहिंसागत्योरित्यस्यबहुलार्थेकविधानमितिकप्रत्ययः तस्य छन्दस्युभयथेतिसार्वधातुकत्वाच्छप् तस्यश्लुः बहुलंछन्दसीत्यभ्यासस्येत्वं हन्तीतिजिघ्नः आचारार्थेक्विप् अस्मात्ताच्छील्यार्थेचानश् शप् व्यत्ययेनाद्युदात्तत्वम् । द्यावापृथिवी देवताद्वन्द्वेचेत्युभयोःप्रकृतिस्वरत्वम् । निमितेव डुमिञ्प्रक्षेपणइत्यस्यकर्मणिनिष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वं सुपांसुलुगितिसुपोडादेशः इवेनसमासोविभक्त्यलोपइत्युक्तत्वात्पूर्वपदस्वरः । तस्थुः ष्ठागतिनिवृत्तौइत्यस्यलिटयुसिआतोलोपेकृते तस्यद्विर्वचनेचीतिस्थानिवद्भावाद्द्विर्वचनं निघातः ॥ ४ ॥

अथपञ्चमी—

उताभयेपुरुहूतश्रवोभिरेकोदृह्ळमवदोवृत्रहासन् ।
इमेचिदिन्द्ररोदसीअपारेयत्संगृभ्णामघवन्काशिरित्ते ॥५॥१॥

उत । अभये । पुरुऽहूत । श्रवःऽभिः । एकः दृह्ळम् । अवदः ।
वृत्रऽहा । सन् । इमे इति । चित् । इन्द्र रोदसी इति । अपारे ।
इति । यत् । समऽगृभ्णाः । मघऽवन् । काशिः । इत् । ते ॥५॥१॥

उतेत्यामन्त्रणे हेइन्द्र पुरुहूत पुरुभिर्बहुभिर्यज्वभिराहूत यद्वा देवैरसुरेभ्योरक्षार्थंबहुवारमाहूत श्रवोभिःवीर्यैरुपेत एकः असहायस्त्वं वृत्रहा वृत्रस्यशत्रोर्हन्तासन् अभये असुरेभ्यःमत्सकाशान्माबिभीतेतिदेवान्प्रतियद्वाक्यमवदः अवोचः तद्वाक्यं दृह्ळं दृढं सत्यमेव किंच मघवन्निन्द्र त्वम् अपारेचित् दूरपारेअपि इमे रोदसी द्यावापृथिव्यौयद्यस्मात्कारणात्संगृभ्णाः संगृह्णासि परस्परमधरोत्तरभावेनसंयोजितेकरोषीतियावत् एषतेतवमहिमाकाशिरित् प्रकाशोलोकेप्रसिद्धएव यद्वा यत्येनतेरोदसीसंगृह्णासितेतव

काशिर्मुष्टिर्महान् काशिर्मुष्टिरितियास्कः ॥ अभये ञिभीभयेइत्यस्माद्भावेएरजित्यच्प्रत्ययः नञासमासेतस्यस्वरः । अवदः वदव्यक्तायांवाचि लङिरूपं निपातः । अपारे बहुव्रीहौन-ञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । संगृभ्णाः ग्रहउपादाने क्र्यादित्वात्श्ना ग्रहिज्यावयीत्यादिनासंप्रसारणं हृग्रहोर्भश्छन्दसीतिहकारस्यभकारः इतश्चेतिसिपइकारलोपः बहुलंछन्दसीत्यडभावः समासस्वरः । काशिः काशृदीप्तौ औणादिकइप्रत्ययः प्रत्ययस्वरः ॥ ५ ॥

॥ इतितृतीयस्यद्वितीयेप्रथमोवर्गः ॥ १ ॥

अथषष्ठी—

प्रसूतंइन्द्रप्रवताहरिभ्यांप्रतेवज्रःप्रमृणन्नेतुशत्रून् ।
जहिप्रतीचोअनूचःपराचोविश्वंसत्यंकृणुहिविष्टमस्तु ॥ ६ ॥

प्र । सु । ते । इन्द्र । प्रऽवता । हरिऽभ्याम् । प्र । ते । वज्रः । प्रऽमृणन् । एतु । शत्रून् । जहि । प्रतीचः । अनूचः । पराचः । विश्वम् । सत्यम् । कृणुहि । विष्टम् । अस्तु ॥ ६ ॥

हेइन्द्र तेतव हरिभ्यामश्वाभ्यांयुक्तोरथः शत्रूनभिलक्ष्य प्रवता प्रवणेनमार्गेण सुसुष्ठुप्रैतु शीघ्रंगच्छतु तथाते वज्रः अशनिः शत्रूनसुरान्प्रमृणनहिंसन्प्रैतु त्वंच प्रतीचः त्वदाभिमुख्येनागच्छतःशत्रून्जहि मारय तथा अनूचः अनुगच्छतःपार्ष्णिग्राहानसुरान्पराचः पलायनपरांश्चजहि एवंशत्रुपुबाधितेषुसत्सु विश्वं जगत्सत्यंकृणुहि सत्यभूताग्निहोत्रादिकर्मपरंकुरु एवंविधंसामर्थ्यंत्वयिविष्टंनिविष्टमस्तु ॥ प्रवता प्रशब्दादुपसर्गाच्छन्दसिवात्यर्थइतिवातिप्रत्ययः प्रत्ययस्वरः । प्रमृणन् मृणहिंसायाम् । जहि हनहिंसागत्योरित्यस्यलोटिसिपोहिरादेशः तस्मिन्हन्तेर्जइतिजादेशः अतोहेरितिलुकिप्राप्ते आभाच्छास्त्रस्यासिद्धत्वान्निवृत्तिः हेर्ङित्त्वादन्तोदात्तः । प्रतीचः अञ्चुगतिपूजनयोः अञ्चेश्छन्दस्यसर्वनामस्थानमितिविभक्तेरुदात्तत्वम् । पराचः अनिगन्तोञ्चतावप्रत्ययेइतिगतेःप्रकृतिस्वरत्वम् । कृणुहि कृविहिंसाकरणयोः । अस्तु असभुवि ॥ ६ ॥

अथसप्तमी—

यस्मैधायुरदधामर्त्यायाभक्तंचिद्भजतेगेह्यं[1]सः ।
भद्रातइन्द्रसुमतिर्घृताचीसहस्रदानापुरुहूतरातिः ॥ ७ ॥

१नि० ६. १.

यस्मै । धायुः । अदधाः । मर्त्याय । अभक्तम् । चित् । भजते । गेह्यम् । सः । भद्रा । ते । इन्द्र । सुऽमतिः । घृताची । सहस्रऽदाना । पुरुहूत । रातिः ॥ ७ ॥

हेइन्द्र धायुः निरन्तरमैश्वर्यंदधानस्त्वं यस्मैमर्त्यायमनुष्यायअदधाः वीर्यंदधासि समर्थः अभक्तंचित् पूर्वमप्राप्तमपि गेह्यं गृहेषुभवं कनकपश्वादिकं भजतेप्राप्नोति किंच हेपुरुहूत बहुभिराहूतेन्द्र घृताची घृतशब्दोहविर्मात्रमुपलक्षयति तथाच सोमाज्यपुरोडाशादिलक्षणंहविरञ्चति प्राप्नोतीतिघृताची तेतवसुमतिः शोभनाबुद्धिः भद्रा कल्याणकरी तथा तव रातिर्दानशक्तिः सहस्रदानाअपरिमितधनदानसमेता इन्द्रस्य बहुदातृत्वंमन्त्रवर्णः—भूरिदाभूरिदेहिनो मादभ्रंभूर्याभरेति ॥ धायुः दधातेरौणादिकउण्प्रत्ययः । अदधाः दधातेर्लङिरूपंयद्वृत्तयोगादनिघातः । मर्त्याय मर्तएवमर्त्यः वस्त्रादिषुपाठात्स्वार्थिकोयत् यतोनावइत्याद्युदात्तः । गेह्यं गेहशब्दात्तत्रभवइत्यर्थे भवेछन्दसीतियत् तित्स्वरितः । सुमतिः मन्त्रेवृषेत्यादिनामतिशब्दोऽन्तोदात्तः समासेकृदुत्तरपदस्वरः । रातिः रादाने मन्त्रेवृषेत्यादिनाक्तिन्नुदात्तः ॥ ७ ॥

अथाष्टमी—

सहदानुंपुरुहूतक्षियन्तमहस्तमिन्द्रसम्पिणक्कुणारुम् ।
अभिवृत्रंवर्धमानंपियारुमपादमिन्द्रतवसाजघन्थ ॥ ८ ॥

सहऽदानुम् । पुरुऽहूत । क्षियन्तम् । अहस्तम् । इन्द्र । सम् । पिणक् । कुणारुम् । अभि । वृत्रम् । वर्धमानम् । पियारुम् । अपादम् । इन्द्र । तवसा । जघन्थ ॥ ८ ॥

हेपुरुहूत इन्द्र त्वं सहदानुं दानुर्दानवीवृत्रमाता तयासहवर्तमानं तथाच मन्त्रवर्णः—दानुःशयेसहवत्सेति । यद्वा सहदानुं दानुभिर्दानवैःसहवर्ततइतिसहदानुः तं क्षियन्तं बाधमानं कुणारुं क्वणनशीलं काञ्चिदसुरम् अहस्तं हस्तहीनंकृत्वासंपिणक् सम्यक्चूर्णीकुरु किंच हे इन्द्र वर्धमानं सर्वतः इषुमात्रंवर्धमानं सइषुमात्रमिषुमात्रंविष्वङ्ङवर्धतेतिश्रुतेः । पियारुं हिंस्रं वृत्रंवृत्रासुरम् अपादं पादहीनंकृत्वा तवसाबलेनअभिजघन्थ हतवानसि यद्वा सहदानुमुदक-

१ ऋ० सं० ३. ६. ३०. । २ ऋ० सं० १. २. ३७. । ३ तै० सं० २. ४. १२ ।

दानोपेतं क्षियन्तमाकाशेनिवसन्तं कुणारुं गर्जन्तं वृत्रं वृणोत्याच्छादयतिनभइतिवृत्रोमेघः तमिमंवर्धमानंमेघंहस्तपादशून्यंकृत्वासंपिणक् संपिष्टवान् तथाचयास्कः—अहस्तमिन्द्रंकृत्वासंपिष्टांढपरिक्कणनंमेघमिति ॥ सहदानुं दोअवखण्डने दाभाभ्यांनुरितिनुप्रत्ययः द्यतीतिदानुर्दानवः यद्वा दानुर्दानं बहुव्रीहौपूर्वपदप्रकृतिस्वरः । क्षियन्तं क्षिनिवासगत्योः तुदादित्वाच्छः । प्रत्ययस्वरः । पिणक् पिष्लृसंचूर्णने रुधादित्वात्श्नम् हल्ङ्यादिलोपः षकारस्यककारश्छान्दसः । कुणारुं कुणशब्दने बाहुलकाद्रूपसिद्धिः आद्युदात्तः । जघन्थ हनहिंसागत्योरित्यस्यालिटिथलिरूपम् अभ्यासाच्चेतिधातुहकारस्यघत्वं निघातः उपदेशेत्वतइतिइट्प्रतिषेधः ॥ ८ ॥

अथनवमी—

निसा॒म॒नामि॑षि॒रामि॑न्द्र॒भूमिं॑म॒हीम॑पा॒रांसद॑नेससत्थ ।
अस्त॑भ्ना॒द्द्यांवृ॑ष॒भोअ॒न्तरि॑क्ष॒मर्ष॒न्त्वाप॒स्त्वये॒हप्रसू॑ताः ॥ ९ ॥

नि । सा॒म॒नाम् । इ॒षि॒राम् । इ॒न्द्र॒ । भूमि॑म् । म॒हीम् । अ॒पा॒राम् ।
सद॑ने । स॒स॒त्थ॒ । अस्त॑भ्नात् । द्याम् । वृ॒ष॒भः । अ॒न्तरि॑क्षम् ।
अर्ष॑न्तु । आप॑ः । त्वया॑ । इ॒ह । प्रऽसू॑ताः ॥ ९ ॥

हेइन्द्र महीं महतीम् अतएवापाराम् पुरुपाराम् इषिरां स्थानाभावेनचलन्तीम् एवंविधांभूमिं सामानां समनां तथाचमन्त्रवर्णः—गावौतेसामनावितइति । यद्वा समएवसाम शतपथेश्रूयते—यदेवसमःप्लुषिणासमोमशकेनसमोनागेनसमएभिस्त्रिभिर्लोकैस्तस्मादेवसामेति । तदस्यास्तीतिसामना तां साम्यवतींकृत्वा सदने स्वेस्थानेनिषसत्थ निवेशयामासिथ तथा वृषभः अभिमतफलानांवर्षकःइन्द्रः द्यां द्युलोकम् अस्तभ्नात् यथानपततितथाअधारयत्, तथा अन्तरिक्षम् एवंद्यावापृथिव्योरवस्थितौसत्यांत्वयाप्रसूताः मेघभेदनेनप्रेरिताआपः इहभूमौ अर्षन्तु आगच्छन्तु तथाचमन्त्रवर्णः—यःपृथिवींव्यथमानामदृंहदिति ॥ सामनां समएवसामः तदस्यास्तीतिमतुबर्थेपामादित्वान्नप्रत्ययः प्रत्ययस्वरः । इषिराम् इषगतौ इषिमदिमुदीत्यादिनाकिरच्प्रत्ययः कित्त्वादगुणः चित्स्वरः । ससत्थ षद्लृविशरणगत्यवसादनेषुइत्यन्तर्भावितण्यर्थस्यलिटिथलि उपदेशेत्वतइतीट्प्रतिषेधः निघातः । अस्तभ्नात् स्तन्भुस्तन्भनेइतिसौत्रोधातुः स्तन्भु-

१ नि० ६. १. । २ ऋ० सं० ८. ३. २२ । ३ ऋ० सं० २. ६. ७. ।

स्तुम्भित्यादिनाश्नाप्रत्ययः श्नान्नलोपइतिधातुनकारस्यलोपः अडागमस्वरः । अर्पन्तु. ऋपीगतौ व्यत्ययेनशप्प्रत्ययः गुणः पादादित्वादनिघातः । आपः आप्लृव्याप्तौ क्विप् धातोर्ह्रस्वश्च जसि अप्तृन्नित्यादिना दीर्घः जसःसुप्त्वादनुदात्तत्वेधातुस्वरः । प्रसूता षूप्रेरणेइत्यस्यकर्मणि निष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् ॥ ९ ॥

अथदशमी–

अलातृणोवलइन्द्रव्रजोगोःपुराहन्तोर्भयमानोव्यार ।
सुगान्पथोअकृणोन्निरजेगाःप्रावन्वाणीःपुरुहूतंधमन्तीः ॥१०॥२॥

अलातृणः । वलः । इन्द्र । व्रजः । गोः । पुरा । हन्तोः । भयमानः । वि । आर । सुऽगान् । पथः । अकृणोत् । निःऽअजे । गाः । प्र । आवन् । वाणीः । पुरुऽहूतम् । धमन्तीः ॥ १० ॥ २ ॥

हेइन्द्र अलातृणः बहूदकतयाअलमत्यर्थमातृद्यतेर्हिंस्यतेइत्यलातृणः गोर्माध्यमिकायावाचोव्रजोगोष्ठभूतोवलःवृणोत्याकाशमितिवलोमेघः पुराहन्तोःतववज्रप्रहारात्प्राक्भयमानः बिभ्यत् व्यार विश्लिष्टोबभूव अनन्तरं सइन्द्रः गाअपोनिरजेनिर्गमयितुं सुगान्सुगमनान्पथोमार्गानकृणोत् अकरोत् अतः वाणीःवननीयाःधमन्तीःशब्दायमानाः ताआपः पुरुहूतंबहुभिराहूतंपार्थिवमुदकंप्रतिप्रावन् अभ्यागच्छन् एतामृचंयास्कएवंव्याख्यत्–अलातृणोबलइन्द्रव्रजोगोः–अलातृणोलमातर्दनोमेघोवलोवृणोतेर्व्रजोव्रजत्यन्तरिक्षेगोरेतस्यामाध्यमिकायावाचः पुराहननाद्भयमानोव्यारसुगान्पथोअकृणोन्निरजेगाःसुगमनान्पथोकरोन्निर्गमनायगवांप्रावन्वाणीःपुरुहूतंधमन्तीःआपोवावहनाद्वाचोवावदनाद्बहुभिराहूतमुदकंभवति । धमतिर्गतिकर्मा अलातृणः तृहिहिंसायाम् अलम्पूर्वात्तृहेर्घञर्थेकविधानमितिकर्मणिकप्रत्ययः अलमोमकारस्याकारः समासस्वरः । वलः वलसंवरणे वल्यतेआच्छाद्यतेनभोनेनेतिवलोमेघः पुंसिसंज्ञायामितिघः प्रत्ययस्वरः । व्रजः व्रजगतौ गोचरसंचरेत्यादिनाघप्रत्ययान्तत्वेननिपातनात्कुत्वाभावः व्रजत्यन्तरिक्षेइतिप्रत्ययस्वरः । भयमानः ञिभीभये व्यत्ययेनशप् । आर ऋगतावित्यस्यालिटिणलिरूपं निघातः । सुगान् गम्लृगतावित्यस्मादधिकरणेसुदुरोरधिकरणेइतिडप्रत्ययः डित्त्वाट्टिलोपः कृत्स्वरः । अकृणोत् कृविहिंसाकरणयोरित्यस्यलङिरूपम् । निरजे अजगतिक्षेपणयोरित्यस्मात्संपदादिलक्षणोभावेक्विप् कृदुत्तरपदप्रकृतिस्वरः । आवन् अवरक्षणगत्यादिष्वित्यस्यलङिरूपम् । पुरुहूतं ह्वयतेर्निष्ठायांयजा-

१ नि० ६. २.

दित्वात्संप्रासरणं हलइतिदीर्घः थाथादिस्वरः । धमन्तीः ध्माशब्दे शपि पाघ्रेत्यादिनाधमादेशः वाछन्दसीतिजसःसवर्णदीर्घः शतुर्लसार्वधातुकस्वरेकृतेधातुस्वरः ॥ १० ॥

॥ इतितृतीयस्यद्वितीयेद्वितीयोवर्गः ॥ २ ॥

अथैकादशी—

एकोद्वेवसुमतीसमीचीइन्द्रआपप्रौपृथिवीमुतद्याम् ।
उतान्तरिक्षादभिनःसमीकइषोरथीःसयुजःशूरवाजान् ॥ ११ ॥

एकः । द्वे इति । वसुमती इति वसुऽमती । समीची इति समऽईची । इन्द्रः । आ । पप्रौ । पृथिवीम् । उत । द्याम् । उत । अन्तरिक्षात् । अभि । नः । समऽईके । इषः । रथीः । सऽयुजः । शूर । वाजान् ॥ ११ ॥

योयमिन्द्रःएकःअसहायएवसन्पृथिवींउतापिचद्यांद्वेएतेद्यावापृथिव्यौसमीची परस्परसंगते वसुमती धनयुक्तेसत्यौ आपप्रौ समन्तात्पूरयामास उतापिच हेशूर सामर्थ्योपेत तादृशस्त्वं रथीःरथवान् सनोऽस्माकं समीकेसमीपे इषःस्थातुमिच्छन् सयुजः संगतान्वाजान् व्रजन्तिगच्छन्तीतिवाजाअश्वाः तानश्वान्अन्तरिक्षादन्तरिक्षसकाशादभिप्रेरय रथारूढस्त्वमस्मत्समीपंशीघ्रमागच्छेतिभावः ॥ वसुमती वाछन्दसीतिपूर्वसवर्णदीर्घः । पप्रौ प्रापूरणेइत्यस्यलिटिणालि आतऔणलइत्यौकारः निपातः । इषः इषुइच्छयाम् अस्मादिगुपधलक्षणःकः किस्वादगुणः प्रत्ययस्वरः । रथीः रथोऽस्यास्तीतिरथीः मत्वर्थेछन्दसीवनिपाविति ईप्रत्ययः प्रत्ययस्वरः ॥ ११ ॥

अथद्वादशी—

दिशःसूर्योनमिनातिप्रदिष्टादिवेदिवेहर्यश्वप्रसूताः ।
संयदानळध्वनआदिदश्वैर्विमोचनंकृणुतेतत्त्वस्य ॥ १२ ॥

दिशः । सूर्यः । न । मिनाति । प्रऽदिष्टाः । दिवेऽदिवे । हर्यश्वऽप्रसूताः । सम् । यत् । आनट् । अध्वनः । आत् । इत् । अश्वैः । विऽमोचनम् । कृणुते । तत् । तु । अस्य ॥ १२ ॥

हर्यश्वप्रसूताः हरीअश्वौयस्यासाविति हर्यश्वइन्द्रः तेनप्रेरितादिशःप्रागादयः 'दिवेदिवे प्रतिदिवसंप्रदिष्टाःसूर्यस्यगमनार्थंदत्ताःयादिशोविद्यन्ते ताःसूर्योनमिनाति नहिनस्ति किंतु ताभिरेवव्रजति यद्यदासूर्यः अध्वनोगन्तव्यान्प्रदेशान् अश्वैर्गमनसाधनभूतैः लभानट् सम्यगश्नुते आदिदनन्तरमेव विमोचनंकृणुते आश्वानांविमोचनंकुरुते तदेतत्सर्वंकर्म .अस्य तवैवखलु तुप्रसिद्धौ ॥ सूर्य षूप्रेरणेइत्यस्मात्सुसूधागृधिभ्यःक्रन्निति क्रन्प्रत्ययः सुवति प्रेरयतीतिसूरआदित्यः सूरएवसूर्यः वस्वादित्वात्स्वार्थिकोयत् यतोनावइत्याद्युदात्तत्वम् । मिनाति मीञ्हिंसायाम् मीनातेर्निगमेइतिह्रस्वः । हर्यश्वप्रसूताः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् । आनट् अशूव्याप्तावित्यस्यबहुलंछन्दसीतिलङ्श्लुः अश्नोतेश्चेतिनुडागमः व्रश्चादिनाषत्वं यद्योगादनिघातः ॥ १२ ॥

अथत्रयोदशी—

दिदृक्षन्तउषसोयामन्नक्तोर्विवस्वत्यामहिचित्रमनीकम् ।
विश्वेजानन्तिमहिनायदागादिन्द्रस्यकर्मसुकृतापुरूणि ॥१३॥

दिदृक्षन्ते । उषसः । यामन् । अक्तोः । विवस्वत्याः । महि ।
चित्रम् । अनीकम् । विश्वे । जानन्ति । महिना । यत् । आ ।
अगात् । इन्द्रस्य । कर्म । सुऽकृता । पुरूणि ॥ १३॥

विश्वे सर्वेजनाः विवस्वत्याः विवासनवत्याः निर्गमनपरायाः अक्तोरात्रेःसंबन्धिन्याःउषसोयामन्यामनि निर्गमनेसति महिमहत् चित्रंचायनीयम् अनीकं सौरंतेजः दिदृक्षन्ते द्रष्टुमिच्छन्ति यद्यदाआगात् उषःकालःसमन्तादागात् व्यैति तदा तेजोदिदृक्षमाणाः सर्वेजनाः महिना महनीयान्यग्निहोत्रादीनिकर्माणिजानन्ति कर्तव्यतयावबुध्यन्ते हेइन्द्र पुरूणिबहूनिसुकृता सुकृतानि कर्म कर्माणि इन्द्रस्यतवैव ॥ दिदृक्षन्ते दृशिर्प्रेक्षणेइत्यस्यसनि ज्ञाश्रुस्मृदृशांसनइत्यात्मनेपदम् अभ्यस्तस्वरः विवस्वत्याः विवासतेःसंपदादिलक्षणःक्विप् व्यत्ययेनोपधाह्रस्वत्वं तस्मात्तदस्यास्तीतिमतुप् मादुपधायाइतितस्यवत्वं मतुपःपित्त्वादनुदात्तत्वेधातुस्वरः । जानन्ति ज्ञाअवबोधने ज्ञाजनोर्जेतिजादेशः निघातः । अगात् इणगतावित्यस्यलुङिरूपं यद्योगादनिघातः । सुकृता गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् ॥ १३ ॥

अथचतुर्दशी—

—मह्रिज्योतिर्निहितंवक्षणास्वामापक्वंचरतिबिभ्रंतीगौः ।
विश्वंस्वाद्मसंभृतमुस्रियायांयत्सीमिन्द्रोअदधाद्भोजनाय ।१४।

महि । ज्योतिः । निऽहितम् । वक्षणासु । आमा । पक्वम् ।
चरति । बिभ्रती । गौः । विश्वम् । स्वाद्म । सम्ऽभृतम् ।
उस्रियायाम् । यत् । सीम् । इन्द्रः । अदधात् । भोजनाय ॥१४॥

वक्षणासु वक्ष्यन्तेयासूदकानीतिवक्षणानद्यः तासु महि महत्ज्योतिः ज्योतिष्म-दुदकंनिहितामिन्द्रेण आमा नवसूतिकागौः पक्वंक्षीरादिकंबिभ्रती दधानासती चरति सर्व-त्रवर्तते यद्यस्मादुदकात्स्वाद्म स्वादुतरंसंभृतंस्वेनसंपादितंदधिघृतक्षीरादिकं सीमेतद्विश्वंसर्वम् उस्रियायांगविभोजनायेन्द्रोऽदधात्न्यधात् तस्मात्क्षीरादिकंबिभ्रतीगौश्चरतीतिपूर्वेणान्वयः ॥ व-क्षणासु वक्षरोषे अस्मात्करणाधिकरणयोश्चेतिकरणेल्युट् लित्स्वरः । पक्वं पचतेर्निष्ठा तकारस्यपचोवइतिवत्वं प्रत्ययस्वरः । चरति चरतिर्गत्यर्थः । बिभ्रती डुभृञ्धारणपोषणयोः जुहोत्यादिः शतुरुगित्त्वादुगितश्चेतिङीप् अभ्यस्तानामादिरित्याद्युदात्तत्वम् । उस्रियायां वस-निवासे स्फायितञ्चीत्यादिनाधिकरणेरक्प्रत्ययः यजादित्वात्संप्रसारणं शासिवसिघसीनांचे-तिषत्वाभावश्छान्दसः स्वार्थिकोघप्रत्ययः प्रत्ययस्वरः ॥ १४ ॥

अथपञ्चदशी—

इन्द्रदृह्ययामकोशाअभूवन्यज्ञायशिक्षगृणतेसखिभ्यः ।
दुर्मायवोदुरेवामर्त्यासोनिषङ्गिणोरिपवोहन्त्वासः ॥१५॥३॥

इन्द्र । दृह्य । यामऽकोशाः । अभूवन् । यज्ञाय । शिक्ष । गृणते ।
सखिऽभ्यः । दुःऽमायवः । दुःऽएवाः । मर्त्यासः । निषङ्गिणः ।
रिपवः । हन्त्वासः ॥१५॥३॥

हेइन्द्र दृह्य दृढोभव यतः यामकोशाः यान्त्यस्मिन्नितियामीमार्गः तस्यकोशाः कोशब्दाच्छादकाः मार्गप्रतिबन्धकाराक्षसाः अभूवन् त्वं यज्ञाय यज्ञकर्त्रेगृणते स्तोत्रंकुर्वते यजमानाय सखिभ्यः पुत्रादिभ्यश्चशिक्ष अपेक्षितंफलंदत्स्व दुर्मायवः दुष्टमायुधानिमिन्वन्तिप्रक्षिपन्तीतिदुर्मायवः दुरेवाः दुष्टंगच्छन्तः मर्त्यासोमारयितारः निषङ्गिणः निषङ्गिशब्देनइषुधिरभिधीयते तद्वन्तः एवंविधसामर्थ्योपेतारिपवः शत्रवोराक्षसाः हन्त्वासः त्वयाहननीयाः ॥ दृह्य दृंहदृहिवृहवृहिवृद्धौ व्यत्ययेनश्यन् लोटिरूपं निस्वरः ।॰ अभूवन् भूसत्तायाम् अस्य लुङिरूपं गातिस्थेतिसिचोलुक् भूसुवोस्तिङीतिगुणेप्रतिषिद्धे भुवोवुग्लुङ्लिटोरितिवुगागमः निघातः । शिक्ष शिक्षविद्योपादाने अयंधातुरत्रदानेवर्तते व्यत्ययेनपरस्मैपदं निघातः । दुर्मायवः मिनोतेः कृवापाजिमीत्यादिनाउण्प्रत्ययः कृदुत्तरपदस्वरः । दुरेवाः इण्गतौ इण्शीङ्भ्यांवन्नितिकर्तरिवन्प्रत्ययः । रिपवः रपेरिच्चोपधायाइत्युप्रत्ययः उपधायाइत्वं प्रत्ययस्वरः । हन्त्वासः हनहिंसागत्योः कृत्यार्थेतवैकेन्केन्यत्वनइतित्वन्प्रत्ययः नित्त्वादाद्युदात्तः ॥ १९ ॥

॥ इतितृतीयस्यद्वितीयेतृतीयोवर्गः ॥ ३ ॥

अथषोडशी—

**सङ्घोषःशृण्वेवमैरमित्रैर्जहीन्येष्वशनिंतपिंष्ठाम् ।**
**वृश्चेमधस्ताद्विरुंजासहंस्वजहिरक्षोमघवन्रन्धयंस्व ॥ १६ ॥**

सम् । घोषः । शृण्वे । अवमैः । अमित्रैः । जहि । नि । एषु ।
अशनिम् । तपिष्ठाम् । वृश्च । ईम् । अधस्तात् । वि । रुज ।
सहस्व । जहि । रक्षः । मघऽवन् । रन्धयस्व ॥ १६ ॥

हेइन्द्र अवमैःसमीपेवर्तमानैर्मित्रैः शत्रुभिरसुरैरुत्सृष्टोयोशनिर्घोषः घुष्यमाणः संशृण्वे सम्यगस्माभिःश्रूयते तपिष्ठामतिशयेनतापिकां तामशनिम् एषुशत्रुष्वेव नि निधाय जहि मारय तैःप्रयुक्तामशनिंतानेवप्रापयेतिभावः । ईमेनान्शत्रूनधस्तान्मूलतोवृश्चछिन्धिकिंच विरुज तान्विशेषेणबाधस्व सहस्व अभिभवच हेमघवन्निन्द्र रक्षःकर्मविघ्नकारीणि

रक्षांसि जहि मारय अनन्तरभिमंयज्ञंरन्धयस्व पारंनय ॥ शृणे निघातः । जहि हनहिंसागत्योरस्यलोटिरूपम् । अशनिम् अशूव्याप्तौ अश्यवितृभ्योनिरित्यनिप्रत्ययः प्रत्ययस्वरः । तपिष्ठां तप्तृशब्दादिष्ठन्प्रत्ययः नित्स्वरः । वृश्च ओव्रश्चूछेदने तुदादिः ग्रहिज्यादिनासंप्रसारणम् । सहस्व वाक्यभेदादनिघातः । रन्धयस्व रधहिंसासंराध्योरित्यस्यण्यन्तस्यलोटि रधिजभोरचीतिनुमागमः वाक्यभेदादनिघातः ॥ १६ ॥

अथसप्तदशी–

उद्वृहरक्षःसहमूलमिन्द्रवृश्चामध्यंप्रत्यग्रंशृणीहि ।
आकीवतःसललूकंचकर्थब्रह्मद्विषेतपुषिंहेतिमस्य ॥ १७ ॥

उत् । वृह । रक्षः । सहऽमूलम् । इन्द्र । वृश्च । मध्यम् ।
प्रति । अग्रम् । शृणीहि । आ । कीवतः । सललूकम् । चकर्थ ।
ब्रह्मऽद्विषे । तपुषिम् । हेतिम् । अस्य ॥ १७ ॥

हेइन्द्र रक्षः कर्मविघ्नकारिरक्षःकुलं सहमूलं मूलसहितंयथाभवतितथा उद्वृह उद्धर किंच मध्यं तस्यमध्यभागंवृश्च छिन्धि प्रत्यग्रम् अग्रमग्रंप्रत्यागतंतत्शृणीहि जहि तस्यरक्षःकुलस्यमध्ये सललूकं सरणशीलंरक्षः आकीवतः आङ्मर्यादायां कियतोनिर्ज्ञायमानपरिमाणादतिदूराद्देशाच्चकर्थ कुरु कृत्वाच ब्रह्मद्विषेब्राह्मणद्वेषकारिणेतस्मैरक्षसे तपुषिं तापकंहेतिं घातकमायुधमस्य क्षिप उक्तमर्थंयास्कोब्रवीत्–उद्धररक्षःसहमूलमिन्द्रमूलंमोचनाद्वामोहनाद्वावृश्चमध्यंप्रतिशृणीह्यग्रमग्रमागतंभवत्याकियतोदेशात्सललूकंसंलुब्धंभवतिपापकमितिनैरुक्ताः सररूकंवास्यात्सर्तेरभ्यस्तात्तपुषिस्तपतेर्हेतिर्हन्तेरिति ॥ वृह वृहूउद्यमनेइत्यस्यलोटिरूपम् । शृणीहि शृहिंसायाम् अस्यलोटि हौ ईहल्यघोरितीत्वं निघातः । कीवतः किंशब्दात्किंपरिमाणमस्येत्यर्थे किमिदंभ्यांवोघइतिकिंशब्दाद्वतुवस्तीतिज्ञापितत्वाद्वतुप् घादेशाभावश्छान्दसः इदंकिमोरीश्कीइतिकीइत्यादेशः । सललूकं सृगतौ छान्दसीरूपासिद्धिः । चकर्थ डुकृञ्करणेइत्यस्यलिटि थलिरूपं क्रादित्वादिडभावः निघातः ॥ तपुषिं तपसंतापेइत्यस्मादर्तिपृवपियजितनिधनितपिभ्योनिद्वियुसिप्रत्ययः निच्च अकारस्यइकारश्छान्दसः नित्स्वरः । हेतिं हनहिंसागत्योः ऊतियूतिजूतिसातीत्यादिनानिपातनादन्तोदात्तः । अस्य असुक्षेपणे लोटिरूपम् ॥ १७ ॥

अथाष्टादशी—

**स्वस्तयेवाजिभिश्चप्रणेतःसंयन्महीरिषआसत्सिपूर्वीः ।**
**रायोवन्तारोबृहतःस्यामास्मेअस्तुभगइन्द्रप्रजावान् ॥१८॥**

स्वस्तये । वाजिऽभिः । च । प्रनेतरिति प्रऽनेतः । सम् ।
यत् । महीः । इषः । आऽसत्सि । पूर्वीः । रायः । वन्तारः ।
बृहतः । स्याम । अस्मे इति । अस्तु । भगः । इन्द्र । प्रजाऽवान् ॥१८॥

प्रणेतः प्रकर्षेणजगतोनिर्वाहक हेइन्द्र अस्मान्वाजिभिरश्वैःसहितान्कुरु स्वस्तयेचाविनाशायकुरु यद्यदात्वं समासत्सि अस्माकंसमीपेयज्ञनिर्वाहार्थमासीदसि तदावयंमहीमहान्तिरिषोन्नानि पूर्वीःप्रभूतानिरायोधनानि वन्तारः तेषांसंभक्तारःसन्तः बृहतोमहान्तः स्याम भवेम किंच प्रजावान् अपत्योपेतंभगोधनम् अस्मे अस्मास्वस्तु भवतु ॥ आसत्सिषद्लृविशरणादिषु बहुलंछन्दसीतिशपोलुक् यद्योगादनिघातः । इषोरायइतिचद्वेषष्ठ्यर्थेद्वितीये । वन्तारः वनषणसंभक्तावित्यस्य तृचिआगमानुशासनस्यानित्यत्वादिडभावः चित्स्वरः । स्याम अस्भुवीत्यस्यलिङिरूपम् । अस्मे अस्मच्छब्दस्यसप्तम्याः सुपांसुलुगितिशेइत्यादेशः ॥१८॥

अथैकोनविंशी—

**आनोभरभगमिन्द्रद्युमन्तंनितेदेष्णस्यधीमहिप्ररेके ।**
**ऊर्वइवपप्रथेकामोअस्मेतमापृणवसुपतेवसूनाम् ॥१९॥**

आ । नः । भर । भगम् । इन्द्र । द्युऽमन्तम् । नि । ते । देष्णस्य ।
धीमहि । प्रऽरेके । ऊर्वःऽइव । पप्रथे । कामः । अस्मे इति ।
तम् । आ । पृण । वसुऽपते । वसूनाम् ॥ १९ ॥

हेइन्द्र नोऽस्मदर्थं द्युमन्तं दीप्तियुक्तं भगं धनमाभर आसमन्तात्संभर देष्णस्यदानशीलस्यतेतवसंबन्धिनोधनस्यप्ररेके प्ररेचनेदानेनिधीमहि धनदानस्यवयंपात्रभूताःस्मेत्यर्थः कुतइत्यतआह—अस्मे अस्माकंकामोभिलाषः ऊर्वइव अनवाप्तकामोवडवानलइव पप्रथे प्रभूतोवर्तते वसूनां वसुपते धनानांमध्यमोत्तमधनानामधिपते हेइन्द्र तंमहान्तंकामम् आपृण बहुधनप्रदा

नेनापूरय ॥ भर भृञ्भरणेइत्यस्यलोटिरूपम् । देष्णस्य डुदाञ्दाने गादाभ्यामिष्णाजितिइष्ण च्प्रत्ययः अत्यर्थंददातीतिदेष्णः चित्स्वरः । धीमहि दधातेर्लिङिबहुलंछन्दसीतिशपोलुक् छन्दस्युभयथेतिमहिङःसार्वधातुकत्वात्सीयुटःसलोपः आर्धधातुकत्वादालोपः निघातः । ऊर्वइव पूर्वपदस्वरः । पप्रथे प्रथप्रख्यानेइत्यस्यलिटिरूपम् । पृण पृणप्रीणनेइत्यस्यलोटि सेर्हिः तुदादिः अतोहेरितिहेर्लुक् । वसूनां नित्त्वादाद्युदात्तः ॥ १९ ॥

अथविंशी—

इमंकाममन्दयागोभिरश्वैश्चन्द्रवताराधसापप्रथश्च ।
स्वर्यवोमतिभिस्तुभ्यंविप्राइन्द्रायवाहःकुशिकासोअक्रन् ।२०।

इमम् । कामम् । मन्दय । गोभिः । अश्वैः । चन्द्रऽवता ।
राधसा । पप्रथः । च । स्वःऽयवः । मतिऽभिः । तुभ्यम् । विप्राः ।
इन्द्राय । वाहः । कुशिकासः । अक्रन् ॥ २० ॥

हेइन्द्र इमंधनादिविषयंकाममस्मदीयमभिलाषं गोभिःअग्निहोत्रादिकर्मसाधनभूतैर्गवादिभिर्वाहनसाधनभूतैरश्वैश्च चन्द्रवतादीप्तियुक्तेनराधसाधनेनचमन्दय एतानिदत्त्वा इममभिलाषंपूरय किंच एतैरस्मान्पप्रथः प्रथितांश्चकुरु पश्चात्स्वर्यवः स्वर्गादिसुखमात्मनइच्छन्तः विप्राःकर्मकुशलाः कुशिकासःकुशिकाः मतिभिर्मननीयैर्मन्त्रैः वाहः स्तोत्रमिन्द्रायतुभ्यमक्रन्नकार्षुः ॥ मन्दय मदिस्तुत्यादिष्वित्यस्यलोटिरूपम् । गोभिः सावेकाचइतिविभक्तेरुदात्तत्वेप्राप्ते नगोश्वन्त्सावर्णेत्यादिनाप्रतिषेधः प्रकृतिस्वरः । पप्रथः प्रथप्रख्याने क्विप् छन्दस्युभयथेतितस्यसार्वधातुकत्वात्शप् तस्यबहुलंछन्दसीतिश्लुः धातुस्वरः । अक्रन् करोतेर्लुङिमन्त्रेघसेत्यादिनालुक् निघातः ॥२०॥

अथैकविंशी—

आनोगोत्रादर्दृहिगोपतेगाःसमस्मभ्यंसनयोयन्तुवाजाः ।
दिवक्षाअसिवृषभसत्यशुष्मोस्मभ्यंसुमघवन्बोधिगोदाः ।२१।

आ । नः । गोत्रा । दर्द्दहि । गोऽपते । गाः । सम् । अस्मभ्यम् । सनयः । यन्तु । वाजाः । दिवक्षाः । असि । वृषभ । सत्यऽशुष्मः । अस्मभ्यम् । सु । मघऽवन् । बोधि । गोऽदाः ॥ २१ ॥

· गोपते गवांपते स्वर्गाधिपते हेइन्द्र नोऽस्मदर्थंगोत्रागोत्राण्यभ्राणि गाःअपःप्रति आदर्द्दहि आद्रियस्व अभ्राणिविदार्यजलानिप्रापयेत्यर्थः ततः सनयःसंभजनीयानिवाजा अन्नानि अस्मभ्यमस्मदर्थंसंयन्तु समागच्छन्तु वृषभ कामानांवर्षितः हेइन्द्र त्वं दिवक्षाअसि दिवंव्याप्यवर्तमानत्वेनमहानसि अतएवसत्यशुष्मःसत्यसामर्थ्यः मघवन् धनवन् हेइन्द्र अस्मभ्यंगोदाः गवांप्रदाताभवामीति सुबोधि सुष्ठुबुध्यस्व ॥ दर्द्दहि दृङ्आदरे यङ्लुकि लोटिरूपम् ऋतश्चेत्यभ्यासस्यरुगागमः निपातः । गाः औतोम्शसोरित्योकारस्याकारः एकादेशस्वरः । अस्मभ्यं भ्यसोभ्यमितिचतुर्थीबहुवचनस्यभ्यमादेशः । यन्तु इण्गतौ लोटिरूपम् । दिवक्षाः अक्षूव्याप्तौ असुन् दिवंव्याप्नोतीतिदिवक्षाः कृदुत्तरपदस्वरः । गोदाः डुदाञ्दाने अस्माद्विच् कृदुत्तरपदप्रकृतिस्वरः ॥ २१ ॥

अथद्वाविंशी—

शुनंहुवेममघवानमिन्द्रमस्मिन्भरेनृतमंवाजसातौ ।
शृण्वन्तमुग्रमूतयेसमत्सुघ्नन्तंवृत्राणिसंजितंधनानाम् ॥२२॥४॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसाता । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ २२ ॥ ४ ॥

हेइन्द्र वाजसातौ वाजस्यान्नस्यसातिर्लाभोयस्मिन्सोयंवाजसातिः तस्मिन्भरे बिभ्रति जयलक्ष्मीमनेनयोद्धारइतिभरःसंग्रामः तस्मिन्संग्रामेशुनंशूनमुत्साहेनप्रवृद्धं यद्वा शुनमितिसुखनाम सुखकरंमघवानंधनवन्तम् अतएवइन्द्रं निरतिशयैश्वर्यसंपन्नं नृतमं सर्वस्यजगतोतिशयेन नेतारं त्वां हुवेम कुशिकावयंयज्ञार्थमाह्वयेम तथा शृण्वन्तम् अस्माभिःक्रियमाणांस्तुतिंशृण्वन्तमुग्रं शत्रूणांभयंकरं समत्सु संग्रामेषु वृत्राणिवृत्रोपलक्षितानिसर्वाणिरक्षांसिघ्नन्तंहिंसन्तं धनानांशत्रुसंबन्धिनांसंजितंसम्यग्जेतारंत्वामूतयेरक्षणायवयमाह्वयेम । शुनं टुओश्विगतिवृद्ध्योरि-

स्यस्यनिष्ठायांयस्यविभाषेतीट्प्रतिषेधः यजादित्वात्संप्रसारणं दीर्घाभावश्छान्दसः प्रत्ययस्वरः। हुवेम ह्वयतेर्बहुलंछन्दसीतिसंप्रसारणेकृते शपोलुकिकृतेच लिङिरूपं निघातः । भरे भृञ्भरणे घः वृषादित्वादाद्युदात्तः वाजसातौ षणुदाने भावेक्तिन् जनसनेत्यादिनानुनासिकस्यात्वं बहुव्रीहौपूर्वपदस्वरः । क्षमत्सु अदभक्षणे संपूर्वात्क्विप् संभक्षयन्तियोद्धृणामायूंषीतिसमदःसंग्रामाः कृदुत्तरपदस्वरः । घ्नन्तं हनहिंसागत्योरित्यस्यशतरि गमहनेत्यादिनोपधालोपः होहन्तेरितिकुत्वम् । संजितं जिजये क्विप् तुक् ॥ २२ ॥

॥ इतितृतीयस्यद्वितीयेचतुर्थोवर्गः ॥ ४ ॥

शासद्वह्निरितिद्वाविंशत्यृचंद्वितीयंसूक्तम् अत्रानुक्रमणिका—शासत्कुशिकोविश्वामित्र एववाश्रुतेरिति इषीरथस्यपुत्रःकुशिकोविश्वामित्रएववाऋषिः इन्द्रोदेवता त्रिष्टुप्छन्दः चातुर्विंशिकेहनिमाध्यंदिनेसवनेच्छावाकशस्त्रे आरम्भणीयायाऊर्ध्वमहीनसूक्तसंज्ञकमेतत्सूक्तंशंसनीयं सूत्रितंच—अस्माइदुप्रतवसेशासद्वह्निरितीतरावहीनसूक्तेइति पृष्ठ्याभिप्लवषडहयोः प्रथमेहानिमाध्यंदिनेसवनेच्छावाकशस्त्रे अहीनसूक्तस्यस्थानेत्रीणिसंपातसूक्तानि तत्रेदंतृतीयं संपातसूक्तं सूत्रितंच—इमामूषुप्रभृतिंसातयेधा इच्छन्तित्वाशासद्वह्निरितिसंपाताइति ।

तस्मिन्सूक्तेप्रथमा—

**शासद्वह्निर्दुहितुर्नप्त्यंगाद्विद्वाँऋतस्यदीधितिंसपर्यन् ।**
**पितायत्रदुहितुःसेकमृञ्जन्त्संशग्म्येनमनसादधन्वे ॥ १ ॥**

शासत् । वह्निः । दुहितुः । नप्त्यम् । गात् । विद्वान् । ऋतस्य । दीधितिम् । सपर्यन् । पिता । यत्र । दुहितुः । सेकम् । ऋञ्जन् । सम् । शग्म्येन । मनसा । दधन्वे ॥ १ ॥

कुशिकःप्रसङ्गात्कंचिच्छास्त्रार्थंब्रूते अपुत्रस्यपितुः पुत्रादायादापुत्रिकासतीयतः सन्तानकृत्तस्याः पुत्रइत्यनयोच्यत इति । अपुत्रोयःपिताकन्यामन्यकुलंप्रापयतिसवह्निरित्युच्यते । सपिता शासत् अभ्रातृकांप्रदास्यामितुभ्यंकन्यामलङ्कृताम् । अस्यांयोजायतेपुत्रःसमेपुत्रोभवेदितीतिस्मृत्युक्तमनुशासनंकुर्वन् दुहितुःपुत्रिकायानप्त्यंनप्तारंपौत्रं गात्गच्छति दुहितुःपुत्रत्वेनस्वीकारात् दौहित्रम् नमृभवं पिण्डदानादिकंकर्तव्यतयागात् गच्छति किंकुर्वन् विद्वानस्यांदुहितरिजातःपुत्रोममस्वधाकरोभविष्य-

(१) अपुत्रस्य पितुः पुत्रीदायादापुत्रिकासती यतः सन्ताकृत्तस्याः पुत्रइत्यनयोच्यत इति पुस्तकान्तरे न पाठान्तरंभूतइत्याभे ।

तीतिजानन् ऋतस्यसत्यस्यपुत्रोत्पादनसमर्थस्यरेतसः दीधितिंधर्तारंजामातरंतत्पतिंसपर्यन् वस्त्रालङ्कारादिनापूजयन् पितानप्तृभावंगच्छति यत्र यस्मिन्विषयेपितापुत्रोजनकः दुहितुरप्रत्तायाः स्वकन्यायाः सेकं रेतसः सेकं तस्यां रेतःसेकमृञ्जन् प्रसाधयन् शग्म्येन सुखनिमित्तेनमनसा संदधन्वे आत्मानं संधत्ते अपुत्रत्वनिमित्तदुःखापगमात् । यस्यादुहितुःपितापालकः पतिर्जामातासेकं तस्यांरेतःसेकमृञ्जन् प्रसाधयन् सम्शग्म्येनकेवलंसुखनिमित्तेनमनसातस्यांस्वशरीरंसंदधन्वे-संधत्ते नतुपुत्रनिमित्तेनमनसा एतमर्थंयास्कोप्याह—'प्रशास्तिवोढ्ढासंतानकर्मणेदुहितुःपुत्रभावंदुहिता दुर्हितादूरेहितादोग्धेर्वानप्तारमुपागमद्दौहित्रंपौत्रमिति विद्वान्प्रजननयज्ञस्यरेतसोवाङ्गादङ्गात्संभूतस्य हृदयादधिजातस्यमातरिप्रत्यृतस्यविधानंपूजयन्'इत्यादिना ॥ शासत् शासेःशतरिअभ्यस्तत्वान्नुमभावः । दुहितुः दुहप्रपूरणे नप्तृनेष्टृइत्यादिनातृचिनिपातनादिडागमः चित्स्वरः । नप्त्यं नप्तरिभवं भवेछन्दसीतियत् रीङ्ऋतइतिरीङादेशः यस्येतिलोपः रेफलोपश्छान्दसः तित्स्वरितः । गात् इण्गतावित्यस्यछान्दसेलुङिरूपम् । ऋञ्जन् ऋञ्जतिःप्रसाधनकर्मा । शग्म्येन शंसुखंगच्छतीतिगमेरौणादिकः कप्रत्ययः क्ङित्वाद्गमहनेत्यादिनोपधालोपः शग्मेसाधुरिति तत्रसाधुरितियत्प्रत्ययः वीरवीर्यौचेत्यत्रयतोनावइत्यस्यानित्यत्वस्यज्ञापितत्वादत्रातित्स्वरः । दधन्वे धविइति(सौत्रो)धातुः लिटि रूपं प्रत्ययस्वरः यद्योगाद्यनिघातः ॥ १ ॥

अथद्वितीया—

**नजामयेतान्वोरिक्थमारैक्चकारगर्भंसनितुर्निधानम् ।**
**यदीमातरोजनयन्तवह्निमन्यःकर्तासुकृतोरन्यऋन्धन् ॥२॥**

न । जामये । तान्वः । रिक्थम् । अरैक् । चकार । गर्भम् ।
सनितुः । निऽधानम् । यदि । मातरः । जनयन्त । वह्निम् ।
अन्यः । कर्ता । सुऽकृतोः । अन्यः । ऋन्धन् ॥२॥

अभ्रातृकायादुहितुःपुत्रिकाकरणात्सारिक्थभागित्युक्तं भ्रातृमत्यास्तस्यारिक्थभाक्त्वं नास्तीतिब्रूते—तान्वः तनूजःऔरसःपुत्रोजामयेभगिन्यैरिक्थंपित्र्यंधनंनारैक् नप्ररेचयति नप्रददाति किंतर्हिसनितुरेनांसंभजमानस्यभर्तुःगर्भं षष्ठ्यर्थेद्वितीया गर्भस्यनिधानंरेतःसेकानिधानीमेनांचकार पाणिग्रहणेनसंस्कृतामेनांकरोति नतुतस्यैरिक्थंददातीत्यभिप्रायः असंस्कृतास्तुसंस्कार्याभ्रातृभिःपूर्वसंस्कृतैः । भगिन्यश्चनिजादंशाद्दत्त्वांशंतुतुरीयकमितियाज्ञवल्क्यस्मरणात् । स्त्रीपुंसलक्षणस्यापत्यस्यैकोत्पाद्यत्वाविशेषात्पुमपत्यस्यकोविशेषइत्याशङ्क्यविशेषंदर्श-

(१) यत्र यस्मिन्विषयेपिताजनकः दुहितुरप्रत्तायाः कन्यायाः सेकंरेतसः सेकंतस्यांरेतः-सेकमृञ्जन् सम्पादयन् शग्म्येन सुखनिमित्तेनमनसा सन्दधन्वे आत्मानं सन्धत्ते अपुत्रत्वनिमित्तदुःखापगमादिति न क्वचित्पाठान्तरम् । (२) नि० ३. ४ ।

यति-यदि यद्यपिमातरौमातापितरौवह्निम् अवह्निःस्त्री वह्निःपुमान्स्वभार्यायावोढृत्वात् अवह्निश्चवह्निः तादृशंस्त्रींपुंसलक्षणमपत्यंजनयन्ताऽजनयताम्तथापितयोर्मध्येअन्यःपुँल्लक्षणःसुक्रतोःशोभनस्यपिण्डदानादेःकर्मणःकर्ताभवति अन्यःस्त्रीलक्षणःऋन्धन् वस्त्रालङ्कारादिनाऋध्यमानएवभवति पिण्डदानादिकर्तृत्वात्पुत्रोदायार्हः दुहितातथानेतिनदायार्हा सातुकेवलंपरस्मैदीयते तथाच निरुक्तं— नजामयेभगिन्यैजामिरन्येस्यांजनयन्तिजामपत्यंजमतेर्वास्याद्गतिकर्मणोनिर्गमनप्रायाभवतितान्वआत्मजः पुत्रोरिक्थंप्रारिचत्प्रादाच्चकारैनांगर्भनिधानींसनितुः प्तग्राहस्ययादिहमातरोजनयन्तवह्निंपुत्रमवह्निंचस्त्रियमन्यतरःसंतानकर्ताभवतिपुमान्दायादोन्यतरोर्धयित्वाजामिःप्रदीयतेपरस्माइति ॥ तान्वः तन्वाः प्राणाधिष्ठितत्वात्तनूः प्राणवती तद्विकारइत्यर्थे प्राणिरजतादिभ्योञित्यत्र संज्ञापूर्वकस्य विधेरनित्यत्वाद्गुणाभावः । रिक्थं रिचिर्विरेचने पातृतुदिवचिरिचिभ्यस्थक् प्रत्ययस्वरः । अरैक् रिचिर्विरेचने इत्यस्यलुङिसिचि वदव्रजेत्यादिनावृद्धिः बहुलंछन्दसीतीडभावः हल्ङ्याादिसंयोगान्तलोपौ निघातः । सनितुः षणसंभक्तावित्यस्यतृचिरूपम् । निधानं दधातेर्ल्युटिरूपं लित्स्वरः । मातरः पितामात्रेतिपितुःशेषेप्राप्तेमातुः शेषश्छान्दसः द्विर्वचनस्यबहुवचनंपूजार्थम् । जनयन्त जनेर्णिचिरूपम् । वह्निं पुमांस्त्रियेतिवह्नेःशेषः । सुक्रतोः करोतेरौणादिकःक्तुप्रत्ययः । ऋधुवद्धौ व्यत्ययेनश्नम् ॥ २ ॥

अग्निर्जज्ञेजुह्वा३रेजमानोमहस्पुत्राँअरुषस्यप्रयक्षे ।
महान्गर्भोमह्याजातमेषांमहीप्रवृद्धर्यश्वस्ययज्ञैः ॥३॥

अग्निः । जज्ञे । जुह्वा । रेजमानः । महः । पुत्रान् । अरुषस्य ।
प्रऽयक्षे । महान् । गर्भः । महि । आ । जातम् । एषाम् ।
मही । प्रऽवृत् । हर्यऽअश्वस्य । यज्ञैः ॥३॥

हेइन्द्र अरुषस्य रोचमानस्यतवप्रयक्षेयज्ञार्थंजुह्वा ज्वालाभीरेजमानःकम्पमानोग्निःमहःप्रभूतान्पुत्रान्रश्मीन्जज्ञे उत्पादयामास एषांरश्मीनांगर्भोजलात्मनाक्रोडीकारः महानासीत् किंच एषां रश्मीनांमेलनम् आजातं सर्वतओषध्यात्मनाजातं महि महदभूत् किंच एषांरश्मीनांप्रवृत् अनेनप्रकारेणप्रवृत्तिः हर्यश्वस्येन्द्रस्ययज्ञैर्यजनार्हैः सोमाज्याहुतिभिर्महीमहतीभवति ॥

१ नि० ३. ६. ।

जज्ञे जनीप्रादुर्भावेइत्यस्यलिटिरूपम् अंतर्भावितण्यर्थः । जुह्वा जुहोतेर्द्वेदीर्घश्चेतिक्विप् द्विर्वचनं दीर्घश्चधातोः उदात्तस्वरितयोरितिस्वरितत्वम् । हर्यश्वस्य हरीअश्वौयस्येतिबहुव्रीहौपूर्वपदप्रकृतिस्वरः ॥ ३ ॥

अथचतुर्थी–

अभिजैत्रीरसचन्तस्पृधानंमहिज्योतिस्तमसोनिरजानन् ।
तंजानतीःप्रत्युदायन्नुषासःपतिर्गवामभवदेकइन्द्रः ॥ ४ ॥

अभि । जैत्रीः । असचन्त । स्पृधानम् । महि । ज्योतिः ।
तमसः । निः । अजानन् । तम् । जानतीः । प्रति । उत ।
आयन् । उषसः । पतिः । गवाम् । अभवत् । एकः । इन्द्रः ॥४॥

जैत्रीःजित्वर्योविशोमरुतःस्पृधानंवृत्रेणसहस्पर्धमानमिन्द्रम् अभ्यसचन्त सर्वतःसमगच्छन् तेचमरुतः तस्मिन्वृत्रेहते महि महत्ज्योतिःसूर्याख्यंतेजः तमसस्तमोरूपाद्वृत्रान्निरजानन् निर्गतमाज्ञासिषुः ततः इन्द्रंवृत्रहंतारमुदितंसूर्यंजानतीर्जानानाउषसः तंप्रत्युत् अभिलक्ष्यैवअयन् प्राप्नुवन् अथ तत्रोद्भूतानांगवांरश्मीनामेकोऽद्वितीयएवेन्द्रः पतिरभवत् ॥ जैत्रीः जयतेस्तृन्निरूपं गुणस्यस्थानेव्यत्ययेनवृद्धिः नित्स्वरः । असचन्त षचसमवायेइत्यस्यलङिरूपम् । स्पृधानं स्पर्धसंघर्षे छन्दसिकानजादेशः छन्दसिद्विर्वचनस्यविकल्पितत्वाद्विर्वचनाभावः चित्स्वरः । अजानन् ज्ञाअवबोधनेइत्यस्यलङिरूपं निघातः । आयन् अयगतावित्यस्यलङिरूपम् ॥ ४ ॥

अथपञ्चमी–

वीळौसतीरभिधीरामतृन्दन्प्राचाहिन्वन्मनसासप्तविप्राः ।
विश्वामविन्दन्पथ्यामृतस्यप्रजानन्नित्तानमसाविवेश ॥५॥५॥

वीळौ । सतीः । अभि । धीराः । अतृन्दन् प्राचा । अहिन्वन् ।
मनसा । सप्त । विप्राः । विश्वाम् । अविन्दन् । पथ्याम् । ऋतस्य ।
प्रऽजानन् । इत् । ता । नमसा । आ । विवेश ॥ ५ ॥ ५ ॥

पुराकिलाङ्गिरसांगावःपणिनामकैरसुरैरपहृत्य निगूढेकस्मिंश्चित्पर्वतेस्थापितास्तेचाङ्गिरसस्तत्प्रायस्थंमिन्द्रंतुष्टुवुः स्तुतश्चसइन्द्रोगवान्वेषणायदेवशुनींप्राहिणोत् साचगवांगवेषणपरासती तत्स्थानमलभत तयाविज्ञापितइन्द्रस्तागाआनीयाङ्गिरोभ्यःप्रादादित्यैतिहासिकीकथा । तथाचास्याऋचोयमर्थः—धीराःधीमन्तःसप्तविप्रामेधाविनःसप्तसंख्याकाअङ्गिरसः वीळौदृढेपर्वतेसतीः निगूढाःसतीर्गाअभि अभिलक्ष्यअतृन्दन् निधानमपावृण्वन् उपेक्षामकुर्वन् ततस्तेङ्गिरसःपर्वतविलेगावःसन्तीतिमनसानिश्चित्यप्राचा येनमार्गेणप्रविष्टास्तेनैवप्राचीनेनमार्गेणतागाअहिन्वन् निरगमयन् यद्वा प्राचाप्रकर्षेणेन्द्रमञ्चतिप्राप्नोतीतिप्राक् तेनेंद्रविषयेणमनसा मन्यतइतिमनः स्तोत्रं तेनस्तोत्रेणाहिन्वन् अवर्धयन् इन्द्रंतुष्टमकुर्वन् स्तुत्वाचऋतस्यपथ्यांयज्ञस्यमार्गेसाधुभूतां विश्वांसर्वामपहृतांगामविन्दन्नलभन्त ततःसइन्द्रः ता तान्यङ्गिरसांकर्माणिप्रजानन्नित्प्रकर्षेणजानन्नेव नमसानमस्कारेणाङ्गिरसःसंभावयन्तैरधिष्ठितंपर्वतमाविवेश ॥ अतृन्दन् उतृदिर् हिंसानादरयोरित्यस्यलङि रुधादित्वात्श्नम् तस्यश्नसोरित्यल्लोपः निघातः । प्राचा अञ्चेश्छन्दस्यसर्वनामस्थानमितिविभक्तेरुदात्तत्वम् अहिन्वन् हिगतिवर्धनयोरित्यस्यलङिरूपम् । अविन्दन् विद्लृलाभेइत्यस्यलङिमुचादित्वान्नुम् निघातः । पथ्यां पथिसाधुरित्यर्थे तत्रसाधुरितियत्प्रत्ययः यचिभमितिभसंज्ञायांनस्ताद्धितेइतिटिलोपः यतोनावइत्यस्यानित्यत्वात्तित्स्वरितइतिस्वरितः । विवेशविशप्रवेशनेइत्यस्यलिटिरूपम् ॥ ५ ॥

॥ इतितृतीयस्यद्वितीयेपञ्चमोवर्गः ॥ ५ ॥

अथषष्ठी—

विदद्यदीसरमारुग्णमद्रेर्महिपाथःपूर्व्यंसध्र्यक्कः ।
अग्रंनयत्सुपद्यक्षराणामच्छारवंप्रथमाजानतीगात् ॥ ६ ॥

विदत् । यदि । सरमा । रुग्णम् । अद्रेः । महि । पाथः ।
पूर्व्यम् । सध्र्यक् । करिति कः । अग्रम् । नयत् । सुऽपदी ।
अक्षराणम् । अच्छ । रवम् । प्रथमा । जानती । गात् ॥ ६ ॥

यदि यदासरमाइन्द्रेणगवान्वेषणार्थंप्रेषिता सरमानामदेवशुनी अद्रेःपर्वतस्यरुग्णंभग्नं द्वारंविदत् अलभत तदानीमिन्द्रोमहि महत्पूर्व्यंपूर्वप्रेषणकालेअन्नादिनीं तेप्रजांकरिष्यामीति प्रतिज्ञातं सध्यक् इतरैरपिभोज्यैःसध्रीचीनंपाथोगव्यादिलक्षणमन्नं कःअकार्षीत् तस्यैदत्तवान् ततःसुपदी शोभनपादयुक्ता सा सरमा अक्षराणांक्षयरहितानांगवामग्रंप्रान्तंनयत् प्रामोत् कुतइत्यतआह—यतःरवंतेषांहम्भारवंप्रथमाप्रथमंजानतीसती अच्छ शब्दाभिमुख्येनगात् जगाम ॥ विदत् विद्लृलाभेइत्यस्यलुङि लृदित्त्वात्च्लेरङादेशः तस्यस्वरः । सरमा सृगतौ औणादिकोमप्रत्ययः सरतीतिसरमा सरमासरणादितियास्कः । प्रत्ययस्वरः । रुग्णं रुजोभङ्गेइत्यस्यनिष्ठायामोदितश्चेतिनत्वं प्रत्ययस्वरः । पाथः पारक्षणे अन्नेचेत्यसुन्प्रत्ययः थुडागमः पातीतिपाथोन्नं नित्स्वरः । सध्यक् अञ्चुगतिपूजनयोः ऋत्विगित्यादिनाक्विन् सहअञ्चतीतिसहस्यसध्रिरितिसध्र्यादेशः क्विन्प्रत्ययस्यकुरितिकुत्वम् अद्रिसध्र्योरन्तोदात्तत्वंनिपातनंकृत्स्वरनिवृत्त्यर्थमितिसध्रिइत्यादेशान्तोदात्तः यणादेशेकृते उदात्तस्वरितयोर्यणःस्वरितइति यणःस्वरितत्वम् । कः करोतेर्लुङिसिपि च्लेः मन्त्रेघसह्वरेत्यादिनालुक् गुणेकृते हल्ङ्यादिनासिलोपः विसर्जनीयः निघातः । नयत् नयतेर्लङिरूपम् । सुपदी पादोऽन्यतरस्यामितिङीप् । गात् इणोलुङिरूपम् ॥ ६ ॥

अथसप्तमी—

अगं॑च्छदु॒विप्रं॑तमः सखी॒यन्नसू॑दयत्सु॒कृते॒गर्भ॒मद्रिः॑ ।
स॒सा॒नम॒र्यो॒युव॑भिर्मख॒स्यन्नथा॑भव॒दङ्गि॑राः स॒द्यो अर्च॑न् ॥७॥

अग॑च्छत् । ऊँ इति॑ । विप्र॑ऽतमः । स॒खि॒ऽयन् । अ॒सू॑दयत् ।
सु॒ऽकृते॑ । गर्भ॑म् । अद्रिः॑ । स॒सान॑ । मर्यः॑ । युव॑ऽभिः । म॒ख॒स्यन् ।
अथ॑ । अ॒भ॒व॒त् । अङ्गि॑राः । स॒द्यः । अर्च॑न् ॥ ७ ॥

विप्रतमः अतिशयेनमेधावी सखीयन् अङ्गिरोभिःसाकमात्मनःसखित्वमिच्छन् इन्द्रोगच्छदु गोभिरधिष्ठितंपर्वतमगमदेव सोद्रिः सखित्वमिच्छन्सुकृतेसुष्ठुयुद्धकर्त्रेइन्द्राय गर्भं गवात्मकंगर्भमसूदयत् निरगमयत् युवभिर्नित्यतरुणैर्मरुद्भिःसह मखस्यन् गोधनमङ्गिरसामिच्छन् मर्यः असुराणांमारयिताइन्द्रः ससान असुरैरपहृताः तागाभेजे अथानन्तरमाङ्गिराःससा-

नामङ्गिरसांमध्येवरिष्ठोङ्गिराऋषिःइन्द्रात्तागाल्लब्ध्वा सद्यस्तदानीमेव अर्चन् इन्द्रंपूजयन्नभवत् ॥ अगच्छत् गमेर्लङिरूपम् । सखीयन् सुपआत्मनःक्यच् । असूदयत् षूदनिरासेइत्यस्यण्यंतस्यलङिरूपम् । ससान षणसंभक्तावित्यस्यलिटिणालिरूपं लित्स्वरः । मखस्यन् छन्दसिपरेच्छायामपिक्यच् सर्वप्रातिपदिकेभ्योलालसायांसुग्वक्तव्यइतिसुगागमः एकादेशस्वरः । अङ्गिराः सृगतौ अङ्गारशब्देउपपदे सर्तेर्धातोरसुन्प्रत्ययः उपपदेगकारात्परस्याकारस्येत्वं अन्त्यलोपश्च धातोर्लोपश्च अङ्गिराइतिसूत्रेणानिपात्यते भूतकालेअङ्गारेभ्यःसृतइतिअङ्गिराऋषिः अङ्गारेष्वङ्गिराइतियास्कः । नित्स्वरः ॥ ७ ॥

अथाष्टमी—

**स॒तःसं॑तःप्र॒ति॒मानं॑पुरो॒भूर्विश्वा॑वेद॒जनि॑मा॒हन्ति॒शुष्ण॑म् ।**
**प्रणो॑दि॒वःप॑द॒वीर्ग॒व्युरर्च॒न्त्सखा॒सखीँ॑रमुञ्च॒न्निर॑व॒द्यात् ॥८॥**

स॒तःऽसंतः । प्र॒ति॒ऽमानं॑म् । पु॒रः॒ऽभूः । विश्वा॑ । वे॒द । जनि॑म । हन्ति॑ । शु॒ष्णम् । प्र । नः॒ । दि॒वः । प॒द॒ऽवीः । ग॒व्युः । अर्च॑न् । सखा॑ । सखी॑न् । अ॒मु॒ञ्च॒त् । निः । अ॒व॒द्यात् ॥ ८ ॥

योयमिन्द्रः सतःसतःउत्तमस्यवसुनःप्रतिमानं प्रतिमीयतेउपमीयतेऽनेनसर्वमितिप्रतिमानंप्रतिनिधिः यद्वा सतःसतोजातस्यसर्वस्यप्रतिमानंस्वस्यमहत्त्वेनप्रतिमातिइयत्तयासर्वंपरिच्छिनत्तीत्यर्थः पुरोभूः युद्धेपुरतःशत्रूनवाप्नोतीतिपुरोभूश्च विश्वाजनिमसर्वाणिजातानिवेदजानाति शुष्णं शुष्णनामानमसुरंहन्ति पदवीःकवितमः गव्युः गोधनमङ्गिरसामिच्छन् अस्माकं सखाइन्द्रःसखीन्नोऽस्मान्दिवःद्युलोकादागत्यप्रार्चन् प्रकर्षेणापूजयन् अवद्यात् वृत्रबाधारूपाद्दोषान्निरमुञ्चत् नितरांमुञ्चतु ॥ प्रतिमानं मातीतिमानम् औणादिकोनन्प्रत्ययः यद्वा करणेल्युट् । पुरोभूः भूप्राप्तौ क्विप् । वेद वेत्तेर्लटिरूपम् । जनिम जनीप्रादुर्भावे जनिहृभ्यामिमनिन्निति इमनिन्प्रत्ययःभूतकाले जातानीतिजनिम सुपांसुलुगितिसुपोलुक् नित्स्वरः । हन्ति हन्तेर्लटिरूपं वाक्यभेदादानिघातः । शुष्णं शोषयतीतिशुष्णः । प्रणः उपसर्गाद्बहुलमितिसंहितायांणत्वम् । पदवीः वीकान्त्यादिषु क्विप् पदानिवेत्तिपरस्परसंगतानिकरोतीतिपदवीः कविः[१] । गव्युः गोशब्दात्परेच्छायांछन्दसिक्यच् वान्तोयिप्रत्ययेइतिवान्तादेशः क्याच्छन्दसीत्युप्रत्ययः प्रत्ययस्वरः ।

१ नि० ३. १७. ।

अर्चन् अर्चतेःशतरिरूपम् । सखीन् संहितायांनकारस्यदीर्घादटीतिरुः पूर्वस्यवर्णस्यअत्रानुनासिकेत्यनुनासिकादेशः । अमुञ्चत् मुच्लृमोक्षणेइत्यस्यलङि शेमुचादीनामितिनुमागमः निघातः । अवद्यात् वदव्यक्तायांवाचीत्यस्यनञ्पूर्वस्यगर्ह्यार्थे अवद्यपण्यवर्याइतिनिपातनात्यत्प्रत्ययः ॥ ८ ॥

अथनवमी—

निगंव्यतामनंसासेदुरकैंःकृंण्वानासोअमृतत्वायंगातुम् ।
इदंचिन्नुसदंनंभूर्येषांयेनमासाँअसिंषासन्नृतेनं ॥ ९ ॥

नि । गव्यता । मनंसा । सेदुः । अर्कैः । कृण्वानासः । अमृतऽत्वायं । गातुम् । इदम् । चित् । नु । सदनम् । भूरिं । एषाम् । येनं । मासान् । असिंसासन् । ऋतेनं ॥ ९ ॥

गव्यता गाइच्छतामनसायुक्ताः अर्कैरर्चनीयैःस्तोत्रैः अमृतत्वाय देवत्वप्राप्त्यर्थंगातुं गच्छन्त्यनेनेतिगातुर्मार्गः अमृतत्वप्राप्त्युपायभूतंमार्गंकृण्वानासः कुर्वाणास्तेङ्गिरसःनिषेदुः सत्राख्ये कर्मण्यासीदन् एषामङ्गिरसामिदंचित्सदनम् इदमेवसत्राख्येकर्मण्यासदनंभूरिनुप्रभूतममृतत्वप्राप्त्यर्थंमहानुपायःखलु कुतइत्यतआह—ऋतेनसत्यभूतेनयेनसत्रकर्मणातेङ्गिरसोमासानभिप्लवपृष्ठ्यषळहैः कल्पितान्मासान् असिसासन् संभक्तुमैच्छन् ॥ गव्यता गोशब्दात्क्यचिरूपं वान्तोयिप्रत्ययेइतिवान्तादेशः एकादेशस्वरः । सेदुः सदेर्लिट अतएकहल्मध्येनादेशादेर्लिटीत्येत्वाभ्यासलोपौ निघातः । कृण्वानासः कृविर्हिंसाकरणयोरित्यस्यताच्छीलिकश्चानश् धिन्विकृण्व्योरचेत्युप्रत्ययः चित्स्वरः । गातुं गाङ्गतौ कमिमनिजनिगाभापायाहिभ्यश्चेतिकरणेतुप्रत्ययः प्रत्ययस्वरः । असिषासन् षणसंभक्तावित्यस्य सनि जनसनखनांसञ्झलोरित्यात्वम् अभ्यासस्य सन्यतइतीत्वं सनोतेरनइतिसंहितायांषत्वं तदन्ताल्लङिरूपम् यद्वृत्तयोगादनिघातः ॥ ९ ॥

अथदशमी—

सम्पश्यंमानाअमदन्नभिस्वंपयःप्रत्नस्यरेतंसोदुघांनाः ।
विरोदंसीअतपद्घोषएषांजातेनिष्ठामदंधुर्गोषुवीरान् ॥१०॥६॥

सम्ऽपश्यमानाः । अमदन् । अभि । स्वम् । पयः । प्रत्नस्य । रेतसः । दुघानाः । वि । रोदसी इति । अतपत् । घोषः । एषाम् । जाते । निःऽस्थाम् । अदधुः । गोषु । वीरान् ॥ १० ॥ ६ ॥

स्वंस्वकीयंगोधनम् अभि अभिलक्ष्य संपश्यमानाः मदीयाएतागावइत्यात्मीयतयाजानानास्तेऽङ्गिरसः प्रत्नस्य पुराजातस्यरेतसस्तदुपलक्षितस्यपुत्रस्यधारणार्थंपयोदुघानास्तागाः पयोदुहन्तःसन्त अमदन् अहृष्यन् एषामङ्गिरसांघोषः हर्षादुत्पन्नोमहाध्वनिःस्तुतिजातोवा-रोदसीद्यावापृथिव्यौव्यतपत् तेऽयाप्यातापिष्ट ततस्तेऽङ्गिरसः जातेआत्मीयतयासंपन्नेचराचरात्मकेवस्तुनिनिष्ठामदधुः यथापूर्वंस्थितिमकार्षुः तथा गोषुआहृतासुवीरान्रक्षाकर्मण्यतिशूरान्पुरुषानदधुः स्थापयामासुः ॥ संपश्यमानाः संपूर्वस्यदृशेः दृशेश्चेतिवक्तव्यमित्यात्मनेपदं शानचोलसार्वधातुकस्वरेणानुदात्तत्वेकृतेधातुस्वरः । अमदन् मदीहर्षेइत्यस्यलुङि णिच्यङिरूपं निघातः । दुघानाः दुहप्रपूरणेइत्यस्मात्शानच् अदादित्वाच्छपोलुक् घत्वंछान्दसं वृषादित्वादाद्युदात्तः । अतपत् विपूर्वस्यतपतेरत्रसकर्मकत्वादात्मनेपदाभावः लङिरूपम् । घोषः घुषसंशब्दने घञन्तः ञित्स्वरः । निष्ठां ष्ठागतिनिवृत्तौ स्थःकचेतिक्विप् कृदुत्तरपदस्वरः । अदधुः दधातेर्लङि झेः सिजभ्यस्तेतिजुसादेशः वाक्यभेदान्निघाताभावः । गोषु सावेकाचइतिविभक्तेरुदात्तत्वेप्राप्ते नगोश्वन्निति प्रतिषिद्धत्वात्प्रातिपदिकस्वरः ॥ १० ॥

॥ इतितृतीयस्यद्वितीयेषष्ठोवर्गः ॥ ६ ॥

अथैकादशी–

**सजातेभिर्वृत्रहासेदुहव्यैरुदुस्रियाअसृजदिन्द्रोअर्कैः । उरूच्यस्मैघृतवद्भरन्तीमधुस्वाद्मदुदुहेजेन्यागौः ॥ ११ ॥**

सः । जातेभिः । वृत्रऽहा । सः । इत् । ऊम् इति । हव्यैः । उत् । उस्रियाः । असृजत् । इन्द्रः । अर्कैः । उरूची । अस्मै । घृतऽवत् । भरन्ती । मधु । स्वाद्म । दुदुहे । जेन्या । गौः ॥ ११ ॥

सइन्द्रः जातेभिःसहायतयासंपन्नैर्मरुद्भिःसहितःसन् वृत्रहा वृत्रस्यासुरस्यहन्तामवति सेदु सएवेन्द्रः अर्कैरर्चनीयैः अतएव हव्यैर्होतव्यैर्मरुद्भिःसहितःसन् उस्रियाःऊर्ध्ववसत्यासु

क्षीरादिरूपंहविरित्युस्रियागावः यद्वा ऊर्ध्वंक्षीरदधिनवनीतादिक्रमेणास्ववसतीति ; उस्रियेति गोनाम उत्स्राविणोस्यांभोगाइतियास्कः । तागाउदसृजत् यज्ञार्थंसम्यक्ससर्ज यस्मादेवंतस्मात् घृतवद्धृतोपेतंक्षीरादिकंहविः भरन्ती बिभ्राणा अतएव उरूची उरुप्रभूतमग्निहोत्रादिकमञ्चति हविः प्रदातुंप्राप्नोतीत्युरूची जेन्या जेतव्या प्रशस्तागौरस्मैयजमानायस्वाद्म स्वादुतरं मधुमधुरंक्षीरादिदुदुहे दुह्यतेस्म ॥ उस्रियाः वसनिवासेइत्यस्मात्स्फायितञ्चीत्यादिनारक्प्रत्ययः उस्रशब्दात्स्वार्थेपृषोदरादित्वाद्धप्रत्ययः प्रत्ययस्वरः यद्वा सृगतौ उत्पूर्वस्यसरतेःकप्रत्ययः पूर्वपदस्यान्त्यलोपश्छान्दसः अत्रापिस्वार्थिकोघप्रत्ययः । असृजत् सृजविसर्गे इत्यस्यलङिरूपम् । उरूची उरुअञ्चतीतिक्विन् अञ्चतेश्चोपसंख्यानमितिङीप् उदात्तनिवृत्तिस्वरेणान्तोदात्तः । दुदुहे दुहप्रपूरणेइत्यस्यलिटिरूपम् । जेन्या जयतेःकृत्यार्थेकेन्यप्रत्ययः इकारलोपश्छान्दसः प्रत्ययस्वरः ॥ ११ ॥

अथद्वादशी—

पित्रेचिंच्चक्रुःसदनंसमस्मैमहित्विषीमत्सुकृतोविहिख्यन् ।
विष्कभ्नन्तःस्कम्भनेनाजनित्रीआसीनाऊर्ध्वंरभसंविमिन्वन्॥१२॥

पित्रे। चित्। चक्रुः। सदनम्। सम्। अस्मै। महि। त्विषिऽमत्।
सुऽकृतः। वि। हि। ख्यन्। विऽस्कभ्नन्तः। स्कम्भनेन।
जनित्री इति। आसीनाः। ऊर्ध्वम्। रभसम्। वि। मिन्वन्॥१२॥

सत्रमनुतिष्ठन्तोङ्गिरसः पित्रेचित्पालकायास्मैइन्द्रायमहिमहत्त्विषीमद्दीप्तिमत्सदनमुत्तमं स्थानंसंचक्रुः कथमितितदुच्यते—यतःसुकृतःसमुपार्जितकर्माणस्तेङ्गिरसःतादृशंइन्द्रस्योचितंस्थानं विख्यन्हि , विशेषेणादर्शयन्खलु कुतइत्यतआह—आसीनाः सत्रमुपतिष्ठन्तः तेङ्गिरसःजनित्रीसर्वस्यजगतोजनयित्र्यौद्यावापृथिव्यौस्कम्भनेनस्तम्भनसाधनेनान्तरिक्षेणविष्कभ्नन्तः यथातरोदस्यावधोनपततः तथाविष्टब्धेकुर्वन्तःसन्तः रभसंवेगवन्तंतमिन्द्रमूर्ध्वंद्युलोकेविमिन्वन् हविःस्वीकरणार्थंविशेषेणास्थापयन् ॥ चक्रुः करोतेर्लिट्युसिरूपं निघातः । ख्यन् ख्याप्रकथने अस्यलुङिन्तॄरस्यतिवक्तिख्यातिभ्योङित्यङादेशः आतोलोपइटीत्याकारलोपः हियोगादनिघातः । विष्कभ्नन्तः स्कम्भुरोधने सौत्रोधातुः तस्माच्छतरिरूपं वेःस्कभ्नात्तेर्नित्य-

१ निं० ४. १९ ।

मितिषत्वं शतृप्रत्ययस्वरः । जनित्री ऋन्नेभ्योङीप् जनितामन्त्रेइतिनिपातनाण्णिलोपः वाछन्दसीतिसवर्णदीर्घः । आसीनाः आसउपवेशनेइत्यस्माच्छानच ईदासइतीकारः शानचोलसार्वधातुकस्वरेकृतेधातुस्वरः । मिन्वन् डुमिञ्प्रक्षेपणे इत्यस्यलङिरूपं निवातः ॥ १२ ॥

अथत्रयोदशी–

महीयदिंधिषणांशिश्नथेधात्सद्योवृधंविभ्वं१रोदस्योः ।
गिरोयस्मिन्ननवद्याःसमीचीर्विश्वाइन्द्रायतविषीरनुत्ताः ॥१३॥

मही । यदि । धिषणा । शिश्नथे । धात् । सद्यःऽवृधम् । विऽभ्वम् ।
रोदस्योः । गिरः । यस्मिन् । अनवद्याः । समऽईचीः । विश्वाः ।
इन्द्राय । तविषीः । अनुत्ताः ॥ १३ ॥

महीमहतीधिषणाअस्माभिःक्रियमाणेन्द्रविषयास्तुतिः रोदस्योःशिश्नथे द्यावापृथिव्योरन्योन्यविश्लेषाय सद्योवृधंतदानीमेववर्धमानंविभ्वं विभुं तयोर्धारणसमर्थसाधनंयदिधात् अकरोत् ततस्तत्रवर्तमानेयस्मिन्निन्द्रे अनवद्याः दोषरहितागिरः स्तुतिलक्षणावाचः समीचीः संगताभवन्ति इन्द्रायेतिविभक्तिव्यत्ययः तादृशस्येन्द्रस्यविश्वास्तविषीःसर्वाणिबलानि अनुत्ताः अपरप्रेषितानिस्वभावसिद्धान्येव ॥ धिषणा ञिधृषाप्रागल्भ्ये धृषेर्धिषचसंज्ञायामितिक्युप्रत्ययः धातोर्धिषादेशः धृष्णोत्यनयेतिधिषणास्तुतिः प्रत्ययस्वरः । शिश्नथे श्नथहिंसार्थः अस्मात्क्विप् छन्दस्युभयथेतितस्यसार्वधातुकत्वाच्छप् तस्य बहुलंछन्दसीतिश्लुः बहुलंछन्दसीत्यभ्यासस्येत्वं धातुस्वरः । धात् दधातेश्छान्दसेलुङिरूपं यद्योगादनिघातः । विभ्वं भवतेःक्विप् छन्दस्युभयथेतियणादेशः उदात्तस्वरितयोर्यणइतिस्वरितत्वम् । अनुत्ताः णुदप्रेरणेइत्यस्य नञ्पूर्वस्यनिष्ठायां नसत्तनिषत्तेत्यादिनानिपातनान्निष्ठातकारस्यनत्वाभावः नञ्स्वरः ॥ १३ ॥

अथचतुर्दशी–

मह्यातेसख्यंवश्मिशक्तीरावृत्रघ्नेनियुतोयन्तिपूर्वीः ।
महिस्तोत्रमवआगन्मसूरेरस्माकंसुमघवन्बोधिगोपाः ॥१४॥

महि । आ । ते । सख्यम् । वश्मि । शक्तीः । आ । वृत्रघ्ने । नियुतः । यन्ति । पूर्वीः । महि । स्तोत्रम् । अवः । आ । अगन्म । सूरेः । अस्माकम् । सु । मघवन् । बोधि । गोपाः ॥ १४ ॥

हेइन्द्र ते तव महि महत्सख्यमावश्मि आकामये शक्तीः त्वत्संबन्धीनिदानानिचाकामये वृत्रघ्ने वृत्रासुरस्यहन्त्रेतुभ्यंपूर्वीर्बह्व्योनियुतोवडवाआयन्ति वहनार्थमागच्छन्ति सूरेःविदुषस्तवमहि महत्स्तोत्रम् अवः हविर्लक्षणमन्नंच आगन्म प्रापयामः हेमघवन्निन्द्र तादृशस्त्वम् ॰अस्माकं सुसुष्ठुगोपाः पालयिताभवामीतिबोधिबुध्यस्व ॥ सख्यं सख्युर्यइतिभावार्थेयप्रत्ययः प्रत्ययस्वरः । वश्मि वशकान्तौ लटिरूपम् । नियुतः युमिश्रणे क्विप् नितरांयुवन्तिमिश्रयन्त्यात्मानंरथेष्वितिनियुतोवडवाः । अगन्म गमेर्लङ्युत्तमपुरुषबहुवचनेबहुलंछन्दसीतिशपोलुक् म्वोश्चेतिमकारस्यनकारः निघातः । बोधि बुधेर्लोटि हेर्धौरूपं निघातः । गोपाः गुपूरक्षणे गुपूधूपेत्यादिनाआयप्रत्ययः तदन्तात्क्विप् अतोलोपयलोपौ प्रत्ययस्वरः ॥ १४ ॥

अथपञ्चदशी—

महि॒क्षेत्रं॑पु॒रुश्च॒न्द्रं॑वि॑वि॒द्वाना॒दित्सखि॑भ्य॒श्चर॒थं॑समै॑रत् ।
इन्द्रो॒नृभि॑रजन॒द्दीद्या॑नः॒साकं॒सूर्य॑मु॒षसं॑गा॒तुम॒ग्निम् ॥१५॥७॥

महि । क्षेत्रम् । पुरु । चन्द्रम् । विविद्वान् । आत् । इत् । सखिऽभ्यः । चरथम् । सम् । ऐरत् । इन्द्रः । नृऽभिः । अजनत् । दीद्यानः । साकम् । सूर्यम् । उषसम् । गातुम् । अग्निम् ॥ १५ ॥ ७ ॥

योयमिन्द्रः महिमहत्क्षेत्रं केदारादि पुरुप्रभूतंचन्द्रंहिरण्यंचविविद्वानर्थिभ्यःसखिभ्योऽस्मभ्यंलम्भयन् आदिदनन्तरंचरथंचरात्मकंगवादिकंचसमैरत् सम्यक्प्रैरयत् दत्तवानित्यर्थः दीद्यानोदीप्यमानःसोयमिन्द्रः नृभिर्नेतृभिःकर्मसहायभूतैर्मरुद्भिःसाकंसहितःसन्सूर्यंकालस्यनिर्वाहकमादित्यम् उषसम् उषःकालंगातुं गायन्तिस्तुवन्त्यस्यामिन्द्रादिदेवानितिगातुःपृथिवी ताम् अग्निमग्निहोत्रादिकर्मसाधनभूतमाहवनीयादिलक्षणमग्निंचअजनत्अजनयत् ॥ पुरुश्चन्द्रं संहितायांह्रस्वाच्चन्द्रोत्तरपदेमन्त्रेइतिसुडागमः तस्यश्चुत्वेनशकारः पदकालेनास्तिसुडागमः पुरु

कुप्रत्ययस्वरः चन्द्रं रक्प्रत्ययस्वरः । चरथं चरतिर्गत्यर्थः अस्मादौणादिकस्थप्रत्ययः प्रत्ययस्वरः । ऐरत् ईरगतावित्यस्यलङि आडजादीनामित्याडागमः निघातः । अजनत् जनेर्ण्यन्तस्यलङिरूपं बहुलमन्यत्रापिसंज्ञाछन्दसोरितिणिलुक् । गातुं गैशब्दे गापायाहिभ्यइतितुप्रत्ययः प्रत्ययस्वरः ॥ १५ ॥

॥ इतितृतीयस्यद्वितीयेसप्तमोवर्गः ॥ ७ ॥

अथषोडशी–

अपश्चिदेषविभ्वो३दमूनाःप्रसध्रीचीरसृजद्विश्वश्चन्द्राः ।
मध्वःपुनानाःकविभिःपवित्रैर्द्युभिर्हिन्वन्त्यक्तुभिर्धनुत्रीः ॥१६॥

अपः । चित् । एषः । विऽभ्वः । दमूनाः । प्र । सध्रीचीः । असृजत् ।
विश्वऽचन्द्राः । मध्वः । पुनानाः । कविऽभिः । पवित्रैः ।
द्युऽभिः । हिन्वन्ति । अक्तुऽभिः । धनुत्रीः ॥ १६ ॥

दमूनाः दान्तंमनोयस्यासौदमूनादान्तमनाः यद्वा दाम्यतीतिदमूनाः उपरतइत्यर्थः सएषएवेन्द्रः विभ्वः व्याप्ताः सध्रीचीः परस्परसंगताः विश्वश्चन्द्राः विश्वस्याह्लादयित्रीः विश्वस्याह्लादोयाभ्यस्ताइतिवा एवंभूताः अपश्चित् अपोपिप्रासृजत् सृष्टवान् सृष्टाश्चताआपः मध्वः माधुर्योपेतान्सोमान्कविभिःपवित्रैः अग्निवायुसूर्यैः पुनानाः शोधयित्र्यः धनुत्रीः सर्वस्यजगतःप्रीणयित्र्यःसत्यः द्युभिर्दिवसैरक्तुभीरात्रिभिर्हिन्वन्तिरात्रिन्दिवंसर्वंजगत्स्वस्वव्यापारप्रवणंकुर्वन्तीत्यर्थः ॥ दमूनाः दमुउपरमे दमेरूनसिरित्यूनसिप्रत्ययः दाम्यतीतिदमूनाः यद्वा दान्तशब्दस्यदभावःमनसोमकारात्परस्याकारस्यऊकारश्छान्दसः । असृजत् सृजविसर्गे । हिन्वन्ति हिगतौ निघातः । धनुत्रीः धनधान्येइत्यस्मादशित्रादित्वादुत्रप्रत्ययः शार्ङ्गरवाद्यञोङीन्द्रष्टव्यः नित्स्वरः ॥ १६ ॥

अथसप्तदशी–

अनुकृष्णेवसुधितीजिहातेउभेसूर्यस्यमंहनायजत्रे ।
परियत्तेमहिमानंवृजध्यैसखायइन्द्रकाम्याऋजिप्याः ॥१७॥

अनु । कृष्णे इति । वसुधिती इति वसुऽधिती । जिहाते इति । उभे इति । सूर्यस्य । मंहना । यजत्रे इति । परि । यत् । ते । महिमानम् । वृजध्यै । सखायः । इन्द्र । काम्याः । ऋजिप्याः ॥ १७ ॥

हेइन्द्र सूर्यस्यसुष्टुजगतःप्रेरकस्यतव मंहना महत्त्वेनसामर्थ्येन वसुधितीवस्तव्यपदार्थधारणोपेते यजत्रे यजनार्हे ते उभे कृष्णे अहोरात्रे अनुजिहाते पुनःपुनरावृत्य वर्तेते किंच ऋजिप्याः ऋजुगतयः सखायस्तेमित्रभूताःकाम्याःकमनीयामरुतः वृजध्यैकर्मविघ्नकारिणामसुराणांवर्जनायपरिभवाय यद्यस्यतेतवमहिमानंसामर्थ्यमनुसृत्य परि परितःप्रभवन्ति ॥ जिहाते ओहाङ्गतौ जुहोत्यादिः भृञामिदित्यभ्यासस्येत्वं निघातः । मंहना महिवृद्धौ ल्युट् लित्स्वरः । वृजध्यै वृजीवर्जने तुमर्थेकध्यैप्रत्ययः कित्त्वाद्गुणाभावः प्रत्ययस्वरः । काम्याः कमेर्ण्यन्तस्याचोयदितियत्प्रत्ययः यतोनावइत्याद्युदात्तत्वम् । ऋजिप्याः ओप्यायीवृद्धौ क्विप् लोपोव्योर्वलीतियलोपः पूर्वपदस्योकारस्येकारोव्यत्ययेन बहुवचनस्यैकवचनंछान्दसं कृदुत्तरपदप्रकृतिस्वरः ॥ १७ ॥

अथाष्टादशी—

**पतिर्भववृत्रहन्त्सूनृतानांगिरांविश्वायुर्वृषभोवयोधाः ।**
**आनोगहिसख्येभिःशिवेभिर्महान्महीभिरूतिभिःसरण्यन् ।१८।**

पतिः । भव । वृत्रऽहन् । सूनृतानाम् । गिराम् । विश्वऽआयुः । वृषभः । वयःऽधाः । आ । नः । गहि । सख्येभिः । शिवेभिः । महान् । महीभिः । ऊतिऽभिः । सरण्यन् ॥ १८ ॥

हेवृत्रहन्निन्द्र विश्वायुः विश्वंसंपूर्णमायुर्यस्यासौविश्वायुरविनाशी वृषभःकामानांवर्षिता वयोधाः अन्नस्यदाता तादृशस्त्वं सूनृतानांगिराम् अस्माभिःक्रियमाणानां प्रियतमानांवाचांपतिः स्वामीभव तथा सरण्यन्सरणंयज्ञार्थंगमनमिच्छन् महान्महीभिर्महतीभिरूतिभिः रक्षाभिःशिवेभिः कल्याणैःसख्येभिःफलदानरूपोपकारलक्षणैःसख्यैश्चसहितस्त्वंनोऽस्मान्प्रत्यागहि यज्ञार्थमागच्छ ॥ सूनृतानां ऊनपरिहाणे सुतरामूनयत्यप्रियमितिसूनितिप्रियमुच्यते तच्चतदृतंसत्यंचे-

तिसूनृतं प्रादिश्छन्दसिबहुलमितिउत्तरपदाद्युदात्तत्वम् । वयोधाः वयस्युपपदेदधातेर्विच् । गहि गमेर्लोटि बहुलंछन्दसीतिशपोलुक् सेर्हिरादेशः अपिच्च तस्यङित्त्वादनुदात्तोपदेशेत्यादिनाम-लोपः तस्यासिद्धत्वादतोहेरितिहेर्लुङ्नभवति निघातः । सरण्यन् सरणशब्दात्क्यच् एकादेश-स्वरः ॥ १८ ॥

अथैकोनविंशी–

तमंङ्गिरस्वन्नमसासपर्यन्नव्यंकृणोमिसन्यंसेपुराजाम् ।
द्रुहोवियांहिबहुलाअदेवीःस्वश्चनोमघवन्त्सातयेधाः ॥१९॥

तम् । अङ्गिरस्वत् । नमसा । सपर्यन् । नव्यम् । कृणोमि ।
सन्यसे । पुराऽजाम् । द्रुहः । वि । याहि । बहुलाः । अदेवीः ।
स्वरिति स्वः । च । नः । मघऽवन् । सातये । धाः ॥ १९ ॥

हेइन्द्र अङ्गिरस्वत् अङ्गिरसइवनमसास्तोत्रेणसपर्यन्पूजयन्विश्वामित्रोहं तंतादृशम-हिमोपेतं पुराजां पुरातनंत्वांसन्यसे संभजनायनव्यंकृणोमि स्तोतव्यतयाभिनवंकरोमि अदेवीः तमोरूपत्वेनाद्योतमानान्बहुलाबहून्द्रुहः द्रोग्धृन्शत्रुभूतान्राक्षसान्वियाहि विशेषेणमृ-तिंप्रापय हेमघवन्निन्द्र नोऽस्मभ्यं स्वः स्वंधनंच सातयेसंभजनार्थधाःधेहि ॥ अङ्गिर-स्वत् अङ्गिरसइव तेनतुल्यमितिवतिप्रत्ययः नभोङ्गिरोमनुषांवत्युपसंख्यानामिति भसंज्ञायांस-कारस्यरुत्वाभावः । सपर्यन् सपरशब्दःकण्ड्वादिः । नव्यं णुस्तुतावित्यस्माद्चोयदितियत्प्रत्ययः धातोस्तन्निमित्तस्यैवेतिवान्तादेशः यतोनावइत्याद्युदात्तत्वम् । कृणोमि कृवेर्लटिरूपम् । संन्यसे सन-तेर्भावेक्विप् यसुप्रयत्ने अस्मात्क्विप् सनःसंभजनस्ययसेयत्नायसंभजनार्थमित्यर्थः । पुराजां जने-र्विट् आत्वेरूपम् । याहि यातेर्लोटिरूपम् । स्वः स्वरादिनिपातमव्ययमित्यव्ययसंज्ञायाम् अव्यया-दाप्सुपइतिसुपोलुक् । सातये षणसंभक्तौ भावेक्तिन् जनसनेत्यादिना आत्वम् ऊतियूतीत्यादिना निपातनादुदात्तः ॥ १९ ॥

अथविंशी–

मिहःपावकाःप्रतताअभूवन्त्स्वस्तिनःपिपृहिपारमासाम् ।
इन्द्रत्वंरथिरःपाहिनोरिषोमक्षूमक्षूकृणुहिगोजितोनः ॥२०॥

मिहः । पावकाः । प्रऽतताः । अभूवन् । स्वस्ति । नः । पिपृहि । पारम् । आसाम् । इन्द्र । त्वम् । रथिरः । पाहि । नः । रिषः । मक्षुऽमक्षु । कृणुहि । गोऽजितः । नः ॥ २० ॥

हेइन्द्र तेपावकाःपापानांशोधयितॄभ्यः मिहः सेचनसाधनान्यापः प्रतताः लोकेप्रकर्षेणविस्तृताअभूवन् आसामपांस्वस्तिविनाशरहितंपारंतीरंनोस्मदर्थंपिपृहिजलैःसंपूर्णंकुरु जलमवारपारीणंकुर्वित्यर्थः रथिरोरथवांस्त्वंरिषोहिंसकाच्छत्रोःसकाशान्नोस्मान्पाहिपालय अनन्तरं नोऽस्मान्मक्षुमक्षु अतिशीघ्रं गोजितः गवादिपशूनांजेतॄन्कृणुहिकुरु सुवृष्टिप्रदानेनतडागादिजलाशयान्संपूर्णान्कृत्वागवादिधनयुक्तान्कुर्वितिभावः । अभूवन् भूसत्तायामित्यस्यलुङि रूपं निघातः । पिपृहि पॄपालनपूरणयोः जुहोत्यादिः अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वं हेर्ङित्त्वादगुणः निघातः । रथिरः मत्वर्थे मेधारथाभ्यामिरन्निरचाविति इरच्प्रत्ययः । रिषः रिषर्हिंसायां क्विप् सावेकाचइतिविभक्तेरुदात्तत्वम् । मक्षूमक्षू नित्यवीप्सयोरितिद्विर्वचनं संहितायां ऋचितुनुघमक्षुतङितिदीर्घः ॥ २० ॥

अथैकविंशी–

अदेदिष्टवृत्रहागोपतिर्गाअन्तःकृष्णाँअरुषैर्धामभिर्गात् ।
प्रसूनृतादिशमानऋतेनदुरश्चविश्वाअवृणोदपस्वाः ॥२१॥

अदेदिष्ट । वृत्रऽहा । गोऽपतिः । गाः । अन्तरिति । कृष्णान् । अरुषैः । धामऽभिः । गात् । प्र । सूनृताः । दिशमानः । ऋतेन । दुरः । च । विश्वाः । अवृणोत् । अप । स्वाः ॥ २१ ॥

वृत्रहा वृत्रस्यहन्ता गोपतिर्गवांस्वामीसन् इन्द्रः गाः अदेदिष्ट अस्मभ्यंदिशतु तथा कृष्णान्कर्मविघ्नकारिणोसुरानरुषैरारोचमानैर्धामभिस्तेजोभिरन्तः अन्तर्धानंविनाशंगात्गमयतु तथा सूनृताःप्रियतमाःगाः ऋतेनप्रतारणवर्जितेनसत्येनवाक्येनप्रदिशमानःअङ्गिरोभ्यःप्रदिशन्निन्द्रःविश्वाःसर्वाणिदुरःगवांस्वेच्छयानिर्गमनद्वाराणि स्वाः स्वकीयागाश्चापावृणोत् व्रजेगाः स्थापयित्वा तानिद्वाराणिआच्छादितवानित्यर्थः ॥ अदेदिष्ट दिशअतिसर्जने द्व्यस्माद्यङ्लुकि लङि व्यत्ययेनात्मनेपदम् अडागमस्वरः । गोपतिः पत्यावैश्वर्येइतिपूर्वपदप्रकृतिस्वरः । गात् इ-

णगतौ अंतर्भावितण्यर्थः । दिशमानः । दिशेर्व्यत्ययेनशानच् तस्यलसार्वधातुकस्वरेणानुदात्तत्वे शस्वरः । अवृणोत् वृञ्वरणेइत्यस्यलङिरूपम् ॥ २१ ॥

अथद्वाविंशी—

शुनंहुवेममघवानमिन्द्रमस्मिन्भरेनृतमंवाजसातौ ।
शृण्वन्तमुग्रमूतयेसमत्सुघ्नन्तंवृत्राणिसंजितंधनानाम् ।२२।८।

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् ।
वाजसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् ।
वृत्राणि । सम्ऽजितम् । धनानाम् ॥ २२ ॥ ८ ॥

व्याख्यातेयमृक् ॥ २२ ॥

॥ इतितृतीयस्यद्वितीयेष्टमोवर्गः ॥८॥

इन्द्रसोमंसोमपतइतिसप्तदशर्चंतृतीयंसूक्तं वैश्वामित्रं त्रैष्टुभमैन्द्रम् अनुक्रान्तंच—इन्द्रसोमंन्यूनेति । पृष्ठ्याभिप्लवषडहयोः द्वितीयेहनिमरुत्वतीयेइन्द्रसोममितीदंसूक्तंनिविद्धानीयं द्वितीयस्येतिखण्डेसूत्रितम्—इन्द्रसोमंयातऊतिरवमेतिमध्यन्दिनइति गोसवविवधयोरपिमरुत्वतीयशस्त्रेएतत्सूक्तम् । सूत्रितश्च—इन्द्रसोममेतायामेतिमध्यन्दिनइति । उद्भिद्बलभिदोरपिमरुत्वतीयएतत्सूक्तम् । सूत्रितञ्च—इन्द्रसोममिन्द्रःपूर्भिदितिमध्यन्दिनइति ।

तस्मिन्सूक्तेप्रथमा—

इन्द्रसोमंसोमपतेपिबेमंमाध्यन्दिनंसवनंचारुयत्ते ।
प्रप्रुथ्याशिप्रेमघवन्नृजीषिन्विमुच्याहरीइहमादयस्व ॥ १ ॥

इन्द्र । सोमम् । सोमऽपते । पिब । इमम् । माध्यन्दिनम् ।
सवनम् । चारु । यत् । ते । प्रऽप्रुथ्य । शिप्रे इति । मघऽवन् ।
ऋजीषिन् । विऽमुच्य । हरी इति । इह । मादयस्व ॥ १ ॥

विश्वामित्रोब्रूते—सोमपते सोमस्याधिपते हेइन्द्र इममस्माभिर्माध्यन्दिनेसवनेक्रियमाणंसोमं सोमरसंपिब यद्यस्मात्तेत्वदर्थंक्रियमाणमिमंमाध्यन्दिनं मध्यंदिनसंबन्धिसवनंनिष्केवल्याख्यं शस्त्रंचारुरमणीयंवर्तते मघवन्धनवन्नृजीषिन्नृजीषशब्देनगतसारंसोमद्रव्यमुच्यते तद्वन् हेइन्द्र हरी रथेयोजितावश्वौ रथाद्विमुच्य शिप्रेहनू प्रमुथ्य अत्रत्येनग्रासेनपूरयित्वा इह देवयजनदेशेमादयस्व तावश्वौहर्षय ॥ प्रमुथ्य प्रोथृपर्याप्तावित्यस्यल्यपिरूपं ह्रस्वश्छान्दसः लित्स्वरः । ऋजीषिन् अर्जपर्जअर्जनेइत्यस्मादर्जेश्चऋजिचेतिइषन्प्रत्ययः ऋजिइत्यादेशश्चधातोः अर्ज्यतइत्यृजीषं तदस्यास्तीतीनिप्रत्ययः आमन्त्रितत्वान्निघातः । मादयस्व मदि स्तुत्यादिषु हेतुमण्णिच् निघातः ॥ १ ॥

अथद्वितीया—

गवाशिरंमन्थिनमिन्द्रशुक्रंपिबासोमंररिमातेमदाय ।
ब्रह्मकृतामारुतेनागणेनसजोषारुद्रैस्तृपदावृषस्व ॥ २ ॥

गोऽआशिरम् । मन्थिनम् । इन्द्र । शुक्रम् । पिब । सोमम् ।
ररिम । ते । मदाय । ब्रह्मऽकृता । मारुतेन । गणेन ।
सऽजोषाः । रुद्रैः । तृपत् । आ । वृषस्व ॥ २ ॥

हेइन्द्र गवाशिरं गव्यस्यपयसआशीर्मिश्रणंयस्मिन्तंसोमम् अपिच मन्थिनंमन्थसंयुक्तं शुक्रम् अभिनवं यद्वा शुक्रं शुक्रामन्थिग्रहेवर्तमानम् एवंत्रिषुसवनेषुवर्तमानमिमंसोमंपिब ते तवमदायहर्षायररिम तंसोमंवयंप्रयच्छामः मारुतेन मरुतांगणःमारुतः सचब्रह्मकृता ब्रह्म स्तोत्रंकरोतीतिब्रह्मकृत् इन्द्रविषयस्तोत्रंकुर्वाणेनमारुतेनगणेन रुद्रैरेकादशसंख्याकैरुद्रैश्चसजोषाःसंगतस्त्वंतृपत् सोमपानेनतृप्यन् आवृषस्व तमिमंसोमंसर्वतोजठरेसिञ्च धारय ॥ गवाशिरं शृणातेराङ्पूर्वात्क्विपि अपस्पृधेथामानृचुरित्यादिनानिपातनादाशिरादेशः बहुव्रीहौपूर्वपदप्रकृतिस्वरः । पिबा द्व्यचोतस्तिङइतिसंहितायांदीर्घः । ररिम रातेश्छान्दसेवर्तमानेलिटि रूपम् असमानवाक्यत्वान्निघाताभावः आगमाअनुदात्ताइतिइटोनुदात्तत्वात्प्रत्ययस्वरः । तृपत् तृपप्रीणने तुदादिः आगमानुशासनस्यानित्यत्वान्नुमभावः । वृषस्व वृषसेचने व्यत्ययेनशः ॥ २ ॥

अथतृतीया–

येतेशुष्मंयेतविषीमवर्धन्नर्चन्तइन्द्रमरुतस्तओजः ।
माध्यन्दिनेसवनेवज्रहस्तपिबारुद्रेभिःसगणःसुशिप्र ॥ ३ ॥

ये । ते । शुष्मम् । ये । तविषीम् । अवर्धन् । अर्चन्तः । इन्द्र ।
मरुतः । ते । ओजः । माध्यन्दिने । सवने । वज्रऽहस्त । पिब ।
रुद्रेभिः । सऽगणः । सुऽशिप्र ॥ ३ ॥

हेइन्द्र येमरुतः ते तव शुष्मंशत्रूणांशोषकंतेजः येचमरुतः तविषींबलंचावर्धन् युद्धसहकारितयाअवर्धयन् तेमरुतः अर्चन्तस्त्वांस्तुवन्तःसन्तः तेतव ओजोयुद्धसामर्थ्यमवर्धयन् वज्रहस्त वज्रयुक्तौहस्तौयस्येतितादृश सुशिप्र शोभनहनो शिप्रेहनूनासिकेतियास्कः । हेइन्द्र रुद्रेभिःरोदयन्तिशत्रूनितिरुद्रामरुतः तैःसगणस्त्वंमाध्यन्दिनेसवनेसोमंपिब ॥ अवर्धन् वृधुवर्धने अन्तर्भावितण्यर्थः यद्वृत्तयोगादनिघातः । माध्यन्दिने उत्सादित्वादञ् ञित्त्वादाद्युदात्तः ॥ ३ ॥

अथचतुर्थी–

तइन्न्वस्यमधुमद्विविप्रइन्द्रस्यशर्धोमरुतोयआसन् ।
येभिर्वृत्रस्येषितोविवेदामर्मणोमन्यमानस्यमर्म ॥ ४ ॥

ते । इत् । नु । अस्य । मधुऽमत् । विविप्रे । इन्द्रस्य । शर्धः ।
मरुतः । ये । आसन् । येभिः । वृत्रस्य । इषितः । विवेद । अमर्मणः ।
मन्यमानस्य । मर्म ॥ ४ ॥

येमरुतः इन्द्रस्यशर्धोबलभूताआसन् तइत् तएवमरुतः अस्य द्वितीयार्थेषष्ठी इममिन्द्रं मधुमत्तवसहायायवयमास्महेत्वंयुद्धमभिगच्छेतिमाधुर्योपेतंवाक्यंयथाभवातितथा विविप्रेनु क्षिप्रंप्रैरयन् येभिर्यैर्युद्धसहायैर्मरुद्भिःइषितःप्रेरितःइन्द्रःअमर्मणः परैरविदितमर्मस्थानस्य अतएवमन्यमानस्यनकोपिममहन्तेत्यभिमन्यमानस्यवृत्रस्यासुरस्यमर्मयस्मिन्स्थानेप्रहृतौसत्यां समरिष्यति तादृशंस्थानंविवेदाज्ञासीत् ॥ विविप्रे विपक्षेपणेइत्यस्यलिटि व्यत्ययेनात्मनेपदम् इरेचः इरयोरेइतिरेइत्यादेशः निघातः । आसन् असभुवीत्यस्यलङ्रूपं यद्वृत्तयोगान्निघाताभावः ।

विवेद विदज्ञाने इत्यस्यलिटिरूपं ल्तिस्वरः । मर्मे मृङ्प्राणत्यागेइत्यस्माद्‌औणादिकोमनिन् नित्स्वरः ॥ ४ ॥

अथपञ्चमी–

मनुष्वदिन्द्रसवनंजुषाणःपिबासोमंशश्वतेवीर्याय ।
सआववृत्स्वहर्यश्वयज्ञैःसरण्युभिरपोअर्णासिसर्षि ॥५॥१॥

मनुष्वत् । इन्द्र । सवनम् । जुषाणः । पिब । सोमम् । शश्वते । वीर्याय । सः । आ । ववृत्स्व । हरिऽअश्व । यज्ञैः । सरण्युऽभिः । अपः । अर्णा । सिसर्षि ॥ ५ ॥ १ ॥

हेइन्द्र मनुष्वन्मनोर्यज्ञमिवममेदंसवनंयज्ञंजुषाणःसेवमानस्त्वं शश्वते शाश्वतायवीर्याय परपरिभवलक्षणायसामर्थ्याय इमंसोमंपिब हेहर्यश्व सताद‍ृशस्त्वंयज्ञैर्यजनीयैर्मरुद्भिःसाकमाववृत्स्व आगच्छ किंच सरण्युभिः एकश्रुतिमन्मन्त्रानात्मनइच्छाद्भिः यद्वा सरण्युभिः सरणशीलैर्मरुद्भिःसहितस्त्वम् अपोन्तरिक्षस्थितान्युदकानि अर्णा पार्थिवान्युदकानिचासिसर्षि प्रापय यद्वा अपःपञ्चम्यन्तमेतत्पदम् अपोऽयासादन्तरिक्षात्सकाशादर्णासिप्रापय ॥ ववृत्स्व वृतुवर्तने व्यत्ययेनशपःश्लुः लोटिरूपम् । सरण्युभिः रण्शब्दार्थः क्विप् समानोरणःध्वनिर्येषांतेसरणामन्त्राः तानिच्छन्तः सुपःक्यच् क्यादित्युप्रत्ययः यद्वा सृगतौ सृयुवचिभ्योन्युजागूचक्नुचइतिअन्युच्प्रत्ययः रषाभ्यामितिणत्वं चित्त्वादन्तोदात्तः । अपः आप्लृव्याप्तौ आप्नोतेःक्विप् ह्रस्वश्चेतिक्विप्धातोर्ह्रस्वश्च सावेकाचइतिविभक्तेरुदात्तत्वम् । सिसर्षि सृगतौ छान्दसोजुहोत्यादिः बहुलंछन्दसीत्यभ्यासस्येत्त्वम् ॥ ९ ॥

॥ इतितृतीयस्याद्वितीयेनवमोवर्गः ॥ ९ ॥

अथषष्ठी–

त्वमपोयद्धवृत्रंजघन्वाँअत्याँइवप्रासृजःसर्तवाजौ ।
शयानमिन्द्रचरतावधेनवव्रिवांसंपरिदेवीरदेवम् ॥ ६ ॥

त्वम् । अपः । यत् । ह । वृत्रम् । जघन्वान् । अत्यान्ऽइव ।
प्र । असृजः । सर्तवे । आजौ । शयानम् । इन्द्र । चरता ।
वधेन । वव्रिऽवांसम् । परि । देवीः । अदेवम् ॥ ६ ॥

हेइन्द्र त्वं देवीर्देवनशीलाअपः परिवव्रिवांसं परितआवृत्यवर्तमानम् अतएव अदेवं बहूदकतयास्वच्छत्वेनाप्रतिभासमानं शयानमेकत्रनिश्चलतयावर्तमानंवृत्रंमेघं यद्यदाचरता तमुद्दिश्यवर्तमानेनवधेनयुद्धेनजघन्वान्हतवानसि यदात्वमाजौयुद्धेसर्तवै अतिवेगगमनाय अत्यानिव यथाअश्वान्प्रेरयसि तथा त्वमपउदकानि अन्तरिक्षादाकाशात्प्रासृजोह प्रकर्षेणमेघभेदनंकृत्वाअसृजःखलु तंयजाम इत्युत्तरेणान्वयः ॥ जघन्वान् हनहिंसागत्योरित्यस्य क्वसौ विभाषागमहनविदविशामितीटोविकल्पितत्वादत्रेडभावः अभ्यासाच्चेतिहकारस्यघत्वं प्रत्ययस्वरः । असृजः सृजविसर्गे शविकरणी यद्योगादनिघातः । सर्तवै सृगतौ तुमर्थेतवैप्रत्ययः अन्तश्चतवैयुगपदितिधातोःप्रत्ययस्यचोदात्तत्वम् । आजौ अजगतिक्षेपणयोः अज्यतिभ्यांचेतीणप्रत्ययः णित्वादुपधावृद्धिः अजन्तिगच्छन्त्यस्मिन्नितिआजिर्युद्धं प्रत्ययस्वरः । सर्तवाजावित्यत्र संहितायाम् आयादेशेकृते तस्य लोपःशाकल्यस्येतियकारलोपः सर्वविधीनांछन्दसिविकल्पितत्वात्सवर्णदीर्घेकर्तव्येयलोपोनासिद्धोभवति सवर्णदीर्घः । शयानं शीङ्स्वप्ने शानच् अदादित्वाच्छपोलुक् ङित्वाल्लसार्वधातुकस्वरेणशानचोनुदात्तत्वेधातुस्वरः । वधेन हन्तेर्भावे हनश्चवधइत्यप्प्रत्ययोवधादेशश्च धातोरन्तोदात्तश्च । वव्रिवांसं वृञ्वरणेइत्यस्यक्वसाविडागमश्छान्दसः प्रत्ययस्वरः ॥ ६ ॥

अथसप्तमी–

यजामइन्नमसावृद्धमिन्द्रंबृहन्तमृष्वमजरंयुवानम् ।
यस्यप्रियेममतुर्यज्ञियस्यनरोदसीमहिमानंममाते ॥ ७ ॥

यजामः । इत् । नमसा । वृद्धम् । इन्द्रम् । बृहन्तम् । ऋष्वम् ।
अजरम् । युवानम् । यस्य । प्रिये इति । ममतुः । यज्ञियस्य ।
न । रोदसी इति । महिमानम् । ममाते इति ॥ ७ ॥

नमसाहविर्लक्षणेनान्नेनवृद्धं प्रवृद्धम् अतएवबृहन्तं महान्तमृष्वम् ऋष्यतेगम्यतेस्तुतिलक्षणै-र्मन्त्रैरितिऋष्वंस्तोतव्यम् अजरं जरारहितम् अतएवयुवानंनित्यतरुणम् एवंविधामिन्द्रंयजामइत् कु-शिकावयंयज्ञसिद्ध्यर्थंस्तुतिवाक्यैःपूजयामएव प्रियेप्रियतमे अपरिमितेरोदसीद्यावापृथिव्यौय-ज्ञियस्ययज्ञार्हस्ययस्येन्द्रस्यतवमहिमानंवैभवंनममतुः नपरिच्छेत्तुंशक्नुतः नममातेइतिद्वितीयंक्रि-यापदमादरार्थम् । यजामः यजेर्लेटिरूपम् । ऋष्वम्ऋषीगतौ सर्वनिघृष्वऋष्वेत्यादिनावप्रत्ययान्तो-निपातितः प्रत्ययस्वरः । प्रिये ईदूदेदितिप्रगृह्यसंज्ञा । ममतुः मामानेइत्यस्यलिटिचतुसिरूपं यद्वृत्तयोगादनिघातः प्रत्ययस्वरः । महिमानं महिशब्दात्तस्यभावइत्यर्थेपृथ्वादित्वादिमनिच् चित्स्वरः । ममाते माङ्मानेशब्देचेत्यस्यलिटयातामिरूपम् ॥ ७ ॥

अथाष्टमी—

इन्द्र॑स्य॒ कर्म॒ सुकृ॑ता पु॒रूणि॑ व्र॒तानि॑ दे॒वा न मि॑नन्ति॒ विश्वे॑ ।
दा॒धार॒ यः पृ॑थि॒वीं द्यामु॒तेमां ज॒जान॒ सूर्य॑मु॒षसं॑ सु॒दंसाः॑ ॥ ८ ॥

इन्द्र॑स्य । कर्म॑ । सुऽकृ॑ता । पु॒रूणि॑ । व्र॒तानि॑ । दे॒वाः । न ।
मि॒न॒न्ति॒ । विश्वे॑ । दा॒धार॑ । यः । पृ॒थि॒वीम् । द्याम् । उ॒त ।
इ॒माम् । ज॒जान॑ । सूर्य॑म् । उ॒षस॑म् । सु॒ऽदंसाः॑ ॥ ८ ॥

विश्वेसर्वेदेवाःइन्द्रस्यतवकर्मकर्माणिसुकृतासुकृतानिसुष्ठुनिर्मितानिपृथिव्यादीनिपुरूणिबहूनिव्र-तानियज्ञादीनिचंनमिनन्ति एतानिसर्वाणितवकर्माणिनहिंसन्ति किंत्वाद्रियन्ते किञ्च योयमिन्द्रः पृथिवींभूलोकं द्यांद्युलोकम् उतापिच इमांम्इममन्तरिक्षलोकंच एतांस्त्रीन्लोकान्दाधार किञ्च सुदंसाःसुकर्माशोभनकर्मासन् इन्द्रः सूर्यं लोकप्रकाशकमादित्यम् उषसम् अग्निहोत्रादिकर्मनिर्वा-हकमुषःकालंजजान उत्पादयामास ॥ इन्द्रस्यकर्मसुकृतापुरूणीत्येतत्पदकदम्बकमेकोद्वेवसुमतीत्यस्मि-न्वर्गेपठितमत्रापितदेवपठ्यते पदकालेनोत्सृज्यतइतिचेन्नवाक्यभेदात्तत्रइन्द्रस्यकर्मसुकृतापुरूणीत्येकंवा-क्यम् अत्रतुकर्मसुकृतेत्येकंवाक्यं पुरूणिव्रतानीत्यपरं किंच तत्रत्यंपदकदम्बकंप्रथमान्तमत्रत्यंद्वितीया-न्तम् अतोवाक्यभेदाद्विभक्तिभेदाच्चपदकालेनोत्सृज्यते ॥ मिनन्ति मीञ्हिंसायामित्यस्यलटिरूपं निघातः । दाधार धृञ्धारणेइत्यस्यलिटिरूपं तुजादित्वादभ्यासस्यदीर्घः लित्स्वरः । जजान जनजन-नेइत्यस्यान्तर्भावितण्यर्थस्यलिटिरूपं लित्स्वरः । सुदंसाः सोर्मनसीइत्युत्तरपदाद्युदात्तत्वम् ॥ ८ ॥

अथनवमी–

अद्रोघसत्यंतवतन्महित्वंसद्योयज्जातोअपिबोहसोमम् ।
नद्यावइन्द्रतवसस्तओजोनाहानमासाःशरदोवरन्त ॥ ९ ॥

अद्रोघ । सत्यम् । तव । तत् । महिऽत्वम् । सद्यः । यत् । जातः । अपिबः । ह । सोमम् । न । द्यावः । इन्द्र । तवसः । ते । ओजः । न । अहा । न । मासाः । शरदः । वरन्त ॥ ९ ॥

अद्रोघ द्रोहवर्जित हेइन्द्र तेतव तन्महित्वं तादृशंमाहात्म्यं सत्यंयथार्थं यद्यस्माज्जातः उत्पन्नः सद्यस्तदानीमेवसोममस्माभिर्दीयमानसोमरसमपिबः हप्रसिद्धौ किंच तवसोबलवतः तेतवओजःसामर्थ्यंद्यावः दिवोपलक्षिताःसर्वेलोकाः नवरन्त नवारयन्ति किंच अहा प्रतिपदादीन्यहानिनवारयन्ति तथामासाश्चैत्राद्याः शरदःसंवत्सराश्च तवसामर्थ्यंनवारयन्ति किंतु तवसामर्थ्यमनुसृत्य सर्वेवर्तन्तइतिभावः ॥ अद्रोघ आमन्त्रितस्यचेतिषाष्ठिकमाद्युदात्तत्वम् । अपिबः यद्योगादनिघातः । मासाः मसीपरिमाणे मस्यतेपरिमीयतेत्रिंशतादिनैरितिमासः कर्मणिघञ् ञित्त्वादाद्युदात्तः । शरदः शॄहिंसायामित्यस्मात्दृद्भसोदिरित्यधिकरणेअदिप्रत्ययः शीर्यन्तेस्यांतृणगुल्मवनस्पतीनांतेजांसिइतिशरत् प्रत्ययस्वरः । वरन्त वृञ्वरणे अन्तर्भावितण्यर्थोत्रातिवारणेवर्तते भौवादिकः छान्दसेलङिरूपं निघातः ॥ ९ ॥

सद्यस्क्रीनाम्न्येकाहेनिष्केवल्यशस्त्रे त्वंसद्योअपिबइतिसक्तमुखीया सूत्रितञ्च–त्वंसद्योअपिबोजातइन्द्रानुत्वाहिघ्नेअधदेवदेवाइति ।

अथदशमी–

त्वंसद्योअपिबोजातइन्द्रमदायसोमंपरमेव्योमन् ।
यद्धद्यावापृथिवीआविवेशीरथाभवःपूर्व्यःकारुधायाः॥१०॥१०॥

त्वम् । सद्यः । अपिबः । जातः । इन्द्र । मदाय । सोमम् । परमे । विऽओमन् । यत् । ह । द्यावापृथिवी इति । आ । अविवेशीः । अथ । अभवः । पूर्व्यः । कारुऽधायाः ॥ १० ॥ १० ॥

हेइन्द्र सद्यस्तदानीमेवजातःपरमेव्योमनुत्तमेस्थानेस्थितस्त्वं मदायहर्षायसोमंमपिबः यद्यदात्वंद्यावापृथिवीद्यावापृथिव्यौ आविवेशीर्हि आसमन्ताद्भृशंप्रविष्टोसिखलु अथानन्तरं पूर्व्यःपुरातनःसन्कारुधायाःकर्मणांविधातामवःखलु ॥ व्योमन् अवरक्षणगत्यादिषु विपूर्वस्यावतेर्नोमन्सामन्नित्यादिनामनिन् ज्वरत्वरेत्यादिनाऊठ् विशेषेणओमव्याप्तिर्गस्यतत् सुपांसुलुगित्यादिनासुपोलुक् बहुव्रीहौपूर्वपदप्रकृतिस्वरः । आविवेशीः विशप्रवेशनेइत्यस्ययङ्लुकि लङिसिपियङोवेतीडागमः इतश्चेतिसिपइकारलोपः यद्योगादनिघातः । कारुधायाः कारुः करोतेःकृवापाजिमिस्वदिसाध्यशूभ्यउणप्रत्ययः णित्त्वाद्वृद्धिः दधातेर्वाहिहाधाञ्भ्यश्छन्दसीत्यसुन् णिदित्यनुवृत्तेः आतोयुक्चिण्कृतोरितियुगागमः समासेगतिकारकोपपदादितिपूर्वपदप्रकृतिस्वरत्वंचेतिसूत्रात्पूर्वपदप्रकृतिस्वरः ॥ १० ॥

॥ इतितृतीयस्यद्वितीयेदशमोवर्गः ॥ १० ॥

अथैकादशी–

**अहन्नहिंपरिशयानमर्णओजायमानंतुविजाततव्यान् ।**
**नतेमहित्वमनुभूदधद्यौर्यदन्ययास्फिग्याक्षामवस्थाः ॥११॥**

अहन् । अहिम् । परिऽशयानम् । अर्णः । ओजायमानम् ।
तुविऽजात । तव्यान् । न । ते । महिऽत्वम् । अनु । भूत् । अध ।
द्यौः । यत् । अन्यया । स्फिग्या । क्षाम् । अवस्थाः ॥ ११ ॥

तुविजात बहूनिजातानिपृथिव्यादीनियस्मात्सोयंतुविजातः हेतुविजात इन्द्र तव्यानतिशयेनप्रवृद्धांस्त्वम् अर्णःपरिशयानमुदकं परितःशयानमुदकमन्तःकृत्वा परितोवर्तमानम् अतएवौजायमानं बलमाचरन्तम् अहिम् आसमन्ताद्धन्त्यपहरत्युदकमित्यहिर्मेघः तमिमंमेघम् अहन्नुदकप्रेरणायहतवानसि अध अथ तेमहित्वंमहिमानंद्यौर्नानुभूत्नानुभवति नजानाति यद्यस्मात्त्वम् अन्ययैकतरयास्फिग्या कट्या क्षांभूमिम् अवस्थाः अवच्छाद्यतिष्ठसि ॥ अहन् हन्तेर्लङि सिप्लोपेरूपम् । अहिं हनहिंसागत्योः आङि श्रिहनिभ्यांह्रस्वश्चेतिइणप्रत्ययः डिच्च पूर्वपदस्य ह्रस्वःवृषादित्वादाद्युदात्तः । ओजायमानं ओजःशब्दादाचारार्थे कर्तुःक्यङ्सलोपश्चेतिक्यङ्प्रत्ययःसलोपश्च ङित्त्वादात्मनेपदं प्रत्ययस्वरः । तव्यान् तुइतिसौत्रोधातुः अस्मात्तृजन्तात्तुश्छन्द-

सीतीयसुन् तुरिष्ठेमेयःस्विति तृचोलोपः भसंज्ञायामोर्गुणः इकारलोपश्छान्दसः नित्स्वरः । भूत् भवतेर्लङ्रूपम् । स्फिग्या यचिभमितिभसंज्ञांबाधित्वास्वादिष्वसर्वनामस्थानेइतिपदसंज्ञायांजश्त्वं तृतीयायाःपूर्वसवर्णः । क्षां क्षिनिवासगत्योः अन्येभ्योपिदृश्यतइतिनिरुपपदादपि डप्रत्ययः ततष्टाप् क्षियन्ति निवसन्त्यस्यांप्राणिनइतिक्षाभूमिः उदात्तनिवृत्तिस्वरेणान्तोदात्तः । अवस्थाः वसआच्छादनेइत्यस्य लुङि अनुदात्तत्वादात्मनेपदं थासि अदादित्वाच्छपोलुक् यद्योगादनिघातः अडागमस्वरः ॥ ११ ॥

अथद्वादशी—

यज्ञोहितंइन्द्रवर्धनोभूदुतप्रियःसुतसोमोमियेधः ।
यज्ञेनंयज्ञमवयज्ञियःसन्यज्ञस्तेवज्रमहिहत्यंआवत् ॥१२॥

यज्ञः । हि । ते । इन्द्र । वर्धनः । भूत् । उत । प्रियः ।
सुतऽसोमः । मियेधः । यज्ञेन । यज्ञम् । अव । यज्ञियः । सन् ।
यज्ञः । ते । वज्रम् । अहिऽहत्ये । आवत् ॥ १२ ॥

हेइन्द्र अस्मदीयोयज्ञस्तेतववर्धनोहविष्प्रदानेनवर्धयिताभूत्हि भवतिखलु उतापिच सुतसोमः अभिषुतसोमवान्मियेधःसारभूतोयंयज्ञः तेतवप्रियः सत्वंयाज्ञियःयज्ञार्हःसन् यज्ञंयज्ञस्यकर्तारंयजमानं यज्ञेनानुष्ठीयमानेनाव फलप्रदानेनरक्ष किंचायंयज्ञस्तेतववज्रमहिहत्ये वृत्रहननेकर्मण्यावत् रक्षतु ॥ वर्धनः वृधुवर्धनेइत्यस्य ण्यन्तस्य नन्द्यादित्वात्ल्युप्रत्ययः लित्स्वरः । भूत् हियोगादनिघातः । अव अवतेर्लोटिरूपं निघातः । सन् असेःशतरिरूपं प्रत्ययस्वरः । अहिहत्ये हनहिंसागत्योरित्यस्यभावे हनस्तचेतिक्यप् तकारश्चान्तादेशः कृदुत्तरपदस्वरः । आवत् अवतेश्छान्दसेलङिरूपं निघातः ॥ १२ ॥

यज्ञेनेन्द्रमवसाचक्रेअर्वागैनंसुम्नायनव्यसेववृत्याम् ।
यःस्तोमेभिर्वावृधेपूर्व्येभिर्योमध्यमेभिरुतनूतनेभिः ॥१३॥

यज्ञेन । इन्द्रम् । अवसा । आ । चक्रे । अर्वाक् । आ । एनम् ।
सुम्नाय । नव्यसे । ववृत्याम् । यः । स्तोमेभिः । ववृधे । पूर्व्येभिः ।
यः । मध्यमेभिः । उत । नूतनेभिः ॥ १३ ॥

हेइन्द्र सर्वोयजमानः अवसास्वरक्षकेणयज्ञेनइन्द्रं त्वामर्वागाचक्रे हविष्प्रदानेनाभिमुखं करोति तथाहं नव्यसेनवतरायसुम्नायधनाय एनंत्वामाववृत्यांयज्ञेनावृतंमदाभिमुखंकुर्याम् । कीदृशस्त्वं यःपूर्व्येभिःपुरातनैःस्तोमेभिःस्तोत्रैःववृधेप्रवृद्धोबभूव तथायइन्द्रोमध्यमेभिःमध्येभवैः स्तोत्रैः उतापिच नूतनेभिरस्माभिःक्रियमाणैः अधुनातनैःस्तोत्रैर्वर्धते ॥ चक्रे करोतेर्लिटिरूपम् । नव्यसे नवशब्दादीयसुनि भसंज्ञायामकारलोपः ईकारलोपश्छान्दसः नित्त्वादाद्युदात्तः । ववृत्यां वृतुवर्तने लिङि बहुलंछन्दसीतिशपःश्लुः व्यत्ययेनपरस्मैपदं निघातः । ववृधे वृधुवर्धनेइत्यस्यलिटिरूपं प्रत्ययस्वरः । मध्यमेभिः मध्यशब्दाच्छैषिकार्थेमध्यान्मइतिमप्रत्ययः प्रत्ययस्वरः । नूतनेभिः नवशब्दस्य नसनपूर्वाश्चप्रत्ययावक्तव्यानूइत्यादेशश्चेतितनप्प्रत्ययःनूइत्यादेशश्च ॥ १३ ॥

अथचतुर्दशी—

विवेषयन्माधिषणाजजानस्तवैपुरापार्यादिन्द्रमह्नः ।
अंहसोयत्रपीपरद्यथानोनावेवयान्तमुभयेहवन्ते ॥ १४ ॥

विवेष । यत् । मा । धिषणा । जजान । स्तवै । पुरा । पार्यात् । इन्द्रम् । अह्नः । अंहसः । यत्र । पीपरत् । यथा । नः । नावाऽइव । यान्तम् । उभये । हवन्ते ॥ १४ ॥

यद्यदाधिषणा इन्द्रंस्तवानीतिमदीयाबुद्धिर्मा मां विवेष व्याप्नोत् तदाहंस्तोत्रंजजान करोमि बुद्धेःस्वरूपंदर्शयति—अहंपार्यात्पारेभवादतिदूरवर्तिनोविघ्नकारिणोऽह्नः पुरापूर्वमिन्द्रं स्तवैस्तवानियत्रयस्यांधिषणायामेवजातायांसत्यांसइन्द्रःनोऽस्मानंहसःपापरूपाद्दारिद्र्याद्यथापीपरत् यथापारंनयेत् तथास्मदुभयपार्श्ववर्तिधनार्थिनोजनाः हवन्तेआह्वयन्ति तत्रदृष्टान्तमाह—नावेवयान्तं यथानद्यादिषुनौकयायान्तंगच्छन्तंपुरुषम् उभयेउभयपार्श्ववर्तिनोजनाःहवन्ते आह्वयन्ति तद्वत् ॥ विवेष विषॢव्याप्तावित्यस्यलिटिणलिरूपं लित्स्वरः । जजान जनजननेइत्यस्य लिट्युत्तमेणलिरूपं वाक्यभेदादनिघातः । अंहसः अमगत्यादिषु . अमेर्हुक्चेत्यसुन्प्रत्ययः हुगागमश्च नित्स्वरः । पीपरत् पॄपालनपूरणयोरित्यस्यलुङिचङि ह्रस्वाभ्यासेत्वदीर्घगुणाः यथायोगादनिघातः लित्स्वरः । नावेव णुदप्रेरणेइत्यस्मात्ग्लानुदिभ्यांडौरितिडौप्रत्ययः नुद्यतइतिनौः ग्लुवः सावेकाचस्तृतीयायाउदात्तत्वम् इवेनानित्यसमासोविभक्त्यलोपइ-

स्यादि । उभये उभशब्दात्परस्यतयपउभादुदात्तोनित्यमितिअयजादेशः वचनसामर्थ्यादादेरुदात्तत्वम् । हवन्ते ह्वयतेर्लटिरूपम् ॥ १४ ॥

माध्यन्दिनेसवनेआग्नीध्रीयस्यआपूर्णोअस्येतिप्रस्थितयाज्या सूत्रितञ्च—आपूर्णोअस्यकलशःस्वाहेतिमाध्यान्दिन्यइति ।

अथपञ्चदशी—

**आपूर्णोअस्यकलशःस्वाहासेक्तेवकोशंसिसिचेपिबध्यै ।**
**समुप्रियाआववृत्रन्मदायप्रदक्षिणिदभिसोमासइन्द्रम् ॥१५॥**

**आऽपूर्णः । अस्य । कलशः । स्वाहा । सेक्ताऽइव । कोशम् ।**
**सिसिचे । पिबध्यै । सम् । ऊँ इति । प्रियाः । आ । अववृत्रन् ।**
**मदाय । प्रऽदक्षिणित् । अभि । सोमासः । इन्द्रम् ॥ १५ ॥**

हेइन्द्र अस्य तवपानार्थं कलशः द्रोणकलशः सोमेनापूर्णःस्वाहा स्वाहाकृतोदत्तश्च सोमसहितःकलशःपिबध्यै तवपानार्थंसिसिचे तंसोमंचोदिताधोरसिञ्चामि तत्रदृष्टान्तः—कोशंसेक्तेव यथासेक्तोत्सेचकः जलपूर्णात्कोशात्दृतेःसकाशाज्जलंपात्रान्तरेसिञ्चतितद्वत् प्रियाः स्वादुतमाःसोमासोदत्तास्तेसोमाः इन्द्रंत्वामभि अभिलक्ष्यैव मदाय तवहर्षार्थं प्रदक्षिणित् प्रादक्षिण्येनसमाववृत्रन् सम्यगावृत्यवर्तताम् । उःपूरणः ॥ आपूर्णः पॄपालनपूरणयोरित्यस्यकर्मणिनिष्ठा रदाभ्यामितितस्यनत्वं गतिरनन्तरइतिगतिस्वरः । स्वाहा निपातत्वादाद्युदात्तः । सेक्तेवकोशं नलोकाव्ययेतिषष्ठीप्रतिषेधः । सिसिचे पिचक्षरणेइत्यस्यलिटिरूपम् । पिबध्यै पापानेइत्यस्यतुमर्थेशध्यैन्प्रत्ययः शित्वात्पिबादेशः नित्त्वादाद्युदात्तः । आववृत्रन् वृतुवर्तनेइत्यस्यलङिशप् बहुलंछन्दसीतितस्यशपःश्लुः व्यत्ययेनपरस्मैपदं बहुलंछन्दसीतिश्नेरुडागमः ॥ १५ ॥

अथषोडशी—

**नत्वागभीरःपुरुहूतसिन्धुर्नाद्रयःपरिषन्तोवरन्त ।**
**इत्थासखिभ्यइषितोयदिन्द्राद्दृह्लंचिदरुजोगव्यमूर्वम् ॥ १६ ॥**

न । त्वा । गभीरः । पुरुऽहूत । सिन्धुः । न । अद्रयः । परि । सन्तः । वरन्त । इत्था । सखिऽभ्यः । इषितः । यत् । इन्द्र । आ । दृळ्हम् । चित् । अरुजः । गव्यम् । ऊर्वम् ॥ १६ ॥

हेपुरुहूतेन्द्र गभीरोगम्भीरः सिन्धुःसमुद्रःत्वात्वांनवारयति ततःपरि परितोवर्तमानाःसन्तोद्रयःशैलाःत्वांनवरन्त नवारयन्ति किन्तु त्वामनुसृत्यवर्तन्ते यद्यस्मादित्था इत्थमनेनप्रकारेण सखिभ्यः सखिभिर्वैरिषितः प्रार्थितस्त्वं दृढंचिदतिप्रबलमपि गव्यं गविभवमवरेवर्तमानमूर्वमूर्वानलमारुजः सम्यगभाङ्क्षीः ॥ गभीरः गाधृप्रतिष्ठालिप्सयोर्ग्रन्थेच अस्मादीरन्प्रत्ययः धकारस्यभकारः आकारस्यह्रस्वश्च गभीरगम्भीरावित्यनेननिपात्यते चित्स्वरः । सिन्धुः स्यन्दूप्रस्रवणे स्यन्देःसंप्रसारणंधश्चेत्युप्रत्ययः संप्रसारणं दकारस्यधकारः निदित्यनुवृत्तेराद्युदात्तः परिषन्तः सन्तः अस्तेःशतरिरूपम् उपसर्गप्रादुर्भ्यामस्तिर्यच्परइतिषत्वं केचित्परेः क्रियान्वयमिच्छन्ति तदा षत्वमनुपपन्नम् परि निपातस्वरः । सन्तः प्रत्ययस्वरः । वरन्त वृञ्वरणे भौवादिःलङिरूपं निघातः । अरुजः रुजोभङ्गेइत्यस्य लङिरूपम् । गव्यं गोर्विकारइत्यर्थेगोपयसोर्यदितियत् यतोनावइत्याद्युदात्तत्वम् ॥ १६ ॥

अथसप्तमी—

शुनंहुवेममघवानमिन्द्रमस्मिन्भरेनृतमंवाजसातौ ।
शृण्वन्तमुग्रमूतयेसमत्सुघ्नन्तंवृत्राणिसंजितंधनानाम् ॥ १७ ॥ ११

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ १७ ॥ ११ ॥

एषाऋक्पूर्वमेवव्याख्याता ॥ १७ ॥

॥ इतितृतीयस्यद्वितीयेएकादशोवर्गः ॥ ११ ॥

प्रपर्वतानामितित्रयोदशर्चंचतुर्थंसूक्तम् अत्रेयमनुक्रमणिका— प्रपर्वतानांसप्तोनासंवादोनदीभिर्विश्वामित्रस्योक्तितीर्षोस्तत्रनदीवाक्यं चतुर्थीषष्ठ्यष्टमीदशम्यः षष्ठीसप्तम्योस्त्विन्द्रस्तुतिरन्त्यानुष्टुबिति । अत्रचतुर्थीषष्ठ्यष्टमीदशमीनांनदीवाक्यत्वात्नद्यएवऋषयःशिष्टानांविश्वा-

मित्रवाक्यत्वात्सएवऋषिः अन्त्यानुष्टुप्, शिष्टास्त्रिष्टुभः इन्द्रोदेवता यद्यपि षष्ठ्यांसप्तम्यांच विश्वामित्रेणनद्यःस्तूयन्ते तथापि इन्द्रएवदेवता सूक्तविनियोगोलैङ्गिकः । पुराकिलविश्वामित्रःपैजवनस्यसुदासोराज्ञःपुरोहितोबभूव सचपौरोहित्येनलब्धधनः सर्वंधनमादायविपाट्छुतुद्र्योः संभेदमाययावनुययुरितरे अथोत्तितीर्षुर्विश्वामित्रोगाधजले तेनद्यौ दृष्ट्वोत्तरणार्थमाद्याभिस्तिसृभिस्तुष्टाव ।

सैषासूक्तेप्रथमा—

प्रपर्वतानामुशतीउपस्थादश्वेइवविषितेहासमाने ।
गावेवशुभ्रेमातरारिहाणेविपाट्छुतुद्रीपयसाजवेते ॥ १ ॥

प्र । पर्वतानाम् । उशती इति । उपस्थात् । अश्वे इवेत्यश्वेऽइव ।
विषितेइति विऽसिते । हासमाने इति । गावाऽइव । शुभ्रे इति ।
मातरा । रिहाणे इति । विऽपाट् । शुतुद्री । पयसा । जवेते इति ॥ १ ॥

पर्वतानांशैलानामुपस्थादुत्सङ्गान्निर्गत्योशती समुद्रगमनंकामयमाने गमनेदृष्टान्तः—अश्वेइववडवे यथाविषिते मन्दुरातोविमुक्तेहासमानेअन्योन्यंजवेनस्पर्धमाने यद्वा हृष्यन्त्यौ अश्वेइव वडवेइव त्वरयागच्छन्त्यौ परस्परंहृष्यन्त्यौ तथा गावेवशुभ्रे यद्वा द्वेगावौ शोभमानेवर्तेते तद्वच्छुभ्रेशोभमाने किञ्च मातरा यथामातरौधेनूरिहाणे अन्तर्णीतसनर्थोरिहिः वत्सं जिह्वयालेढुमिच्छन्त्यौशीघ्रंगच्छतः तद्वत्समुद्रंगन्तुंजवाद्गच्छन्त्यौपयसासंयुक्ते विपाट्कूलविपाटनात्विपाशनाच्छतपुत्रमरणोद्भूतमोत्र्तुमुमूर्षोर्वसिष्ठस्यपाशाअस्यांव्यपास्यन्त विमोचनाद्वाविपाट्शुतुद्री शुक्षिप्रंतुन्नातुन्नेव द्रवतिगच्छतीतिशुतुद्री एतन्नामकेनद्यौ प्रजवेते समुद्रंप्रति शीघ्रंगच्छतः अत्रनिरुक्तं—पर्वतानामुपस्थादुपस्थानादुशत्यौकामयमानेअश्वेइवविमुक्तेइतिवाविषण्णेइतिवाहासमानेहासतिःस्पर्धायांहर्षमाणेवागावाविवशुभ्रेशोभनेमातरौसंरिहाणेविपाट्छुतुद्र्यौपयसाप्रजवेतेइति । उशती वशकान्तौ अस्यशतुर्ङित्त्वाद्ग्रहिज्यावयीत्यादिनासंप्रसारणम् । विषिते षिञ्बन्धनेइत्यस्यकर्मणि निष्ठा संहितायांपरिनिविभ्यःसेवसितसयसिवुसहेत्यादिना षत्वं गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । हासमाने हासतिःस्पर्धाकर्मा हसेहसने वाशानच् तस्य लसार्वधातुकस्वरेकृतेधातुस्वरः । रिहाणे लिहआस्वादने स्वरितेत्त्वादुभयपदीशानच् अदादित्वाच्छपोलुक् लकारस्यरेफश्छान्दसः रेफमवलम्ब्यणत्वं चित्त्वादन्तोदात्तः । विपाट् पटगतौ पश-

नि० ९. ३९. ।

बाधनस्पर्शनयोरितिवाण्यन्तावेतौविपूर्वौ शकारस्यव्रश्चादिनाषत्वम् शुतुद्री छान्दसीरूपसिद्धिः जवेते जुहूगतौ भौवादिः ङित्त्वादात्मनेपदम् आतोङितइतीयादेशः निपातः ॥ १ ॥

अथद्वितीया–

इन्द्रेषितेप्रसवंभिक्षमाणेअच्छासमुद्रंरथ्येवयाथः ।
समाराणेऊर्मिभिःपिन्वमाने अन्यावामन्यामप्येतिशुभ्रे ॥ २ ॥

इन्द्रेषिते इतीन्द्रेऽइषिते । प्रऽसवम् । भिक्षमाणे इति । अच्छ । समुद्रम् । रथ्याऽइव । याथः । समाराणे इति सम्ऽआराणे । ऊर्मिऽभिः । पिन्वमाने इति । अन्या । वाम् । अन्याम् । अपि । एति । शुभ्रे इति ॥ २ ॥

हेनद्यौ इन्द्रेषिते इन्द्रेणप्रेषिते प्रसवंतस्येन्द्रस्यानुज्ञांभिक्षमाणेप्रार्थयमाने युवांसमुद्रमच्छाभिमुख्येनयाथोगच्छथः तत्रदृष्टान्तः—रथ्येवेति यथारथिनौलक्ष्यंदेशमभिगच्छतःतद्वत् किंकुर्वत्यौ समाराणे परस्परंसंगच्छन्त्यौ तथा ऊर्मिभिस्तरङ्गैःपिन्वमानेपरिसरप्रदेशंसन्तर्पयन्त्यौ शुभ्रे शोभमाने युवांसमुद्रंगच्छथइतिपूर्वेणान्वयः तथा वांयुवयोर्मध्ये अन्याएकाअन्यामपरांनदीमप्येति अपिगच्छति परस्परमैक्यमापद्यतेइत्यर्थः ॥ इन्द्रेषिते इषगतावित्यस्यकर्मणिनिष्ठायास्तीषसहेत्यादिनाऽडागमः तृतीयाकर्मणीतिपूर्वपदस्वरः ॥ प्रसवं षूप्रेरणेइत्यस्य अप् थाथादिस्वरः । भिक्षमाणे भिक्षयाच्ञायाम् आत्मनेपदी शानचोलसार्वधातुकस्वरेणानुदात्तत्वेधातुस्वरः । रथ्येव रथस्येमौ तस्येदमित्यर्थे रथाद्यदितियत्प्रत्ययः तित्स्वरः इवेनसमासोविभक्त्यलोपश्चेत्यादि । याथः यातेर्लटिरूपम् । समाराणे ऋगतावित्यस्यलिट् संपूर्वस्यार्तेःसमोगमीत्यादिनात्मनेपदत्वात्तस्यकानजादेशः ऋच्छत्यृतामितिगुणः । पिन्वमाने पिविसेचने भ्वादिः लसार्वधातुकस्वरेणशानचोनुदात्तत्वेधातुस्वरः ॥ २ ॥

अथतृतीया–

अच्छासिन्धुंमातृतमामयासंविपाशमुर्वींसुभगामगन्म ।
वत्समिवमातरासंरिहाणेसमानंयोनिमनुसञ्चरन्ती ॥ ३ ॥

अच्छे । सिन्धुम् । मातृऽतमाम् । अयासम् । विऽपाशम् । उर्वीम् । सुऽभगाम् । अगन्म । वत्सम्ऽइव । मातरा । संरिहाणे इति सम्ऽरिहाणे । समानम् । योनिम् । अनु । सञ्चरन्तीइति सम्ऽचरन्ती ॥ ३ ॥

हेनद्यौ मातृतमाम् अतिशयेनमातरंसिन्धुंस्रवन्तीं शुतुद्रीं त्वामच्छाभिमुख्येनायासं विश्वामित्रोऽहंप्राप्तोऽभूवं तथा उर्वींमहतींसुभगांसौभाग्यवतींविपाशंत्वामगन्म वयंप्राप्ताःस्म किंकुर्वत्यौ मातरा मातरौद्वेवेनूवत्समिवसंरिहाणे अन्तर्णीतसनर्थोलिहिः जिह्वयालेढुमिच्छन्त्यौ यथावत्समनुगच्छतःतद्वत् समानमेकंयोनिंस्थानंसमुद्रमनुअभिलक्ष्यसञ्चरन्तीसम्यक्चरन्त्यौ युवामयासामितिपूर्वेणान्वयः ॥ अयासं याप्रापणेइत्यस्यरूपम् इडभावश्छान्दसः । अगन्म गमेर्लिङि बहुलंछन्दसीतिशपोलुक् म्वोश्चेतिमकारस्यनकारः निघातः । सञ्चरन्ती चरतिर्गत्यर्थः तृतीयायुक्तत्वाभावादात्मनेपदाभावः शतुर्लसार्वधातुकस्वरेणानुदात्तत्वेकृतेधातुस्वरः ॥ ३ ॥

अथचतुर्थी—

एनावयंपयसापिन्वमानाअनुयोनिंदेवकृतंचरन्तीः । नवर्तवेप्रसवःसर्गतक्तःकिंयुर्विप्रोनद्योजोहवीति ॥ ४ ॥

एना । वयम् । पयसा । पिन्वमानाः । अनु । योनिम् । देवऽकृतम् । चरन्तीः । न । वर्तवे । प्रऽसवः । सर्गऽतक्तः । किम्ऽयुः । विप्रः । नद्यः । जोहवीति ॥ ४ ॥

एवंस्तुतेनद्यौ विश्वामित्रंप्रत्यूचतुः एना एनेनपयसापिन्वमानाः संतर्पयन्त्यः देवकृतं देवेनेन्द्रेणकृतं संदिष्टं योनिं स्थानं समुद्रमनु अनुलक्षीकृत्य चरन्तीर्गच्छन्त्योवयमास्महे द्वयोर्बहुवचनंपूजार्थं तासामस्माकंसर्गतक्तः सर्गेगमनेप्रवृत्तः प्रसवउद्योगः नवर्तवेनिवर्तनायनभवति किंयुः किमिच्छन्नसौविप्रोब्राह्मणोनद्योनदीरस्मान्जोहवीति भृशमाह्वयति ॥ एना इदंशब्दस्यतृतीयायाएनादेशः सुपांसुलुगितितृतीयायाआडादेशः ऊडिदमितिविभक्तेरुदात्तत्वम् । पिन्वमानाः पिविसेचने । देवकृतं तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरः । वर्तवे वृतुवर्तने तुमर्थेतवेन्प्रत्ययः नित्स्वरः । सर्गतक्तः क्तेचेतिपूर्वपदप्रकृतिस्वरः । किंयुः किमिच्छन् क्यचोमान्ताव्ययप्रतिषेधइतिछान्दसत्वादत्रप्रतिषेधोनभवतीतिक्यच् क्या-

च्छन्दसीत्युप्रत्ययः प्रत्ययस्वरः । नद्यः छान्दसोयणादेशः । जोहवीति ह्वयोर्यङ्लुकि अभ्यस्तस्यचेतिसंप्रसारणेकृते गुणोयङ्लुकोरित्यभ्यासस्यगुणः यङोवेतितिपईडागमः गुणः निघातः ॥ ४ ॥

अथपञ्चमी–

रमध्वंमेवचसेसोम्यायऋतावरीरुपमुहूर्तमेवैः ।
प्रसिन्धुमच्छाबृहतीमनीषावस्युरह्वेकुशिकस्यसूनुः ॥ ५ ॥ १२ ॥

रमध्वम् । मे । वचसे । सोम्याय । ऋतऽवरीः । उप । मुहूर्तम् । एवैः । प्र । सिन्धुम् । अच्छ । बृहती । मनीषा । अवस्युः । अह्वे । कुशिकस्य । सूनुः ॥ ५ ॥ १२ ॥

विश्वामित्रोनदीःप्रतिब्रूते–ऋतावरीः ऋतमुदकंतद्वत्योहेनद्यः यूयंमेविश्वामित्रस्यममसोम्याय उत्तार्याहंसोमंसंपादयामीत्येवंसोमसंपादिनेवचसेतदर्थम् एवैःपञ्चम्यर्थेतृतीया शीघ्रगमनेभ्यः मुहूर्तं मुहूर्तमात्रमुपरमध्वम् उपपूर्वोरमिरुपसंहारेवर्तते क्षणमात्रंशीघ्रगमनात्उपरताभवत सामान्येननदीषूच्यमानासु समीहितं प्रयोजनमकुर्वतीं पुरोवर्तिनींशुतुद्रींप्रतिब्रूते कुशिकस्यराजर्षेःसूनुर्विश्वामित्रोऽहंबृहतीमहत्यामनीषयास्तुत्याअवस्युः आत्मनोरक्षणमिच्छन्सन् सिन्धुंशुतुद्रींत्वामिच्छामि मुख्येनत्वाह्वे प्रकर्षेणाह्वयामि अत्रनिरुक्तम्–उपरमध्वंमेवचसेसोम्यायसोमसंपादिनऋतावरीर्ऋतवत्यऋतमित्युदकनामप्रत्यृतंभवतिमुहूर्तमेवैरयनैरवनैर्वाप्राभिह्वयामिसिन्धुंबृहत्यामहत्यामनीषयामनसईषयास्तुत्याप्रज्ञयावावनायकुशिकस्यसूनुःकुशिकोराजाबभूवेति ॥ रमध्वं रमुउपरमे उपपूर्वाद्रमतेर्विभाषाकर्मकादित्यात्मनेपदम् । ऋतावरीः ऋतशब्दान्मत्वर्थेछन्दसीवनिपावितिवनिप् वनोरचेतिङीप् रेफश्चान्तादेशः वाछन्दसीतिसवर्णदीर्घः आमन्त्रितस्यपादादित्वेनाष्टमिकमाद्युदात्तत्वम् । एवैः इण्गतौ इण्शीङ्भ्यांवन् आर्धधातुकलक्षणोगुणः नित्स्वरः । बृहती मनीषा उभयत्रतृतीयायाःपूर्वसवर्णदीर्घः । अवस्युः अवोरक्षणमिच्छन् सुपआत्मनःक्यच् नःक्यइतिनकारान्तस्यपदसंज्ञायानियमितत्वादत्रसकारस्यरुर्नभवति क्याच्छन्दसीत्युप्रत्ययः । अह्वे ह्वयतेर्लुङि लिपिसिचआत्मनेपदेष्वन्यतरस्यामित्यङादेशः गुणः निघातः ॥ ५ ॥

॥ इतितृतीयस्यद्वितीयेद्वादशोवर्गः ॥ १२ ॥

१ नि० २. २५ ।

अथषष्ठी–

इन्द्रो॑अ॒स्माँ अ॑रद॒द्वज्र॑बाहु॒रपा॑ह॒न्वृ॒त्रं प॑रि॒धिं न॒दीना॑म् ।
दे॒वो॑नयत्सवि॒ता सु॑पा॒णिस्तस्य॑ व॒यं प्र॑स॒वे या॑म उ॒र्वीः ॥ ६ ॥

इन्द्रः॑ । अ॒स्मान् । अ॒र॒द॒त् । वज्र॑ऽबाहुः । अप॑ । अ॒ह॒न् । वृ॒त्रम् । प॒रि॒ऽधिम् । न॒दीना॑म् । दे॒वः । अ॒न॒य॒त् । स॒वि॒ता । सु॒ऽपा॒णिः । तस्य॑ । व॒यम् । प्र॒ऽस॒वे । या॒मः॒ । उ॒र्वीः ॥ ६ ॥

नद्यःप्रत्यूचुः हेविश्वामित्र वज्रबाहुः वज्रयुक्तोबाहुर्यस्यासौवज्रबाहुः तादृशोबलवानिन्द्रः नदीरस्मानरदत् रदतिःखनतिकर्मा अखनत् कथमखनत् उच्यते—नदीनांशब्दकारिणीनामपांपरिधिं परितोनिहितमुदकमन्तःकृत्वा परितोवर्तमानमित्यर्थः तादृशंवृत्रं वृणोत्याकाशमितिवृत्रोमेघः तंमेघमपाहन् जघान तस्मिन्हतेआपःपतिताः ताभिर्गच्छन्तीभिर्वयंखाताः एवंमेघहननद्वारेणाखनत् नकेवलमखनत् किंतर्हि सवितासर्वस्यजगतःप्रेरकः सुपाणिःशोभनहस्तः उत्पत्तिस्थितिकर्तृत्वात् तादृशोदेवोद्योतमानइन्द्रः अस्माननयत् मेघभेदनंकृत्वोदकप्रेरणेनसमुद्रमपूरयत् तस्यतादृशसामर्थ्योपेतस्येन्द्रस्य प्रसवेऽभ्यनुज्ञायांवर्तमानाउर्वीः उदकैःप्रभूतावयंयामोगच्छामः नतत्रवचनादुपरमामहे उक्तार्थंयास्कोब्रवीति—इन्द्रोस्मानरदद्वज्रबाहूरदतिःखनतिकर्मापाहन्वृत्रंपरिधिंनदीमितिव्याख्यातंदेवोनयत्सवितासुपाणिःकल्याणपाणिःपाणिःपणायतेःपूजाकर्मणःप्रगृह्यपाणीदेवान्पूजयन्तितितस्यवयंप्रसवेयामउर्वीःउर्व्यइति ॥ अरदत् रदतेर्लङिरूपम् । वज्रबाहुः बहुव्रीहौपूर्वपदस्वरः । अहन् हन्तेर्लङि रूपं निघातः । परिधि डुधाञ्धारणपोषणयोरित्यस्मात्कर्मण्युपसर्गेघोःकिरितिकिप्रत्ययः आतोलोपः कृदुत्तरपदस्वरः । अनयत् नयतेर्लङिरूपम् । सुपाणिः पणव्यवहारेस्तुतौच अशिपणाय्योरुडायलुकौचेतीण् आयलुक् बहुव्रीहौनञ्सुभ्यामितिस्वरः । प्रसवे षूप्रेरणे ऋदोरबितिभावेअप्प्रत्ययः थाथघञ्क्तेत्युत्तरपदान्तोदात्तत्वम् । यामः याप्रापणेइत्यस्यलटिरूपं निघातः । उर्वीः उरुशब्दाद्वोतोगुणवचनादितिङीष् वाछन्दसीतिसवर्णदीर्घः प्रत्ययस्वरः ॥ ६

अथसप्तमी–

प्र वा॒च्यं॑ शश्व॒धा वी॒र्यं१॒॑ तदिन्द्र॑स्य॒ कर्म॒ यदहिं॑ विवृ॒श्चत् ।
वि वज्रे॑ण परि॒षदो॑ जघा॒नाय॒न्नापोऽय॑नमि॒च्छमा॑नाः ॥ ७ ॥

---

१ नि० २. २६. ।

प्रऽवाच्यम् । शश्वधा । वीर्यम् । तत् । इन्द्रस्य । कर्म । यत् । अहिम् । विऽवृश्चत् । वि । वज्रेण । परिऽसदः । जघान । आयन् । आपः । अयनम् । इच्छमानाः ॥ ७ ॥

योऽयमिन्द्रोऽहिंमेघंविवृश्चत् उदकप्रेरणार्थंजघानेतियत्कर्मच्छेदनरूपं तदिदंतस्येन्द्रस्यवीर्यंसामर्थ्यं शश्वधासर्वदाप्रवाच्यं प्रकर्षेणवचनीयं तथासइन्द्रः परिषदः परितःसीदतःआसीनान्प्रतिबन्धकारिणोसुरान्वज्रेणविजघान अथायनंस्थानमिच्छमानाइच्छन्त्यआपआयन्यान्ति ॥ प्रवाच्यं वचपरिभाषणेइत्यस्माद्दहलोर्ण्यदितिण्यत् णित्वादुपधावृद्धिः वचोशब्दसंज्ञायामितिकुत्वाभावः व्यत्ययेनाद्युदात्तत्वं यद्वा वाचयतेरचोयत् यतोनावइतिस्वरः । शश्वधा शश्वच्छब्दात्स्वार्थेधाप्रत्ययः तकारलोपश्छान्दसः । विवृश्चत् ओव्रश्चूछेदने तुदादिः लङि ग्रहिज्यावयीत्यादिनासंप्रसारणं सहसुपेत्यत्रसंहितियोगविभागात्समासः समासस्वरः । परिषदः क्विप् संहितायांसादिरप्रतेरितिषत्वम् । जघान हन्तेर्लिटिणलिरूपं निघातः । आयन् अयगतावित्यस्यलङिरूपं पादादित्वादनिघातः । इच्छमानाः इषुइच्छायामित्यस्माद्व्यत्ययेनशानच् तस्यलसार्वधातुकस्वरेकृतेप्रत्ययस्वरः ॥ ७ ॥

अथाष्टमी—

एतद्वचोजरितर्मापिमृष्ठाआयत्तेघोषानुत्तरायुगानि ।
उक्थेषुकारोप्रतिनोजुषस्वमानोनिकःपुरुषत्रानमस्ते ॥८॥

एतत् । वचः । जरितः । मा । अपि । मृष्ठाः । आ । यत् । ते । घोषान् । उत्ऽतरा । युगानि । उक्थेषु । कारो इति । प्रति । नः । जुषस्व । मा । नः । नि । करिति कः । पुरुषऽत्रा । नमः । ते ॥८॥

नद्यःप्रसङ्गादिन्द्रस्तोत्रंकृत्वाविश्वामित्रंप्रत्यूचुः—जरितः स्तोतर्हेविश्वामित्र तेत्वदीयंयत्संवादात्मकंवचः त्वंनोऽभीत्याघोषानुद्घोषयन्वर्तसे एतद्वचोमापिमृष्ठाः माविस्मार्षीः किंकारणम् उत्तरायुगानि उत्तरेषुयाज्ञिकेषुयुगेष्वहःसुउक्थेषु कारोशस्त्राणांकर्तस्त्वं नोऽस्मान्प्रतिजुषस्व संवादात्मकेनतेनवाक्येनप्रतिसेवस्व इदानींनोऽस्मान्पुरुषत्रापुरुषेषुमानिकः उक्तिप्रत्युक्तिरूपसंवादवाक्याध्यापनेननितरांपुंवत्प्रागल्भ्यंमाकार्षीः तेतुभ्यंनमः ॥ मृष्ठाः मृजूषशुद्धावित्य-

स्यलङि व्यत्ययेनात्मनेपदम् अदादित्वाच्छपोलुक् व्रश्चादिनाषत्वं निघातः । घोषान् घुषिरविशब्दनेइत्यस्यशतरि सर्वविधीनांछन्दसिविकल्पितत्वादतोगुणेइतिपररूपत्वाभावः सवर्णदीर्घः शतुर्लसार्वधातुकस्वरेकृते धातुस्वरः । युगानि युजिर्योगे उञ्छादिषुयजन्तत्वेननिपातनादगुणत्वं विशिष्टविषयंचानिपातनमिष्यते कालविशेषेरथाद्युपकरणेचेतितत्रपाठादेवान्तोदात्तत्वं कालाध्वनोरत्यन्तसंयोगेइतिद्वितीया । कारो करोतेः कृवापाजिमीत्यादिनाउण्प्रत्ययः आमन्त्रितत्वान्निघातः । कः करोतेर्लुङि च्लेः मन्त्रेघसेत्यादिनालुक् हल्ङ्याब्भ्यादिनासिचोलोपः नमाङ्योगेइत्यडभावः । पुरुषत्रा देवमनुष्यपुरुषपुरुमर्त्येभ्योद्वितीयासप्तम्योर्बहुलमितिसप्तम्यर्थेत्रा प्रत्ययः प्रत्ययस्वरः ॥ ८ ॥

अथनवमी–

**ओषुस्वंसारःकारवेशृणोतययौवोदूरादनसारथेन ।**
**निषूनंमध्वंभवतासुपाराअंधोअक्षाःसिन्धवःस्रोत्याभिः ॥ ९ ॥**

ओ इति । सु । स्वसारः । कारवे । शृणोत । ययौ । वः । दूरात् । अनसा । रथेन । नि । सु । नमध्वम् । भवत । सुपाराः । अधःऽअक्षाः । सिन्धवः । स्रोत्याभिः ॥ ९ ॥

विश्वामित्रोनदीःप्रत्युवाच स्वसारोभगिन्यःसिन्धवोहेनद्यः कारवे स्तोत्रंकुर्वाणस्यमम वचनं सुसुष्ठुओशृणोत शृणुतैव अनसाशकटेनरथेनचसहदूराद्विप्रकृष्टाद्देशाद्वोयुष्मान्ययौ प्राप्तोऽस्मि यूयं सु सुष्ठुनिनमध्वम् आत्मनास्वयंप्रह्वाभवत तथासुपाराःरथादीनांतीरात्सुखेनावरोहणारोहणेयथास्यातांतथाशोभनरोधसश्चभवत किंच यूयंस्रोत्याभिः स्रवणशीलाभिरद्भिःअधोअक्षाः रथाङ्गस्याक्षस्याधस्ताद्भवत यदा आपोऽक्षस्याधस्ताद्भवन्तितदारथादीनिनेतुंशक्यन्ते तस्मात्तत्परिमाणोदकाभवतेत्यभिप्रायः ॥ ओइतिप्रगृह्यसंज्ञा । शृणोत श्रुश्रवणेइत्यस्यलोटितप्रत्ययस्यतप्तनप्तनथनाश्चेतितबादेशः पित्त्वाद्गुणः निघातः । ययौ याप्रापणेइत्यस्य भूतमात्रेलिट्युत्तमे णलिआतऔणलइत्यौकारः एकादेशस्वरः । वः युष्मच्छब्दस्यद्वितीयाया बहुवचनस्यवस्नसावितिवसादेशः । सु निपातस्येतिसंहितायांदीर्घः । नमध्वं णमुप्रह्वत्वेशब्देइत्यस्यकर्मकर्तरिनदुहस्नुनमांयक्चिणावितिप्रतिषेधाद्यगभावः । अधोअक्षाः अधरशब्दस्यपूर्वाधरावराणामसिपुरधवश्चैषामित्यासिप्रत्ययः अधादेशश्च अक्षशब्दोऽशूव्याप्तावित्यस्मादशे-

देवनइतिसप्रत्ययान्तः कृदुत्तरपदप्रकृतिस्वरः । सिन्धवः आमन्त्रितत्वान्निघातः । स्रोत्याभिः स्रोतःशब्दात्स्रोतसोविभाषाड्यड्यावितिड्यप्रत्ययः ड्त्वाट्टिलोपः प्रत्ययस्वरः ॥ ९ ॥

अथदशमी—

आतेकारोशृणवामावचांसिययाथदूरादनसारथेन ।
निर्तेनंसैपीप्यानेवयोषामर्यायेवकन्याशश्वचैतें ॥ १० ॥ १३ ॥

आ । ते । कारो इति । शृणवाम । वचांसि । ययाथ । दूरात् ।
अनसा । रथेन । नि । ते । नंसै । पीप्यानाऽइव । योषा ।
मर्यायऽइव । कन्या । शश्वचै । त इति ते ॥ १० ॥ १३ ॥

नद्यःपूर्वविश्वामित्रवाक्यंप्रत्याख्यायानयर्चातस्यवाक्यमाशुश्रुवुः कारोस्तोत्रंकुर्वाण हे-विश्वामित्र ते तव वचांसि इमानिवाक्यानि आश्रृणवाम कात्स्न्येनश्रृणुमः तवसमीहितं प्रयोजनंकुर्मइत्यर्थः अनसाशकटेनरथेनचसहययाथ यतोदूरादागतोसि वयंचतेत्वदर्थंनि-नंसैनीचैर्नमाम । प्रत्येकविवक्षयात्रैकवचनं रथेनगन्तुंगाधोदकाभवामेत्यर्थः । तत्रदृष्टान्तः—पीप्यानेवयोषा पीप्यानापुत्रंस्तनंपाययन्तीयोषामातायथाप्रह्वीभवति दृष्टान्तान्तरं—यथाकन्या युवतिर्मर्यायेवमनुष्यायपित्रेभ्रात्रेवाशश्वचैपरिष्वजनायनम्राभवतितद्वत् तेत्वदर्थंप्रह्वीभवामः तेइतिपुनरुक्तिरादरार्था एतामृचंयास्कएवंव्याचष्टे—आशृणवामतेकारोवचनानियाहिदूरादनसाचरथेनचनिनमामतेपाययमानेवयोषापुत्रंमर्यायेवकन्यापरिष्वजनायनिनमाइति वेति ॥ कारो सम्बुद्धौशाकल्यस्येतावितिप्रगृह्यसंज्ञा । श्रृणवाम श्रुश्रवणेइत्यस्यलोटि आडुत्तमस्यपिच्चेत्याडागमः पित्त्वाद्गुणः निघातः । ययाथ याप्रापणेइत्यस्यभूतमात्रेलिटिथलि एकाचउपदेशेनुदात्तादितीट्प्रतिषेधः लित्स्वरः । अनसा सहार्थेतृतीया । नंसै णमुप्रह्वत्वेइत्यस्यलेट्युत्तमे सिब्बहुलमितिसिप् वैतोन्यत्रेतिएकारादेशः निघातः । पीप्यानेव पीङ्पानेइत्यस्यान्तर्भावितण्यर्थस्यलिटिकानचिरूपं चित्स्वरः । योषा युमिश्रणे वृतृवदिहनीत्यादिना सप्रत्ययः यौतीतियोषा वृषादित्वादाद्युदात्तः । शश्वचै ष्वञ्जपरिष्वङ्गेइत्यस्मात्संपदादिलक्षणोभावेक्विप् पृषोदरादित्वादिष्टरूपसिद्धिः अन्तोदात्तश्च ॥ १० ॥

॥ इतितृतीयस्यद्वितीयेत्रयोदशोवर्गः ॥ १३ ॥

१ नि० २. २७. ।

अथैकादशी—

यदङ्गत्वाभरताःसंतरेयुर्गव्यन्ग्रामइषितइन्द्रजूतः ।
अर्षादहप्रसवःसर्गतक्तआवोवृणेसुमतिंयज्ञियानाम् ॥ ११ ॥

यत् । अङ्ग । त्वा । भरताः । सम्ऽतरेयुः । गव्यन् । ग्रामः ।
इषितः । इन्द्रऽजूतः । अर्षात् । अह । प्रऽसवः । सर्गऽतक्तः ।
आ । वः । वृणे । सुऽमतिम् । यज्ञियानाम् ॥ ११ ॥

विश्वामित्रोनदीःप्रत्युवाच अङ्गेत्यामन्त्रणे हेनद्यः यद्यस्माद्युष्माभिरुत्तितीर्षोर्ममोत्तरणमभ्यनुज्ञातम् तस्माद्भरताःभरतकुलजामदीयाः सर्वेत्वापरस्परमेकतामापन्नांनदींत्वांसन्तरेयुः सम्यगुत्तीर्णाभवेयुः तदेवविशिनष्टि—गव्यन्गाउदकानितरीतुमिच्छन् इषितस्त्वयाभ्यनुज्ञात-इन्द्रजूतः युष्माकंप्रवर्तकेनेन्द्रेणचप्रेरितोग्रामोभरतानांसंघः अर्षात्संतरेत् यतः सर्गतक्त-गमनायप्रवृत्तः प्रसवस्तेषामुद्योगोऽहपूर्वंयुष्माभिरनुज्ञातः अहंतुयज्ञियानांयज्ञार्हाणांवोयुष्माकंसुमतिंशोभनांस्तुतिमावृणे सर्वतःसंभजे ॥ भरताः भरतशब्दादुत्सादित्वादञ् तस्ययञ्ञोश्चेतिलुक् अतच् प्रत्ययस्वरः । संतरेयुः तरतेर्लिङिजुसिरूपं झेर्लसार्वधातुकस्वरे धातुस्वरः तिङिचोदात्तवतीतिगतेर्निघातः । गव्यन् गाआत्मनइच्छन् सुपःक्यच् एकादेशस्वरः । ग्रामः ग्रसतेराचेतिमन्प्रत्ययःआकारादेशश्च नित्स्वरः । इन्द्रजूतः जूइतिसौत्रोधातुर्गत्यर्थः श्र्युकःकितीतिनिष्ठायामिट्प्रतिषेधः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरः । अर्षात् ऋषीगतावित्यस्य लेटि तिपि सिब्बहुलमितिसिप् लेटोऽडागमः एकाचइतीट्प्रतिषेधः गुणः प्रत्ययस्यापित्त्वादनुदात्तत्वेधातुस्वरः । वृणे वृङ्संभक्तावित्यस्यलटिरूपम् । यज्ञियानां यज्ञर्त्विग्भ्यांघखञावितिघप्रत्ययः प्रत्ययस्वरः ॥ ११ ॥

अथद्वादशी—

अतारिषुर्भरतागव्यवःसमभक्तविप्रःसुमतिंनदीनाम् ।
प्रपिन्वध्वमिषयन्तीःसुराधाआवक्षणाःपृणध्वंयातशीभम् ॥ १२

अतारिषुः । भरताः । गव्यवः । सम् । अभक्त । विप्रः । सुऽमतिम् ।
नदीनाम् । प्र । पिन्वध्वम् । इषयन्तीः । सुऽराधाः । आ ।
वक्षणाः । पृणध्वम् । यात । शीभम् ॥ १२ ॥

गव्यवः गाआत्मनइच्छन्तः भरताः भरतकुलजाः सर्वेअतारिपुः तांनदींसमतरन् विप्रोमेधावीविश्वामित्रोनदीनांसुमतिंशोभनांस्तुतिंसमभक्त समभजत यूयंतुयथापूर्वमिषयन्तीः कुल्यादिद्वाराबंकुर्वाणाअतएवसुराधाःशोभनधनोपेताः यूयंवक्षणाः कृत्रिमसरितः कुल्याः प्रपिन्वध्वं प्रकर्षेणतर्पयत आपृणध्वं ताःसर्वतःपूरयतच शीभंशीघ्रंयात गच्छतच । अतारिषुः तृप्लवनतरणयोरित्यस्यलुङि सिचिवृद्धिःपरस्मैपदेष्वितिवृद्धिः अडागमस्वरः । गव्यवः सुपःक्यच् क्याच्छन्दसीत्युप्रत्ययः तस्यस्वरः । अभक्त भजसेवायामित्यस्यलुङिसिचोझलोझलीतिलोपः पादादित्वादनिघातः । पिन्वध्वं पिविसेचनेइत्यस्यलोटिरूपं निघातः । इषयन्तीः इषंकुर्वत्यः तत्करोतीतिणिच् णाविष्ठवत्प्रातिपदिकस्येतीष्ठवद्भावाट्टेरितिटिलोपः वाछन्दसीति सवर्णदीर्घः प्रत्ययस्वरः । पृणध्वं पृणप्रीणने लोटिरूपं व्यत्ययेनात्मनेपदं वाक्यभेदादनिघातः । यात याप्रापणेइत्यस्यलोटिरूपम् अत्रापिनानिघातः । शीभं शीभृकत्थने श्लाध्यतेनेनतद्वानितिकरणेघञ् ञित्स्वरः ॥ १२ ॥

अथत्रयोदशी–

उद्वऊर्मिःशम्याहन्त्वापोयोक्त्राणिमुञ्चत ।
माद्दुष्कृतौव्येनसाघ्न्यौशूनमारताम् ॥ १३ ॥ १४ ॥

उत् । वः । ऊर्मिः । शम्याः । हन्तु । आपः । योक्त्राणि । मुञ्चत ।
मा । अदुःऽकृतौ । विऽएनसा । अघ्न्यौ । शूनम् । आ । अरताम् ॥ १३ ॥ १४ ॥

पूर्वमुत्तीर्णोविश्वामित्रोनदीरुक्त्वाधुनोत्तितीर्षुःपुनराह हेनद्यःवोयुष्माकमूर्मिस्तरङ्गः शम्यायुगकीलाः युग्यकण्ठपार्श्वादिसंलग्नारज्जवः उदूर्ध्वंयथाभवन्तितथाहन्तुगच्छतु सतरङ्गोरज्जूनामधोगच्छत्वित्यभिप्रायः तथा हेआपःयूयं योक्त्राणि तारज्जूर्मुञ्चत यथा नस्पृशन्ति तथा यान्त्वित्यभिप्रायः व्येनसा विगतपापे अतएवादुष्कृतौ कल्याणकर्मकारिण्यौ अघ्न्यौअघ्न्येनकेनापितिरस्करणीयेविपाट्छुतुद्र्यौ रथामां शूनं समृद्धिमारताम् आगच्छताम् एवंविश्वामित्रोनदीःस्तुत्वाताभिरनुज्ञातोतरदिति ॥ ऊर्मिः ऋगतौ अर्तेरूच्चेतिमिप्रत्ययः ऊरित्ययमादेशोधातोः ऋच्छतीत्यूर्मिः प्रत्ययस्वरः । शम्याः शमुउपशमे पोरदुपधादिति यत्प्रत्ययः यतोनावइत्याद्युदात्तत्वम् । हन्तु हनहिंसागत्योरित्यस्यलोटिरूपं निघातः । योक्त्राणि युजिर्योगेकरणेदाम्नीशसयुयुजेत्यादिनाष्ट्रन्प्रत्ययः नित्स्वरः । मुञ्चत मुच्लृमोक्षणे निघातः ।

अदुष्कृतौ इसुसोःसामर्थ्येइतिविसर्जनीयस्यषत्वम् । व्येनसा बहुव्रीहौपूर्वपदस्वरः सुपो डादेशः । अघ्न्यौ हनहिंसागत्योरित्यस्य नञ्पूर्वस्य अघ्न्यादयश्चेतिनिपातनाद्यक् कित्त्वादुपधा-लोपः होहन्तेरितिघत्वं सर्वविधीनांछन्दसिविकल्पितत्वादत्रऔङःशीभावाभावः एकादेशस्वरः । शूनं श्वयतेर्नपुंसकेभावेक्तइतिक्तः यजादित्वात्संप्रसारणं हलइतिदीर्घत्वम् ओदितश्चेतिनि-ष्ठानत्वं निष्ठाचद्व्यजनादित्याद्युदात्तः । अरताम् ऋगतावित्यस्यलुङि च्लेःसर्तिशास्त्यर्तिभ्यश्चेत्य-ङादेशः ऋदृशोऽङिगुणः नमाङ्योगेइत्यडभावः निघातः ॥ १३ ॥

॥ इतितृतीयस्यद्वितीयेचतुर्दशोवर्गः ॥ १४ ॥

इन्द्रःपूर्भिदित्येकादशर्चंपञ्चमंसूक्तम् वैश्वामित्रं त्रैष्टुभम् ऐन्द्रम् अत्रानुक्रमणिका—इन्द्रः पूर्भिदेकादशेति अग्निष्टोमेमाध्यंदिनेसवनेब्राह्मणाच्छंसिशस्त्रेइन्द्रःपूर्भिदितिसूक्तम् । होत्रकाणा-मितिखण्डेसूत्रितम्—इन्द्रःपूर्भिदुदुब्रह्माणीति । पृष्ठ्याभिप्लवषडहयोःप्रथमेहनिमाध्यन्दिनसवने ब्राह्मणाच्छंसिशस्त्रेचातुर्विंशिकातिदिष्टस्याहीनसूक्तस्यस्थानेत्रीणिसंपातसूक्तानि तत्रेदंप्रथमं सूत्रि-तञ्च—इन्द्रःपूर्भिद्यएकइद्धास्तिग्मशृङ्गइति । उद्भिद्बलभिदोर्निष्केवल्येएतत्सूक्तंनिविद्धानीयं सूत्रि-तञ्च—इन्द्रसोमामिन्द्रःपूर्भिदितिमध्यन्दिनइति ।

तस्मिन्सूक्तेप्रथमा—

इन्द्रः॑पू॒र्भिदाति॑र॒द्दास॑म॒र्कैर्वि॒दद्व॑सु॒र्दय॑मानो॒वि शत्रू॑न् ।
ब्रह्म॑जूतस्त॒न्वा॑वावृधा॒नोभूरि॑दात्र॒आपृ॑ण॒द्रोद॑सीउ॒भे ॥ १ ॥

इन्द्रः॑ । पूः॒ऽभित् । आ । अ॒ति॒र॒त् । दास॑म् । अ॒र्कैः । वि॒दत्ऽव॑सुः । दय॑मानः । वि । शत्रू॑न् । ब्रह्म॑ऽजूतः । त॒न्वा॑ । व॒वृ॒धा॒नः । भूरि॑ऽदात्रः । आ । अ॒पृ॒ण॒त् । रोद॑सी॒ इति॑ । उ॒भे इति॑ ॥ १ ॥

विश्वामित्रःस्तौति—पूर्भिदसुरपुरांभेत्ता अतएवविदद्वसुः वेदयद्भिःस्वमहिमप्रख्यापकै-र्वसुभिर्युक्तः शत्रूनसुरान्विदयमानःविशेषेणहिंसन् तथाचयास्कः—विदद्वसुर्दयमानोविशत्रू-नितिहिंसाकर्मेति । तादृशइन्द्रोदासंदस्यतेनेनतमइतिदासोवासरस्तमर्कैरर्चनीयैःस्वतेजोभिरा तिरत् समन्तादवर्धयत् इन्द्रस्यसूर्यात्मकत्वात् तथाचस्मृतिः—चैत्रमासेतपेदिन्द्रइति किञ्च

१ नि० ४. १७. ।

ब्रह्मजूतः ब्रह्मणास्तोत्रेणाकृष्टः यद्वा ब्रह्मणा जगत्स्रष्ट्राप्रेरितः तन्वा स्वशरीरेणवावृधानोवर्धमानः भूरिदात्रोदायतेलूयतेनेनशत्रुशिरइतिदात्रमायुधं बहुविधायुधोपेतः तादृशइन्द्रः उभे रोदसी द्यावापृथिव्यौ आपृणत् सर्वतोतर्पयत् ॥ पूर्भित् भिदिर्विदारणे क्विप् । अतिरत् तरतेर्व्यत्ययेनशः ऋतइद्धातोरितीत्वं निघातः । दासं करणंघञ् ञित्स्वरः । विदद्वसुः विदेरन्तर्भावितण्यर्थस्यशतरि अदादित्वाच्छपोलुकिसति प्रत्ययस्वरेणशतुरुदात्तत्वम् बहुव्रीहौ पूर्वपदस्वरः । दयमानः दयदानगतिरक्षणहिंसाग्रहणेषु आत्मनेपदी लटःशानच् नलोकाव्ययेतिषष्ठीप्रतिषेधः । वावृधानः वृधुवर्धने कानचिरूपं संहितायामभ्यासस्य तुजादित्वाद्दीर्घः । भूरिदात्रःदाप्लवने करणे दाम्नीत्यादिनाष्ट्रन्प्रत्ययः बहुव्रीहौपूर्वपदप्रकृतिस्वरः । अपृणत् पृणप्रीणनेइत्यस्यलङ्तुिदादित्वाच्छः निघातः । रोदसी रुदेरसुनिरूपं नित्स्वरः ॥ १ ॥

अथद्वितीया–

मखस्यंतेतविषस्यप्रजूतिमियर्मिवाचममृतायभूषन् ।
इन्द्रक्षितीनामसिमानुषीणांविशांदैवीनामुतपूर्वयावा ॥ २ ॥

मखस्यं । ते । तविषस्यं । प्र । जूतिम् । इयर्मि । वाचम् ।
अमृताय । भूषन् । इन्द्र । क्षितीनाम् । असि । मानुषीणाम् ।
विशाम् । दैवीनाम् । उत । पूर्वऽयावा ॥ २ ॥

हेइन्द्र भूषन्त्वामलङ्कुर्वन् अहंमखस्य महनीयस्य स्तुत्यस्य तविषस्य बलवतस्तेतव जूतिंमनसाप्रेरितांवाचं स्तुतिलक्षणाममृतायान्नार्थंप्रेयर्मि प्रकर्षेणोच्चारयामि मानुषीणांक्षितीनांमनोर्जातानांमनुष्याणाम् उतापिच दैवीनांदेवसंबन्धिनीनांविशांप्रजानांपूर्वयावा अग्रतोगन्तात्वमसि । मखस्य महपूजायां नहेर्हलोपश्चेतिहलोपइत्यनुवृत्तौमहेश्चेतिखप्रत्ययः हलोपश्च महातेपूज्यतेसर्वैरितिमखः खान्तस्याश्मादेरित्यन्तोदात्तत्वं यद्यपिमकारादिर्भवति तथापि वचनसामर्थ्याद्भवति । तविषस्य तवतेष्टिषच्प्रत्ययः चित्स्वरः । जूतिम् ऊतियूतीत्यादिनाक्तिनउदात्तत्वम् । इयर्मि अर्तिर्जुहोत्यादिः अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वम् अभ्यासस्येतीयङादेशः पादादित्वान्ननिघातः अभ्यस्तस्वरः । भूषन् भूषअलङ्कारेइत्यस्यशतरिरूपं शतुर्लसार्वधातुकस्वरेधातुस्वरः । असि अस्तेर्लटिरूपं निघातः । मानुषीणां मनोर्जातावित्यञ् षुगागमः टिड्ढाणञितिङीप् ञित्स्वरः । दैवीनां देवाद्यञञावित्यञ् अत्रापिपूर्ववत्ङीप् ञित्स्वरः । पूर्वयावा याप्रापणेइत्यस्मादातोमनिन्क्वनिब्वनिपश्चेतिवनिप् कृदुत्तरपदस्वरः ॥ २ ॥

अथतृतीया—

इन्द्रोवृत्रमवृणोच्छर्धनीतिःप्रमायिनामभिनाद्वर्पणीतिः ।
अहन्व्यंसमुशधग्वनेष्वाविर्धेनाअकृणोद्राम्याणाम् ॥ ३ ॥

इन्द्रः । वृत्रम् । अवृणोत् । शर्धऽनीतिः । प्र । मायिनाम् ।
अमिनात् । वर्पऽनीतिः । अहन् । विऽअंसम् । उशधक् । वनेषु ।
आविः । धेनाः । अकृणोत् । राम्याणाम् ॥ ३ ॥

शर्धनीतिः नयनंनीतिःकर्म शर्धप्रवृद्धंनीतिःकर्मयस्यसतथोक्तः सइन्द्रोवृत्रमसुरम् अवृणोद्बलेनारुधत् तथावर्पणीतिः युद्धेपरप्रहाराणांनिवारककर्माइन्द्रः मायिनां द्वितीयार्थेषष्ठी मायिनोऽसुरान्प्रामिनात् प्रकर्षेणावधीत् उशधक् शत्रुवधंकामयमानइन्द्रः वनेषुगूढचारिणमसुरंव्यंसं विगतांसंयथाभवतितथाहन् जघान अथ तस्मिन्रात्रिचरेगवामपहर्तरिहतेसति राम्याणांरमणंस्त्रीभिः सहक्रीडारामः तमर्हतीतिराम्यारात्रयः तासांरात्रीणामन्तःस्थिताः धेनाःगाः आविरकृणोत् प्रकटाअकरोत् रात्रीणामसुराक्रान्तत्वेतैत्तिरीयकम्—अहर्देवानामासीद्रात्रिरसुराणांतेसुरायद्देवानांवित्तंवेद्यमासीत्तेनसहरात्रिंप्राविशन्निति येदिवास्तोतारोराम्यास्तेषांवाचोधेनाइति ॥ अवृणोत् वृञ्वरणेइत्यस्यलङिरूपं निघातः । शर्धनीतिः शर्धतिरुत्साहार्थः अस्मात्कर्मणिवञ् बहुव्रीहौपूर्वपदस्वरः । अमिनात् मीञ्हिंसायामित्यस्यलङि मीनातेर्निगमेइतिह्रस्वः निघातः । अहन् हन्तेर्लङिरूपम् । उशधक् वशकान्तौ पृषोदरादित्वाद्रूपसिद्धिः । आविः स्वरादिष्वन्तोदात्तत्वेनपठितत्वादन्तोदात्तः । धेना धेट्पाने धेटइच्चेतिनप्रत्ययः इकारश्चान्तादेशः गुणः धयन्तितामितिधेनावाक् धेनाजिगातीत्यत्रप्रत्ययस्वरेणान्तोदात्तः अत्र व्यत्ययेनाद्युदात्तत्वम् । अकृणोत् कृविहिंसाकरणयोः निघातः । राम्याणां रमुक्रीडायां राममर्हतीत्यर्थे छन्दसिचेतियप्रत्ययः तस्यस्वरः यद्वा रमेरन्तर्णीतण्यर्थादघ्न्यादयश्चेतियक्प्रत्ययः प्ररमयतिभूतानि नक्तंचारीण्युपरमयंतीतिराणीतियास्कः । वर्णव्यत्ययः ॥ ३ ॥

अथचतुर्थी—

इन्द्रःस्वर्षाजनयन्नहानिजिगायोशिग्भिःपृतनाअभिष्टिः ।
प्रारोचयन्मनवेकेतुमह्नामविन्दज्ज्योतिर्बृहतेरणाय ॥ ४ ॥

---

१ नि० २. १८. ।

इन्द्रः । स्वःऽसाः । जनयन् । अहानि । जिगाय । उशिक्ऽभिः । पृतनाः । अभिष्टिः । प्र । अरोचयत् । मनवे । केतुम् । अह्नाम् । अविन्दत् । ज्योतिः । बृहते । रणाय ॥ ४ ॥

स्वर्षाः स्वर्गप्रदः इन्द्रःअहानि स्वतेजोभिर्जनयन् उशिग्भिः युद्धंकामयमानैरङ्गिरोभिसहपृतनाःपरकीयाःसेनाअभिष्टिरभिभावुकःसन जिगाय शत्रूनजैषीत् शत्रुवधानन्तरंमनवेमनुष्यायकर्मकर्त्रेयजमानायतदर्थं तथा अह्नांकेतुंप्रज्ञापकंसूर्यंप्रारोचयत् तथाचतमोरूपासुरवधात्प्रकर्षेणादीपयत् ततोबृहतेमहतेरणाययुद्धप्रकाशनायज्योतिःप्रकाशमविन्दत् अलभत ॥ स्वर्षाः षणुदाने क्विप् जनसनखनांसञ्झलोरित्यात्वं सनोतेरनइतिषत्वम् अहरादीनांपत्यादिषूपसंख्यानमितिविसर्जनीयस्यरुत्वम् । जिगाय जिजयेइत्यस्यालिटि सँल्लिटोर्जेरित्यभ्यासादुत्तरस्य कवर्गादेशः लित्स्वरः । पृतनाः पृङ्व्यायामे कृपृभ्यांकिदितितनन्प्रत्ययः व्याप्रियन्तेऽत्रयोद्धारइतिपृतनाःसेनाः नित्त्वादाद्युदात्तः । अभिष्टिः अभिगन्ता इषगतौ मन्त्रेवृषेत्यादिनाक्तिन्नुदात्तः सहिभावपरोऽपिभवितारंलक्षयति तितुत्रतथेत्यादिनेट्प्रतिषेधः शकन्ध्वादित्वात्पररूपत्वं कृदुत्तरपदस्वरः । अरोचयत् रुचदीप्तावित्यस्यलङिरूपम् । मनवे मनज्ञाने शृस्वृस्निहीत्यादिनाउप्रत्ययः निदनुवृत्तेराद्युदात्तः । अविन्दत् विद्लृलाभेइत्यस्यशेमुचादीनामितिनुम् पादादित्वादनिघातः । रणाय क्रियाग्रहणंकर्तव्यमितिसंप्रदानसंज्ञा रणतिःशब्दार्थः वशिरण्योरुपसंख्यानमित्यप्प्रत्ययः रणन्तिशब्दंकुर्वन्ति परस्परंयोद्धारोऽत्रेतिरणःसंग्रामः प्रत्ययस्यपित्त्वादनुदात्तत्वेधातुस्वरः ॥ ४ ॥

अथपञ्चमी—

**इन्द्रस्तुजोबर्हणाआविवेशनृवद्दधानोनर्यापुरूणि । अचेतयद्धियइमाजरित्रेप्रेमंवर्णमतिरच्छुक्रमासाम् ॥५॥१५॥**

इन्द्रः । तुजः । बर्हणाः । आ । विवेश । नृऽवत् । दधानः । नर्या । पुरूणि । अचेतयत् । धियः । इमाः । जरित्रे । प्र । इमम् । वर्णम् । अतिरत् । शुक्रम् । आसाम् ॥ ५ ॥ १५ ॥

स्तादृशइन्द्रस्तुजोबाधिका: बर्हणाः युद्धोत्साहेनवर्धमाना:परकीया:सेना: नृवन्मनुष्यवदाविवेश प्रकाशंलब्ध्वाप्राविशत् किंकुर्वन् पुरूणिबहूनि नर्या युद्धनयनकारिणांयोग्यानि धनानिदधानः प्रयच्छन्नाविवेश सइन्द्रोजरित्रेस्तोत्रे इमादृश्यमानाधियउषसोध्यायन्त्यासुमनुष्याइतिताधियोचेतयत्आज्ञापयत् अथासामुषसामिमंशुक्रंवर्णंप्रकाशेनयुक्तंप्रातिरत् स्वतेजसा प्रकर्षेणवर्धयातिस्म धीशब्दस्योष:परत्वेमन्त्रवर्णः—शुक्रवर्णामुदुनोयंसतेधियेमिति । तुजः तुज हिंसायां क्विप् धातुस्वरः । बर्हणाः बृहिवृद्धौ अस्माद्युच्बहुलमितिकर्तरियुच् व्यत्ययेनाद्युदात्तत्वम् । विवेश विशतेर्लिटिरूपं निघातः । नृवत् नृशब्दात्तेनतुल्यमितिवतिप्रत्यय: तस्यस्वरः । दधानः दधातेःशानचिरूपम् अभ्यस्तानामादिरित्याद्युदात्तत्वम् । नर्या नरेषुसाधूनिइत्यर्थेतत्र साधुरितियत् यतोनावइत्याद्युदात्तत्वम् । अचेतयत् चितीसंज्ञानेइत्यस्यण्यन्तस्यलङिरूपम् अडागमस्वरः । धियः ध्यैचिन्तायाम् अन्येभ्योऽपिदृश्यतइतिक्विप् दृशिग्रहणात्संप्रसारणं धातुस्वरः । इमाः दश्चेतिदकारस्यमकारः एकादेशस्वरः । अतिरत् तरतेर्व्यत्ययेनशः निघातः । आसाम् इदमोन्वादेशेशिति अशादेशोऽनुदात्तश्च प्रत्ययः सुस्वादनुदात्तः अतःसर्वानुदात्तः ॥ ५ ॥

॥ इतितृतीयस्यद्वितीयेपञ्चदशोवर्गः ॥ १५ ॥

अथषष्ठी—

महोमहानिंपनयन्त्यस्येन्द्रस्यकर्मसुकृतापुरूणिं ।
वृजनेनवृजिनान्त्संपिपेषमायाभिर्दस्यूँरभिभूत्योजाः ॥ ६ ॥

महः । महानिं । पनयन्ति । अस्य । इन्द्रस्य । कर्म । सुऽकृता । पुरूणि । वृजनेन । वृजिनान् । सम् । पिपेष । मायाभिः । दस्यून् । अभिभूतिऽओजाः ॥ ६ ॥

महोमहत: अस्यैतादृशसामर्थ्यस्य इन्द्रस्य महानिमंहनीयानिपुरूणिबहूनिसुकृतासुष्ठुकृतानि कर्मवृत्रहननादीनिकर्माणि पनयन्तिस्तुवन्ति इन्द्रस्यकर्मसुकृतापुरूणीत्येतत्पदकदम्बकम् अत्र अर्थभेदात्पदकालेनोत्सृज्यते तादृशइन्द्रःवृजनेन वर्ज्यन्तेशत्रवोऽनेनेतिवृजनंबलं तेनबलेन वृजिनान्पापरूपानसुरान्संपिपेष सम्यक्चूर्णीचकार तथाभिभूत्योजाः अभिभूतिःशत्रुविषयोभिभवः तत्रओजोबलमस्येतिअभिभूत्योजाः शत्रूणांपराभवेसमर्थः तादृशइन्द्रोदस्यूनुपक्षपयितॄनसुरान्मायाभि:कपटैःसंपिपेष ॥ पनयन्ति पनतेःस्तुत्यर्थस्यगुपूधूपविच्छिपणिपनिभ्यइत्यायप्र-

१ ऋ० सं०१. २. १२.।

त्ययः ह्रस्वश्छान्दसः निघातः । वृजनेन वृजीवर्जने कॄपॄवृजिमन्दिनिधाञ्भ्यःक्युरिति क्युप्रत्ययः कित्त्वादगुणः प्रत्ययस्वरः । वृजिनान् वृजीवर्जने वृजेःकिच्चेतीनच्प्रत्ययः वृजिनंपापं तद्वन्तः अर्शआदित्वादच् एकादेशस्वरः । पिपेष पिषॢसंचूर्णनेइत्यस्य लिटि णलिरूपं निघातः । अभिभूत्योजाः भूतिर्भवनं भावेक्तिन् तादौचनितीत्यभेःप्रकृतिस्वरत्वम् अभिभूतम् ओजोयस्येति सप्तम्युपमानपूर्वपदस्यबहुव्रीहिरितिसमासः बहुव्रीहौपूर्वपदप्रकृतिस्वरः ॥ ६ ॥

अथसप्तमी–

युधेन्द्रो॑म॒ह्ना वरि॑वश्चकार दे॒वेभ्यः॒ सत्प॑तिश्चर्षणि॒प्राः ।
वि॒वस्व॑तः॒ सद॑ने अस्य॒ तानि॒ विप्रा॑ उ॒क्थेभिः॑ क॒वयो॑ गृणन्ति ॥ ७ ॥

युधा । इन्द्रः॑ । म॒ह्ना । वरि॑वः । च॒कार॒ । दे॒वेभ्यः॑ । सत्ऽप॑तिः ।
च॒र्षणि॒ऽप्राः । वि॒वस्व॑तः । सद॑ने । अ॒स्य॒ । तानि॑ । विप्राः॑ ।
उ॒क्थेभिः॑ । क॒वयः॑ । गृ॒णन्ति॒ ॥ ७ ॥

सत्पतिः सतांदेवानांपतिः चर्षणिप्राः चर्षणीनांमनुष्याणाम् अपेक्षितफलप्रदानेनकामपूरकः सइन्द्रःमह्नामहतायुधायुद्धेन वरिवः भृशंव्रियतेर्थिभिरितिवरिवोधनं तादृशंधनंयुद्धेनलब्ध्वादेवेभ्योदेवनशीलेभ्यःस्तोतृभ्यश्चकार दत्तवान् विप्रामेधाविनः कवयःस्तोतारः विवस्वतः विशेषेणाग्निहोत्रादिकर्मार्थंवसतोयजमानस्यसदनेगृहे अस्येन्द्रस्य तानिवृत्रहननबहुप्रदानादीनिकर्माणिउक्थेभिःस्तोत्रैःगृणन्तिस्तुवन्ति ॥ युधा युधसंप्रहारे भावेसम्पदादिलक्षणःक्विप् सावेकाचइतिविभक्तेरुदात्तता । वरिवः वृञ्वरणेइत्यस्य यङ्लुकि ऋतश्चेत्यभ्यासस्यरिगागमः तदन्तादसुन् बाहुलकाद्विलोपः नित्स्वरः । चकार करोतेर्लिटिरूपं निघातः । सत्पतिः अस्तेःशतरिरूपम् सदिति पत्यावैश्वर्यइतिपूर्वपदप्रकृतिस्वरत्वम् । चर्षणिप्राः प्रापूरणे विच् । विवस्वतः विपूर्वाद्वसनिवासेइत्येतस्मात्संपदादिलक्षणोभावेक्विप् तदस्यास्त्यस्मिन्निितिमतुप् मादुपधायाइतितस्यवत्वम् प्रत्ययस्यपित्त्वादनुदात्तत्वेधातुस्वरः । गृणन्ति गॄशब्देइत्यस्यलटिरूपं निघातः ॥ ७ ॥

अथाष्टमी–

स॒त्रा॒साहं॒ वरे॑ण्यं सहो॒दां स॑स॒वांसं॒ स्व॑र॒पश्च॑ दे॒वीः ।
स॒सान॒ यः पृ॑थि॒वीं द्यामु॒तेमामिन्द्रं॑ मद॒न्त्यनु॒ धीर॑णासः ॥ ८ ॥

सत्राऽसहम् । वरेण्यम् । सहःऽदाम् । ससऽवांसम् । स्वः । अपः । च । देवीः । ससान । यः । पृथिवीम् । द्याम् । उत । इमाम् । इन्द्रम् । मदन्ति । अनु । धीऽरणासः ॥ ८ ॥

धीरणासोधियास्तुत्यारणयन्तःस्तोतारःसत्रासाहंमहतोवृत्रादेरभिभवितारम् अतएववरेण्यं सर्वैर्वरणीयं सहोदां दुर्बलस्यार्थिनोबलप्रदं देवीर्देवनशीलाअपःस्वश्चस्वर्लोकञ्च ससवांसं भजमानमिन्द्रमनुमदन्ति हृष्यन्ति इन्द्रहर्षमनुस्त्रयंहृष्यन्तीत्यर्थः यइन्द्रः पृथिवीमुतापिचद्यांद्युलोकमिमामिममन्तरिक्षलोकंचैतांस्त्रीनलोकान्ससान तत्तल्लोकवासिभ्योददौ तमनुमदन्तीत्यन्वयः ॥ सत्रासाहं षहमर्षणे छन्दसिसहइतिण्विः णित्त्वादुपधावृद्धिः । ससवांसं षणसम्भक्तावित्यस्यक्वसौ इडभावेनकारलोपेरूपम् प्रत्ययस्वरः । ससान षणुदानेइत्यस्यालिटिरूपंञ्नितिस्वरः । मदन्ति मदिस्तुत्यादिष्वित्यस्यव्यत्ययेन परस्मैपदं निघातः । धीरणासः रणतीतिरणावाक् धियास्तुत्यारणायेषांतेधीरणाः बहुव्रीहौ पूर्वपदप्रकृतिस्वरः ॥ ८ ॥

अथनवमी—

ससानात्याँउतसूर्यंससानेन्द्रःससानपुरुभोजसंगाम् ।
हिरण्ययमुतभोगंससानहत्वीदस्यून्प्रार्यंवर्णमावत् ॥ ९ ॥

ससान । अत्यान् । उत । सूर्यम् । ससान । इन्द्रः । ससान । पुरुऽभोजसम् । गाम् । हिरण्ययम् । उत । भोगम् । ससान । हत्वी । दस्यून् । प्र । आर्यम् । वर्णम् । आवत् ॥ ९ ॥

पूर्वमन्त्रेप्रतिपादितःसइन्द्रः अत्यानश्वान्ससान युद्धार्थमरुभ्योददौ उतापिच सूर्यं जगत्प्रकाशकमादित्यंससान प्राणिनांव्यवहारनिर्वाहायतेभ्योददौ तथा पुरुभोजसं पुरुभिः सर्वैर्जनैःक्षीरादिद्वारेणोपभुज्यतइतिपुरुभोजाः क्षीरादिरूपबहुविधान्नोपेतङ्गामग्निहोत्रादिसिद्ध्यर्थं ससान तेभ्योददौ उतापिच हिरण्ययं सुवर्णमयंभोगंधनंभुज्यतेऽस्मिन्नितिभोगोगृहंवाससान अर्थिभ्योददौ ततोदस्यून्बाधकानसुरान्हत्वी हत्वाआर्यमुत्तमंवर्णंत्रैवर्णिकंप्रावत् यथाकर्मविघ्नोनभवेत्तथापालयत् ॥ ससान षणुदानेइत्यस्यलिटिणलिरूपं ञ्नित्स्वरः । हिरण्ययंहिरण्यशब्दाद्विकारार्थेमयड्वैतयोरितिविहितस्यछन्दसिविषयेऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानिच्छन्दसीति निपातनान्मयटोमकारलोपः प्रत्ययस्वरः । हत्वी हन्तेःक्त्वार्थेस्नात्व्यादयश्चेति निपातितः प्रत्ययस्वरः । आवत् अवतेर्लङिरूपम् ॥ ९ ॥

अथदशमी–.

इन्द्रओषधीरसनोदहानिवनस्पतीँरसनोदन्तरिक्षम् ।
बिभेदवलंनुनुदेविवाचोथाभवद्दमिताभिक्रतूनाम् ॥ १० ॥

इन्द्रः । ओषधीः । असनोत् । अहानि । वनस्पतीन् । असनोत् । अन्तरिक्षम् । बिभेद । वलम् । नुनुदे । विऽवाचः । अथ । अभवत् । दमिता । अभिऽक्रतूनाम् ॥ १० ॥

तादृशइन्द्रःओषधीःपक्वफलसंयुक्तास्तृणगुल्मादिकाअसनोत् प्राणिनामुपभोगार्थंप्रादात् तथाहानिदिवसांश्चआयुः परिकृप्त्यर्थंप्रायच्छत् किञ्च वनस्पतीन्यज्ञार्थंखदिरपलाशादिलक्षणान्वृक्षानसनोत् तथान्तरिक्षंसंचारार्थंप्रादात् तथावलंसंव्रियतेऽनेनाकाशमितिवलोमेघः तंमेघं बिभेद उदकप्रेरणार्थमभिन्दत् विवाचोविरुद्धवाचःप्रतिकूलानसुरान्नुनुदे प्राणिनांरक्षार्थंतान्बबाधे अथानन्तरमभिक्रतूनां क्रतुःकर्मअभिआभिमुख्येनयुद्धार्थंकर्मयेषांतेअभिक्रतवोबलीयांसः शत्रवस्तेषामपिदमिताउपशमयिताभवत् एवंहितकरणाहितपरिहाराभ्यांसर्वाःप्रजाः पालयतिस्मेतिभावः ॥ असनोत् षणुदानेइत्यस्यलङिरूपम् । वनस्पतीन् पारस्करप्रभृतित्वात्सुडागमः वनशब्दोनञ्विषयस्येत्याद्युदात्तः पतिशब्दःप्रत्ययस्वरेणाद्युदात्तः उभेवनस्पत्यादिषुयुगपदित्युभयपदप्रकृतिस्वरत्वम् । बिभेद भिदिर्विदारणेइत्यस्यलिटिरूपं ञ्नित्स्वरः नुनुदेणुदप्रेरणे इत्यस्यांलिटिरूपम् वाक्यभेदादनिघातः प्रत्ययस्वरः । दमिता दमुउपशमेइत्यस्यतृचिरूपंचित्स्वरः । अभिक्रतूनां बहुव्रीहौपूर्वपदस्वरः ॥ १० ॥

अथैकादशी–

शुनंहुवेममघवानमिन्द्रमस्मिन्भरेनृतमंवाजसातौ ।
शृण्वन्तमुग्रमूतयेसमत्सुघ्नन्तंवृत्राणिसंजितंधनानाम् ॥ ११ ॥ १६

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ ११ ॥ १६ ॥

एषाऋक्पूर्वमेवव्याख्याता ॥ ११ ॥

॥ इतितृतीयस्यद्वितीयेषोडशोवर्गः ॥ १६ ॥

तिष्ठाहरीत्येकादशर्चंषष्ठंसूक्तम् वैश्वामित्रं त्रैष्टुभमैन्द्रं तिष्ठाहरीइत्यनुक्रमणिका । अग्निष्टुतिमरुत्वतीयशस्त्रेनिविद्धानंसूक्तं सूत्रितञ्च—तिष्ठाहरीयोजातएवेतिमाध्यन्दिनइति इन्द्राग्न्योः कुलायनान्न्येकाहेप्येतन्मरुत्वतीयानिविद्धानम् । सूत्रितञ्च—तिष्ठाहरीमुष्टुहीतिमध्यान्दिनइति । समूढेदशरात्रेतृतीयेछन्दोमेमरुत्वतीयशस्त्रेएतत्सूक्तम् ॥ सूत्रितञ्च—तिष्ठाहरीप्रमन्दिनइमाउत्वेतिमरुत्वतीयमिति । अतिरात्रेतृतीयेपर्यायेहोतुः शस्त्रेपरिहितेसत्याद्यातिष्ठाहरीत्येषाशस्त्रयाज्या । सूत्रितञ्च विश्वजितेतिष्ठाहरीरथआयुज्यमानेतियाज्येति ।

अस्मिन्सूक्तेप्रथमा—

**तिष्ठाहरीरथआयुज्यमानायाहिवायुर्ननियुतोनोअच्छ ।**
**पिबास्यन्धोअभिसृष्टोअस्मेइन्द्रस्वाहाररिमातेमदाय ॥ १ ॥**

तिष्ठ । हरी इति । रथे । आ । युज्यमाना । याहि । वायुः ।
न । निऽयुतः । नः । अच्छ । पिबासि । अन्धः । अभिऽसृष्टः ।
अस्मे इति । इन्द्र । स्वाहा । ररिम । ते । मदाय ॥ १ ॥

विश्वामित्रःस्तौति—हेइन्द्र रथेस्यन्दनेयुज्यमानासंयुज्यमानौहरी अश्वौ अभिलक्ष्य कंचित्कालमातिष्ठ तत्रदृष्टान्तः—वायुर्नेतियथावायुः रथेनियुज्यमानानियुतोत्वडवाअभिलक्ष्यकंचित्कालंतिष्ठतितद्वत् अथरथारूढस्त्वंनोऽस्मानच्छाभिलक्ष्यायाहि शीघ्रमागच्छ आगत्यच अस्मे अस्माभिरभिसृष्टोऽनुज्ञातस्त्वमन्धःसोमलक्षणमन्नंपिबासिपिब स्वाहादत्तश्चायंसोमः वयंतेतवमदायहर्षायस्वाहाकृतमिमंररिम ददाम अत्रयाहिवायुर्ननियुतोनोअच्छेत्यत्ररथेनायाहीत्यर्थः आपश्चित्पिप्युरुस्तर्योनगावइत्यत्रतन्न तथेतिपदकालेनोत्सृज्यते ॥ तिष्ठ तिष्ठतेर्लोटिरूपं तिष्ठादेशस्याद्युदात्तत्वम् । याहि यातेर्लोटिरूपं हेर्ङित्त्वादन्तोदात्तः । वायुः वागतिगन्धनयोरित्यस्मात्कृवापेत्यादिनाउण् आतोयुक् प्रत्ययस्वरः । पिबासि पातेर्लेट्याडागमः आगमानुदात्तत्वाद्धातुस्वरः । अन्धः अदभक्षणे अदेर्नुम्धश्चेति असुन्नुमागमोधकारश्चान्तादेशः अद्यतेप्राणिभिस्तद्वास्त्वयमत्तीति तथाचश्रुतिः—अद्यतेत्तिचभूतानितस्मादन्नंतदुच्यतइतीति । नित्स्वरः । अस्मे सुपांसुलुगितितृतीयायाःशेइत्यादेशः । ररिम रातेर्लिटिरूपं वाक्यभेदादनिघातः प्रत्ययस्वरः ॥ १ ॥

अथद्वितीया–

उपाजिरापुरुहूतायसप्तीहरीरथस्यधूर्ष्वायुनज्मि ।
द्रवद्यथासंभृतंविश्वतश्चिदुपेमंयज्ञमावहातइन्द्रम् ॥ २ ॥

उप । अजिरा । । पुरुऽहूताय । सप्ती इति । हरी इति । रथस्य ।
धूःऽसु । आ । युनज्मि । द्रवत् । यथा । सम्ऽभृतम् । विश्वतः ।
चित् । उप । इमम् । यज्ञम् । आ । वहातः । इन्द्रम् ॥ २ ॥

हेइन्द्र पुरुहूताय पुरुभिर्बहुभिर्यजमानैर्यज्ञार्थमाहूतायतुभ्यम् अजिरा शीघ्रगमनशीलौसप्ती सर्पणशीलौहरी हरिनामकावश्वौ रथस्यधूर्षुयुगप्रान्तेषु उपायुनज्मि अहंतथासंयोजयामि द्रवत्सरथोयथागच्छेत्तथेतिशेषः विश्वतश्चित्सर्वतःसम्भृतमाग्निर्यजुर्भिः सवितास्तोमैरित्यादियज्ञसंभारैःसंपूर्णमिमंयज्ञंप्रति इन्द्रंत्वामुपावहातः तावश्वौसम्यगावहताम् ॥ धूर्षु धुर्वीहिंसार्थः क्विप् राल्लोपइतिवकारलोपः वोरुपधायाइतिदीर्घः सावेकाचइतिविभक्तेरुदात्तता । युनज्मि युजिर्योगे रुधादिः लटिरूपं निघातः । द्रवत् द्रुगतावित्यस्यछान्दसेलङिरूपम् व्यत्ययेनान्तोदात्तत्वम् । वहातः वहेर्लेट्याडागमेरूपम् ॥ २ ॥

अथतृतीया––

उपोनयस्ववृषणातपुष्पोतेमवत्वंवृषभस्वधावः ।
ग्रसेतामश्वाविमुचेहशोणादिवेदिवेसदृशीरद्धिधानाः ॥ ३ ॥

उपो इति । नयस्व । वृषणा । तपुःऽपा । उत । ईम् । अव । त्वम् ।
वृषभ । स्वधाऽवः । ग्रसेताम् । अश्वा । वि । मुच । इह ।
शोणा । दिवेऽदिवे । सऽदृशीः । अद्धि । धानाः ॥ ३ ॥

वृषभ कामानांवर्षक स्वधावःअन्नवन् हेइन्द्र वृषणा सेचनेसमर्थौ तपुष्पातापकेभ्यःशत्रुभ्योरक्षकावश्वावुपोनयस्व अस्मत्समीपंप्रापय उतापिच त्वमीमेनंयजमानमवपालय शोणा शोणवर्णौतावश्वौ इहास्मिन्देवयजनेविमुच विमुञ्च विमुक्तौतावश्वौ ग्रसेतां वि-

घसंभक्षयतम् त्वंतुसदृशीरेकेरूपान्धानाःभृष्टयवान्दिवेदिवे प्रतिदिवसमाद्धि भक्षय ॥ नयस्व नयतेर्लोटिरूपम् । तपुष्पा पारक्षणे आतोनुपसर्गेकः सुपांसुलुगितिडादेशः इसुसोःसामर्थ्येइतिसंहितायांविसर्जनीयस्यषत्वम् कृदुत्तरपदप्रकृतिस्वरः । अव अवतेर्लोटिरूपम् । स्वधावः मतुवसोरितिनकारस्यरुत्वं निघातः । प्रक्षेताम् प्रसुअदनेइत्यस्यचेत्याताम्रूपं पादादित्वाद्निघातः आतामोलसार्वधातुकस्वरेधातुस्वरः । मुच मुञ्चतेर्लोटिरूपम् आगमानुशासनस्यानित्यत्वान्नुमभावः । सदृशीः समानशब्दउपपदे दृशिर्प्रेक्षणेइत्यस्मात्समानान्ययोश्चेतिकञ्प्रत्ययः समानस्यदृक्दृशवतुष्विति सभावः टिड्ढाणञित्यादिनाङीप् तस्यापित्त्वादनुदात्तत्वेधातुस्वरः । आद्धि अदभक्षणेइत्यस्यलोटि अदादित्वाच्छपोलुक् हुझल्भ्योहेर्धिरितिध्यादेशः निघातः । धानाः डुधाञ्धारणपोषणयोः धापृवस्यज्यतिभ्योनइतिनप्रत्ययः प्रत्ययस्वरः ॥ ३ ॥

चातुर्विंशिकेऽहनिमाध्यंदिनेसवने ब्राह्मणाच्छंसिशस्त्रे ब्रह्मणातइत्यारम्भणीया सूत्रितञ्च—ब्रह्मणातेब्रह्मयुजायुनज्म्युरुंनोलोकमनुनेषिविद्वानिति ।

अथचतुर्थी—

ब्रह्मणातेब्रह्मयुजांयुनज्मिहरीसखायासधमादआशू ।
स्थिरंरथंसुखमिन्द्राधितिष्ठन्प्रजानन्विद्वाँउपयाहिसोमम् ॥४॥

ब्रह्मणा । ते । ब्रह्मऽयुजा । युनज्मि । हरी इति । सखाया ।
सधऽमादे । आशू इति । स्थिरम् । रथम् । सुऽखम् । इन्द्र ।
अधिऽतिष्ठन् । प्रऽजानन् । विद्वान् । उप । याहि । सोमम् ॥ ४ ॥

हेइन्द्र ब्रह्मयुजा ब्रह्मणामन्त्रेणयोक्तव्यौ सधमादे सहमाद्यन्तियोद्धारोऽत्रेतिसहमादोयुद्धं सहमादः सधमादः तस्मिन्युद्धे सखायावेगबलयोःसमानप्रसिद्धी अतएव आशू क्षिप्रगमनोपेतौ तेतवहरी अश्वौ ब्रह्मणास्तोत्रेणयुनज्मि रथेसंयोजयामि स्थिरंसुदृढंसुखंसुष्ठुद्वारंतादृशंरथं अधितिष्ठन्नारूढस्त्वंसोमपानार्थमायाहि प्रजानन्नित्याद्यगमत् ॥ ब्रह्मयुजा युजेरौणादिकःकर्मणिक्विप् । युनज्मि युजेर्लटिरूपं निघातः । सधमादे मदीहर्षे अधिकरणेघञ् सधमादस्थयोश्छन्दसीतिसहस्यसधादेशः कृदुत्तरपदप्रकृतिस्वरः । रथम् अधिशीङ्स्थासांकर्मेतिकर्मसंज्ञा । सुखं खनुविदारणे अन्येभ्योपिदृश्यतइतिडः कृदुत्तरपदस्वरः ॥ ४ ॥

अथपञ्चमी—

मातेहरीवृषणावीतपृष्ठानिरीरमन्यजमानासोअन्ये ।
अत्यायाहिशश्वतोवयंतेरंसुतेभिःकृणवामसोमैः ॥५॥१७॥

मा । ते । हरी इति । वृषणा । वीतऽपृष्ठा । नि । रीरमन् ।
यजमानासः । अन्ये । अतिऽआयाहि । शश्वतः । वयम् ।
ते । अरम् । सुतेभिः । कृणवाम । सोमैः ॥ ५ ॥ १७ ॥

हेइन्द्र वृषणा कामानांसेचकौ वीतपृष्ठा कमनीयपृष्ठभागौ ते तव हरी अन्ये अस्मदन्येयजमानासोयजमानामानिरीरमन् माहर्षयन् वयन्तु सुतेभिरभिषुतैःसोमैस्तेतव अरंपर्याप्तंकृणवाम यथातवतृप्तिर्भवतितथाकुर्मइत्यर्थः त्वंतु अत्यायाहि शश्वतः बहूनन्यानतिक्रम्यसोमपानार्थंशीघ्रमागच्छ ॥ वीतपृष्ठा वीकान्त्यादिषु अस्मात्क्तप्रत्ययः बहुव्रीहौपूर्वपदप्रकृतिस्वरः । रीरमन् रमुक्रीडायामित्यस्यण्यन्तस्यलुङिचङिरूपं नमाङ्योगेइत्यडभावः निघातः । अत्यायाहि यातेर्लोटि रूपं गतिर्गतावितिपूर्वनिघातः । कृणवाम कृणोतेर्लोटिरूपं निघातः ॥ ५ ॥

॥ इतितृतीयस्यद्वितीयेसप्तदशोवर्गः ॥ १७ ॥

तवायंसोमइतिमाध्यंदिनेसवनेनेष्टुःप्रस्थितयाज्या सूत्रितञ्च—तवायंसोमस्त्वमेह्यर्वाङिन्द्रायसोमाःप्रदिवइति ।

अथषष्ठी—

तवायंसोमस्त्वमेह्यर्वाङ्शश्वत्तमंसुमनाअस्यपाहि ।
अस्मिन्यज्ञेबर्हिष्यानिषद्यादधिष्वेमंजठरइन्दुमिन्द्र ॥ ६ ॥

तव । अयम् । सोमः । त्वम् । आ । इहि । अर्वाङ् । शश्वत्ऽतमम् ।
सुऽमनाः । अस्य । पाहि । अस्मिन् । यज्ञे । बर्हिषि । आ ।
निऽसद्य । दधिष्व । इमम् । जठरे । इन्दुम् । इन्द्र ॥ ६ ॥

हेइन्द्र अयंसोमः तव त्वदर्थमभिषुतः त्वम् अर्वाङ् सोमाभिमुख्येन एहि आयाहि आगत्यच सुमनाःशोभनमनस्कोभूत्वा शश्वत्तमं भूयांसम् अस्येमंसोमं पाहि पिब बर्हिषिप्रवृद्धे अस्मिन्यज्ञेनिषद्योपविश्येन्दुंक्लेदनशीलम् इमंसोमंजठरे आदधिष्व धारय यथानाभेरधस्तान्नगच्छतितथा धारय अङ्गिरोभिरागहियज्ञियेभिरित्यत्रनयज्ञविशेषणं बर्हिः किंतुभिन्नरूपंतदित्यतोनोत्सृज्यते ॥ इहिइण्गतौ अस्यलोटिरूपं निघातः । शश्वत्तमम् उञ्छादित्वादन्तोदात्तत्वम् । पाहिपापानेइत्यस्य लोटिरूपं बहुलंछन्दसीतिशपोलुक् निघातः । निषद्य सदेर्ल्यपि सदिरप्रतेरितिषत्वं लित्स्वरः । दधिष्व दधातेर्लोटि छन्दस्युभयथेतिथासआर्धधातुकत्वादिडागमः प्रत्ययस्वरः । इन्दुम् उन्दीक्लेदने उन्देरिच्चादेरित्युप्रत्ययः धातोरादेरिकारादेशः निदित्यनुवृत्तेराद्युदात्तः ॥ ६ ॥

अथसप्तमी–

स्तीर्णंतेबर्हिःसुतइंद्रसोमःकृताधानाअत्तवेतेहरिभ्याम् ।
तदोकसेपुरुशाकायवृष्णेमरुत्वतेतुभ्यंराताहवींषि ॥ ७ ॥

स्तीर्णम् । ते । बर्हिः । सुतः । इन्द्र । सोमः । कृताः । धानाः ।
अत्तवे । ते । हरिऽभ्याम् । तत्ऽओकसे । पुरुऽशाकाय ।
वृष्णे । मरुत्वते । तुभ्यम् । राता । हवींषि ॥ ७ ॥

हेइन्द्र तेतवोपवेशनार्थं बर्हिःस्तीर्णंविस्तृतं तथा सोमश्च त्वदर्थंसुतोऽभिषुतः ते तव हरिभ्यामत्तवे भक्षणार्थं धानाभृष्टयवाः कृताः संपादिताः तदोकसे तद्बर्हिरोकोनिलयो यस्य तस्मै पुरुशाकाय बहुभिःस्तुत्याय यद्वा बहुसहायाय वृष्णेकामानांवर्षित्रे मरुत्वते मरुतोदेवविशस्तद्वते एवंभूताय तुभ्यं हवींषिसोमाज्यादीनिराता अस्माभिर्दत्तानितानिसेवस्वेतिभावः ॥ स्तीर्णं स्तृञ् आच्छादनेइत्यस्य ऋतइद्धातोरितीत्वं रदाभ्यामितिनिष्ठानत्वं प्रत्ययस्वरः । अत्तवे अदभक्षणेइत्यस्मात्तुमर्थेतवेन्प्रत्ययः नित्स्वरः । तदोकसे बहुव्रीहौपूर्वपदस्वरः । पुरुशाकाय शचव्यक्तायांवाचीत्यस्मात्कर्मणिघञ् चजोःकुघिण्ण्यतोरितिकुत्वं कृदुत्तरपदस्वरः । मरुत्वते तसौमत्वर्थेइतिभसंज्ञायांतकारस्यजश्त्वाभावः प्रत्ययस्यापित्त्वादनुदात्तत्वे प्रातिपदिकस्वरः । राता रादानेइत्यस्मात्कर्मणिक्तः प्रत्ययस्वरः ॥ ७ ॥

---

१ ऋ० सं० ७. ६. १४.

अथाष्टमी—

इमंनरःपर्वतास्तुभ्यमापःसमिन्द्रगोभिर्मधुमन्तमक्रन् ।
तस्यागत्यासुमनाऋष्वपाहिप्रजानन्विद्वान्पथ्या३अनुस्वाः॥८॥

इमम् । नरः । पर्वताः । तुभ्यम् । आपः । सम् । इन्द्र । गोभिः ।
मधुऽमन्तम् । अक्रन् । तस्य । आऽगत्य । सुऽमनाः । ऋष्व ।
पाहि । प्रऽजानन् । विद्वान् । पथ्याः । अनु । स्वाः॥ ८ ॥

हेइन्द्र नरः कर्मणांनेतारोध्वर्य्वादयः पर्वताः ग्रावाणः आपश्चैतेसर्वेसंभूय तुभ्यंत्वदर्थमिमंसोमं गोभिःपयोभिर्मधुमन्तंमाधुर्येपेतंसमक्रन् सम्यगकार्षुः ऋष्व दर्शनीय हेइन्द्र सुमनाःशोभनमनस्कः विद्वान्कर्माभिज्ञः स्वाःस्वकीयाः पथ्याःवैदिकेपथिसाधूभूताःस्तुतीः अनुप्रजानन् त्वमागत्य तस्यास्य इममभिषुतंसोमंपाहिपिब ॥ अक्रन् करोतेर्लुङिरूपं निघातः । आगत्य गमेर्ल्यपिरूपं लित्स्वरः । पाहि पातेर्लोटिरूपम् ॥ ८ ॥

अथनवमी—

याँआभजोमरुतइन्द्रसोमेयेत्वामवर्धन्नभवन्गणस्ते ।
तेभिरेतंसजोषावावशानो३ग्नेःपिबजिह्वयासोममिन्द्र ॥ ९ ॥

यान् । आ । अभजः । मरुतः । इन्द्र । सोमे । ये । त्वाम् ।
अवर्धन् । अभवन् । गणः । ते । तेभिः । एतम् । सऽजोषाः ।
वावशानः । अग्नेः । पिब । जिह्वया । सोमम् । इन्द्र ॥ ९ ॥

हेइन्द्र यान्मरुतःसोमेसोमपानविषये आभजः समभावयः येचमरुतः त्वामवर्धन् प्रोत्साहोत्पादनेनयुद्धेअवर्धयन् येचमरुतस्तेतवगणोभवन् सहायाअभूवन्नित्यर्थः हेइन्द्र एवंविधैः तेभिःतैर्मरुद्भिःसजोषाःसंगतःसन् एतमभिषुतंसोमं वावशानःकामयमानस्त्वम् अग्नेराहुत्यधिकरणभूतस्याहवनीयस्यज्वालारूपयाजिह्वयाइमंपिब ॥ अभजः भजसेवायामित्यस्य लङि रूपम् यद्वृत्तयोगादनिघातः । अवर्धन् वृधुवर्धनेइत्यस्यण्यन्तस्यलङिरूपं छन्दस्युभयथेतिक्ष-

राधधातुकत्वात्णेरनिटीतिणिलोपः अत्रापियद्योगादनिघातः । अभवन् वाक्यभेदादनिघातः । वावशानः वशकान्तावित्यस्य यङ्लुकि चानशिरूपं चित्स्वरः । पिब पापाने निघातः ॥९॥

अथदशमी–

**इन्द्रपिबंस्वधयांचित्सुतस्याग्नेर्वापाहिजिह्वयांयजत्र ।**
**अध्वर्योर्वाप्रयतंशक्रहस्ताद्धोतुर्वायज्ञंहविषोंजुषस्व ॥ १० ॥**

इन्द्र । पिब । स्वधया । चित् । सुतस्य । अग्नेः । वा । पाहि ।
जिह्वया । यजत्र । अध्वर्योः । वा । प्रऽयतम् । शक्र । हस्तात् ।
होतुः । वा । यज्ञम् । हविषः । जुषस्व ॥ १० ॥

हेइन्द्र स्वधयास्वमात्मानंदधातिपोषयतीति स्वधा बलं तेन बलादपहृत्यसुतस्यसुतमभिषुतंहुतंवासोमंपिब चित्पूरणः यजत्र यष्टव्य हेइन्द्र अग्नेर्ज्वालारूपयाजिह्वयावा हुतंसोमं पाहि पिब हेशक्र समर्थेन्द्र अध्वर्योर्हस्ताद्वाप्रयतंदातुमुपक्रान्तंसोमंपिब अथवा होतुर्यज्ञंयजनीयंवषट्कारोपेतंहविषोभागं जुषस्व सेवस्व सर्वथापित्वमत्रागत्यास्माभिर्दीयमानंसोमंपिबेतिभावः ॥ पिब आमन्त्रितस्याविद्यमानत्वेनपादादित्वादनिघातः । अध्वर्योः अध्वरंकामयतीतिक्यच् कव्यध्वरेत्यकारलोपः प्रत्ययस्वरः ततएकादेशस्वरः । प्रयतं यमउपरमेइत्यस्य कर्मणि निष्ठा । शक्रशक्लृशक्तौ स्फायितंचीत्यादिनारक् । हस्तात् असिहसीत्यादिनातन् नित्स्वरः । होतुः जुहोतेस्ताच्छीलिकस्तृन् नित्स्वरः । जुषस्व जुषीप्रीतिसेवनयोरित्यस्यलोटिरूपं निघातः ॥१०॥

अथैकादशी–

**शुनंहुवेममघवानमिन्द्रमस्मिन्भरेनृतमंवाजसातौ ।**
**शृण्वन्तमुग्रमूतयेसमत्सुघ्नन्तंवृत्राणिसंजितंधनानाम् ॥११॥१८॥**

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् ।
वाजऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु ।
घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ ११ ॥ १८ ॥

व्याख्यातेयमृक् ॥ ११ ॥

॥ इतितृतीयस्यद्वितीयेऽष्टादशोवर्गः ॥ १८ ॥

इमामूष्वेकादशर्चंसप्तमंसूक्तं त्रैष्टुभमैन्द्रम् अत्रानुक्रमणिका—इमामूषूपान्त्यांघोरोऽथश्यंतसा-निर्दहेच्छस्यमानेतिश्रूयतइति । दशम्याआङ्गिरसोघोरऋषिः शिष्टानांविश्वामित्रः अग्निष्टोमे माध्यंदिनसवने अच्छावाकशस्त्रे दशमीवर्जितमिमामूष्वितिसूक्तं सूत्रितश्च—इमामूष्वित्युपोत्त-मामुद्धरेत्सर्वत्रेति । पृष्ठ्याभिप्लवषडहयोमध्यंदिनसवनेऽच्छावाकशस्त्रेचातुर्विंशिकादिष्टस्याही-नसूक्तस्यस्थाने त्रीणिसंपातसूक्तानि तत्रोपोत्तमावर्जमेतत्प्रथमंसूक्तम् सूत्रितश्च—इमामूष्विच्छ-न्तित्वेति ।

तस्मिन्सूक्तेप्रथमा—

इमामूषुप्रभृतिंसातयेधाःशश्वंच्छश्वदूतिभिर्यादमानः ।
सुतेसुतेवावृधेवर्धनेभिर्यःकर्मभिर्महद्भिःसुश्रुतोभूत् ॥ १ ॥

इमाम् । ऊँ इति । सु । प्रऽभृतिम् । सातये । धाः । शश्वत्ऽशश्वत् ।
ऊतिऽभिः । यादमानः । सुतेऽसुते । ववृधे । वर्धनेभिः ।
यः । कर्मऽभिः । महत्ऽभिः । सुऽश्रुतः । भूत् ॥ १ ॥

विश्वामित्रइन्द्रंस्तौति—हेइन्द्र ऊतिभिरवन्तिरक्षन्तिसर्वमितिऊतयोमरुतः तैःशश्वच्छश्व-त्सर्वदा यादमानः संगतिंयाचमानस्त्वं प्रभृतिं प्रकर्षेणभ्रियतेधार्यतेयज्ञार्थमितिप्रभृतिःसोमः स्तुतिर्वा इमामिमंसोमम् इमांस्तुतिंवा सातये अस्माकंधनलाभार्थंसुधाः सुष्ठुसंपादय उःपूरणः तथा सइन्द्रः सुतेसुते सोमेऽभिषुतेसति वर्धनेभिः वर्धनकारिभिः सोमाज्यादिभिर्हविर्भि-र्वावृधे वर्धते यइन्द्रोमहद्भिः कर्मभिः असुरवधमेघभेदनादिलक्षणैर्व्यापारैःसुश्रुतोलोकेप्रसि-द्धोऽभूत् सइन्द्रइतिपूर्वेणान्वयः ॥ प्रभृतिं तादौचनितिकृत्यतावितिगतेःप्रकृतिस्वरत्वम् । धाः दधातेश्छान्दसेलुङिरूपं निघातः । शश्वच्छश्वत् नित्यवीप्सयोरितिद्विर्वचनम् । यादमानः याचृयाच्ञायां शानचिरूपं चकारस्यदकारश्छान्दसः । वावृधे वृधुवर्धनेइत्यस्माल्लिटिरूपं तुजादित्वादभ्यासस्यदीर्घः संहितायांनिघातः । वर्धनेभिः वर्धतेर्ण्यन्तस्यनन्द्यादित्वाल्ल्युः लित्स्वरः । सुश्रुतः श्रुश्रवणेइत्यस्मात्कर्मणिक्तः गतिरनन्तरइतिगतिस्वरः । भूत् भवतेर्लुङि रूपम् ॥ १ ॥

माध्यन्दिनसवनेच्छावाकस्यप्रस्थितयाज्येन्द्रायसोमाःप्रदिवइत्येषा सूत्रितश्च—इन्द्रायसोमाःप्र-दिवोविदानाआपूर्णोअस्येति ।

अथद्वितीया–

**इन्द्रा॑यसोमाः॒प्रदि॑वो॒विदा॑नाऋ॒भुर्येभि॒र्वृष॑पर्वा॒विहा॑याः ।**
**प्र॒य॒म्यमा॑ना॒न्प्रति॒षूगृ॑भा॒येन्द्र॒पिब॒वृष॑धूतस्य॒वृष्णः॑ ॥ २ ॥**

इन्द्रा॑य । सोमाः॑ । प्र॒ऽदि॑वः । वि॒दा॑नाः । ऋ॒भुः । येभिः॑ ।
वृष॑ऽपर्वा । वि॒ऽहा॑याः । प्र॒ऽय॒म्यमा॑नान् । प्रति॑ । सु ।
गृ॒भा॒य । इन्द्र॑ । पिब॑ । वृष॑ऽधूतस्य । वृष्णः॑ ॥ २ ॥

हेइन्द्र इन्द्रायतुभ्यं सोमाःप्रदिवः प्रगतेपुपूर्वेष्वहःसुविदानाअस्माभिर्लम्भिताः वृषपर्वा वृषणःफलस्यवर्षकाःपर्वाणिकालावयवावर्षोद्यायस्यसतथोक्तः कालात्मकइत्यर्थः अतएवविहायाः विजहात्युत्सृजत्यर्थानर्थिभ्यइतिविहायामहान् तादृशइन्द्रः येभिर्यैर्दत्तैः सोमैर्ऋभुर्दीप्तोवर्तते हेइन्द्र त्वंप्रयम्यमानान्प्रकर्षेणमन्त्रैरुपयम्यमानानिमान्सोमान्सु सुष्ठु प्रतिगृभाय प्रतिगृहाण ग्रहीत्वाच वृषधूतस्यवृषभिर्ग्रावभिरभिषुतं वृष्णः स्वर्गादिफलवर्षकमिमंसोमंपिब ॥ प्रदिवः दिवुक्रीडादौ क्विप् कालाध्वनोरत्यन्तसंयोगेइतिद्वितीया दिवुशब्दोदिवसवाची कृदुत्तरपदस्वरः । विदानाः विदॢलाभेइत्यस्यव्यत्ययेनशानच् बहुलंछन्दसीतिविकरणस्यलुक् । विहायाः ओहाक्त्यागे वहिहाधाञ्भ्यश्छन्दसीत्यसुन् णिदित्यनुवृत्तेरातोयुक्चिण्कृतोरितियुगागमः गतिकारकयोरितिपूर्वपदप्रकृतिस्वरत्वम् । गृभाय ग्रहउपादानेइत्यस्यलोटि हौ श्नाप्रत्ययस्यछन्दसिशायजपीतिशायजादेशः हृग्रहोर्भइतिभत्वम् अतोहेरितिहेर्लुक् निघातः ॥२॥

माध्यन्दिनेसवनेऽच्छावाकशस्त्रेयाज्यापिबावर्धस्वेत्येषा सूत्रितञ्च–पिबावर्धस्वतवघासुतासइतियाज्येति ।

अथतृतीया–

**पिबा॒वर्ध॑स्व॒तव॑घासु॒तास॒इन्द्र॒सोमा॑सःप्रथ॒माउ॒तेमे ।**
**यथापि॑बःपू॒र्व्याँइन्द्र॒सोमाँ॑ए॒वापा॑हि॒पन्यो॑अ॒द्यानवी॑यान् ॥ ३ ॥**

पिब॑ । वर्ध॑स्व । तव॑ । घ॒ । सु॒तासः॑ । इन्द्र॑ । सोमा॑सः । प्र॒थ॒माः ।
उ॒त । इ॒मे । यथा॑ । अपि॑बः । पू॒र्व्यान् । इ॒न्द्र॒ । सोमा॑न् । ए॒व ।
पा॒हि॒ । पन्यः॑ । अ॒द्य । नवी॑यान् ॥ ३ ॥

हेइन्द्र सोमंपिब ततोवर्धस्व शरीरेणपुष्टोभव तव त्वदर्थं प्रथमाःपुरातनाः "उतापिच इमे अभिनवाःउभयविधाःसोमासःसोमाः सुतासोच ग्रावभिरभिषुताःखलु हेइन्द्र पूर्व्यान् पुरातनान्सोमान्यथात्वममिबः एवएवम् अद्याधुनापन्यःस्तुत्यः अतएवनवीयान् अतिशयेनाभिनवस्त्वम् इमानभिनवान्सोमान्पाहिपिब ॥ पिब पातेर्लोटिरूपम् । वर्धस्व तिङउत्तरत्वान्निघाताभावः । अपिबः यथायोगादनिघातः । पाहि पातेर्लोटि बहुलंछन्दसीतिशपोलुक् निघातः । पन्यः पनतेःस्तुत्यर्थस्य अघ्न्यादित्वाद्यत् यतोनावइत्याद्युदात्तत्वम् । नवीयान् नवशब्दादीयसुनिरूपं नित्स्वरः ॥ ३ ॥

अथचतुर्थी—

महाँअमत्रोवृजनेविरप्श्यु१ग्रंशवःपत्यतेधृष्ण्वोजः ।
नाहंविव्याचपृथिवीचनैनंयत्सोमासोहर्यश्वममन्दन् ॥४॥

महान् । अमत्रः । वृजने । विऽरप्शी । उग्रम् । शवः । पत्यते ।
धृष्णु । ओजः । न । अह । विव्याच । पृथिवी । चन । एनम् ।
यत् । सोमासः । हरिऽअश्वम् । अमन्दन् ॥ ४ ॥

योयमिन्द्रोमहान् अतिशयितसामर्थ्यवान् वृजने बलोपलक्षितेयुद्धे अमत्रः शत्रूणामभिभविता अतएवविरप्शी विरपणशीलः भुजास्फालनेनयुद्धार्थंशत्रूणामाह्वानकारी यद्वा विविधंरपणंस्तुतिलक्षणंयस्येति सर्वैःस्तुत्यइत्यर्थः तादृशस्येन्द्रस्यउग्रमुद्गूर्णंशवोबलंधृष्णु धर्षणशीलमोजःपराक्रमलक्षणंतेजः पत्यते सर्वत्रप्रसरति एनमेतादृशमहिमोपेतमिन्द्रं पृथिवी विस्तीर्णाभूमिः ' नविव्याच नव्याप्नोति अहशब्दएवार्थे चनेत्यप्यर्थे द्यौरपिनैवव्याप्नोतीत्यर्थः यद्यदासोमासःस्वाहाकृताःसौमाःहर्यश्वमिन्द्रममन्दन्नमादयन् तदातमेनंद्यावापृथिव्यौव्याप्तुंनशक्तुतइत्यर्थः '॥ अमत्रःअमगत्यादिषु अमिनक्षियजीत्यादिनात्रन्प्रत्ययः नित्स्वरः । विरप्शी रपलपव्यक्तायांवाचि औणादिकःशप्रत्ययः विविधंरपन्तीतिविरप्शाःस्तोतारः तेऽस्य सन्तीति अतइनिः यद्वा विविधंरपणंविरप्शंतदस्यास्तीति प्रत्ययस्वरः । पत्यते व्यत्ययेन यक् कर्तरि निघातः । धृष्णु ञिधृषाप्रागल्भ्ये त्रसिगृधिधृषिक्षिपेःक्नुरितिक्नुप्रत्ययः रषाभ्यामितिणत्वं प्रत्ययस्वरः । विव्याच व्यचेर्लिटिणलि लिट्यभ्यासस्योभयेषामित्यभ्यासस्यसंप्रसारणं निघातः । चनेतिनिपातसमुदायश्चार्थेवर्तते एवमादित्वादन्तोदात्तः । अमन्दन् मदिस्तुत्यादिष्वित्यस्य लङिरूपं यद्योगादनिघातः ॥ ४ ॥

अथपञ्चमी–

महाँउग्रोवावृधेवीर्यायसमाचक्रेवृषभःकाव्येन।
इन्द्रोभगोवाजदाअस्यगावःप्रजायन्तेदक्षिणाअस्यपूर्वीः ।५।१९।

मदान् । उग्रः । ववृधे । वीर्याय । सम्ऽआचक्रे । वृषभः ।
काव्येन । इन्द्रः । भगः । वाजऽदाः । अस्य । गावः । प्र ।
जायन्ते । दक्षिणाः । अस्य । पूर्वीः ॥ ५ ॥ १९ ॥

महान्युद्धकर्मणिबलवानुग्रःशत्रूणांभयङ्करः इन्द्रोवीर्याय वीर्यकरणाय वावृधे वर्धते वृषभःफलस्याभिवर्षकः भगः सर्वैर्भजनीयःसइन्द्रःकाव्येन कवयःस्तोतारःतत्कर्मस्तोत्रं तेन स्तोत्रेणसमाचक्रे संगच्छते तादृशस्यास्येन्द्रस्यगावः वाजदाः क्षीरादिलक्षणान्नप्रदाः प्रजायन्ते तथास्यपूर्वीर्बह्वयस्तागावोदक्षिणाःप्रजायन्ते ॥ वावृधे वर्धतेर्लिटिरूपं निघातः । वीर्याय वीरेभवंवीर्यं भवेच्छन्दसीतियत् वीरवीर्यौचेत्यत्रयतोनावइत्यस्यानित्यत्वस्यज्ञापितत्वात्तित्स्वरितः ।समाचक्रे करोतेर्लिटिरूपं गतिर्गतावितिपूर्वपदस्य गतेर्निघातः । काव्येन कवेःकर्मकाव्यं ब्राह्मणादित्वात्ष्यञ् ञित्त्वादुपधावृद्धिः ञित्स्वरः । वाजदाः ददातेरातोनुपसर्गेकः । जायन्ते जनीप्रादुर्भावेइत्यस्यलटिरूपम् । दक्षिणाः दक्षवृद्धावित्यस्मात् द्रुदक्षिभ्यामिनन्नितीनन्प्रत्ययः नित्त्वादाद्युदात्तः ॥ ५ ॥

॥ इतितृतीयस्यद्वितीयेएकोनविंशोवर्गः ॥ १९ ॥

अथषष्ठी–

प्रयत्सिन्धवःप्रसवंयथायन्नापःसमुद्रंरथ्येवजग्मुः ।
अतश्चिदिन्द्रःसदसोवरीयान्यदींसोमःपृणातिदुग्धोअंशुः ॥ ६ ॥

प्र । यत् । सिन्धवः । प्रऽसवम् । यथा । आयन् । आपः ।
समुद्रम् । रथ्याऽइव । जग्मुः । अतः । चित् । इन्द्रः । सदसः ।
वरीयान् । यत् । ईम् । सोमः । पृणाति । दुग्धः । अंशुः ॥ ६ ॥

सिन्धवोनद्यः यथाप्रसवं प्रकर्षेणसूयतइतिप्रसवःकामः तमनुसृत्य यद्यदाप्रार्थन् प्रकृष्टमतिदूरंसमुद्रंगच्छन्ति तदा आपोमहान्तंसमुद्रं रथ्येव रथिनइवजग्मुः प्रीणनार्थंगच्छन्ति तद्वत् अतश्चित्सदसः अस्मादप्यन्तरिक्षादसाविन्द्रोवरीयानुरुतरःखलु यदीयमेनमिन्द्रंदुग्धोभिषुतः अंशुः लताखण्डरूपोल्पःसोमः पृणतिप्रीणयति यथाल्पानद्योल्पीयांसिचजलानि महान्तंसमुद्रंप्रीणयन्तितद्वत् अल्पतरोंशुभूतःसोमोवरीयांसमिन्द्रंप्रीणयति ॥ प्रसवं सुवतेःकर्मण्यप् थाथादिस्वरः । आयन् अयतेर्लङिरूपं यद्योगादनिघातः । रथ्येव रथस्येमेरथ्याः रथाद्यदितियत् सुपांसुलुगितिसुपोडादेशः तित्स्वरितः इवेनसमासोविभक्तेरलोपः पूर्वपदप्रकृतिस्वरः । जग्मुः गमेर्लिटि गमहनेत्यादिनाउपधालोपः निघातः । वरीयान् उरुशब्दादीयसुनि प्रियस्थिरेत्यादिनावरादेशः नित्त्वादाद्युदात्तः । पृणाति पृणप्रीणने तुदादिः यद्योगादनिघातः । दुग्धः दुहेःक्तः एकाचइतीट्प्रतिषेधः दादेर्धातोर्घइतिहकारस्यघत्वं झषस्तथोर्धोधः प्रत्ययस्वरः ॥ ६ ॥

अथसप्तमी—

समुद्रेणसिन्धवोयादमानाइन्द्रायसोमंसुषुतंभरन्तः ।
अंशुंदुहन्तिहस्तिनोभरित्रैर्मध्वःपुनन्तिधारयापवित्रैः ॥ ७ ॥

समुद्रेण । सिन्धवः । यादमानाः । इन्द्राय । सोमम् । सुऽसुतम् ।
भरन्तः । अंशुम् । दुहन्ति । हस्तिनः । भरित्रैः । मध्वः ।
पुनन्ति । धारया । पवित्रैः ॥ ७ ॥

समुद्रेण संहतानद्यादिरूपेणापोभिद्रवन्त्येनमितिसमुद्रः तेन यादमानाः तेन सहसंगतिं याचमानाःसिन्धवोनद्योयथातंपूरयन्तितद्वत् हस्तिनोहस्तवन्तोध्वर्य्वादयः इन्द्रायतुभ्यं सुषुतं सुष्ठु अभिषुतंसोमंभरन्तःसंपादयन्तः अंशुंदुहन्तिलताखण्डमभिषुण्वन्ति तथातेऽध्वर्य्वादयःस्रवतोरसस्यधारया पवित्रैःपावनैर्भरित्रैः कर्मकरणार्थपदार्थान्बिभ्रतीतिभरित्राबाहवः तैर्मध्वः माधुर्योपेतान्सोमान्पुनन्तिशोधयन्ति ॥ समुद्रेण समुत्पूर्वाद्द्रवतेरन्येभ्योपिदृश्यतइतिडः डित्त्वाट्टिलोपः यद्वाउन्दीक्लेदने संपूर्वस्यस्फायितञ्चीत्यादिनारक् कित्त्वादुपधालोपः उभयत्र प्रत्ययस्वरः सुपासहैकादेशेकृते एकादेशउदात्तएव । यादमानाः याचृयाच्ञायां शानच् व्यत्ययेनचकारस्यदकारः शानचोलसार्वधातुकस्वरेधातुस्वरः । दुहन्ति दुहप्रपूरणेइत्यस्यलटिरू-

षम् । भरित्रैः डुभृञ्धारणपोषणयोरित्यस्मादशित्रादिभ्यइत्रोत्रावितीत्रप्रत्ययः प्रत्ययस्वरः । पुनन्ति पूञ्पवनेइत्यस्यलटिरूपम् ॥ ७ ॥

अथाष्टमी–

ह्रदाइंवकुक्षयंःसोमधानाःसमींविव्याचसवंनापुरूणिं ।
अन्नायदिन्द्रंःप्रथमाव्याशंवृत्रंजंघन्वाँअंवृणीतसोमंम् ॥ ८ ॥

ह्रदाःऽइंव । कुक्षयंः । सोमऽधानाः । सम् । ईमितिं । विव्याच । सवंना । पुरूणिं । अन्ना । यत् । इन्द्रंः । प्रथमा । वि । आशं । वृत्रम् । जघन्वान् । अवृणीत । सोमंम् ॥ ८ ॥

इन्द्रस्यकुक्षयः उदराणि सोमधानाः सोमोनिधीयतेएष्वितिसोमधानाः तत्रदृष्टान्तः–ह्रदाइव यथाह्रदाजलाधाराभवन्तितद्वत् ईंसोयमिन्द्रः पुरूणिसवना त्रीणिसवनानिसंविव्याच सम्यग्व्याप्नोति इन्द्रः प्रथमाप्रथमानि अन्ना भक्षणीयानि सोमादीन्यन्नानि यद्यस्माद्व्याश विशेषेणजघास ततोवृत्रंजघन्वान् वृत्रस्यहन्ताइन्द्रः सोमंमाध्यन्दिनेसवने देवेभ्यःअवृणीत समभजत ॥ कुक्षयः कुषनिष्कर्षे प्लुषिशुषिकुषिभ्यःक्सिःकुष्यतइतिकुक्षिः प्रत्ययस्वरः । सोमधानाः दधातेरधिकरणेल्युट् लित्स्वरः । विव्याच व्यचेर्लिटिरूपम् । अन्ना अदभक्षणे अद्यतइत्यन्नम् । आश अशभोजनेइत्यस्यलिटिणलिरूपम् अतआदेरित्यभ्यासस्यदीर्घः यद्योगादनिघातः लित्स्वरः । वृत्रं नलोकाव्ययेतिषष्ठीप्रतिषेधः । जघन्वान् हन्तेःक्कसाविडभावेरूपं प्रत्ययस्वरः । अवृणीत वृङ्संभक्ताविन्यस्यलङिरूपम् ॥ ८ ॥

अथनवमी–

आतूभंरमाकिंरेतत्परिंष्ठाद्विद्माहित्वावसुंपतिंवसूंनाम् ।
इन्द्रयत्तेमाहिंनंदत्रमस्त्यस्मभ्यंतद्धर्यश्वप्रयंन्धि ॥ ९ ॥

आ । तु । भर । माकिंः । एतत् । परिं । स्थात् । विद्म । हि । त्वा । वसुंऽपतिम् । वसूंनाम् । इन्द्रं । यत् । ते । माहिंनम् । दत्रंम् । अस्तिं । अस्मभ्यंम् । तत् । हरिऽअश्व । प्र । यन्धि ॥ ९ ॥

हेइन्द्र तु क्षिप्रं धनमाभर एतत्त्वयादीयमानंधनंमाकिः कोवापरिष्ठात् प्रतिबध्यतिष्ठेत् त्वात्वांवसूनांधनानांवसुपतिमुत्तमस्यधनस्यस्वामिनंविद्महि जानीमःखलु तेतव माहिनं मंहनीयं यद्दत्रंधनम् अस्ति हेहर्यश्व तद्धनम् अस्मभ्यंप्रयन्धि प्रयच्छ ॥ तु ऋचितुनुघेत्यादिनासंहितायांदीर्घः । भर भरतेर्लोटिरूपम् । माकिः निपातः । स्थात् तिष्ठतेश्छान्दसेलुङिरूपम् उपसर्गात्सुनोतीत्यादिनासंहितायांषत्वं निपातः । विद्म वेत्तेर्लटि विदोलटोवेतिमसोमादेशः प्रत्ययस्वरः संहितायांद्व्यचोतस्तिङइतिदीर्घः । वसुपतिं पत्यावैश्वर्येइतिपूर्वपदप्रकृतिस्वरः । माहिनं महेरिनण्चेतिइनणप्रत्ययः णित्त्वादुपधावृद्धिः ग्रामादित्वादाद्युदात्तः । यन्धि यमुउपरमे लोटि बहुलं छन्दसीतिशपोलुक् सेर्हिः तस्यवाछन्दसीतिपित्त्वस्यविकल्पितत्वादत्राङित्त्वादङितश्चेतिहेर्ध्यादेशः ? निघातः ॥ ९ ॥

जातकर्मण्यंसाभिमर्शनेअस्मेप्रयन्धिइत्येषा यद्यपिसानिर्दहोदीतिवचनेनशंसनेनिषिद्धा तथाप्यभिमर्शनस्यशंसनेचोदितत्वान्नोक्तदोषः ।

अथदशमी–

**अस्मेप्रयन्धिमघवन्नृजीषिन्निन्द्ररायोविश्ववारस्यभूरेः ।**
**अस्मेशतंशरदोजीवसेधाअस्मेवीराञ्छश्वतइन्द्रशिप्रिन् ॥१०॥**

अस्मे इति । प्र । यन्धि । मघऽवन् । ऋजीषिन् । इन्द्र । रायः । विश्वऽवारस्य । भूरेः । अस्मे इति । शतम् । शरदः । जीवसे । धाः । अस्मे इति । वीरान् । शश्वतः । इन्द्र । शिप्रिन् ॥ १० ॥

मघवन्धनवन्नृजीषिन्गतसार सोमवन् हेइन्द्र विश्ववारस्य विश्वैःसर्वैः संभजनीयतयावरणंयस्यतत् भूरेःभूरिबहुरायोधनं द्वितीयार्थेषष्ठी अस्मे अस्मभ्यंप्रयन्धिप्रयच्छ किंच अस्मे अस्माकं जीवसे जीवनाय शतं शरदः संवत्सरान्धाः देहि शिप्रिन् शोभनहनो हेइन्द्र अस्मे अस्माकंशश्वतः शश्वदितिबहुनाम बहून्वीरान्पुत्रान्देहि ॥ जीवसे जीवप्राणधारणेइत्यस्य तुमर्थेअसेप्रत्ययः प्रत्ययस्वरः । शश्वतः टुओश्विगतिवृद्ध्योः अस्मात्संश्चद्वेहदित्यादिनातिप्रत्ययान्तत्वेनानिपातनादिष्टरूपसिद्धिः ॥ १० ॥

अथैकादशी—

**शुनंहुवेममघवानमिन्द्रमस्मिन्भरेनृतमंवाजसातौ ।**
**शृण्वन्तमुग्रमूतयेसमत्सुघ्नन्तंवृत्राणिसंजितंधनानाम् ११।२०।**

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् ।
वाजऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् ।
वृत्राणि । समऽजितम् । धनानाम् ॥ ११ ॥ २० ॥

शुनंहुवेमेतिव्याख्याता ॥ ११ ॥

॥ इतितृतीयस्याद्वितीयेविंशोवर्गः ॥ २० ॥

वार्त्रहत्यायेत्येकादशर्चमष्टमंसूक्तम् एकादशी अनुष्टुप् शिष्टागायत्र्यः इन्द्रोदेवता तथाचानुक्रान्तम्—वार्त्रहत्यायगायत्रमन्त्यानुष्टुबिति । अतिरात्रेप्रथमेपर्यायेब्राह्मणाच्छंसिशस्त्रेवार्त्रहत्यायेत्युत्तमावर्जंसूक्तंशंसनीयम् सूत्रितंच—वार्त्रहत्यायेत्युत्तमामुद्धरेदिति । महाव्रतेगायत्रीभ्यृचाशीतावुत्तमावर्जमिदंसूक्तं पञ्चमारण्यकेसूत्रितम्—वार्त्रहत्यायशवसइत्युत्तमामुद्धरतीति ।

तस्मिन्सूक्तेप्रथमा—

**वार्त्रहत्यायशवसेपृतनाषाह्यायच । इन्द्रत्वावर्तयामसि ॥१॥**

वार्त्रऽहत्याय । शवसे । पृतनाऽसह्याय । च ।
इन्द्र । त्वा । आ । वर्तयामसि ॥ १ ॥

विश्वामित्रःस्तौति—हेइन्द्र वार्त्रहत्याय वृत्रहननिमित्ताय शवसे बलाय अपिच पृतनाषाह्याय परकीयसेनाभिभवाय त्वा त्वाम् आसर्वतोवर्तयामसि प्रवर्तयामः ॥ वार्त्रहत्याय वृत्रघ्नः कर्मेत्यर्थे ब्राह्मणादित्वात्ष्यञ् हनस्तोचिण्णलोरितितकारः ञित्वादाद्युदात्तः । पृतनाषाह्याय षहमर्षणेइत्यस्माद्भावे शकिसहोश्चेतियत् संहितायांसहेःपृतनर्ताभ्यांचेतिषत्वं दीर्घश्छान्दसः । वर्तयामसि वृतुवर्तनेइत्यस्यण्यन्तस्यमसः इदन्तोमसिइत्यादेशः निघातः ॥ १ ॥

अथद्वितीया—

**अर्वाचीनंसुतेमनउतचक्षुःशतक्रतो । इन्द्रकृण्वन्तुवाघतः॥ २॥**

अर्वाचीनम् । सु । ते । मनः । उत । चक्षुः । शतक्रतो इति शतऽक्रतो ।
इन्द्र । कृण्वन्तु । वाघतः ॥ २ ॥

हेशतक्रतो शतंक्रतवोयस्यासौशतक्रतुः हेइन्द्र वाघतः वहन्तियज्ञियांधुरामितिवाघतःस्तोतारः ते तव सु अस्मदभिमतफलसंपादनेनशोभनंमनः अर्वाचीनमस्मदभिमुखंकृण्वन्तु कुर्वन्तु उतापिच चक्षुःत्वदीयंदर्शनमस्मास्वनुग्रहदृष्टिंकुर्वन्तु ॥ आर्वाचीनं विभाषाञ्चेरदिक्स्त्रियामिति खप्रत्ययः खस्येनादेशः । चक्षुः चक्षेःशिच्चेत्युसिप्रत्ययः शिद्वद्भावात्ख्याञादेशाभावः निदित्यनुवृत्तेराद्युदात्तश्च । कृण्वन्तु कृविहिंसाकरणयोरित्यस्यलोटिरूपम् आमन्त्रितस्याविद्यमानवत्वेनपादादित्वादनिघातः प्रत्ययस्वरः । वाघतः वहप्रापणे संश्चद्वेहदित्यादिनाअतिप्रत्ययान्तत्वेननिपातनादुपधावृद्धिः हकारस्यघत्वं प्रत्ययस्वरः ॥ २ ॥

अथतृतीया—

नामानितेशतक्रतोविश्वाभिर्गीर्भिरीमहे । इन्द्राभिमातिषाह्ये ॥ ३ ॥

नामानि । ते । शतक्रतो इति शतऽक्रतो । विश्वाभिः ।
गीःऽभिः । ईमहे । इन्द्र । अभिमातिऽसह्ये ॥ ३ ॥

शतक्रतो हेइन्द्र अभिमातिषाह्ये मातिर्मानोगर्वः अभितोमानोयेषांते अभिमातयःशात्रवः तेषां सहनमेवसह्यंयस्मिन्तस्मिन्युद्धेऽस्माकमुपस्थितेसति ते तव नामानि शक्रवज्रहस्तादीनिनामधेयानि यद्वा तदुपलक्षितानिबलानि विश्वाभिर्गीर्भिः सर्वाभिःस्तुतिलक्षणाभिर्वाग्भिरीमहे वयंयाचामहे ॥ ईमहे ईकान्त्यादिषु व्यत्ययेनात्मनेपदम् अदादित्वाच्छपोलुक् निघातः ॥ ३ ॥

अथचतुर्थी—

पुरुष्टुतस्यधामभिःशतेनमहयामसि । इन्द्रस्यचर्षणीधृतः ॥ ४ ॥

पुरुऽस्तुतस्य । धामऽभिः । शतेन । महयामसि ।
इन्द्रस्य । चर्षणिऽधृतः ॥ ४ ॥

हेइन्द्र पुरुष्टुतस्य पुरुभिःबहुभिःस्तोतृभिः स्तुतस्य शतेन अपरिमितसंख्याकैर्धामभिस्तेजोभिर्युक्तस्य चर्षणीधृतः चर्षणीनांमनुष्याणांकर्मानुष्ठातॄणाम् अभिमतफलसंपादनेनधारकस्येन्द्रस्य यद्वा आकृषन्तिसर्वमनेनेतिचर्षणि बलं तद्धारकस्य तव महयामसि महयामः स्तोत्रंकुर्मः ॥ पुरुष्टुतस्य ष्टुञ्स्तुतौ कर्मणिक्तः थाथादिस्वरः संहितायांस्तुतस्तोमयोश्छन्दसीतिषत्वम् । महयामसि महपूजायामित्यस्यलटि इदन्तोमसिः निघातः । चर्षणिधृतः कृषआकर्षणे कृषेरादेश्चचेत्यानिप्रत्ययः ककारस्यचकारादेशः यद्वा कृषविलेखने कर्षन्तीतिचर्षणयोमनुष्याः धृतः धृधारणे क्विप् कृदुत्तरपदप्रकृतिस्वरः ॥ ४ ॥

अथपञ्चमी–

इन्द्रं॑वृ॒त्राय॒हन्त॑वेपुरुहू॒तमुपं॑ब्रुवे । भरे॑षु॒वाजं॑सातये ॥ ५ ॥ २१ ॥

इन्द्र॑म् । वृ॒त्राय॑ । हन्त॑वे । पु॒रु॒ऽहू॒तम् । उप॑ ।
ब्रु॒वे । भरे॑षु । वाज॑ऽसातये ॥ ५ ॥ २१ ॥

हेइन्द्र वृत्रायहन्तवे वृत्रनामकमसुरंहन्तुं भरेषु युद्धेषु वाजसातये अन्नोपलक्षितधनलाभायच पुरुहूतं बहुभिराहूतमिन्द्रं बलवन्तं त्वामुपब्रुवे सोमपानार्थंविश्वामित्रोहमाह्वयामि वृत्रायक्रियाग्रहणंकर्तव्यमितिकर्मणःसंप्रदानत्वम् ॥ हन्तवे हन्तेस्तुमर्थेतवेन्प्रत्ययः नित्स्वरः । ब्रुवे ब्रूञ्व्यक्तायांवाचीत्युत्तमस्यलट्युत्तमइटिरूपं निघातः । वाजसातये सननंसातिः वाजस्यसातिर्वाजसातिःदासीभारादित्वात्पूर्वपदप्रकृतिस्वरः ॥ ५ ॥

॥ इतितृतीयस्याद्वितीयेएकविंशोवर्गः ॥ २१ ॥

अथषष्ठी–

वाजे॑षुसास॒हिर्भ॑व॒त्वामी॑महेशतक्रतो । इन्द्रं॑वृ॒त्राय॒हन्त॑वे ॥ ६ ॥

वाजे॑षु । स॒स॒हिः । भ॒व॒ । त्वाम् । ई॒म॒हे॒ । श॒त॒क्र॒तो॒ इति॑ शत॒ऽक्र॒तो । 
इन्द्र॑ । वृ॒त्राय॑ । हन्त॑वे ॥ ६ ॥

शतक्रतो हेइन्द्र वाजेषुसंग्रामेषुसासहिः शत्रूणामभिभविताभव वृत्रायहन्तवेवृत्रंहन्तुं त्वामीमहे प्रार्थयामहे ॥ सासहिः सहिवहिचालिपतिभ्योयङन्तेभ्यःकिकिनौवक्तव्याविति किप्रत्ययः तस्यस्वरः । वृत्राय कर्मणःसंप्रदानत्वम् । हन्तवे तुमर्थेतवेन्प्रत्ययः ॥ ६ ॥

अथसप्तमी–

द्युम्नेषुपृतनाज्येपृत्सुतूर्षुश्रवःसुच । इन्द्रसाक्ष्वाभिमातिषु ।७।

द्युम्नेषु । पृतनाज्ये । पृत्सुतूर्षु । श्रवःऽसु । च ।
इन्द्र । साक्ष्व । अभिऽमातिषु ॥ ७ ॥

द्युम्नेषुद्योतमानेषुधनेषुप्राप्तव्येषु अभिमानिनोयेसपत्नाःपृतनाज्ये पृतनानामजनंगमनंयस्मिन्नितिपृतनाज्यं संग्रामः तस्मिन्संग्रामेच पृत्सुतूर्षु पृतनासुतरणशीलेषुशूरेषु श्रवःसु कल्लेषुच येअभिमानिनःसपत्नाःसन्ति तान्साक्ष्वाभिभव तथा हेइन्द्र अभिमातिषु सर्वतोगर्वयुक्तेषु शत्रुषुपुरुषेषुयेसपत्नास्तांश्चाभिभव ॥ पृतनाज्ये अजगतिक्षेपणयोरित्यस्यण्यन्तस्यअचोयत् पृतनानामाज्यंपृतनाज्यम् एकादेशस्वरः । पृत्सुतूर्षु पृतनाशब्दस्यसौपरतः मांस्पृत्स्नूनामुपसंख्यानमितिपृदादेशः ञित्वरासंभ्रमे ताच्छीलिकःक्विप् ज्वरत्वरेत्यादिनाऊठ् तत्पुरुषेकृतिबहुलमिति पूर्वपदस्यसप्तम्याअलुक् कृदुत्तरपदस्वरः । साक्ष्व षहमर्षणेइत्यस्य लोटि बहुलंछन्दसीतिशपो लुक् ढत्वकत्वे दीर्घश्छान्दसः ॥ ७ ॥

चातुर्विंशिकेहनिमाध्यन्दिनेब्राह्मणाच्छंसिशस्त्रे शुष्मिन्तमन्नऊतयइतिश्यृचोवैकल्पिकोनुरूपः । सूत्रितम्–शुष्मिन्तमन्नऊतयेआयन्तइवसूर्यमिति ।

अथाष्टमी–

शुष्मिन्तमंनऊतयेद्युम्निनंपाहिजागृविम् ।इन्द्रसोमंशतक्रतो ।८।

शुष्मिन्ऽतमम् । नः । ऊतये । द्युम्निनम् । पाहि । जागृविम् ।
इन्द्र । सोमम् । शतक्रतो इति शतऽक्रतो ॥ ८ ॥

शतक्रतो हेइन्द्र शुष्मिन्तमं बलवतांमध्येअतिशयेनबलवन्तं द्युम्निनं दीप्तिमन्तं यद्वा शुष्मिन्तमं शत्रूणांशोषकतमं द्युम्निनं यशस्विनं जागृविं जागरणशीलं पीतःसोमोजागृविः स्वप्ननिवारकइतिताद्दशंनोऽस्माकंसंबन्धिनंसोमम् ऊतयेस्माकंरक्षणायपाहि अत्रागत्यपिब । शुष्मिन्तमं तमपःपित्त्वादनुदात्तत्वेप्रत्ययस्वरः । पाहि पातेर्लोटि बहुलंछन्दसीतिशपोलुक् निघातः । जागृविः क्विन्प्रत्ययान्तः नित्त्वादाद्युदात्तः ॥ ८ ॥

अथनवमी–

इन्द्रियाणिशतक्रतोयातेजनेषुपञ्चसु । इन्द्रतानितआवृणे ।।९।।

इन्द्रियाणि । शतक्रतो इति शतऽक्रतो । या । ते ।
जनेषु । पञ्चऽसु । इन्द्र । तानि । ते । आ । वृणे ॥ ९ ॥

शतक्रतो हेइन्द्र तेतवसंबन्धिषुपञ्चसुजनेषु गन्धर्वाःपितरोदेवाअसुरारक्षांसीत्येतेषु या यानीन्द्रियाणि रूपग्रहणादिसामर्थ्यानिस्थितानि तेत्वदीयानितानीन्द्रियाण्यहमावृणे . संभजे यद्वा पञ्चजनेषु निषादपञ्चमेषुचतुर्षुजनेषु यानीन्द्रियाणिसामर्थ्यानितानि त्वदीयान्यहमावृणे ॥ इन्द्रियाणि इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिद्रसृष्टमिन्द्रजुष्टमिद्रदत्तमितिवेतिघच्प्रत्ययान्तत्वेननिपातनादन्तोदात्तः । वृणे वृङ्संभक्तावित्यस्यलटिरूपं निघातः ॥ ९ ॥

अथदशमी—

अगन्निन्द्रश्रवोबृहद्द्युम्नंदधिष्वदुष्टरम् । उत्तेशुष्मंतिरामसि ॥१०॥

अगन् । इन्द्र । श्रवः । बृहत् । द्युम्नम् । दधिष्व । दुस्तरम् ।
उत । ते । शुष्मम् । तिरामसि ॥ १० ॥

हेइन्द्र बृहन्महच्छ्रवःसोमलक्षणमस्माभिर्दीयमानमन्नम् अगन् त्वांगच्छतु त्वं दुष्टरं दुस्तरं शत्रुभिस्तरीतुमशक्यं द्युम्नं धनं दधिष्वास्मभ्यंप्रयच्छ वयंतु ते त्वदीयं शुष्मं बलमुत् उत्कृष्टंतिरामसि सोमाज्यादिभिर्वर्धयामः ॥ अगन् गमेर्लङि बहुलंछन्दसीतिशपो लुक् हल्ङ्यादिनातिलोपः मोनोधातोः अडागमस्वरः । दधिष्व दधातेर्लोटि छन्दस्युभयथेति थासआर्धधातुकत्वादिडागमः निघातः । दुस्तरं तरतेःकृच्छ्रार्थेखल् सुषामादित्वात्संहितायां षत्वं लित्स्वरः । तिरामसि इदन्तोमसि निघातः ॥ १० ॥

अथैकादशी—

अर्वावतोनआगह्यथोशक्रपरावतः ।
उलोकोयस्तेअद्रिवइन्द्रेहततआगहि ॥ ११ ॥ २२ ॥

अर्वाऽवतः । नः । आ । गहि । अथो इति । शक्र । पराऽवतः ।
ऊँ इति । लोकः । यः । ते । अद्रिऽवः । इन्द्र । इह ।
ततः । आ । गहि ॥ ११ ॥ २२ ॥

शक्र बलवन्हेइंन्द्र अर्वावतः अर्वाचीनात्समीपाद्देशात् अथो अपिच परावतोतिदूराद्देशान्नोऽस्मानभिलक्ष्यागहि आगच्छ अद्रिवः अत्तिभक्षयतिशत्रूनितिअद्रिर्वज्रः तद्वन् हेइन्द्र ते तव यउलोकउत्तमोलोकोऽस्ति ततस्तस्मादपिलोकादिहास्मिन्देवयजनदेशे सोमपानार्थमागहि आगच्छ ॥ गहि गमेर्लोटिरूपम् । परावतः उपसर्गाच्छन्दसिधात्वर्थेइतिवतिः प्रत्ययस्वरः । अद्रिवः मतुवसोरुरितिरुः । ततःपञ्चम्यास्तसिलितितासिल् लित्स्वरः ॥ ११ ॥

॥ इतितृतीयस्यद्वितीयेद्वाविंशोवर्गः ॥ २२ ॥

अभितष्टेवेतिदशर्चंनवमंसूक्तम् अत्रानुक्रमणिका—अभितष्टेवदशप्रजापतिःसर्वैश्वामित्रो वाच्योवाद्वौवातौनवैकोपीति विश्वामित्रगोत्रःप्रजापतिः वाचः पुत्रः प्रजापतिर्वाऋषिः तावुभावपि समुच्चितावस्यसूक्तस्यऋषी इतिद्वितीयःपक्षः अथवानोभावपि किंतु विश्वामित्रएवेतितृतीयःपक्षः त्रिष्टुप्छन्दः इन्द्रोदेवता चातुर्विंशिकेहनिमाध्यंदिनेसवने अच्छावाकशस्त्रे अभितष्टेवेत्यहरहःशस्यनामकंसूक्तम् । सूत्रितञ्च—उदुब्रह्माण्यभितष्टेवेतीतरावहरहःशस्येइति एवंसर्वत्राहर्गणेषुद्वितीयादिष्वहःसुमाध्यंदिनसवनेऽच्छावाकशस्त्रेएतत्सूक्तम् ।

अथतस्मिन्सूक्तेप्रथमा—

**अ॒भि तष्टे॑व दीधया मनी॒षामत्यो॒ न वा॒जी सु॒धुरो॒ जिहा॑नः ।**
**अ॒भि प्रि॒याणि॒ मर्मृ॑श॒त्परा॑णि क॒वीँरि॑च्छामि सं॒दृशे॑ सु॒मे॒धाः ॥ १ ॥**

अ॒भि । तष्टा॑ऽइव । दी॒धय॒ । म॒नी॒षाम् । अत्यः॑ । न । वा॒जी ।
सु॒ऽधुरः॑ । जिहा॑नः । अ॒भि । प्रि॒याणि॑ । मर्मृ॑शत् । परा॑णि ।
क॒वीन् । इ॒च्छा॒मि॒ । स॒म्ऽदृशे॑ । सु॒ऽमे॒धाः ॥ १ ॥

यजमानःस्तोतारंप्रतिब्रूते—हेस्तोतः मनीषामिन्द्रविषयांस्तुतिम् अभिदीधय सर्वतोदीप्तां कुरु तत्रदृष्टान्तः—तष्टेव यथातष्टातक्षणेनकाष्ठंसंस्करोतितद्वत् सुधुरः शोभनयाधुरान्वितो वाजीवेगवानत्योन अश्वइव जिहानःकर्मणिप्रवर्तमानः पराण्युत्तमानिप्रियाणीन्द्रस्यप्रियतमानि यद्वा पराण्युत्तरेष्वहःसुक्रियमाणानिकर्माणि अभिमर्मृशत् अत्यर्थमभिमृशन् सुमेधाः शोभनमेधावानहं कवीन्येपूर्वमनुष्ठितयज्ञाद्देवभूयमगमन् तेकवयः तान्संदृशे संद्रष्टुमिच्छामिउक्तार्थेब्राह्मणम्—अभितष्टेवदीधयामनीषामित्यच्छावाकोहरहःशंसत्यभिवत्तत्यैरूपमभिप्रियाणिमर्मृशत्पराणीति यान्येवपराण्यहानि तानिप्रियाणितान्येव तदभिमर्मृशतोयन्त्यभ्यारभमाणाः ।

परोवाअस्माँल्लोकात्स्वर्गोलोकस्तमेवतदभिवदतिकवी रिच्छामिसंदृशेसुमेधाइतियेवैतेनऋषयःपूर्वेप्रेता—स्तेवैकवयस्तानेवतदभ्यतिवदतीति ॥ तष्टेव तक्षूत्वक्षूतनूकरणेइत्यस्यतृनिरूपं नित्स्वरः। दीधय दीधीङ्दीप्तिदेवनयोरित्यस्य अन्तर्भावितण्यर्थस्यलोटिशपोबहुलंछन्दसीतिलुगभावः व्यत्ययेनपरस्मैपदम् । सुधुरः आद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम् । जिहानः ओहाङ्गतावित्यस्यशानचिभृञामिदित्यभ्यासस्येत्त्वं चित्त्वादन्तोदात्तत्वेप्राप्ते अभ्यस्तानामादिरित्याद्युदात्तत्वम् । मर्मृशत् मृश आमर्शनेइत्यस्ययङ्लुकि रुग्रिकौचलुकीत्यभ्यासस्यरुगागमः तदन्ताच्छतरिरूपं नाभ्यस्ताच्छतुरितिनुमभावः अभ्यस्तस्वरः । संदृशे दृशिर्प्रेक्षणेइत्यस्मात्तुमर्थे दृशेविख्येचेतिकेन्प्रत्ययान्तत्वेनानिपातनादाद्युदात्तः समासेकृदुत्तरपदस्वरः । सुमेधाः नित्यमसिच्प्रजामेधयोरित्यासिच्प्रत्ययः चित्स्वरः ॥ १ ॥

अथद्वितीया—

**इ॒नोत॑पृ॑च्छ॒जनि॑माक॒वी॒नांमं॑नो॒धृतः॑सु॒कृत॑स्तक्षत॒द्याम् ।**
**इ॒माउ॑तेप्र॒ण्यो॒३॑वर्ध॑माना॒मनो॑वाता॒अध॒नुधर्म॑णिग्मन् ॥ २ ॥**

इ॒ना । उ॒त । पृ॒च्छ॒ । जनि॑म । क॒वी॒नाम् । म॒नः॒ऽधृत॑ः । सु॒ऽकृत॑ः । त॒क्षत॒ । द्याम् । इ॒माः । ऊँ॒ इति॑ । ते॒ । प्र॒ऽन्य॑ः । वर्ध॑मानाः । मनः॑ऽवाताः । अध॑ । नु । धर्म॑णि । ग्म॒न् ॥ २ ॥

उतेत्यामन्त्रणे हेइन्द्र कवीनां सुकृतकर्मणांदेवभूयंगतानांजनिम जन्म केनकर्मणादिवंगताः कुतोवातेषामुत्पत्तिरिति एतमर्थमिनाईश्वरान्गुरून्पृच्छ तेकवयोमनोधृतःसंयतमनस्काः अतएवसुकृतः शोभनकर्माणःसन्तः द्यांदिवंतक्षताकुर्वन् अध अथेदानीं धर्मण्यस्मिन्यज्ञे तेत्वदर्थंप्रण्यः प्रणीयमानामनोवाताः मनोवेगाः वर्धमानास्त्वां वर्धयन्त्यइमाअस्माभिःक्रियमाणस्तुतयोनुक्षिप्रंग्मन् त्वांगच्छन्तु उसर्वत्रप्रसिद्ध्यर्थः ॥ पृच्छ प्रच्छज्ञीप्सायामित्यस्यलोटि तुदादित्वाच्छः तस्यङित्त्वाद्ग्रहिज्यादिनासंप्रसारणं निघातः । प्रण्यः णीञ्प्रापणेइत्यस्मादौणादिकःकर्मणिक्विप् सर्वविधीनांछन्दसिविकल्पितत्वादियङादेशंबाधित्वायणादेशः उदात्तस्वरितयोरितिस्वरितत्वम् । ग्मन् गमेर्लङिबहुलंछन्दसीतिशपोलुक् ङित्त्वाद्गमहनेत्यादिनोपधालोपःनिघातः ॥ २ ॥

---

१ ऐ० ब्रा० ६. २० ।

अथतृतीया—

निषीमिदत्रगुह्यादधानाउतक्षत्रायरोदसीसमंञ्जन् ।
संमात्राभिर्ममिरेयेमुरुर्वीअन्तर्महीसमृतेधायसेधुः ॥ ३ ॥

नि । सीम् । इत् । अत्र । गुह्या । दधानाः । उत । क्षत्राय । रोदसी इति । सम् । अञ्जन् । सम् । मात्राभिः । ममिरे । येमुः । उर्वी इति । अन्तः । मही इति । समृते इति सम्ऽऋते । धायसे । धुरिति धुः ॥ ३ ॥

अत्रभूलोके गुह्या गूढानिकर्माणि सीमित् सर्वतएवनिदधानाःकुर्वाणाएतेकवयः उतापिच क्षत्रायबलाय धनायवा रोदसीद्यावापृथिव्यौ समञ्जन् ओषधीभिःपृथिवीं देवैश्चदिवंसंगतामकार्षुः किञ्च तेमात्राभिर्मीयन्तेमान्तीतिवामात्राःशिलोच्चयाः ताभिर्मात्राभिःसंममिरे तेरोदस्यौविभक्तपरिच्छिन्नेचक्रुश्च समृतेपरस्परसंगते उर्वी विस्तीर्णे मही महत्यौ ते द्यावापृथिव्यौयेमुः विष्टम्भकेणान्तरिक्षेण अन्तःउदयच्छन् तथा धायसेतयोर्धारणार्थम् अन्तरिक्षं धुः न्यधुः ॥ इदवधारणार्थे । गुह्या गुहायांभवानि भवार्थेयत् यतोनावइत्याद्युदात्तत्वम् । दधानाः दधातेःशानचिरूपम् अभ्यस्तस्वरः । अञ्जन् अञ्जूव्यक्तिम्रक्षणकान्तिगतिष्वित्यस्य लङि श्नसोरल्लोपः निघातः । मात्राभिः मामानेमाङ्मानेवा हुयामेत्यादिनात्रन्प्रत्ययः नित्स्वरः । ममिरे माङ्मानइत्यस्यलिटिरूपं चादिलोपेविभाषेतिननिघातः । येमुः यमउपरमे इत्यस्यलिटिउसिरूपं तिङउत्तरत्वादनिघातः । धायसे वहिहाधाञ्भ्यश्छन्दसीत्यसुन् नित्स्वरः । धुः दधातेर्लुङिरूपम् ॥ ३ ॥

अथचतुर्थी—

आतिष्ठन्तंपरिविश्वेअभूषञ्छ्रियोवसानश्चरतिस्वरोचिः ।
महत्तद्वृष्णोअसुरस्यनामाविश्वरूपोअमृतानितस्थौ ॥ ४ ॥

आऽतिष्ठन्तम् । परि । विश्वे । अभूषन् । श्रियः । वसानः । चरति । स्वऽरोचिः । महत् । तत् । वृष्णः । असुरस्य । नाम । आ । विश्वऽरूपः । अमृतानि । तस्थौ ॥ ४ ॥

विश्वे सर्वेकवयःरथमातिष्ठन्तमिन्द्रंपर्यभूषन् परितोलङ्कुर्वन् स्वरोचिः स्वमेवरोचिर्य-स्यासौस्वरोचिः स्वप्रभयैवदीप्यमानइत्यर्थः अतएव श्रियोदीप्तीर्वसानः आच्छादयन् सो-ऽयमिन्द्रश्चरति सर्वत्रवर्तते वृष्णः कामानांवर्षितुः असुरस्य अस्यतिप्रेरयतिसर्वानन्तर्यामि-तयेत्यसुरः तस्येन्द्रस्यतत्तादृशम(नु)भूतपूर्वं नाम नमयतिसर्वान्शत्रूनितिनाम कर्म यद्वा नम्यतेसर्वैर्नमस्क्रियतइतिनामेन्द्रस्यशरीरं कर्मवा महदाश्चर्योपेतंवर्तते तथा विश्वरूपोना-नाविधरूपतांभजमानःसइन्द्रोवरुणात्मना अमृतानिजलानि आतस्थौ अधितिष्ठति ॥ वि-श्वे जसःशी । अभूषन् भूषअलङ्कारेइत्यस्यलङिरूपम् वसानः वसआच्छादनेइत्यस्य शा-नचिरूपं तस्यलसार्वधातुकस्वरेधातुस्वरः । नाम णमुप्रह्वत्वइत्यस्मान्नामन्सीमन्नित्यादिनामनि-न्प्रत्ययान्तत्वेननिपातनादाद्युदात्तः । विश्वरूपइतितस्यसंज्ञा बहुव्रीहौविश्वंसंज्ञायामितिपूर्व-पदान्तोदात्तत्वम् । अमृतानि कालाध्वनोरत्यन्तसंयोगेइतिद्वितीया । तस्थौ तिष्ठतेर्लिटिण-लिरूपम् ॥ ४ ॥

अथपञ्चमी–

असूतपूर्वोवृषभोज्यायानिमाअस्यशुरुधःसन्तिपूर्वीः ।
दिवोनपातविदथस्यधीभिःक्षत्रंराजानाप्रदिवोदधाथे॥५॥२३॥

असूत । पूर्वः । वृषभः । ज्यायान् । इमाः । अस्य । शुरुधः ।
सन्ति । पूर्वीः । दिवः । नपाता । विदथस्य । धीभिः ।
क्षत्रम् । राजाना । प्रऽदिवः । दधाथे इति ॥ ५ ॥ २३ ॥

वृषभःकामानांवर्षकः पूर्वश्चिरन्तनः अतएव ज्यायानिन्द्रोऽसूत अपःससर्ज पूर्वीर्ब-ह्व्यः इमाअनेनसृष्टाआपः अस्यजगतःशुरुधःसन्ति शुचःपिपासायारोधयित्र्योभवन्ति दिवः द्युलोकस्य नपाता नपातयितारौ हेराजानाविन्द्रावरुणौ युवांप्रदिवःप्रकर्षेणद्योतमानस्यविदथस्य यज्ञकारिणःस्तोतुर्धीभिःस्तुतिभिःक्षत्रंधनंदधाथे अस्मभ्यंदातुंधारयेथे ॥ असूत षूङ्प्राणिगर्भ-विमोचनेइत्यस्यलङिरूपम्अडागमस्वरः । ज्यायान् प्रशस्यशब्दादीयसुनि ज्यचेतिज्यादेशः ज्यादादीयसइतीयसआदेराकारादेशः नित्त्वादाद्युदात्तः । शुरुधः पृषोदरादिः । नपाता न-भ्राण्नपादितिनिपातनान्नञःप्रकृतिभावः आमन्त्रितत्वान्निघातः । धीभिः सावेकाचइतिविभ-क्तेरुदात्तत्वम् । राजाना आमन्त्रितत्वान्निघातः । दधाथे दधातेर्लेटिरूपं निघातः ॥ ५ ॥

॥ इतितृतीयस्यद्वितीयेत्रयोविंशोवर्गः ॥ २३ ॥

अथषष्ठी—

त्रीणिराजानाविदथेपुरूणिपरिविश्वानिभूषथःसदांसि ।
अपश्यमत्रमनसाजगन्वान्व्रतेगन्धर्वाँअपिवायुकेशान् ॥६॥

त्रीणि । राजाना । विदथे । पुरूणि । परि । विश्वानि ।
भूषथः । सदांसि । अपश्यम् । अत्र । मनसा । जगन्वान् ।
व्रते । गन्धर्वान् । अपि । वायुऽकेशान् ॥ ६ ॥

हेराजानाविन्द्रावरुणौ *विदथेऽस्मिन्यज्ञे विश्वानिव्याप्तानि पूरूणियजनीयैःसोमादिभिः पूर्णानि त्रीणिसदांसि सवनानि परिभूषथःसर्वतोलंकुरुथः हेइन्द्र त्वं जगन्वान्यज्ञंप्रतिगतवानसि अपिःसंभावनायां यतोहमत्रव्रतेयज्ञे वायुकेशान् वायुवच्चञ्चलरश्मीन्गन्धर्वान्सोमरक्षकान् स्वानभ्राजादीनमनसापश्यं तेच स्वानभ्राजादयस्तैत्तिरीयकेस्पष्टमभिहिताः—स्वानभ्राजांघारे बम्भारेहस्तसुहस्तकृशानवेतेवःसोमक्रयणास्तान्रक्षध्वंमावोदभन्निति ॥ भूषथः भूषअलङ्कारेइत्यस्यलटिरूपम् । अपश्यं दृशिर्प्रेक्षणेइत्यस्यलङिरूपं पादादित्वादनिघातः । जगन्वान् गमेः क्वसौ विभाषागमहनविदविशामितिइटोविकल्पितत्वादत्रेडभावः मोनोधातोः म्वोश्चेतिमकारस्यनकारः प्रत्ययस्वरः । गन्धर्वान् धृञ्धारणेइत्यस्यगोशब्दउपपदे गविगन्धृञोवइतिवप्रत्ययः तत्संन्नियोगेनगोशब्दस्यगनादेशः प्रत्ययस्वरः ॥ ६ ॥

अथसप्तमी—

तदिन्न्वस्यवृषभस्यधेनोरानामभिर्ममिरेसक्म्यंगोः ।
अन्यदन्यदसुर्यं१वसानानिमायिनोममिरेरूपमस्मिन् ॥ ७ ॥

तत् । इत् । नु । अस्य । वृषभस्य । धेनोः । आ । नामऽभिः ।
ममिरे । सक्म्यम् । गोः । अन्यत्ऽअन्यत् । असुर्यम् । वसानाः ।
नि । मायिनः । ममिरे । रूपम् । अस्मिन् ॥ ७ ॥

येयजमानाः वृषभस्य अभिमतफलप्रदस्यास्येन्द्रस्यार्थं धेनोर्गोनामभिर्विश्वायुर्विश्वव्यचाइत्यादिभिरुपलक्षितांगांसक्म्यं संभजनार्हं तत्क्षीरादिकंहविः नुक्षिप्रमाममिरे आदुहन्ति

१ तै० सं० १. २. ७. ।

धातूनामनेकार्थत्वात् तेनचहविषायज्ञमनुष्ठाय देवभूयंप्राप्तास्तेकवयः अन्यदन्यन्नूतनम् असुर्यमसुराणाबलंवसानाआच्छादयन्तः अतएवमायिनः माययास्वीकृतकामरूपाः यद्वा मायिनः प्रज्ञावन्तःसन्तः अस्मिन्निन्द्रे रूपं स्वंस्वंरूपंनिममिरे इयत्तयापरिच्छिद्यनिदधुः ॥ इत्पूरणम् । ममिरे माङ्माने छिटिरूपं निघातः । सक्म्यं युजिरुचितिजांकुश्चेत्यत्रचकारस्यानुक्तसमुच्चयार्थत्वात्सचतेर्मक्प्रत्ययः कुत्वंच सचनंसक्मः तत्रभवइत्यर्थे भवेछन्दसीतियत् यतोनावइत्याद्युदात्तः । गोः एकादेशस्वरः । असुर्यम् असुरस्यस्वमित्यर्थे असुरस्यस्वमितियत् तित्स्वरितः । रूपं रूपरूपक्रियायांण्यन्तः खष्पशिल्पशष्परूपपर्पतल्पाइतिपप्रत्ययान्तत्वेनानिपातनात्पकारलोपोगुणत्वंच रूपयतिरूप्यतेवेतिरूपं प्रत्ययस्वरः ॥ ७ ॥

अथाष्टमी—

तदिन्न्वस्यसवितुर्नकिर्मेहिरण्ययीममतिंयामशिश्रेत् ।
आसुष्टुतीरोदसीविश्वमिन्वेअपीवयोषाजनिमानिवव्रे ॥ ८ ॥

तत् । इत् । नु । अस्य । सवितुः । नकिः । मे । हिरण्ययीम् ।
अमतिम् । याम् । अशिश्रेत् । आ । सुऽस्तुती । रोदसी इति ।
विश्वमिन्वे इति विश्वम्ऽइन्वे । अपिऽइव । योषा ।
जनिमानि । वव्रे ॥ ८ ॥

तत्तस्मात्सवितुः सर्वस्यजगतोन्तर्यामितयाप्रेरयितुः अस्येन्द्रस्य मेमम हिरण्ययीं सुवर्णमयीम् अमतिं कान्तिं नकिरित् कोवापरिच्छिनत्तिखलु यां मदीयांदीप्तिम् अशिश्रेत् यआश्रयति सुष्टुती शोभनयास्तुत्यास्तुतःसन् विश्वमिन्वे सर्वस्यसन्तर्पयित्र्यौ रोदसी द्यावापृथिव्यौ आवव्रे स्वकीयतयासर्वतोवृणुते तत्रदृष्टान्तः—अपीवयोषाजनिमानि यथा योषास्त्री जनिमानि जातान्यपत्यानि आवृणोति तद्वत् ॥ नुः पूरणः । नकिः निपातः । हिरण्ययीं हिरण्यस्यविकारार्थे मयड्वैतयोरितिमयट् ऋत्व्यवास्त्व्यमाध्वीहिरण्ययानिच्छन्दसीतिनिपातनान्मयटोमकारलोपः टित्वाट्टिड्ढाणञितिङीप्, प्रत्ययस्वरः । अमतिम् अमगत्यादिषु अमेरतिरित्यतिप्रत्ययः प्रत्ययस्वरः । अशिश्रेत् श्रयतेर्लेङि बहुलंछन्दसीतिशपःश्लुः यद्वृत्तयोगादनिघातः । सुष्टुती सुपांसुलुगितितृतीयायाः सवर्णदीर्घः । विश्वमिन्वे इविव्याप्तिप्रीणनयोरित्यस्मात्कर्मण्यण् इदित्वान्नुम् तत्पुरुषेकृतिबहुलमितिद्वितीयायाअलुक् कृदुत्तरपदस्वरः । योषा यौतेर्मिश्रीभावकर्मणः

वृतृवदिहनिकाषियुमुचिभ्यःसइतिसप्रत्ययः ग्रामादित्वादाद्युदात्तः । जानिमानि जनीप्रादुर्भावे हृजनिभ्यामिमनिन्निती मानिन्प्रत्ययोभूतकालेनित्त्वादाद्युदात्तः । वव्रे वृञ्वरणेइत्यस्य लिटिरूपम् ॥ ८ ॥

अथनवमी—

युवंप्रत्नस्यंसाधथोमहोयद्दैवींस्वस्तिःपरिणःस्यातम् ।
गोपाजिह्वस्यतस्थुषोविरूपाविश्वेपश्यन्तिमायिनःकृतानि ।९।

युवम् । प्रत्नस्य । साधथः । महः । यत् । दैवी । स्वस्तिः । परि । नः । स्यातम् । गोपाजिह्वस्य । तस्थुषः । विऽरूपा । विश्वे । पश्यन्ति । मायिनः । कृतानि ॥ ९ ॥

हेइन्द्रावरुणौ युवं युवां प्रत्नस्य पुरातनस्यस्तोतुः महस्तादृशंश्रेयः साधथः साधयथः कीदृशंतदित्यतआह—यद्दैवीस्वस्तिः यदिदंदेवसम्बन्धिश्रेयः स्वराज्यलक्षणं किञ्च युवांनोऽस्मान्परिपरितः स्यातं रक्षकौभवतं विश्वेसर्वे मायिनोदेवाः गोपाजिह्वस्य गोपाःस्त्रीजिह्वामाबिभीतेत्येतादृशीवाग्यस्यतथोक्तः तस्थुषः स्थिरतरस्येन्द्रस्य विरूपानानाविधानिवृत्रहननादीनिकृतानिकर्माणिपश्यन्ति एवमिन्द्रस्य विश्वरूपत्वमुक्तम् ॥ युवं युष्मच्छब्दस्य द्विवचने युवावौद्विवचनेइतियुवादेशः ङेप्रथमयोरमितिसुपोमादेशः । साधथः साधसंसिद्धावित्यस्यण्यन्तस्यलटिरूपं बहुलमन्यत्रापीतिणेर्लुक् निघातः । दैवी देवाद्यञञावित्यञ्प्रत्ययः ञित्स्वरः । स्यातम् अस्तेर्लिङिरूपम् । गोपाजिह्वस्य गुपूरक्षणेइत्यस्यायप्रत्ययान्तस्य क्विपि अतोलोपयलोपयोःकृतयोरूपम् गोपाइति बहुव्रीहौपूर्वपदस्वरः । तस्थुषः ष्ठागतिनिवृत्तावित्यस्य क्वसौ वस्वेकाजाद्धसामितिप्राप्तस्येटःसंप्रसारणं संप्रसारणाश्रयंचबलीयइति संप्रसारणस्यबलीयस्त्वान्निवृत्तिः वसोःसंप्रसारणं प्रत्ययस्वरः । पश्यन्ति दृशिरप्रेक्षणे निघातः ॥ ९ ॥

अथदशमी—

शुनंहुवेममघवानमिन्द्रमस्मिन्भरेनृतमंवाजसातौ ।
शृण्वन्तमुग्रमूतयेसमत्सुघ्नन्तंवृत्राणिसंजितंधनानाम् ।१०॥२४।

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजेऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ १० ॥ २४ ॥

व्याख्यातेयम् ॥ १० ॥

॥ इतितृतीयस्यद्वितीयेचतुर्विंशोवर्गः ॥२४॥

॥ इतितृतीयेमण्डलेतृतीयोऽनुवाकः ॥ ३ ॥

अथचतुर्थेऽनुवाकेपञ्चदशसूक्तानि तत्रेन्द्रंमतिरितिनवर्चंप्रथमंसूक्तम् वैश्वामित्रंत्रैष्टुभमैन्द्रम् इन्द्रंमतिर्नवेत्यनुक्रान्तम् सूक्तविनियोगोलिङ्गादवगन्तव्यः ।

तत्रप्रथमा—

इन्द्रं॑म॒तिर्हृ॒द आ व॒च्यमा॒नाच्छा॒पतिं॒स्तोम॑तष्टाजिगाति ।
याजागृ॑विर्वि॒दथे॑श॒स्यमा॒नेन्द्र॒यत्ते॒जाय॑तेवि॒द्धितस्य॑ ॥ १ ॥

इन्द्र॑म् । म॒तिः । हृ॒दः । आ । व॒च्यमा॑ना । अच्छ॑ । पति॑म् । स्तोम॑ऽतष्टा । जि॒गा॒ति॒ । या । जागृ॑विः । वि॒दथे॑ । श॒स्यमा॑ना । इन्द्र॑ । यत् । ते॒ । जाय॑ते । वि॒द्धि । तस्य॑ ॥१॥

विश्वामित्रःस्तौति—हेइन्द्रहृदोहृदयात्वच्यमानोच्यमानास्तोमतष्टास्तोमकारिभिस्तोतृभिःकृता मतिःस्तुतिःपतिंसर्वस्यजगतःस्वामिनम् इन्द्रं त्वामच्छाभिलक्ष्याजिगाति समन्ताद्गच्छतु याम- दीयामतिःजागृविःस्तु यस्यतवजागरणंकुर्वाणा विदथेयज्ञशस्यमानाभवति हेइन्द्र तेत्वदर्थंय- त्स्तोत्रंमत्तोजायतेतस्यतद्विद्धिजानीहि तस्येतिद्वितीयार्थेषष्ठी ॥ मतिःमन्त्रेवृषेत्यादिनाक्तिन्नुदा- त्तः । हृदः हृदयशब्दस्यपद्दन्नोमासित्यादिनाहृदादेशः ऊडिदमितिविभक्तेरुदात्तत्वम् । वच्यमाना वचपरिभाषणेइत्यस्यकर्मणियक् संप्रसारणाभावश्छान्दसः प्रत्ययस्वरः । स्तोमतष्टा तक्षूत्वक्षू तनूकरणेइत्यस्यकर्मणिनिष्ठा तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् । जिगाति गास्तुतौ छन्दसी- तिजुहोत्यादिः बहुलंछन्दसीत्यभ्यासस्येत्त्वं निघातः ॥ जायते जनीप्रादुर्भावेइत्यस्यलटिरूपं य- द्वृत्तयोगादनिघातः । विद्धि विदज्ञानेइत्यस्यलोटि हेर्हुझल्भ्योहेर्धिरितिध्यादेशः वाक्यभेदाद- निघातः ॥ १ ॥

अथद्वितीया–

दिवश्चिदापूर्व्याजायमानाविजागृविर्विदथेशस्यमाना ।
भद्रावस्त्राण्यर्जुनावसानासेयमस्मेसनजापित्र्याधीः ॥ २ ॥

दिवः । चित् । आ । पूर्व्या । जायमाना । वि । जागृविः ।
विदथे । शस्यमाना । भद्रा । वस्त्राणि । अर्जुना । वसाना ।
सा । इयम् । अस्मे इति । सनऽजा । पित्र्या । धीः ॥ २ ॥

हेइन्द्र दिवश्चित् द्योतमानात्सूर्यादपि पूर्व्या पूर्वेभवाउषःकालसंबन्धिन्याजायमानायास्तुतिलक्षणावाक् विभवति सेयंवाग्विदथेयज्ञेशस्यमाना जागृविःस्तुत्यस्यतवजागरणंकुर्वाणा भद्रा कल्याणानि अर्जुनाशुक्लवर्णानि वस्त्राणि योग्यतयातेजांसिवसाना अस्मे अस्माकं पित्र्या पितृक्रमागता अतएवसनजापुरातनीसतीधीस्तवस्तुतिर्भवति ॥ दिवः दिवेःक्विप् ऊडिदमितिविभक्तेरुदात्तत्वम् । अर्जुना अर्जेर्णिलुक्चेत्युनन् नित्स्वरः । सनजा जनेरन्येभ्योपिदृश्यतइतिडः प्रत्ययस्वरः । पित्र्या पितृशब्दात्तत आगतइत्यर्थेपितुर्यच्चेतियत्प्रत्ययः रीङृतइतिरीङादेशः यस्येतिलोपः यतोनावइत्याद्युदात्तत्वम् ॥ २ ॥

अथतृतीया–

यमाचिदत्रयमसूरसूतजिह्वायाअग्रंपतदाह्यस्थात् ।
वपूंषिजातामिथुनासचेतेतमोहनातपुषोबुध्नएता ॥ ३ ॥

यमा । चित् । अत्र । यमऽसूः । असूत । जिह्वायाः । अग्रम् ।
पतत् । आ । हि । अस्थात् । वपूंषि । जाता । मिथुना ।
सचेते इति । तमःऽहना । तपुषः । बुध्ने । आऽईता ॥ ३ ॥

प्रसङ्गादुषःकालंप्रशंसति–यमसूः यमौयमलौसूतइतियमसूरुषोभिमानिनीदेवता यमा यमलावश्विनौ अत्रोषःकाले असूत अश्विनोस्तत्रशस्यमानत्वात्तावश्विनौस्तोतुंममजिह्वाया अग्रं पतच्चञ्चलमस्थाद्धि तिष्ठतिखलु चित्पूरणः तमोहना तमसोहन्तारौ तपुषः तपत्यस्मिन्सूर्यइति तपुर्दिवसस्तस्यबुध्नेमूलेएताएतावागतौ मिथुना परस्परंसङ्गतौ तावश्विनौजातावुत्पन्नानिवपूंषि

उप्यन्तेनिधीयन्तेइतिवपूंषि उषःकालेक्रियमाणानिशस्त्रादीनिकर्माणिसचेते संगच्छतः । यमसूः षूङ्प्राणिगर्भविमोचनेइत्यस्याक्विप् कृदुत्तरपदस्वरः । असूत तस्यैवधातोर्लङि अदादित्वाच्छपोलुक् निघातः । पतत् पत्लृगतौ शतुर्लसार्वधातुकस्वरेधातुस्वरः । अस्थात् ष्ठागतिनिवृत्तौ लुङिरूपं हियोगादनिघातः । वपूंषि टुवपबीजसंताने अर्तिपृवपियजितनिधनितपिभ्योनिदित्युसिप्रत्ययः निच्चेत्युक्तत्वादाद्युदात्तः । सचेते षचसमवायेइत्यस्यलटिरूपम् तपूंषि । तपसन्तापे अर्तिपृवपीत्यादिनाउसिः । बुध्ने बन्धबन्धने बन्धेर्ब्रधिबुधीचेतिनक्प्रत्ययः ब्रधिबुधीएतावादेशौधातोः प्रत्ययस्वरः । एता इण्गतावित्यस्यकर्मणिनिष्ठा गतिरनन्तरइतिगतेःस्वरः ॥ ३ ॥

अथचतुर्थी–

नकिरेषांनिन्दितामर्त्येषुयेअस्माकंपितरोगोषुयोधाः ।
इन्द्रएषांदृंहितामाहिनावानुद्गोत्राणिससृजेदंसनावान् ॥ ४ ॥

नकिः । एषाम् । निन्दिता । मर्त्येषु । ये । अस्माकम् । पितरः । गोषु । योधाः । इन्द्रः । एषाम् । दृंहिता । माहिनऽवान् । उत् । गोत्राणि । ससृजे । दंसनाऽवान् ॥ ४ ॥

हेइन्द्र सत्रेप्रवृत्तानामस्माकंयेपितरोङ्गिरसः गोषुपणिभिरपहृतेषु योधाः योद्धारोवर्तन्ते तेषामेषांमर्त्येषुनिन्दितादूषकोनकिः नकश्चिदस्ति कुतइत्यतआह–महिनावान महिमोपेतोदंसनावान् वृत्रहननादिकर्मवानिन्द्रः एषामङ्गिरसां दृंहितादृंहितानि समृद्धानिगोत्राणिगवांवृन्दानि उत्ससृजे तेभ्योङ्गिरोभ्योददौ ॥ निन्दिता णिदिकुत्सायामित्यस्यतृचिरूपम् । मर्त्येषु वस्त्रादित्वात्स्वार्थिकोयत् यतोनावइत्याद्युदात्तत्वम् । योधाः युधसंप्रहारेइत्यस्यपचाद्यचिरूपम् । दृंहिता दृहदृहिवृद्धावित्यस्यनिष्ठायांरूपम् । माहिनावान् महेरिनण्चेतीनण्प्रत्ययः तदस्यास्तीतिमतुप् माहिनावानितितस्यसंज्ञा मतौबह्वचोनजिरादीनामितिसंहितायांदीर्घः । गोत्राणि गवांसमूहइत्यर्थे खलगोरथादित्यनुवृत्तौ इनित्रकट्यचश्चेतिगोशब्दात्त्रप्रत्ययः प्रत्ययस्वरः । ससृजे सृजविसर्गेइत्यस्यलिटिरूपम् ॥ ४ ॥

दशपेयेनिष्केवल्येनिविद्धानीयस्यपुरस्तात्सखाहयत्रेत्येषा सूत्रितञ्च–सखाहयत्रसखिभिर्नवग्वैरितिनिविद्धानीययोराद्यइति ।

अथपञ्चमी–

सखांहयत्रसखिभिर्नवंग्वैरभिज्वासत्वंभिर्गाअनुग्मन् ।
सत्यंतदिन्द्रोदशभिर्दशंग्वैःसूर्यंविवेदतमंसिक्षियन्तम्॥५॥२५।

सखा । ह । यत्रं । सखिंऽभिः । नवंऽग्वैः । अभिऽज्ञु । आ ।
सत्वंऽभिः । गाः । अनुऽग्मन् । सत्यम् । तत् । इन्द्रः । दशऽभिः
दशंऽग्वैः । सूर्यम् । विवेद । तमसि । क्षियन्तम् ॥ ५ ॥ २५ ॥

सखिभिःसमानख्यानैःसत्वभिरिन्द्रमभितःसीदद्भिःनवग्वैर्मेधातिथिप्रभृतयोङ्गिरसःकेचिन्नवमासान्सत्रमनुष्ठायफलंलेभिरे केचिद्दशमासाननुष्ठायेति तत्र येनवमासान्सत्रमनुष्ठायलब्धफलाउदतिष्ठन्तेनवग्वाःतैःसत्वभिरङ्गिरोभिःसखासमानख्यानइन्द्रः यत्रयस्मिन्बिलेपणिभिर्निरुद्धागाः आअभिलक्ष्य अभिज्वा अभिगतजानुकंयथाभवतितथाअनुग्मन् अनुगच्छन्निन्द्रः तत्तत्रबिलेदशग्वैः येदशमासान्सत्रमनुष्ठायलब्धफलाउदतिष्ठन्तेदशग्वाः तैर्दशभिर्दशसंख्याकैराङ्गिरोभिःसहितःसन् तमसिबिलवर्तिन्यन्धकारेक्षियन्तंनिवसन्तंसत्यंयथार्थप्रकाशंसूर्यंविवेदलेभेहेतिप्रसिद्ध्यर्थः ततोलब्धप्रकाशःसइन्द्रस्तागाआनीयाङ्गिरोभ्यः प्रादादितिभावः ॥ सखा ख्याप्रकथने समानेख्यश्चोदात्तइतिइण्प्रत्ययः ङिच्चसमानस्यछन्दसीतिसमानस्यसभावः उदात्तइत्युक्तत्वेनसामर्थ्यादुपपदस्येतिगम्यते आद्युदात्तः । नवग्वैः गमेरौणादिकोड्वप्रत्ययः बहुव्रीहौपूर्वपदस्वरः । अभिज्ञु प्रसंभ्यांजानुनोर्ज्ञुरितिविधीयमानोज्ञुरभेरुत्तरस्यव्यत्ययेनभवति । सत्वभिः षद्लृविशरणगत्यवसादनेष्वित्यस्मात्सर्वधातुभ्यो अर्थ्वैषद्युद्योस्तुट्चेतिवनिप्प्रत्ययः तुडागमः नित्त्वादाद्युदात्तः । अनुग्मन् गमेःशतरि बहुलंछन्दसीतिशपोलुक्क्ङिति गमहनेत्युपधालोपः प्रादिसमासःशतृस्वरः । विवेद विद्ज्ञानेइत्यस्माल्लिटिणलिरूपम् । क्षियन्तं क्षिनिवासगत्योरित्यस्यशतरिरूपम् ॥ ५ ॥

॥ इतितृतीयस्यद्वितीये पञ्चविंशोवर्गः ॥ २५ ॥

अथषष्ठी–

इन्द्रोमधुसंभृतमुस्रियायांपद्वद्विवेदशफवन्नमेगोः ।
गुहाहितंगुह्यंगूळ्हमप्सुहस्तेदधेदक्षिणेदक्षिणावान् ॥ ६ ॥

इन्द्रः । मधु । सम्ऽभृतम् । उस्रियायाम् । पत्ऽवत् । विवेद ।
शफऽवत् । नमे । गोः । गुहा । हितम् । गुह्यम् । गूळ्हम् ।
अप्ऽसु । हस्ते । दधे । दक्षिणे । दक्षिणऽवान् ॥ ६ ॥

इन्द्रः उस्रियायांक्षीरदध्यादिक्रमेणोत्स्राविण्यांभोगवत्यांगवि संभृतंसंपादितंमधु मधुरक्षीरादिवेदाज्ञासीत् ततस्तदर्थंपद्वत्पादयुक्तंशफवत्खुरोपेतंगोधनं विवेद लेभे कथंलब्धवानितितदुच्यते— नमेम्गोः गोरितिद्वितीयार्थेषष्ठी पणिनामकैरसुरैरपहृतांगांनमेआनीतामकरोत् तथादक्षिणावानौदार्यवान्समर्थः सइन्द्रः गुहा गुहायांहितंगुह्यं प्रच्छन्नम् अतएवाप्सु अन्तरिक्षेगूळ्हंगूढचारिणंमायिनमसुरंदक्षिणेहस्तेदधेदधार अग्रहीदित्यर्थः द्वितीयाष्टकेश्रुधीहवमित्यास्मिन्वर्गेगुहाहितमित्येतत्सम्यगभ्यधायि ॥ उस्रियायां प्रक्रियासम्यक्पूर्वमेवावादि । विवेद विदज्ञाने विद्लृलाभे एतयोर्लिटिरूपम् । शफवत् शफोस्यास्तीतिमतुप् ह्रस्वनुड्भ्यांमतुबिति मतुपउदात्तत्वम् । नमे णमुप्रह्वत्वेशब्दे इत्यस्यलिटिरूपं द्विर्वचनस्य च्छन्दसिविकल्पितत्वादत्र द्विर्वचनाभावः वाक्यभेदादनिघातः । गुह्यं गुहूसंवरणेइत्यस्माच्छन्दसि गुहिदुहिभ्योवेतिवक्तव्यमितिक्यप् कित्त्वादगुणः प्रत्ययस्यपित्त्वादनुदात्तत्वेधातुस्वरः । दधे दधातेर्लिटिरूपम् । दक्षिणावान् दक्षवृद्धौ द्रुदक्षिभ्यामिनन्नितीनन्प्रत्ययः तदस्यास्तीतिमतुप् संहितायामन्येषामपिदृश्यत इति पर्वपदस्यदीर्घः नित्स्वरः ॥ ६ ॥

अथसप्तमी—

ज्योतिर्वृणीततमसोविजानन्नारेस्यामदुरितादभीके ।
इमागिरःसोमपाःसोमवृद्धजुषस्वेन्द्रपुरुतमस्यकारोः ॥ ७ ॥

ज्योतिः । वृणीत । तमसः । विऽजानन् । आरे । स्याम ।
दुःऽहितात् । अभीके । इमाः । गिरः । सोमऽपाः । सोमऽवृद्ध ।
जुषस्व । इन्द्र । पुरुऽतमस्य । कारोः ॥ ७ ॥

तमसोरात्रेःसकाशाद्विजानन्विशेषेणजानन्प्रादुर्भवन्सूर्यात्मकइन्द्रःज्योतिर्वृणीत जगद्व्यवहारनिर्वाहकंप्रकाशंसमभक्त यद्वा तमसस्तमोरूपाद्वृत्रादेर्विजानन्प्रादुर्भवन् वृत्रंहत्वाप्रकाशमवृ-

णीत वयंदुरितात्पापादारेदूरेपापवर्जिताःसन्तः अभीकेभयरहितेस्थानेस्याममभवेम सोमपाः सोमस्यपात्तः अतएवसोमवृद्ध सोमपानेषुवृद्ध हेइन्द्र पुरुतमस्य पुरूनशत्रूंस्तामयातिग्लापयातिइतिपुरुतमः तादृशस्यतव कारोःस्तोत्रंकुर्वाणस्यऋत्विजः इमाः स्तुतिलक्षणागिरोवाचःजुषस्वसेवस्व ॥ वृणीत ॥ वृङ्संभक्तावित्यस्यलङिरूपम् । विजानन् ज्ञाअवबोधने विशेषेणज्ञानंप्रकाशः प्रत्ययस्वरः । अभीके नविद्यतेभीर्यस्मिन्ततःशेषाद्विभाषेतिकप्प्रत्ययः नञ्सुभ्यामित्यन्तोदात्तत्वेप्राप्तेकपिपूर्वस्यान्तोदात्तत्वम् । पुरुतमस्य तमुग्लाने इत्यस्माण्ण्यन्तात्पचाद्यचिपरादिश्छन्दसिबहुलमितिउत्तरपदाद्युदात्तत्वम् ॥ ७ ॥

अथाष्टमी-

ज्योतिर्यज्ञायरोदसीअनुष्यादारेस्याममदुरितस्यभूरेः ।
भूरिचिद्धितुजतोमर्त्यस्यसुपारासोवसवोबर्हणावत् ॥ ८ ॥

ज्योतिः । यज्ञाय । रोदसी इति । अनु । स्यात् । आरे । स्याम ।
दुःऽइतस्य । भूरेः । भूरि । चित् । हि । तुजतः । मर्त्यस्य ।
सुऽपारासः । वसवः । बर्हणाऽवत् ॥ ८ ॥

हेइन्द्र ज्योतिः जगत्प्रकाशकःसूर्यः यज्ञाग्निहोत्रादिकरणायरोदसी द्यावापृथिव्या वनुष्यात् अनुभवतु प्रकाशयतु वयंभूरेःप्रभूतस्यदुरितस्यपापस्यारेदूरेस्याममभवेम हेवसवः सर्वस्यवासयितारइन्द्रादयः सुपारासः सुपाराःशोभनपाराः स्तुत्याभिमुखीकर्तुंशक्यायूयंभूरि चिदतिप्रभूतंबर्हणावत्समृद्धियुक्तंधनंतुजतोभूरिप्रदस्यमर्त्यस्यप्रयच्छथ हिःपूरणः अत्रयोग्यक्रियाध्याहारः ॥ स्यात् अस्तेर्लिङिरूपं संहितायामनोरुत्तरस्यास्तेरुपसर्गप्रादुर्भ्यामस्तिर्यच्परइतिषत्वं निपात; । तुजतः तुजिपिजिलजिहिंसादाननिकेतनेषु शतुरनुमइतिविभक्तेरुदात्तत्वम् । बर्हणावत् बृहवृद्धावित्यस्यभावेऔणादिकोयुप्रत्ययः प्रत्ययस्वरः ॥ ८ ॥

अथनवमी-

शुनंहुवेममघवानमिन्द्रमस्मिन्भरेनृतमंवाजसातौ ।
शृण्वन्तमुग्रमूतयेसमत्सुघ्नन्तंवृत्राणिसंजितंधनानाम् ॥ ९ ॥ २६ ।

शुनम्। हुवेम । मघऽवानम्। इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ ९ ॥ २६ ॥

व्याख्यातेयम् ॥ ९ ॥

॥ इतितृतीयस्यद्वितीयेषड्विंशोवर्गः ॥ २६ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेणसायणाचार्यणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येतृतीयाष्टकेद्वितीयोध्यायः समाप्तः ॥ २ ॥

---

## ॥ श्रीगणेशायनमः ॥

यस्यनिःश्वसितंवेदायोवेदेभ्योऽखिलंजगत् । निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥ १ ॥

अथतृतीयाध्यायआरभ्यते इन्द्रंत्वेतिनवर्चंद्वितीयंसूक्तम् वैश्वामित्रंगायत्रमैन्द्रं तथाचानुक्रान्तम्—इन्द्रंत्वागायत्रंहीति । अग्निष्टोमेप्रातःसवनेब्राह्मणाच्छंसिशस्त्रेइदंसूक्तं सूत्रितञ्च—इन्द्रंत्वावृषभमुद्धेदभीतितिस्रइति । आद्याप्रातःसवनेब्राह्मणाच्छंसिनःप्रस्थितयाज्या सूत्रितंच—इन्द्रंत्वावृषभंमरुतोयस्येति ।

तत्रैषासूक्तेप्रथमा—

ॐ३ इन्द्रंत्वावृषभंवयंसुतेसोमेहवामहे।सपाहिमध्वोअन्धसः॥१॥

इन्द्रं । त्वा । वृषभम् । वयम् । सुते । सोमे ।
हवामहे । सः । पाहि । मध्वः । अन्धसः ॥ १ ॥

इन्दौ स्रवति सोमरसेरमतेक्रीडतीतीन्द्रः यद्वा इदंसर्वंजगत्साक्षाद्दर्शयतीतीन्द्रः तस्यसंबुद्धिः हेइन्द्र वृषभं कामनांवर्षकं त्वा त्वां सुते ग्रावभिरभिषुतेसोमे वयंहवामहे सोमपानार्थमाह्वयामः सत्वं मध्वः मदकरम् अन्धसः अन्नलक्षणंसोमंपाहि पिब इन्द्रशब्दंयास्कोबहुधा निर्विवेच—इन्द्रइरांदृणातीतिवेरांददातीतिवेरांदधातीतिवेरांदारयतीतिवेरांधारयतीतिवेन्दवेद्रवतीतिवेन्दौरमतइतिवेन्धेभूतानीतिवातद्यदेनंप्राणैःसमैन्धंस्तदिन्द्रस्येन्द्रत्वमिति[1] । यत्रयत्रयोऽर्थोनुगुणस्तत्रसोऽर्थःस्वीकार्यः इदंदर्शनादित्यौपमन्यवः इदंब्रह्मसाक्षात्पश्यतीतीन्द्रः तथाचारण्यकेश्रूयते—सएतमेवपुरुषंब्रह्मततममपश्यदिदमदर्शमिति[2] तस्मादिदंद्रोहवैनामतमिदंद्रंसन्तमिन्द्रइत्याचक्षतेपरोक्षेणपरोक्षप्रियाइवहिदेवाइति ॥ इन्द्र इदिपरमैश्वर्येइतिधातुः । स्वमाययाजगद्रूपत्वंपरमैश्वर्यम्, अनेनाभिप्रायेणश्रूयते—इन्द्रोमायाभिःपुरुरूपईयतइति[3] इन्दुशब्देउपपदे रमतेरन्येभ्योऽपिदृश्यतइतिडःपूर्वपदस्योकारलोपः इदिपरमैश्वर्यइत्यस्माद्दज्रेन्द्राग्रेत्यादिनारन्प्रत्ययान्तत्वेननिपातितः एवमेतानिनिर्वचनानिद्रष्टव्यानि आमन्त्रिताद्युदात्तत्वम् । हवामहे ह्वयतेर्बहुलंछन्दसीतिसंप्रसारणे लटिरूपम् । मधुः मधुशब्दःफलिपाटीत्यादिनागन्प्रत्ययान्तः आगमानुशासनस्यानित्यत्वान्नुमभावः संज्ञापूर्वकस्यविधेरनित्यत्वाद्गुणाभावः यणादेशः । अन्धसः अदेर्नुम्धश्चेत्यसुन् नित्स्वरः ॥ १ ॥

---

१ नि० १०।८। २ ऐ० आ० २.४। ३ ऋ. सं. ४. ७. ३३।

ब्राह्मणाच्छंसिनः प्रातःसवनेइन्द्रक्रतुविदमितिशस्त्रयाज्या सूत्रितञ्च—इन्द्रक्रतुविदंसुतमितियाज्येति ।

अथद्वितीया—

इन्द्रंक्रतुविदंसुतंसोमंहर्यपुरुष्टुत । पिबावृषस्वतातृपिम् ॥ २ ॥

इन्द्र । क्रतुऽविदम् । सुतम् । सोमम् । हर्य । पुरुऽस्तुत ।
पिब । आ । वृषस्व । ततृपिम् ॥ २ ॥

हेइन्द्र क्रतुविदं क्रतोःप्रज्ञायाःलम्भकं सुतमभिषुतमिमंसोमंहर्य पातुंकामयस्व हेपुरुष्टुत पुरुभिर्बहुभिःस्तुतेन्द्र तातृपिं तर्पकमाप्यायनकारिणमिमंसोमंपिब पीतमिमंसोममावृषस्व जठरेसिञ्च यथानाभेरधोनपतति तथा धारयेतिभावः ॥ हर्य हर्यगतिकान्त्योरित्यस्यलोटिरूपम् निघातः । पुरुष्टुत स्तुतस्तोमयोश्छन्दसीतिसंहितायांषत्वम् । वृषस्व वृषसेचनेइत्यस्यलोटिरूपम् आङुत्तरत्वान्निघातः । तातृपिं तृपप्रीणनेइत्यस्माच्छन्दसि सदादिभ्योदर्शनादितिकिन् तस्यलिड्वद्भावाद्द्विर्वचनादि संहितायामन्येषामपीत्यभ्यासस्यदीर्घः नित्त्वादाद्युदात्तः ॥ २ ॥

अथतृतीया—

इन्द्रप्रणोधितावानंयज्ञंविश्वेभिर्देवेभिः । तिरःस्तवानविश्पते ॥ ३ ॥

इन्द्र । प्र । नः । धितऽवानम् । यज्ञम् । विश्वेभिः ।
देवेभिः । तिरः । स्तवान । विश्पते ॥ ३ ॥

हेस्तवान स्तोतृभिःस्तूयमान विश्पते विशांमरुतांपते हेइन्द्र विश्वेभिर्देवेभिः सर्वैर्यजनीयैर्देवैः सहितस्त्वं धितावानं वन्यतेसंभज्यइतिवानंहविः धितंनिहितंहविर्यस्यतं संभृतहविष्कमित्यर्थः । अस्मदीयमिमंयज्ञंप्रतिरः प्रकर्षेणवर्धय हविःस्वीकरणेनसंपूर्णंकुर्वितिभावः ॥ णः उपसर्गाद्बहुलमितिसंहितायांणत्वम् । धितावानं डुधाञ्धारणपोषणयोरित्यस्मात् निष्ठा बहुव्रीहौपूर्वपदस्वरः । तिरः तरतेर्व्यत्ययेनशः प्रत्ययस्वरः । स्तवान ष्टुञ्स्तुतौ सम्यानच् स्तुवइत्युपपदाभावेपि कर्मण्यानच्प्रत्ययः आमन्त्रितत्वान्निघातः ॥ ३ ॥

अथचतुर्थी—

इन्द्रसोमाः सुता इमेतवप्रयन्तिसत्पते । क्षयंचन्द्रासइन्दवः ॥४॥

इन्द्र । सोमाः । सुताः । इमे । तव । प्र । यन्ति ।
सत्ऽपते । क्षयम् । चन्द्रासः । इन्दवः ॥ ४ ॥

हेसत्पते इन्द्र चन्द्रासःआह्लादयितारः इन्दवोदीप्ताः सुताअभिषुताइमे अस्माभिर्दत्ताः सोमाः क्षयं क्षियन्तिनिवसन्त्यन्नादीन्यत्रेतिक्षयोजठरं प्रयन्ति प्रकर्षेणगच्छन्ति तान्धारयेतिभावः ॥ क्षयं क्षिनिवासगत्योरित्यस्मादधिकरणेघप्रत्ययः प्रत्ययस्वरेणान्तोदात्तत्वेप्राप्ते क्षयोनिवासेइत्याद्युदात्तत्वम् । चन्द्रासः चदिआह्लादनेदीप्तौच अस्मात्स्फायितञ्चीत्यादिनारक्प्रत्ययः । आज्जसेरसुगित्यसुक् प्रत्ययस्वरः । इन्दवः उन्देरिच्चादेरित्युप्रत्ययः निदित्यनुवृत्तेराद्युदात्तः ॥ ४ ॥

अथपञ्चमी—

दधिष्वाजठरेसुतंसोममिन्द्रवरेण्यम् । तवद्युक्षासइन्दवः ॥५।१॥

दधिष्व । जठरे । सुतम् । सोमम् । इन्द्र । वरेण्यम् ।
तव । द्युक्षासः । इन्दवः ॥ ५ ॥ १ ॥

हेइन्द्र वरेण्यं सर्वैर्वरणीयं सुतमभिषुतंसोमं जठरेदधिष्व धारय इन्दवोदीप्ताइमेसोमाः तव द्युक्षासः दिविक्षियन्तिवसन्तीतिद्युक्षासः अतस्त्वंतान्धारयेतिभावः ॥ दधिष्व दधातेर्लोटिरूपम् आगमाअनुदात्ताइतीटोनुदात्तत्वात्प्रत्ययस्वरः । वरेण्यं वृङ्संभक्तौ वृञएण्यप्रत्ययः वृषादित्वादाद्युदात्तः । क्षियतेरन्येभ्योपिदृश्यतइतिडप्रत्ययः कृदुत्तरपदस्वरः ॥ ५ ॥

॥ इतितृतीयस्यतृतीयेप्रथमोवर्गः ॥ १ ॥

गिर्वणःपाहिनःसुतंमधोर्धाराभिरज्यसे । इन्द्रत्वादातमिद्यशः ॥६॥

गिर्वणः । पाहि । नः । सुतम् । मधोः । धाराभिः ।
अज्यसे । इन्द्र । त्वाऽदातम् । इत् । यशः ॥ ६ ॥

गिर्वणःगीर्भिर्वननीय तथाचयास्कः—गिर्वणोदेवोभवतिगीर्भिरेनंवनयन्तीति[1] । तादृशइन्द्र नोऽस्मदीयं सुतमभिषुतमिमंसोमंपाहि पिब यतोमधोर्मदकरस्यसोमस्यधाराभिरज्यसे सिच्यसे हेइन्द्र त्वादातमित् त्वयाशोधितंविशदीकृतमेवयशोन्नमस्मासुभवति ॥ गिर्वणः वनसंभक्तावित्यस्मादसुन् गिरउपधायादीर्घाभावश्छान्दसः आमन्त्रितस्येतिषाष्ठिकमाद्युदात्तत्वम् । पाहि पापानेइत्यस्माल्लोटि-रूपम् आमन्त्रितस्याविद्यमानत्वेनपादादित्वादनिघातः प्रत्ययस्वरः । त्वादातं दैप् शोधने सत्यपिपकारे नानुबन्धकृतमनेजन्तत्वमित्येजन्तएवायं ततआदेचइत्यात्वम् अस्मात्कर्मणिक्तः दाधाघ्वदाबित्यत्रादाबितिप्रतिषेधेन घुसंज्ञायाअभावाद्दोदद्घोरितिददादेशोनभवति । त्वेति युष्मच्छब्द-स्यतृतीयाकर्तृकरणेकृताबहुलमितिसमासः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरः । यशः अशूव्याप्तौ अशेर्युट्चेत्यसुन् तत्सन्नियोगेनधातोर्युडागमः नित्त्वादाद्युदात्तः ॥ ६ ॥

अथसप्तमी—

अभिद्युम्नानिवनिनइन्द्रंसचन्तेअक्षिता ।
पीत्वीसोमस्यवावृधे ॥ ७ ॥

अभि । द्युम्नानि । वनिनः । इन्द्रम् । सचन्ते । अक्षिता ।
पीत्वी । सोमस्य । वृवृधे ॥ ७ ॥

वनिनः वनंदेवताविषयंसंभजनमस्यास्तीतिवनी तस्य देवान्संभजमानस्ययजमानस्यद्युम्नानि द्योतमानानि अक्षिता क्षयरहितानि संपूर्णानि सोमादीनिहवींषिइन्द्रमभि अभितःसचन्ते समवयन्ति तेषुमध्येसोमस्यपीत्वी सोमंपीत्वावावृधे सइन्द्रोवर्धते ॥ वनिनः अतइनिठनावितीनिप्रत्ययः तस्यस्वरः । सचन्ते षचसमवायेइत्यस्यलटिरूपम् । अक्षिता क्षिक्षये इत्यस्यनिष्ठा अत्रण्यदर्थेइतिदीर्घाभावः तस्मादेवक्षियोदीर्घादितिनिष्ठानत्वाभावः नञासमासेतस्यस्वरः । पीत्वी पापानेइत्यस्मात्क्त्वाप्रत्ययस्य स्नात्व्यादयश्चेतिनिपातनात्त्वीइत्यादेशः प्रत्ययस्वरः घुमास्थागापेत्यादिनाईत्वम् ॥ ७ ॥

---

1 नि० ६. १४.

अथाष्टमी–

अर्वावतोनआगहिपरावतश्चवृत्रहन् ।
इमाजुंषस्वनोगिरः ॥ ८ ॥

अर्वाऽवतः । नः । आ । गहि । पराऽवतः । च ।
वृत्रऽहन् । इमाः । जुषस्व । नः । गिरः ॥ ८ ॥

हेवृत्रहन्निन्द्र अर्वावतः अर्वाचीनात्समीपाद्देशात्परावतोतिदूराद्देशाद्वा नोऽस्मानभिलक्ष्य आगहि आगच्छ आगत्यच नोऽस्मदीयाइमाःस्तुतिलक्षणागिरोवाचोजुषस्व सेवस्व ॥ परावतः उपसर्गाच्छन्दसिधात्वर्थेइतिवतिः प्रत्ययस्वरः ॥ ८ ॥

अथनवमी–

यदन्तरापरावतमर्वावतंचहूयसे ।
इन्द्रेहततआगहि ॥ ९ ॥ २ ॥

यत् । अन्तरा । पराऽवतम् । अर्वाऽवतम् । च ।
हूयसे । इन्द्र । इह । ततः । आ । गहि ॥ ९ ॥ २ ॥

हेइन्द्र यद्यस्मिन्परावतमतिविप्रकृष्टस्यदेशस्य अर्वावतं सन्निकृष्टस्यदेशस्यचान्तरा तयोर्मध्यदेशेहूयसे सम्यगिज्यसे ततस्तस्माद्देशादिहास्मिन्यज्ञेआगहि सोमपानार्थमागच्छ ॥ परावतम् अर्वावतम् अन्तरान्तरेणयुक्तेइतिद्वितीया ततःपञ्चम्यास्तासिल् लित्स्वरः ॥ ९ ॥

॥ इतितृतीयस्यतृतीयेद्वितीयोवर्गः ॥ २ ॥

आतूनइन्द्रेतिनवर्चंतृतीयंसूक्तं वैश्वामित्रंगायत्रमैन्द्रम् आतूनइत्यनुक्रान्तम्–अतिरात्रे द्वितीयेपर्यायेब्राह्मणाच्छंसिशस्त्रे एतदादिकेद्वेसूक्ते सूत्रितश्च–आतूनइन्द्रमद्र्यगितिसूक्तेइति ।

तस्मिन्सूक्तेप्रथमा–

आतूनइन्द्रमद्र्यग्घुवानःसोमपीतये ।
हरिभ्यांयाह्यद्रिवः ॥ १ ॥

आ । तु । नः । इन्द्र । मद्र्यक् । हुवानः । सोमऽपीतये ।
हरिऽभ्याम् । याहि । अद्रिऽवः ॥ १ ॥

अद्रिवः वज्रिन् हेइन्द्र हुवानः होनृभिराहूयमानस्त्वं मद्र्यक् मदभिमुखःसन्नोस्मदीयेयज्ञे सोमपीतये सोमपानार्थं हरिभ्यामश्वाभ्यांसह तु क्षिप्रमायाहि ॥ तू ऋचितुनुघेत्यादिनासंहितायांदीर्घः । मद्र्यक् मामञ्चतीति ऋत्विग्दधृगित्यादिनाक्विन् प्रत्ययोत्तरपदयोश्चेत्यस्मच्छब्दस्यैकवचने मपर्यन्तस्यमादेशः विष्वग्देवयोश्चटेरद्र्यञ्चतौवप्रत्ययेइतिटेरद्रिइत्यादेशः अद्रिसध्र्योरन्तोदात्तत्वनिपातनंकृत्स्वरनिवृत्त्यर्थम् इतिवचनादद्र्यादेशःअन्तोदात्तः यणादेशेकृते उदात्तस्वरितयोर्यणइतियणःस्वरितत्वं क्विन्प्रत्ययस्यकुरितिकुत्वम् । सोमपीतये दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् । अद्रिवः मतुवसोरितिरुत्वम् आमन्त्रितत्वान्निघातः ॥ १ ॥

अथद्वितीया—

सत्तोहोतानऋत्वियस्तिस्तिरेबर्हिरानुषक् । अयुञ्जन्प्रातरद्रयः ॥२॥

सत्तः । होता । नः । ऋत्वियः । तिस्तिरे । बर्हिः ।
आनुषक् । अयुञ्जन् । प्रातः । अद्रयः ॥ २ ॥

हेइन्द्र नोऽस्मदीयेयज्ञे होता ऋत्विक् तवाह्वानार्थम् ऋत्वियः प्राप्तकालःसन् सत्तो निषण्णोवर्तते तथा बर्हिःआनुषक् अनुषक्तंपरस्परसंबद्धंयथाभवतितथातिस्तिरे हविःष्वासन्नेषुस्तीर्णमभूत् तथा प्रातः प्रातःसवने सोमाभिषवार्थमद्रयोग्रावाणः अयुञ्जन् परस्परंसंगताअभूवन् तस्मात्सोमपानार्थंत्वमागच्छेतिभावः ॥ सत्तः षद्लृविशरणादिष्वित्यस्माद्गत्यर्थाकर्मकश्लिषेत्यादिनाकर्तरिक्तः सर्वेविधीनांछन्दसिविकल्पितत्वादत्र निष्ठातकारस्यनत्वाभावः । ऋत्वियः ऋतुशब्दाच्छन्दसिघसितिघस्प्रत्ययः घस्येयादेशः सितीतिपदसंज्ञायामोर्गुणइतिभसंज्ञाधीनोगुणोनभवति यणादेशः प्रत्ययस्वरः । तिस्तिरे स्तृञ्आच्छादनेइत्यस्य कर्मणिलिटि ऋतइद्धातोरितीत्वं द्विर्वचने शर्पूर्वाःखयइतितकारशेषः लिटस्तझयोरेशिरेजितितप्रत्ययस्यैशित्यादेशः पादादित्वादनिघातः प्रत्ययस्वरः । आनुषक् षञ्जसङ्गे क्विप् अनिदितामितिनलोपः आङ्न्वोरुपसर्गयोःप्राक्प्रयोगः गतिसमासः कृदुत्तरपदस्वरः । अयुञ्जन् युजिर्योगे इत्यस्यलुङि इरितोवेत्यङादेशः बहुलंछन्दसीतिरुडागमः पादादित्वादनिघातः अडागमस्वरः ॥ २ ॥

अथतृतीया—

इमाब्रह्मंब्रह्मवाहःक्रियन्तआबर्हिःसीद। वीहिशूरपुरोळाशम्॥ ३ ॥

इमा । ब्रह्म । ब्रह्मऽवाहः । क्रियन्ते । आ । बर्हिः ।
सीद । वीहि । शूर । पुरोळाशम् ॥ ३ ॥

ब्रह्माणिस्तोत्राणिस्तुत्यतयावहतीतिब्रह्मवाहः ब्रह्मणास्तोत्रेणप्राप्यतइतिवा हेब्रह्मवाह इन्द्र तुभ्यम्इमा इमानि ब्रह्म ब्रह्माणिस्तोत्राणि अस्माभिःक्रियन्ते अतःबर्हिरासीद स्तुत्यतयाबर्हिषियज्ञे उपविश हेशूर समर्थेन्द्र अस्माभिर्दीयमानमिमंपुरोळाशं पुरोडाशाख्यंहविःवीहि भक्षय ॥ ब्रह्मवाहः वहप्रापणेइत्यस्माद्ब्रहिहाधाञ्भ्यश्छन्दसीत्यसुन् णिदित्यनुवृत्तेरुपधावृद्धिः आमन्त्रितत्वान्निघातः। क्रियन्तेकरोतेःकर्मणियक् रिङ्शयग्लिङ्क्षिवितिरिङादेशः प्रत्ययस्वरः पादादित्वादनिघातः। बर्हिः कालाध्वनोरत्यन्तसंयोगेद्वितीया। वीहि वीकान्त्यादिषु लोटिरूपं हेर्ङित्त्वादुदात्तः। पुरोडाशं दाशृदाने-इत्यस्मात्पुरस्पूर्वान्मन्त्रेश्वेतवहोक्थशस्पुरोडाशोण्विन् पुरोडाशेतिनिपातनाद्दकारस्यडकारःततोडस्तुनछन्दसिसर्वेषांविधीनांवैकल्पिकत्वात्कृदुत्तरपदस्वरः ॥ ३ ॥

अथचतुर्थी—

रारन्धिसवनेषुणएषुस्तोमेषुवृत्रहन्। उक्थेष्विन्द्रगिर्वणः ॥ ४ ॥

ररन्धि । सवनेषु । नः । एषु । स्तोमेषु । वृत्रऽहन् ।
उक्थेषु । इन्द्र । गिर्वणः ॥ ४ ॥

हेगिर्वणः गीर्भिःस्तुतिभिर्वननीय वृत्रहन् वृत्रस्यहन्तः हेइन्द्र नोऽस्माकंसंबन्धिषुत्रिषुसवनेषु एषुक्रियमाणेषुस्तोमेषुस्तोत्रेषु उक्थेषु शस्त्रेषुचरारन्धि रमस्व ॥ ररन्धि रमतेर्लोटि बहुलंछन्दसी-तिशपःश्लुःछन्दस्युभयथेतिहेरार्धधातुकत्वेनाङित्त्वादङितश्चेतिहेर्धिः? । सवनेषु सूयते सोमोयेष्विति अधिकरणेसुनोतेर्ल्युट् लित्स्वरः । णः नसोनकारस्य नश्चधातुस्थोरुषुभ्यइति संहितायांणत्वम् ॥ ४ ॥

अथपञ्चमी—

मतयःसोमपामुरुंरिहन्तिशवसस्पतिम्। इन्द्रंवत्संनमातरः ॥५॥ ३

म॒तयः॑ । सो॒म॒ऽपाम् । उ॒रुम् । रि॒हन्ति॑ । शव॑सः ।
पति॑म् । इन्द्र॑म् । व॒त्सम् । न । मा॒तरः॑ ॥ ५ ॥ ३ ॥

हेइन्द्र मतयोऽस्माभिःक्रियमाणाःस्तुतयः उरुंमहान्तंसोमपां सोमस्यपातारंशवसेबलस्यपतिमिन्द्रत्वां रिहन्ति लिहन्ति तत्रदृष्टान्तः—वत्संन यथावत्संमातरोधेनवोलिहन्तितद्वत् ॥ मतयः मनज्ञानेइत्यस्मात्कर्मणि मन्त्रेवृषेत्यादिनाक्तिन्नुदात्तः । उरुम् ऊर्णुञ्आच्छादनेइत्यस्मान्महत्यर्थेगम्यमाने महतिह्रस्वश्चेतिकुप्रत्ययः धातोर्ह्रस्वश्च प्रत्ययस्वरः । रिहन्ति लिहआस्वादनेइत्यस्माल्लटिरूपम् रलयोरभेदः प्रत्ययस्वरः । शवसस्पतिमितिसंहितायांषष्ठ्याः पतिपुत्रपृष्ठेत्यादिनाविसर्जनीयस्यसत्वम् । वत्सं वदव्यक्तायांवाचि अस्माद्वृतृवदिहनीत्यादिनासप्रत्ययः वदत्यभीक्ष्णंमातरमितिवत्सोगोबालः प्रत्ययस्वरः ॥ ५ ॥

॥ इतितृतीयस्यतृतीयेतृतीयोवर्गः ॥ ३ ॥

अथषष्ठी—

समन्द॑स्वा॒ह्यन्ध॑सो॒राध॑सेत॒न्वा॑म॒हे । नस्तो॒तार॑न्नि॒दे क॑रः ॥ ६ ॥

सः । म॒न्द॒स्व॒ । हि । अन्ध॑सः । राध॑से । त॒न्वा॑ ।
म॒हे । न । स्तो॒तार॑म् । नि॒दे । क॒रः ॥ ६ ॥

हेइन्द्र सतथाविधस्त्वं महे महते राधसे धनाय अन्धसःअस्माभिर्दीयमानस्यसोमस्य पानेन तन्वाशरीरेणसहमन्दस्व हृष्टोभव हिरत्रसमुच्चयार्थः किञ्च त्वंस्तोतारंमांनिदेनिन्दायै विषयभूतं नकरः माकार्षीः ॥ मन्दस्व मदिस्तुत्यादिष्वित्यस्यलोटिरूपं हिचेतिनिघातप्रतिषेधेनभवितव्यमितिचेन्न तत्राप्रातिलोम्येइतिवर्तते अत्रहेःसमुच्चयार्थत्वान्निघातः । तन्वा उदात्तस्वरितयोरितिस्वरितत्वम् । महे तकारलोपश्छान्दसः बृहन्महतोरुपसंख्यानमितिविभक्तेरुदात्तत्वम् । निदे णिदिकुत्सायामित्यस्मात्संपदादिलक्षणोभावेक्विप् आगमानुशासनस्यानित्यत्वान्नुमभावः सावेकाचइतिविभक्तेरुदात्तत्वम् । करः करोतेर्लुङि च्लेः कृमृदृरुहिभ्यश्छन्दसीत्यङादेशः निघातः ॥ ६ ॥

अथसप्तमी—

व॒यमि॑न्द्रत्वा॒यवो॑ह॒विष्म॑न्तोजरामहे । उ॒तत्वम॑स्म॒युर्व॑सो ॥ ७ ॥

वयम् । इन्द्र । त्वाऽयवः । हविष्मन्तः । जरामहे ।
उत । त्वम् । अस्मऽयुः । वसो इति ॥ ७ ॥

हेइन्द्र त्वायवोयज्ञार्थंत्वामात्मनइच्छन्तः त्वत्कामाःसन्तोहविष्मन्तः संभृतहविष्कावयं जरामहे त्वांस्तुमः हेवसो सर्वस्यवासक इन्द्र उत त्वमपि अस्मयुःहविःस्वीकरणार्थमस्माना-त्मनइच्छन्भव ॥ त्वायवः त्वामिच्छन्तीत्यर्थेसुपआत्मनःक्यच् प्रत्ययोत्तरपदयोश्चेतिमपर्यन्तस्य त्वादेशः क्याच्छन्दसीत्युप्रत्ययः त्वद्यवइतिप्राप्ते युष्मदस्मदोरनादेशे इतिअविभक्तावपि हला-दौव्यत्ययेनात्वं प्रत्ययस्वरः । हविष्मन्तः तसौमत्वर्थेइतिभसंज्ञायांसकारस्यरुत्वाभावः स्वरविधौव्य-ञ्जनमविद्यमानवदितिपरिभाषानाश्रयणान्मतुपउदात्तताभावः सिप्रत्ययस्वरः । जरामहे जरतिःस्तु-तिकर्मेतियास्कः । अस्मयुः अस्मानिच्छतीत्यर्थेसुपःक्यच् तस्मादुप्रत्ययः पूर्वपदान्तलोपच्छान्दसः प्रत्ययस्वरः ॥ ७ ॥

अथाष्टमी–

मारेअस्मद्विमुमुचोहरिप्रियार्वाङ्याहि । इन्द्रस्वधावोमत्स्वेह ॥ ८ ॥

मा । आरे । अस्मत् । वि । मुमुचः । हरिऽप्रिय । अर्वाङ् ।
याहि । इन्द्र । स्वधाऽवः । मत्स्व । इह ॥ ८ ॥

हेहरिप्रिय हरीअश्वौप्रियौयस्यतादृश हेइन्द्र अस्मदस्मत्तःआरेदूरेरथेयोजितावश्वौ मावि-मुमुचः माविमोचय ताभ्यामुपेतएवार्वाङस्मदाभिमुख्येनयाहि आगच्छ हेस्वधावः सोमलक्ष-णान्नवन् हेइन्द्र इहास्मिन्देवयजने मत्स्व सोमंपीत्वाहृष्टोभव ॥ अस्मत् अस्मच्छब्दस्य पञ्चमी-बहुवचनस्य पञ्चम्याअदित्यदादेशः । मुमुचः मुच्लृमोक्षणे इत्यस्यण्यन्तस्य छान्दसेलुङिरूपम् अभ्यासस्यदीर्घाभावच्छान्दसः नमाङ्योगे इत्यडभावः निघातः । हरिप्रिय आमन्त्रितस्यपादादि-त्वात्षाष्ठिकमाद्युदात्तत्वम् । मत्स्व मदिस्तुत्यादिष्वित्यस्यलोटि बहुलंछन्दसीतिविकरणस्यलुक् आमन्त्रितस्याविद्यमानवत्त्वेनपादादित्वादनिघातः ॥ ८ ॥

अथनवमी–

अर्वाञ्चंत्वासुखेरथेवहतामिन्द्रकेशिना । घृतस्नूबर्हिरासदे ॥ ९ ॥

१ नि० १०. ८. ।

अर्वाञ्चम् । त्वा । सुऽखे । रथे । वहताम् । इन्द्र । केशिना । घृतस्नूइतिघृतऽस्नू । बर्हिः । आऽसदे ॥ ९ ॥

हेइन्द्र घृतस्नु श्रमजनितजलप्रस्रवणयुक्तौ केशिना केशिनौ स्कन्धप्रदेशेलम्बमानकेशयुक्तौ हरी आसदे आसदनीयंबर्हिरभिलक्ष्य सुखे सुखकरेरथे अर्वाञ्चमस्मदभिमुखं त्वा त्वां वहताम् ॥ अर्वाञ्चम् अञ्चतेःक्विनि उगिदचामितिनुम् । वहतां वहेर्लोटिरूपं तसोलसार्वधातुकस्वरेकृतेधातुस्वरः । आसदे सदेःकृत्यार्थेकेन्प्रत्ययः नित्स्वरः कृदुत्तरपदप्रकृतिस्वरः ॥ ९ ॥

॥ इतितृतीयस्यद्वितीयेचतुर्थो वर्गः ॥ ४ ॥

उपनःसुतमितिनवर्चंचतुर्थंसूक्तं वैश्वामित्रं गायत्रमैन्द्रम् उपनइत्यनुक्रमणिका । पूर्वसूक्तेनसहोक्तोविनियोगः ।

तत्रप्रथमा—

उप॑नः॒सु॒तमाग॑हि॒सोम॑मिन्द्र॒गवा॑शिरम् । हरि॑भ्यां॒यस्ते॑अस्म॒युः ॥१

उप । नः । सुतम् । आ । गहि । सोमम् । इन्द्र । गोऽआशिरम् । हरिऽभ्याम् । यः । ते । अस्मऽयुः ॥ १ ॥

हेइन्द्र नोऽस्मदीयंसुतमभिषुतं गवाशिरं पयसामिश्रितंसोमंप्रतिउपागहि समीपेआगच्छ यतः हरिभ्यामश्वाभ्यांयुक्तस्तव रथोस्मयुरस्मान्कामयमानोवर्तते ॥ गवाशिरम् आङ्पूर्वस्यशृणातेःक्विपि अपस्पृधेथामानृचुरित्यादिनाशिरइत्यादेशः बहुव्रीहौपूर्वपदस्वरः ॥ १ ॥

अथद्वितीया—

तमि॑न्द्र॒मद॒माग॑हि॒बर्हि॒ःष्ठांग्राव॑भिःसु॒तम् । कु॒विन्न्व॑स्यतृ॒प्णव॑ः ॥२॥

तम् । इन्द्र । मदम् । आ । गहि । बर्हिःऽस्थाम् । ग्रावऽभिः । सुतम् । कुवित् । नु । अस्य । तृप्णवः ॥ २ ॥

हेइन्द्र ग्रावभिःसुतमभिषुतं बर्हिष्ठां बर्हिषिस्थितं मदं मद्यतेऽनेनेतिमदःसोमः तमिमंसोममागह्यागच्छ कुवित् प्रभूतंयथाभवतितथा अस्यसोमस्यपाने नुक्षिप्रंतृप्णवः तृप्तोभव ॥

मदं मदीहर्षे मदोनुपसर्गेइत्यप्प्रत्ययः तस्यपित्त्वादनुदात्तत्वेधातुस्वरः । बर्हिष्ठां ष्ठागतिनिवृत्तौ क्विप् संहितायांपूर्वपदसकारस्यादेशप्रत्यययोरितिषत्वंष्टुत्वं कृदुत्तरपदस्वरः । तृप्णवः तृपप्रीणनेइत्यस्य लेट्यडागमः कुविद्योगादनिघातः क्षुभ्नादिषुनृनमनतृप्नोतीतिपठितं तथापि सर्वविधीनांछन्दसिविकल्पितत्वादत्रणत्वप्रतिषेधोनभवति प्रत्ययस्वरः ॥ २ ॥

अथतृतीया–

इन्द्रमि॒त्थागिरो॒ममाच्छा॑गुरिषि॒ताइ॒तः । आ॒वृ॒तेसोम॑पीतये ॥३॥

इन्द्रम् । इ॒त्था । गिरः॑ । मम॑ । अच्छ॑ । अ॒गुः॒ । इ॒षि॒ताः ।
इ॒तः । आ॒ऽवृते॑ । सोम॑ऽपीतये ॥ ३ ॥

हेइन्द्र इषितास्त्वदर्थंप्रेरिताइत्था इत्थमनेनप्रकारेणोच्यमानाममगिरः स्तुतिलक्षणावाचः इन्द्रंत्वामितोस्माद्देवयजनदेशात् अच्छागुः आभिमुख्येनगच्छन्तु किमर्थं सोमपीतये सोमपानार्थम् आवृतेत्वामावर्तयितुम् ॥ इत्था इदंशब्दात्थाहेतौचच्छन्दसीतिव्यत्ययेनथाप्रत्ययः इदमएतौरथोरितिइदित्यादेशः प्रत्ययस्वरः । अच्छ अच्छगत्यर्थवदेष्वितिगतिसंज्ञा । अगुः इणूगतावित्यस्य लुङिरूपं निघातः ॥ ३ ॥

अथचतुर्थी–

इन्द्रं॒सोम॑स्यपी॒तये॒स्तोमै॑रि॒हह॑वामहे । उ॒क्थेभिः॑कु॒विदा॒गम॑त् ॥४॥

इन्द्रम् । सोम॑स्य । पी॒तये॑ । स्तोमैः॑ । इ॒ह । ह॒वा॒म॒हे॒ । उ॒क्थेभिः॑ ।
कु॒वित् । आ॒ऽगम॑त् ॥ ४ ॥

स्तोमैस्त्रिवृत्पञ्चदशादिस्तोमसाध्यैःस्तोत्रैःउक्थेभिःउक्थैःशस्त्रैश्च इहकर्मणिसोमस्यपीतयेसोमपानार्थमिन्द्रंहवामहे वयमाह्वयामः कुविद्बहुवारम्आहूतःसइन्द्रःआगमत् यज्ञंप्रत्यागच्छतु ॥ आगमत् गमेर्लेट्यडागमः आगमाअनुदात्ताइत्यटोनुदात्तत्वाद्धातुस्वरः तिङिचोदात्तवतीतिगतेर्निघातः कुविद्योगादनिघातः ॥ ४ ॥

अथपञ्चमी–

इन्द्र॒सोमाः॑सु॒ताइ॒मेतान्द॑धिष्वशतक्रतो । ज॒ठरे॑वाजिनीवसो ५॥५

इन्द्र । सोमाः । सुताः । इमे । तान् । दधिष्व । शतक्रतोइतिशतऽक्रतो । जठरे । वाजिनीवसो इति वाजिनीऽवसो ॥ ५ ॥ ५ ॥

हेशतक्रतो इन्द्र इमे सोमाःसुताः ग्रावभिस्त्वदर्थमभिषुताः हेवाजिनीवसो अन्नधन यद्वा वाजोन्नमागुफलत्वेनास्तीतिवाजिन्यःक्रियाः तासांवासक हेइन्द्र तान्सोमरसान्जठरेदधिष्व धारय ॥ वाजिनीवसो वाजशब्दान्मत्वर्थे अतइनिठनावितीनिप्रत्ययः ऋन्नेभ्योङीबितिङीप् तासांवसो संबुद्धौचेतिगुणः आमन्त्रितत्वादाष्टमिकमनुदात्तत्वम् ॥ ५ ॥

॥ इतितृतीयस्यतृतीयेपञ्चमोवर्गः ॥ ५ ॥

अथषष्ठी—

विद्माहित्वाधनञ्जयंवाजेषुदधृषंकवे । अधातेसुम्नमीमहे ॥ ६ ॥

विद्म । हि । त्वा । धनम्ऽजयम् । वाजेषु । दधृषम् ।
कवे । अध । ते । सुम्नम् । ईमहे ॥ ६ ॥

हेकवे क्रान्तदर्शिन्निन्द्र वाजेषुयुद्धेषुदधृषंशत्रूणामभिभवितारम् अतएवधनञ्जयं धनंजयतीतिधनञ्जयः तादृशं त्वात्वां विद्महि जानीमःखलु अथानन्तरं तेतवसुम्नंधनमीमहेयाचामहे ॥ विद्म विदोलटि विदोलटोवेतिमसोमादेशः पादादित्वादनिघातः । धनञ्जयं जिजयेइत्यस्माद्धनउपपदे संज्ञायांभृतॄवृजिधारिसहितपिदमइतिखच्प्रत्ययः अरुर्द्विषदजन्तस्यमुमितिपूर्वपदस्यमुमागमः चित्त्वादन्तोदात्तः । दधृषं ञिधृषाप्रागल्भ्येइत्यस्ययङ्लुकि अभ्यासस्यरीगागमाभावश्छान्दसः तदन्तात्पचाद्यचि यङोचिचेतियङोलुक् लघूपधगुणप्राप्ते नधातुलोपइतितस्यप्रतिषेधः चित्त्वादन्तोदात्तः ॥ ६ ॥

अथसप्तमी—

इममिन्द्रगवाशिरंयवाशिरंचनःपिब । आगत्यावृषभिःसुतम् ॥७॥

इमम् । इन्द्र । गोऽआशिरम् । यवऽआशिरम् । च ।
नः । पिब । आऽगत्य । वृषऽभिः । सुतम् ॥ ७ ॥

हेइन्द्र गवाशिरं गव्यमिश्रणोपेतंसोमं तथा यवाशिरं यवमिश्रणोपेतं वृषभिर्ग्रावभिः सुतमभिषुतंनोऽस्मदीयमिमंसोमं देवयजनमागत्यपिब ॥ गवाशिरं यवाशिरमित्यत्र आङ्पूर्वस्यश्रीणातेःक्विपि अपस्पृधेथामानृचुरित्यादिनाशिरइत्यादेशः बहुव्रीहौपूर्वपदप्रकृतिस्वरः ॥ ७ ॥

अथाष्टमी–

तुभ्येदिन्द्रस्वओक्ये३ंसोमंचोदामिपीतये । एषरारन्तुतेहृदि ॥ ८ ॥

तुभ्यं । इत् । इन्द्र । स्वे । ओक्ये । सोमम् ।
चोदामि । पीतये । एषः । ररन्तु । ते । हृदि ॥ ८ ॥

हेइन्द्र तुभ्येत्तुभ्यमेव पीतये पानार्थं स्वेस्वकीयेओक्ये स्थाने जठरे अभिषुतमिमंसोमं चोदामि प्रेरयामि एषपीतःसोमस्तेतवहृदिहृदयेररन्तु अत्यर्थंरमताम् ॥ तुभ्य युष्मच्छब्दस्यचतुर्थ्येकवचनेतुभ्यमह्यावितितुभ्यादेशः सुपांसुलुगितिसुपोलुक् ङयिचेत्याद्युदात्तः । ओक्ये वस्वादित्वात्स्वार्थिकोयत्प्रत्ययः तित्स्वरितः । चोदामि चुदप्रेरणे ण्यन्तस्यलटिरूपं बहुलमन्यत्रापीतिणेर्लुक् निघातः । ररन्तु रमुक्रीडायामित्यस्य यङ्लुकि लोटि सर्वविधीनांछन्दसिविकल्पितत्वादत्राभ्यासस्यनुमभावः संहितायामन्येषामपीति अभ्यासस्यदीर्घः निघातः । हृदि हृदयशब्दस्य पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिष्वित्यादिनाहृदादेशः ऊडिदमितिविभक्तेरुदात्तत्वम् ॥ ८ ॥

अथनवमी–

त्वांसुतस्यपीतयेप्रत्नमिन्द्रहवामहे । कुशिकासोअवस्यवः ॥ ९ ॥ ६ ॥

त्वाम् । सुतस्य । पीतये । प्रत्नम् । इन्द्र ।
हवामहे । कुशिकासः । अवस्यवः ॥ ९ ॥ ६ ॥

हेइन्द्र अवस्यवः त्वत्तोरक्षणमिच्छन्तः कुशिकासः कुशिकगोत्रोत्पन्नावयं सुतस्य ग्रावभिरभिषुतस्य सोमस्य पीतये पानार्थं प्रत्नं पुरातनं त्वांहवामहे स्तुतिलक्षणाभिर्गीर्भिराह्वयामः ॥ पीतये स्थागापापचोभावइतिक्तिन् हिष्ठवत्सरतिशत्थान्तानामित्यन्तोदात्तत्वम् । हवामहे ह्वयतेर्लटि बहुलंछन्दसीतिसंप्रसारणेरूपम् । अवस्यवः अवइच्छन्तीत्यत्रार्थेसुप

आत्मनइति क्यच् क्याच्छन्दसीत्युप्रत्ययः । कुशिकासोअवस्यवइत्यत्र संहितायामव्यादवद्यादित्यादिना एङःप्रकृतिभावः ॥ ९ ॥

॥ इतितृतीयस्यतृतीयेषष्ठोवर्गः ॥ ६ ॥

आयाह्यर्वाङित्यष्टर्चंपञ्चमंसूक्तंवैश्वामित्रं त्रैष्टुभमैन्द्रम् आयाह्यष्टावित्यनुक्रमणिका । दशरात्रेचतुर्थेहनिस्तोमवृद्धौमाध्यन्दिनेसवनेऽच्छावाकशस्त्रेस्तोमाभिशंसनार्थम् इदंसूक्तं सूत्रितंच—आयाह्यर्वाङित्यष्टर्चान्यावपेरन्नितिमहाव्रतेप्यावपनीयम् ।

अस्मिन् सूक्तेप्रथमा—

आयाह्यर्वाङुपवन्धुरेष्ठास्तवेदनुप्रदिवःसोमपेयम् ।
प्रियासखायाविमुचोपबर्हिस्त्वामिमेहव्यवाहोहवन्ते ॥ १ ॥

आ । याहि । अर्वाङ् । उप । वन्धुरेऽस्थाः । तव । इत् ।
अनु । प्रऽदिवः । सोमऽपेयम् । प्रिया । सखाया । वि । मुच ।
उप । बर्हिः । त्वाम् । इमे । हव्यऽवाहः । हवन्ते ॥ १ ॥

हेइन्द्र वन्धुरेष्ठाः वन्धुरशब्देन ईषाद्वयसंबन्धस्थानमभिधीयते तेनतद्विशिष्टोरथोलक्ष्यते तस्मिन्रथेतिष्ठन्त्वम् अर्वाङस्मदभिमुखःसन् आ अभिलक्ष्यउपयाहि समीपेआगच्छ प्रदिवः प्रत्नं पूर्वक्रमगतं तवेत्तवैवसंबन्धिसोमपेयंसोमपानं त्वम् अनु अनूद्दिश्यप्रिया तवप्रियतमौ सखाया समानख्यानावश्वौबर्हिरुप बर्हिषःसमीपे विमुच विमुञ्च हव्यवाहः हव्यंवहन्तीतिहव्यवाहः इमे ऋत्विजः त्वां हवन्ते सोमपानार्थमाह्वयन्ति तस्मादागच्छेतिभावः ॥ वन्धुरेष्ठाः तिष्ठतेर्विच् तत्पुरुषेकृतिबहुलमितिसप्तम्याअलुक् । प्रदिवः सकारान्तमव्ययम् । सोमपेयं पापानेइत्यस्यभावे अचोयदितियत्प्रत्ययः ईद्यतीतीत्वम् आर्धधातुकलक्षणोगुणः यतोनावइत्याद्युदात्तत्वं समासेकृदुत्तरपदस्वरः । मुच मुञ्चतेर्लोटि आगमानुशासनस्यानित्यत्वान्नुमभावः ॥ १ ॥

अथद्वितीया—

आयाहिपूर्वीरतिचर्षणीरॉंअर्यआशिषउपनोहरिभ्याम् ।
इमाहित्वामतयःस्तोमतष्टाइन्द्रहवन्तेसख्यंजुषाणाः ॥ २ ॥

आ । याहि । पूर्वीः । अति । चर्षणीः । आ । अर्यः । आऽशिषः ।
उप । नः । हरिऽभ्याम् । इमाः । हि । त्वा । मतयः ।
स्तोमऽतष्टाः । इन्द्र । हवन्ते । सख्यम् । जुषाणाः ॥ २ ॥

हेइन्द्र पूर्वीः पुरातनीः सर्वाश्चर्षणीःप्रजाः अत्यायाहि अतिक्रम्यागच्छ द्वितीय आङ्पूरणः अर्यः अस्माकंस्वामी त्वं नः आशिषः त्वमागत्यसोमंपिबेत्येवमादिकाः अस्माकंप्रार्थना हरिभ्यामश्वाभ्यांयुक्तःसन्नुपागच्छ किञ्च ते तव सख्यंजुषाणाःसेवमानाः स्तोमतष्टाः स्तोमकारिभिःस्तोतृभिःकृताइमाःमतयःस्तुतयः हवन्ते सोमपानार्थंत्वामाह्वयन्ति ॥ हिःप्रसिद्धौ करणेकर्तृव्यापारः काष्ठानिपचन्तीतिवत् । आ संहितायामाङोनुनासिकश्छन्दसीत्यनुनासिकः । अर्यः ऋगतौ अर्यःस्वामिवैश्ययोरितिनिपातनाद्यप्रत्ययः यतोनावइत्याद्युदात्तत्वेप्राप्ते अर्यस्यस्वाम्याख्याचेदित्यन्तोदात्तत्वम् । आशिषः क्विपि शासइदङ्हलोरित्युपधायाइत्वं शासिवसीतिषत्वम् । स्तोमतष्टाः तक्षूत्वक्षूतनूकरणेइत्यस्मात्कर्मणिक्तः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरः ॥ २ ॥

अथतृतीया—

**आनोयज्ञंनमोवृधंसजोषाइन्द्रदेवहरिभिर्याहितूयम् ।**
**अहंहित्वांमतिभिर्जोहवीमिघृतप्रयाःसधमादेमधूनाम् ॥ ३ ॥**

आ । नः । यज्ञम् । नमःऽवृधम् । सऽजोषाः । इन्द्र । देव ।
हरिऽभिः । याहि । तूयम् । अहम् । हि । त्वा । मतिऽभिः ।
जोहवीमि । घृतऽप्रयाः । सधऽमादे । मधूनाम् ॥ ३ ॥

देव द्योतमान हेइन्द्र नोऽस्माकं नमोवृधं नमसोन्नस्यवर्धकमिमंयज्ञं हरिभिरश्वैःसजोषाः सहप्रीतिस्त्वंतूयं क्षिप्रमायाहि घृतप्रयाः घृतसहितानिप्रयांस्यन्नरूपाणिहवींषियस्यसतथोक्तः तादृशोहं मधूनांसोमानांसधमादे सहमाद्यन्तियत्रसोमेइतिसधमादः तस्मिन्स्थाने मतिभिः स्तुतिभिः त्वा त्वां जोहवीमि भृशमाह्वयामिखलु ॥ जोहवीमि यङ्लुकि अभ्यस्तस्यचेति संप्रसारणं गुणोयङ्लुकोरित्यभ्यासस्यगुणः यङोवेतीडागमः हियोगादनिघातः अभ्यस्तानामादिरित्याद्युदात्तः । घृतप्रयाः घृक्षरणदीप्त्योरित्यस्मादाञ्जिघृषिभ्यःक्तइतिक्तप्रत्ययः बहुव्रीहौपूर्वपदस्वरः ॥ ३ ॥

अथचतुर्थी–

आचत्वामेतावृषणावहातोहरीसखायासुधुरास्वङ्गा ।
धानावदिन्द्रःसवनंजुषाणःसखासख्युःशृणवद्वन्दनानि ॥ ४ ॥

आ । च । त्वाम् । एता । वृषणा । वहातः । हरी इति ।
सखाया । सुऽधुरा । सुऽअङ्गा । धानाऽवत् । इन्द्रः । सवनम् ।
जुषाणः । सखा । सख्युः । शृणवत् । वन्दनानि ॥ ४ ॥

हेइन्द्र वृषणा सेचनसमर्थौ सुधुरा शोभनयाधुरान्वितौ स्वङ्गा शोभनावयवोपेतौ सखाया शोभनख्यानावेताएतौहरी त्वामावहातः यज्ञंप्रत्यागमनायरथेत्वामावहतः अथ धानावत् भृष्टयवोपेतंसवनंजुषाणः सेवमानःसखा सखिभूतःसइन्द्रः सख्युःस्तोतुर्ममवन्दनानिस्तोत्राणिशृणवच्च शृणुयात् ॥ वहातः वहेर्लेट्याडागमेरूपं चवायोगेप्रथमेतिननिघातः । शृणवत् श्रुश्रवणेइत्यस्य लेट्यडागमेरूपं निघातः ॥ ४ ॥

अथपञ्चमी–

कुविन्मागोपांकरसेजनस्यकुविद्राजानंमघवन्नृजीषिन् ।
कुविन्मऋषिंपपिवांसंसुतस्यकुविन्मेवस्वोअमृतस्यशिक्षाः॥५॥

कुवित् । मा । गोपाम् । करसे । जनस्य । कुवित् । राजानम् ।
मघऽवन् । ऋजीषिन् । कुवित् । मा । ऋषिम् । पपिऽवांसम् ।
सुतस्य । कुवित् । मे । वस्वः । अमृतस्य । शिक्षाः ॥ ५ ॥

हेइन्द्र कुविदपिच मामांजनस्यगोपांगोप्तारं करसे कुरु तथा हेमघवन् धनवन्नृजीषिन्सोमवन् हेइन्द्र मां राजानं सर्वस्यस्वामिनंकुरु । कुविच्चमामामृषिम् अतीन्द्रियार्थद्रष्टारंकुरु । ऋषिर्दर्शनादितियास्कः[1] । तथा सुतस्याभिषुतस्यसोमस्यपपिवांसंपातारंकुरु । अपिच मे मह्यम् अमृतस्य क्षयरहितंवस्वोवसु शिक्षाःप्रयच्छ ॥ करसे डुकृञ्करणे लेट्यडागमेरूपं कुवियोगादनिघातः । मऋषिमित्यत्र संहितायामृत्यकइतिप्रकृतिभावः ह्रस्वश्च । पपिवांसं पापा–

[1] नि० २. ११.

नेइत्यस्यक्सौवस्वेकाजाद्वसामितीडागमः प्रत्ययस्वरः । शिक्षाः शिक्षतिर्दानकर्मा अस्माल्ले-ट्याडागमेरूपं कुविद्योगादनिघातः आगमाअनुदात्ताइत्याटोनुदात्तत्वेधातुस्वरः ॥ ५ ॥

अथषष्ठी–

आत्वाबृहन्तोहरयोयुजानाअर्वागिन्द्रसधमादोवहन्तु ।
प्रयेद्विताद्विवऋञ्जन्त्याताःसुसंमृष्टासोवृषभस्यमूराः ॥ ६ ॥

आ । त्वा । बृहन्तः । हरयः । युजानाः । अर्वाक् । इन्द्र ।
सधऽमादः । वहन्तु । प्र । ये । द्विता । दिवः । ऋञ्जन्ति ।
आताः । सुऽसंमृष्टासः । वृषभस्य । मूराः ॥ ६ ॥

हेइन्द्र त्वा त्वां बृहन्तोमहान्तोयुजानाः रथेयुज्यमानाहरयोश्वाः सधमादः सहमादयन्तः सन्तः अर्वागस्मदभिमुखमावहन्तु वृषभस्यकामानांवर्षितुरिन्द्रस्यमूराः शत्रूणांमारकाः सुसंमृष्टासः इन्द्रस्यहस्ताभ्यांपृष्ठभागे सुष्ठुसंस्पृष्टाः दिवोनभसःसकाशादागच्छन्तोयेऽश्वाः आताः आभिमुख्ये-नगम्यन्तेप्राणिभिस्तत्तत्कार्यप्रतीतिआतादिशःसर्वादिशः द्विता द्विविधंयथाभवतितथाप्रऋञ्जन्ति प्रकर्षेणसाधयन्ति ॥ युजानाः युजिर्योगे युजिबुधिदृशःकिच्चेतिकित्त्वादानच् चित्त्वादन्तोदात्तः सधमादः मदीहर्षेइत्यस्मात्ण्यन्तात्क्विप् कृदुत्तरपदस्वरः । द्विता द्विशब्दात्संख्यायाविधार्थेधेति धाप्रत्ययः धकारस्यतकारश्छान्दसः प्रत्ययस्वरः । दिवः ऊडिदमिति विभक्तेरुदात्तत्वम् । आताः अतसातत्यगमनेइत्यस्मात्कर्मणिघञ् व्यत्ययेनाद्युदात्तः ॥ ६ ॥

अथसप्तमी–

इन्द्रपिबवृषधूतस्यवृष्णआयन्तेश्येनउशतेजभार ।
यस्यमदेच्यावयसिप्रकृष्टीर्यस्यमदेअपगोत्राववर्थ ॥ ७ ॥

इन्द्र । पिब । वृषऽधूतस्य । वृष्णः । आ । यम् । ते । श्येनः ।
उशते । जभार । यस्य । मदे । च्यावयसि । प्र । कृष्टीः ।
यस्य । मदे । अप । गोत्रा । ववर्थ ॥ ७ ॥

हेइन्द्र वृषधूतस्य ग्रावभिरभिषुतं वृष्णः अभिमतफलसेचकंसोमंपिब श्येनः शंसनीयगतिः छन्दोरूपःसुपर्णः उशते सोमंकामयमानाय ते तुभ्यं यंसोममाजभार आजहार यस्यसोमस्य मदेहर्षेसंजातेसति कृष्टीः आकर्षन्तिवशीकुर्वन्तिकर्मणासर्वानितिकृष्टयोमनुष्याः तान्सपत्नभूतान्मनुष्यान्प्रच्यावयसि प्रकर्षेणपातयसि यस्यसोमस्यमदेसंजातेसति गोत्रागामुदकंरश्मिभिरावृतंवर्षासु ऋतुषुत्रायन्तेपालयन्तीतिगोत्रामेघाः तानपववर्थापवृणोषि ॥ वृषधूतस्य धूञ्कम्पनेइत्यस्यनिष्ठायां यस्यविभाषेतीट्प्रतिषेधः तृतीयाकर्मणीतिपूर्वपदस्वरः । श्येनः श्यैङ्गतौ श्यास्त्याहृञ्विभ्यइनजितिइनच्प्रत्ययः श्यायतइतिश्येनः चित्त्वादन्तोदात्तः । जभार हरतेर्लिटिणलिरूपं हृग्रहोर्भश्छन्दसीतिभकारः यद्वृत्तयोगादनिघातःलित्स्वरः । मदे मदीहर्षे मदोनुपसर्गेइत्यप्प्रत्ययः तस्यपित्त्वादनुदात्तत्वेधातुस्वरः । गोत्रा त्रैङ्पालनेइत्यस्य आतोनुपसर्गेकइतिकः सुपोडादेशः एकादेशस्वरः ॥ ववर्थ वृञ्वरणेइत्यस्य लिटिथलि ऋतोभारद्वाजस्येतीट्प्रतिषेधः गुणः लित्स्वरः ॥ ७ ॥

अथाष्टमी–

शुनंहुवेममघवानमिन्द्रमस्मिन्भरेनृतमंवाजसातौ ।
शृण्वन्तमुग्रमूतयेसमत्सुघ्नन्तंवृत्राणिसंजितंधनानाम् ॥ ८।७॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे ।
नृऽतमम् । वाजऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु ।
घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ ८ ॥ ७ ॥

व्याख्यातेयमृक् ॥ ८ ॥

॥ इतितृतीयस्यतृतीयेसप्तमोवर्गः ॥ ७ ॥

अयन्तेअस्त्वितिपञ्चर्चंषष्ठंसूक्तं वैश्वामित्रं बार्हतमैन्द्रम् अत्रानुक्रमणिका–अयन्तेपञ्चबार्हतंत्विति महाव्रतेबार्हत्यांत्र्यृचाशीताविदंसूक्तं षोडशिशस्त्रे अयन्तेअस्तुहर्यतइत्याद्यस्त्र्यृचोविनियुक्तः । सूत्रितञ्च–अयन्तेअस्तुहर्यतइत्यौष्णिहबार्हतौत्र्यृचाविति ।

तस्मिन्सूक्तेप्रथमा–

अयंतेअस्तुहर्यतःसोमआहरिभिःसुतः ।
जुषाणइन्द्रहरिभिर्नआगह्यातिष्ठहरितंरथम् ॥ १ ॥

अयम् । ते । अस्तु । हर्यतः । सोमः । आ । हरिऽभिः । सुतः ।
जुषाणः । इन्द्र । हरिऽभिः । नः । आ । गहि । आ । तिष्ठ ।
हरितम् । रथम् ॥ १ ॥

हेइन्द्र हरिभिः हरन्तिसोमरसानेभिरितिहरयोग्रावाणः तैरासुतः सर्वतोऽभिषुतः हर्यतः कमनीयोजुषाणःप्रीतिविषयोयंसोमः तेतुभ्यमस्तु त्वंहरिभिरश्वैर्युक्तंहरितंहरिद्वर्णंरथम् आतिष्ठ अधितिष्ठ ततोनोऽस्मानभिलक्ष्यागह्यागच्छ ॥ हर्यतः हर्यगतिकान्त्योरित्यस्मात् भृमृदृशीत्यादिनातच्प्रत्ययः चित्त्वादन्तोदात्तः । हरितं हृञ्हरणे हृश्याभ्यामितन्नितिइतन्प्रत्ययः नित्त्वादाद्युदात्तः । रथं रमुक्रीडायां हनिकुषिनीत्यादिनाक्थन्प्रत्ययः कित्त्वादनुनासिकलोपः नित्स्वरः ॥१॥

अथद्वितीया–

हर्यन्नुषसमर्चयःसूर्यंहर्यन्नरोचयः ।
विद्वांश्चिकित्वान्हर्यश्ववर्धसइन्द्रविश्वाअभिश्रियः ॥ २॥

हर्यन् । उषसम् । अर्चयः । सूर्यम् । हर्यन् । अरोचयः ।
विद्वान् । चिकित्वान् । हरिऽअश्व । वर्धसे । इन्द्र । विश्वाः ।
अभि । श्रियः ॥ २ ॥

हेइन्द्र हर्यन्सोमंकामयमानस्त्वम् उषसम् उषःकालम् अर्चयः पूजयसि तथा हर्यन् उदिते सूर्येसोमंकामयमानस्त्वंसूर्यमरोचयः दीपयसि हेहर्यश्वेन्द्र विद्वानेतत्सर्वंजानानाश्चिकित्वानस्मदभिलषितफलविषयज्ञानवांस्त्वं विश्वाः सर्वाःश्रियः नः संपदः अभिवर्धसेभिमतफलप्रदानेनाभितोवर्धयसि ॥ चिकित्वान् कितज्ञानेइत्यस्य क्वसौरूपं प्रत्ययस्वरः । वर्धसे वृधुवर्धने इत्यस्यान्तर्भावितण्यर्थस्यलटिरूपं निपातः ॥ २ ॥

अथतृतीया–

द्यामिन्द्रोहरिधायसंपृथिवींहरिवर्पसम् ।
अधारयद्धरितोर्भूरिभोजनंययोरन्तर्हरिश्चरत् ॥ ३ ॥

द्याम् । इन्द्रः । हरिंऽधायसम् । पृथिवीम् । हरिंऽवर्पसम् ।
अधारयत् । हरितोः । भूरि । भोजनम् । ययोः । अन्तः ।
हरिः । चरत् ॥ ३ ॥

सोऽयमिन्द्रोहरिधायसं हरितोहरितवर्णाधायसोधारकारश्मयोयस्याःसा तांद्यामधारयत् तथा हरिवर्पसम् ओषधीभिर्हरितवर्णांपृथिवीम् अधारयत् हरितोर्हरितवर्णयोर्द्यावापृथिव्योर्मध्येस्वकीययोरश्वयोर्भूरिप्रभूतंभोजनं भुज्यतइतिभोजनं यवसादिलक्ष्यते ययोर्द्यावापृथिव्योरन्तर्मध्ये हरिरिन्द्रश्चरत् चरति तेद्यावापृथिव्याविन्द्रोधारयदित्यर्थः ॥ हरिधायसं डुधाञ्-धारणपोषणयोरित्यस्मात् वहिहाधाञ्भ्यश्छन्दसीत्यसुन् णिदित्यनुवृत्तेरातोयुक् बहुव्रीहौ पूर्वपदस्वरः । पृथिवीं प्रथेःषिवन्संप्रसारणंचेतिषिवन्प्रत्ययः षिद्गौरादिभ्यश्चेति ङीष् प्रत्ययस्वरेणान्तोदात्तः । हरिवर्पसं वृङ्संभक्तौ वृङ्शीङ्भ्यांरूपस्वाङ्गयोरित्यसुन्प्रत्ययः पुगागमश्च संभज्यतेतदितिवर्पोरूपं बहुव्रीहौपूर्वपदस्वरः । हरितोः हञ्हरणेइत्यस्मात्हृसृरुहियुषिभ्यइतिरितीतिप्रत्ययः प्रत्ययस्वरः । भोजनं भुजपालनाभ्यवहारयोरित्यस्मात्कृत्यल्युटोबहुलमितिकर्मणि ल्युट् लित्स्वरः । अन्तः स्वरादिष्वन्तोदात्तत्वेनपठितत्वादन्तोदात्तः । चरत् चरतिर्गत्यर्थः लेटिरूपं यद्वृत्तयोगादनिघातः ॥ ३ ॥

अथचतुर्थी–

जज्ञानोहरितोवृषाविश्वमाभातिरोचनम् ।
हर्यश्वोहरितंधत्तआयुधमावज्रंबाह्वोर्हरिम् ॥ ४ ॥

जज्ञानः । हरितः । वृषा । विश्वम् । आ । भाति । रोचनम् ।
हरिंऽअश्वः । हरितम् । धत्ते । आयुधम् । आ । वज्रम् ।
बाह्वोः । हरिम् ॥ ४ ॥

वृषा कामानांवर्षकः हरितोहरिद्वर्णोपेतः जज्ञानः जातइन्द्रोविश्वंसर्वंरोचनंदीप्यमानं लोकमाभाति सर्वतःप्रकाशयति तथा हर्यश्वः इन्द्रोहरितंहरिद्वर्णोपेतमायुधं बाह्वोर्धत्ते तथा हरिं शत्रूणांप्राणहारकंवज्रं बाह्वोराधत्ते ॥ जज्ञानः जनीप्रादुर्भावेइत्यस्यलिटःकानच् गमहनेत्यादिनोपधालोपः चित्त्वादन्तोदात्तः । भाति भादीप्तावित्यस्यान्तर्भावितण्यर्थस्य लटिरूपम् ।

रोचनं रुचदीप्ताविस्यस्मादनुदात्तेतश्चहलादेरितियुच् चित्वादन्तोदात्तः । बाह्वोः उदात्तयणोहल्पूर्वादितिविभक्तेरुदात्तत्वम् ॥ ४ ॥

अथपञ्चमी–

**इन्द्रोहर्यन्तमर्जुनंवज्रंशुक्रैरभीवृतम् ।**
**अपावृणोद्धरिभिरद्रिभिःसुतमुद्गाहरिभिराजत ॥५॥८॥**

**इन्द्रः । हर्यन्तम् । अर्जुनम् । वज्रम् । शुक्रैः । अभिऽवृतम् ।**
**अप । अवृणोत् । हरिऽभिः । अद्रिऽभिः । सुतम् । उत् । गाः ।**
**हरिऽभिः । आजत ॥ ५ ॥ ८ ॥**

सोयमिन्द्रः हर्यन्तं कमनीयमर्जुनंशुभ्रं शुभ्रत्वमुपपादयति शुक्रैःशुभ्रैः क्षीरादिभिरभिवृतंव्याप्तंवज्रंवेगवन्तं हरिभिः हरन्त्येभिः सोमरसानितिहरयः तैरद्रिभिर्ग्रावभिःसुतमभिषुतंसोमम् अपावृणोत् आवरणरहितमकरोत् तथाचमन्त्रवर्णः–पूषाराजानमाघृणिरपगूळ्हं गुहाहितम् अविन्ददिति । तथा गाः पणिभिरपहृतागाः हरिभिरश्वैरुपेतः सइन्द्रः उदाजत बिलान्निरगमयत् ॥ अर्जुनम्अर्जषर्जअर्जनेइत्यस्मादर्जेर्णिलुक्चेतिउनन् नित्स्वरः । अभिवृतं गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । आजत अजगतिक्षेपणयोर्लङि व्यत्ययेनात्मनेपदं निघातः ॥ ५ ॥

॥ इतितृतीयस्यतृतीयेष्टमोवर्गः ॥ ८ ॥

आमन्द्रैरितिपञ्चर्चंसप्तमंसूक्तं वैश्वामित्रं बार्हतमैन्द्रम् आमन्द्रैरित्यनुक्रमणिका पूर्वसूक्तेबार्हतंत्वित्युक्तत्वादस्यापिबार्हतत्वं–विशेषविनियोगस्तुयत्रश्रुत्यानसूत्रितः । स्मार्ततत्रविजानीयाद्दग्विधानादिशास्त्रतः ।

तत्रप्रथमा–

**आमन्द्रैरिन्द्रहरिभिर्याहिमयूररोमभिः ।**
**मात्वाकेचिन्नियमन्विंनपाशिनोतिधन्वेवताँइहि ॥ १ ॥**

१ ऋ० सं० १. २. १०. ।

आ । मन्द्रैः । इन्द्र । हरिऽभिः । याहि । मयूररोमऽभिः ।
मा । त्वा । के । चित् । नि । यमन् । विम् । न । पाशिनः ।
अति । धन्वऽइव । तान् । इहि ॥ १ ॥

हेइन्द्र मन्द्रैर्मादयितृभिर्मयूररोमभिः मयूररोमसदृशरोमयुक्तैः हरिभिरश्वैरुपेतस्त्वमा याहि यज्ञंप्रत्यागच्छ केचिदपिजनाः त्वात्वांमानियमन्मानियच्छन्तु गमनप्रतिबन्धंमाकुर्वन्त्वित्यभिप्रायः प्रतिबन्धेदृष्टान्तः—विंन यथापाशिनः पाशहस्ताव्याधाविंगच्छन्तंपक्षिणंनियच्छन्ति तद्वन्मानियच्छन्तु किंच धन्वेव यथा पान्थाः धन्वमरुदेशंशीघ्रमतिगच्छन्ति तद्वद्गमनप्रतिबन्धकानतीत्यशीघ्रमिहि आगच्छ ॥ मन्द्रैः मदिस्तुत्यादिष्वित्यस्य स्फायितञ्चीत्यादिनारक्प्रत्ययः इदित्त्वान्नुम् प्रत्ययस्वरः । मयूररोमभिः मयूररोमवद्रोमाणियेषामितिसप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्चेतिसमासः उत्तरपदलोपश्च मयूरशब्दोमीनातेरूरन्नितिऊरन्प्रत्ययान्तः मीनातिसर्पोनितिमयूरोबर्ही नित्त्वादाद्युदात्तत्वेप्राप्ते मादीनामितिसूत्रेणमध्योदात्तः बहुव्रीहौपूर्वपदप्रकृतिस्वरः । यमन् यमउपरमेइत्यस्यलेट्यडागमेरूपम् । इहि इणूगतावित्यस्यलोटिरूपम् ॥ १ ॥

अथद्वितीया—

वृत्रखादोवलंरुजःपुरांदर्मोअपामजः ।
स्थातारथस्यहर्योरभिस्वरइन्द्रोदृह्लाचिदारुजः ॥ २ ॥

वृत्रऽखादः । वलम्ऽरुजः । पुराम् । दर्मः । अपाम् । अजः ।
स्थाता । रथस्य । हर्योः । अभिऽस्वरे । इन्द्रः । दृह्ला । चित् ।
आऽरुजः ॥ २ ॥

सोऽयमिन्द्रोवृत्रखादः वृत्रंखादतिहिनस्तीतिवृत्रखादः वलंरुजः वृणोत्याकाशमिति वलोमेघः तस्यभञ्जकः तथाचमन्त्रवर्णः—बिभेदवलमिति[1] । ततोऽपामजः मेघभेदनद्वारापां प्रेरकः पुरांशत्रुसंबन्धिनीनांपुरीणांदर्मःदारकः तथाहर्योरश्वयोरभिस्वरे अस्मदाभिमुख्येनप्रेरणेनिमित्तभूतेसति रथस्यस्थाता रथमधिष्ठाता तथा दृह्लाचित् दृढानामतिबलवतांशत्रू-

1 ऋ० सं० ३. २. १६. ।

णामपि आरुजः समन्ताद्भञ्जकोभवति ॥ वृत्रखादः खादृभक्षणेइत्यस्मात्कर्मण्यण् कृदुत्तरपदस्वरः । वलंरुजः रुजोभङ्गे कर्मण्युपपदे मूलविभुजादित्वात्कप्रत्ययः तत्पुरुषेकृतिबहुलमितिद्वितीयायाअलुक् थाथादिस्वरः । आरुजः रुजोभङ्गेइत्यस्मादिगुपधलक्षणःकः समासे थाथादिस्वरः ॥ २ ॥

अथतृतीया–

गम्भीराँउदधीँरिवक्रतुंपुष्यसिगाइव ।
प्रसुगोपायवसंधेनवोयथाह्रदंकुल्याइवाशत ॥ ३ ॥

गम्भीरान् । उदधीन्ऽइव । क्रतुम् । पुष्यसि । गाःऽइव ।
प्र । सुऽगोपाः । यवसम् । धेनवः । यथा । ह्रदम् ।
कुल्याःऽइव । आशत ॥ ३ ॥

हेइन्द्र त्वं गम्भीरान्महावकाशानुदधीन्समुद्रान् उदकैर्यथापोषयसि तद्वत् क्रतुं यज्ञस्यकर्तारमिमंयजमानमभिमतफलप्रदानेनपुष्यसि पोषयसि अत्रदृष्टान्तः–यथासुगोपाः समीचीनोगोपालः यवसेन गाःपोषयतितद्वत् यथा धेनवोयवसंतृणादिकंप्राप्नुवन्ति तद्वत्त्वंसोमान्प्राप्नोषि तेचसोमाः कुल्याइव कृत्रिमसरितोह्रदंमहाजलाशयंयथाप्राप्नुवन्तितद्वत्त्वामाशत व्याप्नुवंति ॥ गम्भीरान् गाधृप्रतिष्ठालिप्सयोर्ग्रन्थेचेत्यस्माद्गभीरगम्भीरावित्यनेनसूत्रेणइरच्प्रत्ययः नुमागमोपधाह्रस्वभकाराःसर्वेनिपात्यन्ते चित्त्वादन्तोदात्तः । उदधीनिव उदकशब्दउपपदे दधातेरधिकरणेर्थे कर्मण्यधिकरणेचेतिकिप्रत्ययः उदकशब्दस्य पेषंवासवाहनधिषुचेत्युदभावः कृत्स्वरः इवेनसमासोविभक्त्यलोपश्च । पुष्यसि पुषपुष्टावित्यस्यान्तर्णीतण्यर्थस्यलटिरूपं निघातः । सुगोपाः गोपायतेःक्विपिरूपम् । यथा यथेतिपादान्तेइतिनिघातः । आशत अशूव्याप्तावित्यस्माल्लुङि बहुलंछन्दसीतिविकरणस्यलुक् निघातः ॥ ३ ॥

अथचतुर्थी–

आनस्तुजंरयिंभराशंनप्रतिजानते ।
वृक्षंपक्वंफलमङ्कीवधूनुहीन्द्रसंपारणंवसु ॥ ४ ॥

आ । नः । तुजम् । रयिम् । भर । अंशम् । न । प्रतिऽजानते ।
वृक्षम् । पक्वम् । फलम् । अङ्कीऽइव । धूनुहि । इन्द्र ।
सम्ऽपारणम् । वसु ॥ ४ ॥

हेइन्द्र नोऽस्माकंतुजंशत्रूणांबाधकंरयिंधनेनोपलक्षितंपुत्रमाभर संपादय तत्रदृष्टान्तः—अंशंन यथा पिताप्रतिजानते व्यवहारज्ञायपुत्रायस्वकीयस्यधनस्यभागंददाति तद्वत् किंच पक्कंफलंप्रतिवृक्षमङ्कीव अङ्कुशी यथा धूनोति तथा त्वंसंपारणम् अस्मदिच्छायाःसम्यक्पूरकं वसु धनं धूनुहि चालय प्रयच्छेत्यर्थः ॥ प्रतिजानते ज्ञाअवबोधनेइत्यस्यशतरिरूपं प्रादिसमासः शतुरनुमइतिविभक्तेरुदात्तत्वम् । धूनुहि धूञ्कम्पनेइत्यस्यलोटिरूपम् । संपारणं पॄपालनपूरणयोरित्यस्य ण्यन्तस्य करणेल्युट् समासेकृत्स्वरः ॥ ४ ॥

अथपञ्चमी—

स्वयुरिन्द्रस्वराळसिस्मद्दिष्टिःस्वयशस्तरः ।
सवावृधानओजसापुरुष्टुतभवानःसुश्रवस्तमः ॥ ५ ॥९॥

स्वऽयुः । इन्द्र । स्वऽराट् । असि । स्मत्ऽदिष्टिः ।
स्वयशःऽतरः । सः । ववृधानः । ओजसा । पुरुऽस्तुत ।
भव । नः । सुश्रवःऽतमः ॥ ५ ॥ ९ ॥

हेइन्द्र स्वयुर्धनवानसि तथा स्वराट् स्वर्गस्यराजासि स्मद्दिष्टिः भद्रवाक्यः स्वयशस्तरः अतिशयेनप्रभूतकीर्तिरसि हेपुरुष्टुत बहुभिराहूतेन्द्र तत्त्वमोजसाबलेनवावृधानोवर्धमानःसन् नोऽस्मदर्थंसुश्रवस्तमः अतिशयेनशोभनान्नोपेतोभव ॥ स्वयुः स्वशब्दान्मत्वर्थीयोयुः । स्वराट् राजृदीप्तौ क्विप् व्रश्चादिनाषत्वम् । स्मद्दिष्टिः स्मत्सुमदित्यर्थेउकारलोपश्छान्दसः बहुव्रीहौपूर्वपदस्वरः । पुरुष्टुत संहितायां स्तुतस्तोमयोश्छन्दसीतिषत्वम् । भव भवतेर्लोटिरूपम् द्व्यचोतस्तिङइतिसंहितायांदीर्घः । सुश्रवस्तमः श्रवःशब्दोसुन्नन्तः बहुव्रीहौ आद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वं तदन्तादतिशायनेतमप् तस्यपित्त्वादनुदात्तत्वे बहुव्रीहिस्वरः ॥ ५ ॥

॥ इतितृतीयस्यतृतीयेनवमोवर्गः ॥ ९ ॥

युध्मस्यइतिपञ्चर्चमष्टमंसूक्तं वैश्वामित्रमैन्द्रं युध्मस्येत्यनुक्रमणिका दशरात्रेचतुर्थेहनिनिष्केवल्येयुध्मस्यतइतिसूक्तंनिविद्धानं सूत्रितञ्च—कुहश्रुतइन्द्रोयुध्मस्यतइतिनिष्केवल्यमिति । ऋषभनाम्न्येकाहेपिनिष्केवल्यइदंसूक्तंनिविद्धानं सूत्रितञ्च—युध्मस्यतइतिमध्यान्दिनइति ।

तत्रप्रथमा—

युध्मस्यंतेवृषभस्यंस्वराजंउग्रस्ययूनःस्थविरस्यघृष्वेः ।
अजूर्यतोवज्रिणोवीर्या३णीन्द्रंश्रुतस्यंमहतोमहानि ॥ १ ॥

युध्मस्यं । ते । वृषभस्यं । स्वऽराजंः । उग्रस्यं ।
यूनंः । स्थविरस्य । घृष्वेः । अजूर्यतः । वज्रिणंः ।
वीर्याणि । इन्द्र । श्रुतस्यं । महतः । महानि ॥ १ ॥

हेइन्द्र युध्मस्ययोधनशीलस्यवृषभस्याभिमतफलसेक्तुस्यस्वराजःधनाधिपतेः उग्रस्य समर्थस्ययूनोनित्यतरुणस्य स्थविरस्यचिरन्तनस्य घृष्वेः शत्रूणांसंघर्षकस्य अजूर्यतःजरारहितस्य वज्रिणःश्रुतस्यत्रिपुलोकेपुप्रसिद्धस्य अतएव महतस्तेतववीर्याणिमहानिमहान्तिखलु ॥ युध्मस्य युधसंप्रहारे इषियुधीन्धिदसिइत्यादिनामक्प्रत्ययः । यूनः यौतेःकनिन्युवृषीत्यादिनाकनिन् श्वयुवमघोनामतद्धितेइतिसंप्रसारणं नित्स्वरः । स्थविरस्य अजिरशिशिरशिथिलेत्यादिनाकिरन्प्रत्ययान्तोनिपातितः । घृष्वेः घृपुसंघर्षे कृविघृष्विच्छवीत्यादिनाक्विन्प्रत्ययान्तोनिपात्यते नित्त्वादाद्युदात्तः ॥ १ ॥

अथद्वितीया—

महाँअंसिमहिषवृष्ण्येभिर्धनस्पृदुंग्रसहंमानोअन्यान् ।
एकोविश्वंस्यभुवंनस्यराजासयोधयांचक्षययांचजनांन् ॥ २ ॥

महान् । असि । महिष । वृष्ण्येभिः धनऽस्पृत् । उग्र ।
सहंमानः । अन्यान् । एकः । विश्वंस्य । भुवंनस्य । राजा ।
सः । योधयं । च । क्षययं । च । जनान् ॥ २ ॥

हेमहिष महनीय उग्र इन्द्र त्वं महानसि धनस्पृत् धनानि दानभोगत्यागैःपारंनयंस्त्वंवृष्ण्येभिर्वीर्यैरन्यान्शत्रून्सहमानोऽभिभवन्वर्तसे तथा विश्वस्यसर्वस्य भुवनस्य एकःअसहायो-

राजासत्वंयोधयच सपत्नान्प्रहर जनान्क्षययच निवासय बाधकान्हत्वासाधुजनान्स्वस्थानेस्थापयेत्यभिप्रायः ॥ महिष महपूजायाम् अविमह्योष्टिषजितिटिषच्प्रत्ययः आमन्त्रितत्वान्निघातः। वृष्ण्येभिः वृष्णिभवानि भवेछन्दसीतियत् यतोनावइत्याद्युदात्तः । योधय युधसंप्रहारेइत्यस्यण्यन्तस्यलोटिरूपं चादिषुचेतिनननिघातः णिच्स्वरः । क्षयय क्षिनिवासगत्योरित्यस्यण्यन्तस्य लोटिरूपम् अत्रापिपूर्ववदनिघातः ॥ २ ॥

अथतृतीया–

प्रमात्राभीरिरिचेरोचमानःप्रदेवेभिर्विश्वतोअप्रतीतः ।
प्रमज्मनादिवइन्द्रःपृथिव्याःप्रोरोर्महोअन्तरिक्षादृजीषी॥३

प्र । मात्राभिः । रिरिचे । रोचमानः । प्र । देवेभिः । विश्वतः ।
अप्रतिऽइतः । प्र । मज्मना । दिवः । इन्द्रः । पृथिव्याः ।
प्र । उरोः । महः । अन्तरिक्षात् । ऋजीषी ॥ ३ ॥

रोचमानोदीप्यमानःविश्वतःसर्वैरप्रतीतः एतावदस्यसामर्थ्यमित्यपरिच्छिद्यमानः ऋजीषीसोमवानिन्द्रः मात्राभिः मीयन्तेपरिच्छिद्यन्तइतिमात्राःशिलोच्चयाः तेभ्योपिप्ररिरिचे प्रकर्षेणमहत्तयातिरिक्तोभूत् तथा देवेभिर्देवेभ्योपि मज्मना मज्जयतिशत्रून्दुःखसागरेइतिमज्म बलं तेन बलेनप्ररिरिचे तथा दिवःपृथिव्याः द्यावापृथिवीभ्यांचप्ररिरिचे तथा उरोर्विस्तीर्णात्महोमहतोन्तरिक्षादपिप्ररिरिचे ॥ मात्राभिः माङ्मानेशब्देचेत्यस्मात् हुयामाश्रुभसिभ्यस्त्रन्नितित्रन्प्रत्ययः नित्त्वादाद्युदात्तः ढ्लोपेपूर्वस्यदीर्घोणइतिसंहितायांदीर्घः । रोचमानः रुचदीप्ताविरत्यस्मात्शानचिरूपं तस्यलसार्वधातुकस्वरेधातुस्वरः । अप्रतीतः इण्गतौ कर्मणिक्तः प्रादिसमासः नञासमासेतस्यस्वरः । मज्मना टुमस्जोशुद्धौ औणादिकोमनिन्प्रत्ययः झलांजशूझशीतिजशत्वं चित्त्वादन्तोदात्तः । पृथिव्याः उदात्तयणोहल्पूर्वादितिविभक्तेरुदात्तत्वम् ॥ ३ ॥

अथचतुर्थी–

उरुंगभीरंजनुषाभ्युग्रंविश्वव्यचसमवतंमतीनाम् ।
इन्द्रंसोमासःप्रदिविसुतासःसमुद्रंनस्रवतआविशन्ति ॥४॥

उरुम् । गभीरम् । जनुषा । अभि । ऊग्रम् । विश्वऽव्यचसम् ।
अवतम् । मतीनाम् । इन्द्रम् । सोमासः । प्रऽदिवि । सुतासः ।
समुद्रम् । न । स्रवतः । आ । विशन्ति ॥ ४ ॥

उरुंमहान्तम् अतएव गभीरंमहावकाशं जनुषा जन्मना स्वभावतएवोग्रं शत्रूणांभयङ्करं गभीरत्वमेवोच्यते विश्वव्यचसं विश्वव्याप्तमतीनांस्तुतीनांस्तोतॄणांवा अवतंरक्षकं तादृशमिन्द्रं प्रदिवि पूर्वेष्वहःसु सुतासोग्रावभिरभिषुताःसोमासः सोमाः अभ्याभिमुख्येनाविशन्ति तत्रदृष्टान्तः—समुद्रंन यथास्रवतःस्रवन्त्योनद्यःसमुद्रमाविशन्तितद्वत् ॥ जनुषा जनीप्रादुर्भावे इत्यस्माज्जनेरुसिरित्युसिप्रत्ययः । विश्वव्यचसं व्यचव्याजीकरणेइत्यस्मादसुन् व्यचेःकुटादित्वमनसीतिवक्तव्यमित्यत्रानसीतिपर्युदासात्ङित्त्वाभावः विश्वव्यचाइतीन्द्रस्यनाम बहुव्रीहौविश्वंसंज्ञायामितिपूर्वपदस्यान्तोदात्तत्वम् ॥ अवतम् अवरक्षणादिषु औणादिकोतच्प्रत्ययः चित्त्वादन्तोदात्तः ॥ ४ ॥

अथपञ्चमी—

**यंसोममिन्द्रपृथिवीद्यावागर्भंनमाताबिभृतस्त्वाया ।**
**तंतेहिन्वन्तितमुतेमृजन्त्यध्वर्यवोवृषभपातवाउ ॥ ५ ॥ १० ॥**

यम् । सोमम् । इन्द्र । पृथिवी । द्यावा । गर्भम् । न । माता ।
बिभृतः । त्वाऽया । तम् । ते । हिन्वन्ति । तम् । ऊँ इति । ते ।
मृजन्ति । अध्वर्यवः । वृषभ । पातवै । ऊँ इति ॥ ५ ॥ १० ॥

हेइन्द्र पृथिवी द्यावा द्यावापृथिव्यौ त्वया त्वत्कामतयायंसोमंबिभृतः अन्तर्धारयतः अत्रदृष्टान्तः—गर्भंन यथा मातागर्भंबिभर्तितद्वत् हेवृषभ कामानांवर्षक हेइन्द्र अध्वर्यवः अध्वरंयजमानायइच्छन्त ऋत्विजः तेत्वदर्थं तं सोमं हिन्वन्ति प्रेरयन्ति किञ्च ते तव पातवै पानायतंसोमंमृजन्तिशोधयन्ति उ प्रसिद्धौ ॥ पृथिवीद्यावा दिवोद्यावेतिद्यावादेशः आद्युदात्तः नोत्तरपदेनुदात्तादावपृथिवीरुद्रपूषमन्थिष्वित्यत्रपर्युदासात् देवताद्वन्द्वेचेत्युभयपदप्रकृतिस्वरः कृतसमासस्यविपर्यासश्छान्दसः । बिभृतः डुभृञ्धारणपोषणयोरित्यस्माल्लटि भृञामिदित्यभ्यासस्येत्त्वं यद्वृत्तयोगादनिघातः अजादिप्रत्ययपरत्वाभावादत्राभ्यस्तानामादिरितिस्वरोन भवति प्रत्ययस्वरः । त्वाया त्वामिच्छतीत्यर्थेसुपःक्यच् पूर्वपददकारस्याकारश्छान्दसः अप्र-

त्ययादितिभावेऽप्रत्ययः सुपांसुलुगितितृतीयायाःसवर्णदीर्घःएकादेशस्वरः । अध्वर्यवः अध्वरमिच्छन्तःसुपआत्मनःक्यच् कव्यध्वरपृतनस्यर्चिलोपइत्यकारलोपः क्याच्छन्दसीत्युप्रत्ययः प्रत्ययस्वरः । पातवै पापानेइत्यस्मात्तुमर्थे तवैप्रत्ययः अन्तश्चतवैयुगपदितिधात्वन्तस्यप्रत्ययस्य चोदात्तत्वम् । उञइतिप्रगृह्यसंज्ञा ॥ ९ ॥

॥ इतितृतीयस्यतृतीयेदशमोवर्गः ॥ १० ॥

मरुत्वानितिपञ्चर्चंनवमंसूक्तं वैश्वामित्रंत्रैष्टुभमैन्द्रं मरुत्वानित्यनुक्रमणिका । दशरात्रेचतुर्थेहनिमरुत्वतीयशस्त्रेएतत्सूक्तंनिविद्धानीयं सूत्रितञ्च—श्रुधीहवमिन्द्रमरुत्वाँइन्द्रेतिमरुत्वतीयमिति । ऋषभनाम्न्येकाहेपिमरुत्वतीयशस्त्रेएतन्निविद्धानम् । सूत्रितञ्च—मरुत्वाँइन्द्रयुध्मस्यतइतिमध्यन्दिनइति ।

तत्रप्रथमा—

**मरुत्वाँइन्द्रवृषभोरणायपिबासोमंमनुष्वधंमदाय ।**
**आसिञ्चस्वजठरेमध्वऊर्मिंत्वंराजासिप्रदिवःसुतानाम् ॥ १ ॥**

**मरुत्वान् । इन्द्र । वृषभः । रणाय । पिब । सोमम् । अनुऽस्वधम् । मदाय । आ । सिञ्चस्व । जठरे । मध्वः । ऊर्मिम् । त्वम् । राजा । असि । प्रऽदिवः । सुतानाम् ॥ १ ॥**

हेइन्द्र यो वृषभः अपांवर्षिता मरुत्वान् मरुतोदेवविशस्तद्वान् सत्वम् अनुष्वधं स्वधया सवनीयपुरोडाशादिरूपेणान्नेनानुगतंसोमंरणायरमणीयसंग्रामार्थं मदाय हर्षायच तंसोमंपिब किंच मध्वः मदकरस्यसोमस्य ऊर्मिंसंघातंबहुरसंजठरे जग्धमन्नमस्मिंस्तिष्ठतीतिजठरमुदरं तस्मिन्नुदरे आसिञ्चस्व सर्वतःक्षालय यतस्त्वंप्रदिवः पूर्वेष्वहःसुसुतानामभिषुतानांसोमानां राजासि ईशितासि नकेवलमधुनातनानामितिभावः उक्तमर्थंयास्कोब्रवीति—मरुत्वानिन्द्रमरुद्भिस्तद्वान्वृषभोवर्षितापांरणायरमणीयायसंग्रामायपिबसोममनुष्वधमन्वन्नंमदायमदनीयायजैत्रायासिञ्चस्वजठरेमधुनऊर्मिंमधुसोममित्यौपमिकंमाद्यतेरिदमपीतरन्मध्वेतस्मादेवत्वंराजासिपूर्वेष्वप्यहःसुसुतानामिति ॥ अनुष्वधं स्वधामनुगम्यवर्तमानम् अत्यादयःक्रान्ताद्यर्थेद्वितीययेतिसमासः संहितायां

१ नि० ४ । ८ ।

पूर्वपदादितिषत्वं निरुदकादित्वादन्तोदात्तत्वम् । ऊर्मिम् अर्तेरूर्च्चेतिमिप्रत्ययः धातोरूरइत्यादेशो रपरः प्रत्ययस्वरः ॥ १ ॥

सजोषाइन्द्रेतिमरुत्वतीयग्रहस्ययाज्या सूत्रितश्च–सजोषाइन्द्रसगणोमरुद्भिरितिभक्षयित्वै-तत्पात्रमिति ।

अथद्वितीया–

सजोषाइन्द्रसगणोमरुद्भिःसोमंपिबवृत्रहाशूरविद्वान् ।
जहिशत्रूँरपमृधोनुदस्वाथाभयंकृणुहिविश्वतोनः ॥ २ ॥

सऽजोषाः । इन्द्र । सऽगणः । मरुत्ऽभिः । सोमम् । पिब । वृत्रऽहा । शूर । विद्वान् । जहि । शत्रून् । अप । मृधः । नुदस्व । अथ । अभयम् । कृणुहि । विश्वतः । नः ॥ २ ॥

हेशूर बलवन् हेइन्द्र सजोषाः संगतोदेवैर्मरुद्भिःसगणोमरुद्भिरेववृत्रहा वृत्रस्यहन्ता विद्वान् कर्मविषयाभिज्ञस्त्वंसोमंपिब ततोनःशत्रूनजहि मृधः हिंसकान्शत्रूनपनुदस्व यद्वा मृध्यन्ते हिंस्यन्तेत्रप्राणिनइतिमृधःसंग्रामाः तत्रवर्तमानान्शत्रूनपनुदस्व अथानन्तरंनोऽस्माकंविश्व-तःसर्वतः अभयंकृणुहि कुरु सर्वतोभयरहितानस्मान्कुर्वित्यर्थः ॥ वृत्रहा ब्रह्मभ्रूणवृ-त्रेषुक्विप् । अभयं ञिभीभयेइत्यस्मादेरच् नञासमासेतस्यस्वरः । विश्वतः पञ्चम्यास्त-सिल् लित्स्वरः ॥ २ ॥

अथतृतीया–

उतऋतुभिर्ऋतुपाःपाहिसोममिन्द्रदेवेभिःसखिभिःसुतंनः ।
याँआभजोमरुतोयेत्वान्वहन्वृत्रमदधुस्तुभ्यमोजः ॥ ३ ॥

उत । ऋतुऽभिः । ऋतुऽपाः । पाहि । सोमम् । इन्द्र । देवेभिः । सखिऽभिः । सुतम् । नः । यान् । आ । अभजः । मरुतः । ये । त्वा । अनु । अहन् । वृत्रम् । अदधुः । तुभ्यम् । ओजः ॥ ३ ॥

उतापिच हेऋतुपाः कालनिर्वाहकतयाऋतूनांपातः ऋतुषुसोमंपिबतीतिवाऋतुपाः यद्वा ऋतुभिर्मरुद्भिःसहसोमंपिबतीतिऋतुपाः तादृश हेइन्द्र सखिभिः समानख्यानैर्ऋतुभिर्मरुद्भिः देवभिर्देवैःसहितस्त्वंनःसंबन्धिनंसुतमभिषुतंसोमंपाहि पिब किंच यान्मरुतः आभजः युद्धसहायार्थमसेवथाः येचमरुतः त्वा त्वां युद्धे स्वामिनमन्वभजन्त ततस्त्वंवृत्रमहन् हतवानसि तेमरुतस्तुभ्यं त्वदर्थमोजोयुद्धेशत्रुहननादिरूपंपराक्रममदधुः अकुर्वन् ॥ अभजः भजसेवायामित्यस्यलङिरूपं यद्वृत्तयोगादनिघातः । अहन् हनहिंसागत्योरित्यस्यलङि सिपोहल्ङ्यादिलोपः पादादित्वादनिघातः । अदधुः दधातेर्लङि झेःसिजभ्यस्तेतिजुस् वाक्यभेदादनिघातः ॥ ३ ॥

मरुत्वतीयशस्त्रेयाज्यायेत्वाहिहत्यइत्येषा सूत्रितञ्च–येत्वाहिहत्येमघवन्नवर्धन्नितियाज्येति[1] ।

अथचतुर्थी–

येत्वाहिहत्येमघवन्नवर्धन्येशाम्बरेहरिवोयेगविष्टौ ।
येत्वानूनमनुमदन्तिविप्राःपिबेन्द्रसोमंसगणोमरुद्भिः ॥ ४ ॥

ये । त्वा । अहिऽहत्ये । मघऽवन् । अवर्धन् । ये । शाम्बरे ।
हरिऽवः । ये । गोऽइष्टौ । ये । त्वा । नूनम् । अनुऽमदन्ति । विप्राः ।
पिब । इन्द्र । सोमम् । सऽगणः । मरुत्ऽभिः ॥ ४ ॥

हेमघवन्धनवन्निन्द्र येमरुतः अहिहत्येवृत्रहननरूपेकर्मणि त्वा त्वामवर्धन् प्रहरभगवोजहिवीरयस्वेतिबलदानेनावीवृधन् हेहरिवोश्ववन्निन्द्र येचशाम्बरे शम्बरवधसंबन्धिनि युद्धे त्वामवीवृधन् इन्द्रः शम्बरमवधीदित्यस्मिन्नर्थेमन्त्रवर्णः–यःशम्बरंपर्वतेषुक्षियन्तंचत्वारिंश्यांशरद्यन्वविन्दत्ओजायमानंयोअहिंजघानेति । तथा येमरुतः गविष्टौ पणिनामकैरसुरैः सहगवार्थेयुद्धेच त्वामवीवृधन् विप्रामेधाविनोयेचमरुतःनूनमिदानींत्वामनुमदन्तिमादयन्ति तादृशैस्तैर्मरुद्भिः सगणःसन् इमंसोमंपिब ॥ अहिहत्ये हन्तेर्भावे हनस्तचेतिक्यप् कृदुत्तरपदस्वरः । अवर्धन वृधुवृद्धौ इत्यस्यण्यन्तस्य लङिरूपं छन्दस्युभयथेतिझेरार्धधातुकत्वाण्णेर्लोपः यद्वृत्तयोगादनिघातः । शाम्बरे शम्बरस्येदमित्यर्थे तस्येदमित्यण्प्रत्ययः । गविष्टौ इषुइच्छायां भावेक्तिन् बहुव्रीहौपूर्वपदस्वरः ! अनुमदन्ति मदिस्तुत्यादिष्वित्यस्यलटिव्य-

१ ऋ० सं० २. ६. ९. ।

त्ययेनपरस्मैपदम् आगमानुशासनस्यानित्यत्वान्नुमभावः झलेसार्वधातुकस्वरेकृतेधातुस्वरः तिङ्चोदात्तवतीतिगतेर्निघातः ॥ ४ ॥

अथपञ्चमी—

मरुत्वन्तंवृषभंवावृधानमकवारिंदिव्यंशासमिन्द्रम् ।
विश्वासाहमवसेनूतनायोग्रंसहोदामिहतंहुवेम ॥ ५ ॥ ११ ॥

मरुत्वन्तम् । वृषभम् । ववृधानम् । अकवऽअरिम् । दिव्यम् ।
शासम् । इन्द्रम् । विश्वऽसहम् । अवसे । नूतनाय । उग्रम् ।
सहःऽदाम् । इह । तम् । हुवेम ॥ ५ ॥ ११ ॥

हेइन्द्र मरुत्वन्तं मरुद्भिस्तद्वन्तं वृषभं मेघभेदनद्वारापांवर्षकं ववृधानं वृत्रहननादिकर्मसूत्साहेनवर्धमानम् अकवारिं प्रभूतशत्रुकम् यद्वा अकुत्सितारिं तथाचमन्त्रः—स्वरिरमत्रोववक्षेरणायेति । दिव्यं दिवि स्वर्गलोकेवर्तमानं शासंहितोपदेशाहितपरिहाराभ्यांशासितारं विश्वसाहं विश्वस्यप्रतिपक्षस्यसर्वस्याभिभवितारम् उग्रं शत्रुषूद्गूर्णं सहोदां युद्धसहकारिणांमरुतां बलप्रदं तं तादृशसामर्थ्योपेतमिन्द्रं नूतनाय नवतरायावसेरक्षणाय इहकर्मणिहुवेम त्वामाह्वयेम ॥ नूतनाय नवशब्दस्यनूइत्यादेशः नप्तनप्खाश्चप्रत्ययावक्तव्याइतितनप्प्रत्ययः ॥ ५ ॥

॥ इतितृतीयस्यतृतीयेएकादशोवर्गः ॥ ११ ॥

सद्योहेतिपञ्चर्चंदशमंसूक्तं वैश्वामित्रंत्रैष्टुभमैन्द्रं सद्योहेत्यनुक्रमणिका अग्निष्टोमेमाध्यन्दिनसवनेमैत्रावरुणशस्त्रेसद्योहजातइत्येतत्सूक्तं सूत्रितञ्च—सद्योहजातएवात्वामिति[1] । चातुर्विंशिकेप्यहनिमैत्रावरुणशस्त्रेअहरहःशस्यसंज्ञमेतत्सूक्तं सूत्रितञ्च—सद्योहजातइत्यहरहःशस्यंमैत्रावरुणइति । अहर्गणेद्वितीयादिष्वहःसुमाध्यन्दिनसवनेस्मिन्शस्त्रेएतत्सूक्तम् अहरहःशस्यानीति होत्रकाद्वितीयादिष्वेवेतिसूत्रितम् । साद्यस्क्रेएकाहेमरुत्वतीयशस्त्रेसद्योहजातइत्याद्यासूक्तमुखीया सूत्रितञ्च—सद्योहजातोवृषभःकनीनस्त्वंसद्योअपिबोजातइन्द्रेति ।

१ ऋ० सं० १. ४. २७)

सूक्तेप्रथमा–

सद्योहंजातोवृषभःकनीनःप्रभर्तुमावदन्धसःसुतस्य ।
साधोःपिबप्रतिकामंयथातेरसाशिरःप्रथमंसोम्यस्य ॥ १ ॥

सद्यः । ह । जातः । वृषभः । कनीनः । प्रऽभर्तुम् । आवत् ।
अन्धसः । सुतस्य । साधोः । पिब । प्रतिऽकामम् । यथा ।
ते । रसऽआशिरः । प्रथमम् । सोम्यस्य ॥ १ ॥

वृषभोवृष्टिद्वारापांवार्षेतासद्यस्तदानीमेवजातउत्पन्नः कनीनःकमनीयइन्द्रःसुतस्याभिषुतस्यान्धसः हविर्लक्षणस्यान्नस्यसोमस्यप्रभर्तुं प्रकर्षेणभर्तारंसंग्रहीतारं यजमानमावत् रक्षतु हप्रसिद्धौ किञ्च तादृशस्त्वं प्रतिकामं कामेकामेसोमपानेच्छायांसत्यां ते तव यथा कामस्यपूर्तिर्भवति तथा साधोः रसात्मनासंसिद्धं रसाशिरःगोपयोमिश्रणोपेतंसोम्यस्यसोममयंरसंप्रथमं सर्वेभ्योदेवेभ्यः पुरस्तात्पिब ॥ प्रतिकामं कामंकामंप्रति वीप्सायामव्ययीभावेसमासस्वरः । यथा अपादान्तत्वादेव लित्स्वरः । रसाशिरः आङ्पूर्वात्श्रीणातेःक्विपि अपस्पृधेथामित्यादिनाशिर्इत्यादेशः बहुव्रीहौपूर्वपदप्रकृतिस्वरः । सोम्यस्य सोमशब्दान्मयडर्थे मयेचेतियप्रत्ययः ॥ १ ॥

अथद्वितीया–

यज्जायथास्तदहरस्यकामेंशोःपीयूषमपिबोगिरिष्ठाम् ।
तंतेमातापरियोषाजनित्रीमहःपितुर्दमआसिञ्चदग्रे ॥ २ ॥

यत् । जायथाः । तत् । अहः । अस्य । कामे । अंशोः । पीयूषम् ।
अपिबः । गिरिऽस्थाम् । तम् । ते । माता । परि । योषा । जनित्री ।
महः । पितुः । दमे । आ । आसिञ्चत् । अग्रे ॥ २ ॥

हेइन्द्र त्वं यद्यस्मिन्नहनिजायथाः अजायथाः तदहस्तस्मिन्नेवाहनि अस्यसोमस्य कामे पिपासायांसत्यां गिरिष्ठां गिरिस्थाम् पर्वतस्य उच्चस्थानेवर्तमाने अंशोःसोमलताखण्डविशिष्टस्य ऋजीषस्य पीयूषम् अभिनवंरसमापिबः पीतवानसि उत्पत्तिक्षणएवसोमपानेकारणंदर्शयति–ते तव जनित्री माता योषा युवतिरदितिःमहोमहतः पितुर्जनकस्यकश्यपस्यदमे सूतिकागृहे अग्रे

स्तन्यदानात्प्राक् तंतादृशंसोमंपर्यासिञ्चत् तवास्येपरितोऽक्षारयत् ॥ जायथाः जनीप्रादुर्भावेइ-त्यस्यलङि बहुलंछन्दसीत्यडभावः यद्वृत्तयोगादनिघातः । जनित्री जनितामन्त्रेइतिनिपातनाण्णेर्लोपः ॥ २ ॥

अथतृतीया–

उपस्थायंमातरमन्नमैट्टतिग्ममंपश्यदभिसोमभूधः ।
प्रयावयंन्नचरद्गृत्सोअन्यान्महानिंचक्रेपुरुधप्रतीकः ॥ ३ ॥

उपऽस्थार्य । मातरम् । अन्नम् । ऐट्ट । तिग्मम् । अपश्यत् ।
अभि । सोमम् । ऊधः । प्रऽयवयन् । अचरत् । गृत्सः ।
अन्यान् । महानि । चक्रे । पुरुधऽप्रतीकः ॥ ३ ॥

सइन्द्रः मातरमुपस्थायप्रार्थयित्वा अन्नमैट्ट तामन्नमयाचत ईळिरध्येषणाकर्मेतियास्कः[1] । ततस्तस्याऊधः ऊधसिक्षीररूपेणस्थितंतिग्मंदीप्तंसोममभ्यपश्यत् सर्वतोदर्शत् गृत्सः गृध्यते अभिकाङ्क्ष्यतेसर्वैःदेवैःशत्रुहननार्थमितिगृत्सइन्द्रः अन्यान्सपत्नान्प्रयवयन् स्वस्वस्थानात्प्रकर्षेणोच्चालयन्नचरत् सर्वत्रचरति किंच पुरुधप्रतीकः तेजोयोगाद्बहुधाविक्षिप्ताङ्गःसन् महानि महान्ति वृत्रहननादीनिकर्माणिचक्रे ॥ उपस्थाय तिष्ठतेर्ल्यपिघुमास्थेतीत्त्वेप्राप्ते नल्यपीतिप्रतिषेधः लित्स्वरः । ऐट्ट ईळिर्याच्ञार्थः तस्माल्लङिरूपम् आडजादीनामित्याडागमः ष्टुत्वं निघातः । तिग्मं तिजनिशाने, अस्माद्युजिरुतिजांकुश्चेतिमक्प्रत्ययः कवर्गादेशश्च । प्रयवयन् युमिश्रणामिश्रणयोरित्यस्यण्यन्तस्यशतरिरूपं लित्स्वरः । गृत्सःगृधुअभिकाङ्क्षायां गृधिपण्योर्दकौचेतिसप्रत्ययः दकारश्चान्तादेशः वृषादित्वादाद्युदात्तः । पुरुधप्रतीकः पुरुशब्दइहसंख्यावाची संख्यायाविधार्थेधेतिधाप्रत्ययः ह्रस्वश्छान्दसः बहुव्रीहौपूर्वपदप्रकृतिस्वरः ॥ ३ ॥

अथचतुर्थी–

उग्रस्तुंराषाळभिभूंत्योजायथावृशंतन्वंचक्रएषः ।
त्वष्टारमिन्द्रोजनुषाभिभूयामुष्यासोममपिबच्चमूषु ॥ ४ ॥

---

१ नि० ३. १९. ।

उग्रः । तुराषाट् । अभिभूतिऽओजाः । यथाऽवशम् ।
तन्वम् । चक्रे । एषः । त्वष्टारम् । इन्द्रः । जनुषा । अभिऽभूय ।
आऽमुष्य । सोमम् । अपिबत् । चमूषु ॥ ४ ॥

यएषइन्द्रः उग्रः शत्रूणांभयङ्करः तुराषाट् त्वरयाशत्रूणामभिभविता अतएवाभिभूत्योजाः शत्रूणामभिभवनपराक्रमोपेतःसन् तन्वमात्मीयंशरीरंयथावशं यथाकामं नानाविधरूपोपेतंचक्रे । तथाचमन्त्रवर्णः—रूपंरूपंमघवाबोभवीतीति । सइन्द्रोजनुषा जन्मनासामर्थ्येनवात्वष्टारं त्वष्टृनामकमसुरमभिभूय चमूषु चमसेषुस्थितमामुष्यचोरयित्वासोमममपिबत् त्वष्टाहतपुत्रोवीन्द्रमित्यादिप्रासहासोममपिबदितितैत्तिरीयकम् ॥ तुराषाट् ञित्वरासंभ्रमे क्विप् ज्वरत्वरेत्यादिनाऊठ् सहेश्छन्दसिण्विः कर्तृकरणेकृताबहुलमितिसमासः तत्पुरुषेकृतिबहुलमितितृतीयायाअलुक् सहेः साडःसइतिषत्वं कृदुत्तरपदस्वरः । यथावशं वशंकाममनतिक्रम्येत्यव्ययीभावसमासः समासस्वरः । आमुष्य मुषस्तेये ल्यप् । चमूषु चमुअदने कृषिचमितनिधनिसर्जिखर्जिभ्यऊइत्यूप्रत्ययः प्रत्ययस्वरः ॥ ४ ॥

अथपञ्चमी

शुनंहुवेममघवानमिन्द्रमस्मिन्भरेनृतमंवाजसातौ ।
शृण्वन्तमुग्रमूतयेसमत्सुघ्नन्तंवृत्राणिसंजितंधनानाम् ॥ ५ ॥ १२ ॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् ।
वाजऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् ।
वृत्राणि । सम्ऽजितम् । धनानाम् ॥ ५ ॥ १२ ॥

सिद्धैषा ॥ ५ ॥

॥ इतितृतीयस्यतृतीयेद्वादशोवर्गः ॥ १२ ॥

शंसामहामितिपञ्चर्चमेकादशंसूक्तं वैश्वामित्रंत्रैष्टुभमैन्द्रं शंसामहामित्यनुक्रमणिका । समूळ्हेदशरात्रेऽष्टमेऽहनिमरुत्वतीयशस्त्रेएतत्सूक्तं सूत्रितञ्च—शंसामहामहश्चित्त्वमिन्द्रेति ।

---

१ ऋ० सं० ३. ३. २०. । २ तै० सं० २. ४. १२. ।

तत्रप्रथमा—

शंसामहामिन्द्रंयस्मिन्विश्वाआकृष्टयःसोमपाःकाममव्यन् ।
यंसुक्रतुंधिषणेविभ्वतष्टंघनंवृत्राणांजनयन्तदेवाः ॥ १ ॥

शंस । महाम् । इन्द्रम् । यस्मिन् । विश्वाः । आ । कृष्टयः ।
सोमऽपाः । कामम् । अव्यन् । यम् । सुऽक्रतुम् । धिषणे इति ।
विभ्वऽतष्टम् । घनम् । वृत्राणाम् । जनयन्त । देवाः ॥ १ ॥

हेहोतः महां महान्तमिन्द्रंशंस शस्त्रैःस्तुहि यस्मिन्निन्द्रेरक्षितरिसति विश्वाःकृष्टयः सर्वे मनुष्याः सोमपाः यज्ञमनुष्ठायसोमपाःसन्तः कामं काम्यतइतिकामःस्वर्गादिः तमाव्यन् सर्वतःप्राप्नुवन्ति धिषणे देवमनुष्यादीनांधारयित्र्यौ यद्वा प्रगल्भेसमर्थे स्वाश्रितान्रक्षितुमिति धिषणेद्यावापृथिव्यौ देवाश्च सुक्रतुं क्रतुःकर्म जगत्पालनादिशोभनःक्रतुर्यस्यासौसुक्रतुः तादृशं विभ्वतष्टं विभुनाब्रह्मणाजगदाधिपत्येस्थापितंमहान्तंवृत्राणांपापरूपाणांघनंहन्तारंयमिन्द्रंजनयन्त अजनयन् ॥ शंस शंसुस्तुतावित्यस्यलोटिरूपं पादादित्वादनिघातः द्व्यचोतस्तिङइतिसंहितायांदीर्घः । अव्यन् वीकान्तिगत्यादिषु लङिरूपं यद्वृत्तयोगादनिघातः अट्स्वरः । सुक्रतुं क्रत्वादयश्चेत्युत्तरपदाद्युदात्तः । धिषणे ञिधृषाप्रागल्भ्ये इत्यस्माद्धृषेर्धिषचसंज्ञायामितिक्युप्रत्ययः धिषइत्यादेशः प्रत्ययस्वरः । घनं हन्तेःपुंसिसंज्ञायांघःप्रत्ययः होहन्तेरितिकुत्वं प्रत्ययस्वरः । जनयन्त जनेर्ण्यन्तस्यलङिरूपं यद्वृत्तयोगाद निघातः ॥ १ ॥

अथद्वितीया—

यंनुनकिःपृतनासुस्वराजंद्विातरतिनृतमंहरिष्ठाम् ।
इनतमःसत्वभिर्योहशूषैःपृथुज्रयाअमिनादायुर्दस्योः ॥ २ ॥

यम् । नु । नकिः । पृतनासु । स्वऽराजम् । द्विता । तरति ।
नृऽतमम् । हरिऽस्थाम् । इनऽतमः । सत्वऽभिः । यः । ह ।
शूषैः । पृथुऽज्रयाः । अमिनात् । आयुः । दस्योः ॥ २ ॥

पृतनासु व्याप्रियन्तेऽत्रयोद्धारइतिपृतनाःसंग्रामः तेषु स्वराजं स्वतेजसाराजमानं हरिष्ठांह- रिस्थां हरियुक्तेरथेवर्तमानं नृतमं बलस्ययुद्धेनेतृतमं द्वितायुद्धमासाद्यसेनांद्विधाकृत्वावर्तमानं यमिन्द्रंनकिः नकश्चिदपितरति उत्तीर्यगच्छति नकोप्यस्तीत्यर्थः नुः प्रसिद्धौ सइन्द्रः इन- तमः अतिशयेनसेनास्वामी सत्वभिः पारितःसीदद्भिर्मरुद्भिःसह यःयान्गच्छन् शूषैःशोष- यन्तिपरबलानीतिशूषाणिबलानि तैः पृथुज्रयाः युद्धंप्रतितीव्रवेगःसन् दस्योःशत्रोरायुरन्नं प्राणंवामिनातिहिनस्ति ह: प्रसिद्धौ अत्रनिरुक्तम्—पृथुज्रवःपृथुजवःपृथुज्रयाअमिनादायुर्द- स्योःप्रामापयदायुर्दस्योरिति ॥ तरति तॄप्लवनतरणयोरित्यस्यलटिरूपं यद्वृत्तयोगादनिघातः शपःपित्त्वादनुदात्तत्वेधातुस्वरः । यः याप्रापणे औणादिकःकप्रत्ययः आतोलोपः प्रत्यय- स्वरः ॥ २ ॥

अथतृतीया—

सहावांपृत्सुतरणिर्नार्वांव्यानशीरोदंसीमेहनांवान् ।
भगोनकारेहव्योमतीनांपितेवचारुःसुहवोवयोधाः ॥ ३ ॥

सहस्वां । पृत्ऽसु । तरणिः । न । अर्वा । विऽआनशिः ।
रोदसी इति । मेहनाऽवान् । भगः । न । कारे । हव्यः । मतीनाम् ।
पिताऽइव । चारुः । सुऽहवः । वयःऽधाः ॥ ३ ॥

यइन्द्रः सहावा बलवान् पृत्सुसङ्ग्रामेषु तरणिःशत्रूनुत्तीर्यवर्ततइतितरणिः तत्रदृष्टा- न्तः—अर्वान यथा अर्वाबलवानश्वःशत्रुबलंतरति तथा रोदसीद्यावापृथिव्यौव्यानशिः व्या- प्नुवन् मेहनावान् मिह्यतेसिच्यतेदीयतेऽर्थिभ्यइतिमेहनंधनं तद्वान्भवति तादृशइन्द्रः कारे क्रियतइतिकारोयज्ञादिः तस्मिन्यज्ञे भगोन पूषादेवइव हव्योहवनीयः मतीनांस्तोतॄणांस्तु- तीनांवा पितेवपालयिता चारुः कमनीयः सुहवः सुष्ठ्वाह्वानोपेतः वयोधाः अन्नस्यदाताभव- ति ॥ सहावा सहोस्यास्तीतिमत्वर्थेछन्दसीवनिपावितिवनिप् अन्येषामपिदृश्यतइतिसंहितायां दीर्घः । पृत्सु पृतनाशब्दस्यसौपरतः मांस्पृत्स्नूनामुपसंख्यानमितिपृदादेशः सावेकाचइति विभक्तेरुदात्तत्वम् । व्यानशिः अशूव्याप्तावित्यस्माच्छन्दसिसदादित्वात्किप्रत्ययः तस्यलिङ्वद्भा- वः अतआदेरित्यभ्यासस्यदीर्घेकृते अश्नोतेश्चेतिनुमागमः प्रादिसमासः । कारे करोतेःकर्म-

१ नि० ५. ९. ।

णिवत्र् कर्षात्वतोघञोन्तउदात्तइत्यन्तोदात्तत्वम् । हव्यः जुहोतेरचोयत् यतोनावइत्याद्युदात्तत्वम् । सुहवः ह्वयतेर्भावेनुपसर्गस्येत्यप्प्रत्ययः संप्रसारणं प्रत्ययस्यपित्त्वादनुदात्तत्वेधातुस्वरः आद्युदात्तं द्व्यच्छन्दसीतिबहुव्रीहावुत्तरपदाद्युदात्तत्वम् ॥ ३ ॥

अथचतुर्थी—

धर्तादिवोरजसस्पृष्टऊर्ध्वोरथोनवायुर्वसुभिर्नियुत्वान् ।
क्षपांवस्ताजनितासूर्यस्यविभक्ताभागंधिषणेववाजम् ॥४॥

धर्ता । दिवः । रजसः । पृष्टः । ऊर्ध्वः । रथः । न । वायुः ।
वसुऽभिः । नियुत्वान् । क्षपाम् । वस्ता । जनिता । सूर्यस्य ।
विऽभक्ता । भागम् । धिषणाऽइव । वाजम् ॥ ४ ॥

सइन्द्रोदिवोद्युलोकस्य रजसोन्तरिक्षस्यचधर्ता धारकः पृष्टः व्याप्तः सर्वत्रवर्तमानः रथोन तदीयोरथइव ऊर्ध्वोवायुरूर्ध्वगन्ता वसुभिः सहायतयानिवसद्भिर्मरुद्भिर्नियुत्वान्सहायवान् यद्वा नेत्ययमुत्तरेणापिसंबध्यते तया वायुर्नियुत्वान्नियुन्नामकवडवाभिस्तद्वान् एवमिन्द्रोवसुभिर्मरुद्भिःसहायवान् तथा क्षपांवस्ता रात्रिमाच्छादयन् सूर्यस्यजगत्प्रकाशकस्यादित्यस्यजनिता जनयिता भागं भजनीयं वाजंकर्मफलरूपमन्नं विभक्ता साधुविभागकर्ताभवति तत्रदृष्टान्तः— धिषणेव यथा आढ्यानांवागस्येदमितिविभागंकरोतितद्वत् ॥ रजसः रञ्जरागेइत्यस्माद्भूरञ्जिभ्यांकिदितिअसुन् कित्त्वान्नलोपः रज्यतेप्रकाशेनेनेतिरजोन्तरिक्षं नित्त्वादाद्युदात्तः । वस्ता वसआच्छादनेइत्यस्यतृचिरूपम् । जनिता जनयतेस्तृचि जनितामन्त्रेइतिनिपातनाण्णिलोपः चित्त्वादन्तोदात्तः । विभक्ता भजसेवायामित्यस्यसाधुकारिण्यर्थेतृन् एकाचउपदेशे इतीट्प्रतिषेधः तादौचनितिकृत्यतावितिगतेःप्रकृतिस्वरत्वम् ॥ ४ ॥

अथपञ्चमी—

शुनंहुवेममघवानमिन्द्रमस्मिन्भरेनृतमंवाजसातौ ।
शृण्वन्तमुग्रमूतयेसमत्सुघ्नन्तंवृत्राणिसंजितंधनानाम् ॥५॥१३॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् ।
वाजऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् ।
वृत्राणि । सम्ऽजितम् । धनानाम् ॥ ५ ॥ १३ ॥

व्याख्यातेयमृक् ॥ ५ ॥

॥ इतितृतीयस्यतृतीयेत्रयोदशोवर्गः ॥ १३ ॥

इन्द्रःस्वाहेतिपञ्चर्चंद्वादशंसूक्तंवैश्वामित्रंत्रैष्टुभमैन्द्रं दशरात्रेनवमेहनिमरुत्वतीयशस्त्रेइदं सूक्तम्। सूत्रितञ्च—तृतीयस्येन्द्रःस्वाहागायत्सामेति ।

तत्रप्रथमा—

इन्द्रःस्वाहापिबतुयस्यसोमआगत्यातुम्रोवृषभोमरुत्वान् ।
ओरुव्यचाःपृणतामेभिरन्नैरास्यहविस्तन्वं१ःकाममृध्याः ॥१॥

इन्द्रः । स्वाहा । पिबतु । यस्य । सोमः । आऽगत्य । तुम्रः ।
वृषभः । मरुत्वान् । आ । उरुऽव्यचाः । पृणताम् । एभिः ।
अन्नैः । आ । अस्य । हविः । तन्वः । कामम् । ऋध्याः ॥ १ ॥

अयमिन्द्रः स्वाहा स्वाहाकृतमिमंसोमंपिबतु यस्येन्द्रस्यायंसोमः सइन्द्रोयज्ञंप्रत्यागत्य तुम्रः कर्मविघ्नकारिणांहिंसकः वृषभोयष्टॄणामभिमतफलवर्षकः मरुत्वान्मरुद्भिस्तद्वान् उरुव्यचाः प्रभूतव्याप्तिःसन् एभिरस्माभिर्दत्तैरन्नैःसोमादिलक्षणैर्हविर्भिरापृणतां समन्तात्पूरयतु ततोस्येन्द्रस्यसंबन्धिनस्तन्वःशरीरस्यकामं पुष्ट्यादिलक्षणविषयमभिलाषं हविरस्माभिर्दत्तमाऋध्याः सर्वतःपूरयतु ॥ तुम्रः तुमिराहननार्थः । उरुव्यचाः व्यचेरसुन् व्यचेःकुटादित्वमनसीतिवक्तव्यमित्यत्रअनसीतिपर्युदासात् ङित्त्वाभावः कृदुत्तरपदस्वरः । ऋध्याः ऋधोतेराशीर्लिङिरूपम् ॥ १ ॥

अथद्वितीया—

आतेसपर्यूजवसेयुनज्मिययोरनुप्रदिवःश्रुष्टिमावः ।
इहत्वाधेयुर्हरयःसुशिप्रपिबात्व१स्यसुषुतस्यचारोः ॥ २ ॥

आ । ते । सपर्यू इति । जवसे । युनज्मि । ययोः । अनु ।
प्रऽदिवः । श्रुष्टिम् । आवः । इह । त्वा । धेयुः । हरयः ।
सुऽशिप्र । पिब । तु । अस्य । सुऽसुतस्य । चारोः ॥ २ ॥

हेइन्द्र ते तव जवसे यज्ञंप्रत्यागमनाय सपर्यू परिचारकौहरी आयुनज्मि रथेयोजयामि प्रदिवः पुरातनस्त्वं ययोरश्वयोःश्रुष्टिंवेगं श्रुष्टीतिक्षिप्रनामेतियास्कः । तमन्वावः अनुगच्छसि हेसुशिप्र शोभनहनो इन्द्र हरयोरथेयोजितास्तेऽश्वाः इहकर्मणि त्वा त्वां धेयुः यज्ञंप्रतिधारयन्तु ततआगतस्त्वं सुषुतस्य सुष्ठुअभिषुतं चारोः कमनीयम् अस्येमंसोमं तु क्षिप्रं पिब ॥ सपर्यू सपरशब्दःकण्ड्वादिःतदन्तादौणादिकःकुप्रत्ययः । आवः अवरक्षणादिषु छान्दसेलङिरूपं यद्वृत्तयोगादनिघातः । धेयुः दधातेराशीर्लिङिकिदाशिषीतियासुट् एर्लिङीत्येकारादेशः निघातः । पिब पादादित्वादनिघातः । सुषुतस्य षुञ्अभिषवे कर्मणिक्तःगतिरनन्तरइतिगतिस्वरः उपसर्गात्सुनोतीत्यादिनासंहितायांषत्वम् ॥ २ ॥

अथतृतीया–

गोभिर्मिमिक्षुंदधिरेसुपारमिन्द्रंज्यैष्ठ्यायधायसेगृणानाः ।
मन्दानःसोमंपपिवाँऋजीषिन्त्समस्मभ्यंपुरुधागाइषण्य ॥ ३ ॥

गोभिः । मिमिक्षुम् । दधिरे । सुऽपारम् । इन्द्रम् । ज्यैष्ठ्याय ।
धायसे । गृणानाः । मन्दानः । सोमम् । पपिऽवान् । ऋजीषिन् ।
सम् । अस्मभ्यम् । पुरुधा । गाः । इषण्य ॥ ३ ॥

गृणानाः स्तोत्रंकुर्वाणाः ऋत्विजोमिमिक्षुं स्तोतृणामभिमनफलंवर्षितुमिच्छन्तं सुपारं शोभनपारं स्तुतिभिरभिमुखीकर्तुंशक्यमित्यर्थः तादृशमिन्द्रं ज्यैष्ठ्याय धनादिसंपत्त्याश्रेष्ठत्वाय धायसे चिरकालमायुर्धारणायच गोभिर्गव्यमिश्रितैः सोमैर्दधिरे धारयन्ति शेषःप्रत्यक्षः हेऋजीषिन् सोमवन्निन्द्र सत्वंमन्दानः मोदमानः सोमंपपिवान् सोमस्यपातासन् स्तोतृभ्योस्मभ्यंपुरुधा बहुधा गाअग्निहोत्रादिकर्मसिद्ध्यर्थंधेनूः समिषण्य सम्यक्प्रेरय ॥ गोभिः सावे-

1 नि० ६ १२.

काचइतिविभक्तेरुदात्तत्वेप्राप्ते नगोश्वन्त्सावर्णेतिप्रतिषेधः । मिमिक्षुं मिहसेचनेइत्यस्य सनि एकाचइतीट्प्रतिषेधे हलन्ताच्चेतिकिद्वद्भावः सनाशंसभिक्षउः प्रत्ययस्वरः । ज्यैष्ठ्याय ज्येष्ठस्यभावइत्यर्थे ब्राह्मणादित्वात्ष्यञ् ञित्त्वादाद्युदात्तः । गृणानाः गृशब्दे क्र्यादित्वात्श्ना चित्त्वादन्तोदात्तः । मन्दानः मदिस्तुत्यादिष्वित्यस्यशानचि बहुलंछन्दसीतिशपोलुक् । पुरुधा पुरुशब्दइहसंख्यावाची संख्यायाविधार्थेधेतिधाप्रत्ययः इषण्य इषगतौ इषणमिच्छतीति छन्दसिपरेच्छायांक्यच् तदन्तादन्तर्भावितण्यर्थस्यलोटिरूपम् ॥ ३ ॥

अथचतुर्थी–

इमंकामंमन्दयागोभिरश्वैश्चन्द्रवंताराधसापप्रथश्च ।
स्वर्यवोमतिभिस्तुभ्यंविप्राइन्द्रायवाहःकुशिकासोअक्रन् ॥४॥

इमम् । कामम् । मन्दय । गोभिः । अश्वैः । चन्द्रऽवता । राधसा । पप्रथः । च । स्वःऽयवः । मतिऽभिः । तुभ्यम् । विप्राः । इन्द्राय । वाहः । कुशिकासः । अक्रन् ॥ ४ ॥

अथपञ्चमी–

शुनंहुवेममघवानमिन्द्रमस्मिन्भरेनृतमंवाजसातौ ।
शृण्वन्तमुग्रमूतयेसमत्सुघ्नन्तंवृत्राणिसंजितंधनानाम् ॥५॥१४॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ ५ ॥ १४ ॥

एतेव्याख्याते ॥ ४ ॥ ५ ॥

॥ इतितृतीयस्यतृतीयेचतुर्दशोवर्गः ॥ १४ ॥

चर्षणीधृतमितिद्वादशर्चंत्रयोदशंसूक्तं वैश्वामित्रमैन्द्रम् । अत्रानुक्रमणिका–चर्षणीधृतंद्वादशाद्यान्त्यौत्र्यृचौजागतगायत्राविति । आद्यस्त्र्यृचोजागतः अन्त्यस्त्र्यृचोगायत्रः शिष्टाऋचस्त्रि-

ष्टुभः सूक्तविनियोगोलैङ्गिकः *उक्थ्येक्रतौमैत्रावरुणशस्त्रे अनुरूपत्र्यृचानन्तरमाद्यस्त्र्यृचःशंसनीयः सूत्रितश्च—चर्षणीधृतमस्तभ्नाद्यामसुरइतित्र्यृचाविति । विषुवतिनिष्केवल्येनृणामुत्वेतित्र्यृचःविषुवानितिखण्डेसूत्रितं—नृणामुत्वानृतमंगीर्भिरुक्थैरितितिस्रइति । बृहस्पतिसवेप्ययंत्र्यृचोनिष्केवल्येनिविद्धानीयः सूत्रितश्च—नृणामुत्वेतिमाध्यन्दिनइति । महाव्रतेपिनिष्केवल्येअयंत्र्यृचः दशरात्रेचतुर्थेहनिमरुत्वतीयेइन्द्रमरुत्वइतितिस्रः षष्ठेहनिषष्ठस्येतिखण्डेसूत्रितं—इन्द्रमरुत्वइतितिस्रइतिमरुत्वतीयमिति । बृहस्पतिसवेपिमरुत्वतीयशस्त्रेअयंत्र्यृचोनिविद्धानीयः । सूत्रितश्च–इन्द्रमरुत्वइहनृणामुत्वेतिमाध्यन्दिनइति । आद्यामरुत्वतीयग्रहस्यानुवाक्या सूत्रितश्च—मरुत्वतीयेनग्रहेणचरन्तीन्द्रमरुत्वइहपाहिसोममिति । तृतीयेपर्यायेहोतुःशस्त्रेइदंह्यन्वोजसेतिस्तोत्रियस्त्र्यृचः । सूत्रितंच—इदंह्यन्वोजसामहांइन्द्रोयओजसेति ।

तत्रप्रथमा—

चर्षणीधृतंमघवानमुक्थ्यं१मिन्द्रंगिरोबृहतीरभ्यनूषत ।
वावृधानंपुरुहूतंसुवृक्तिभिरमर्त्यंजरमाणंदिवेदिवे ॥ १ ॥

चर्षणिऽधृतम् । मघऽवानम् । उक्थ्यम् । इन्द्रम् । गिरः ।
बृहतीः । अभि । अनूषत । ववृधानम् । पुरुऽहूतम् ।
सुवृक्तिऽभिः । अमर्त्यम् । जरमाणम् । दिवेऽदिवे ॥ १ ॥

बृहतीः प्रभूतागिरोस्मदीयाःस्तुतिलक्षणावाचः चर्षणीधृतं चर्षणीनांमनुष्याणामभिमतफलप्रदानेनधारकंपोषकम् यद्वा आकृषत्यनेनसर्वमितिचर्षणिबलं तद्धारकं मघवानं धनवन्तम् उक्थ्यम् उक्थैःशस्त्रैःशंसनीयं वावृधानं बलधनादिसंपत्त्याप्रतिक्षणंवर्धमानं पुरुहूतं स्तोतृभिर्बहुवारमाहूतम् अमर्त्यं मरणधर्मरहितं सुवृक्तिभिः शोभनस्तुतिवाक्यैर्दिवेदिवे प्रत्यहं जरमाणंस्तूयमानं तमिममिन्द्रम् अभ्यनूषत अभितःसर्वतःस्तुवन्तु ॥ बृहतीः वाछन्दसीतिसवर्णदीर्घः । अनूषत णुस्तवने अस्माल्लुङिसिच् धातोःकुटादित्वात्सिचोङित्त्वेनगुणाभावः । सुवृक्तिभिः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वं यद्वा सुवृक्तयइतिस्तुतिकरणभूताऋचोवृक्तिशब्देनोच्यन्ते क्तिच्क्तौचेतिक्तिच् कृत्स्वरेणान्तोदात्तः । दिवेदिवे नित्यवीप्सयोरितिद्विर्वचनं परस्याम्रेडितत्वादनुदात्तत्वेपूर्वपदस्वरः ॥ १ ॥

अथद्वितीया-

शतक्रतुमर्णवंशाकिनंनरंगिरोमइन्द्रमुपयन्तिविश्वतः ।
वाजसनिंपूर्भिदंतूर्णिमप्तुरंधामसाचमभिषाचंस्वर्विदम् ॥ २ ॥

शतऽक्रतुम् । अर्णवम् । शाकिनम् । नरम् । गिरः । मे । इन्द्रम् ।
उप । यन्ति । विश्वतः । वाजऽसनिम् । पूःऽभिदम् । तूर्णिम् ।
अप्ऽतुरम् । धामऽसाचम् । अभिऽसाचम् । स्वःऽविदम् ॥ २ ॥

मे मदीयागिरः स्तुतिलक्षणावाचः शतक्रतुं शतंक्रतवोयज्ञायस्यतम् अर्णवं पर्जन्यात्मनाउदकवन्तं शाकिनं शक्नोत्येभिरिन्द्रइतिशाकाःसहायभूतामरुतस्तद्वन्तं नरं सर्वस्यजगतो नेतारं वाजसनिं वाजस्यान्नस्यदातारं पूर्भिदं शत्रुपुरांभेत्तारं तूर्णिं युद्धंप्रतिशीघ्रंगन्तारम् अप्तुरं मेघभेदनद्वारापांप्रेरकं धामसाचं तेजोभजमानं यद्वा धनं धाम तदर्थिभिः सहयोजयितारम् अभिषाचं शत्रूणामभिभवितारं स्वर्विदं स्वर्गस्यलम्भकं तमिममिन्द्रं विश्वतः सर्वतः उपयन्ति उपगच्छन्तु ॥ अर्णवम् अर्णोस्यास्तीतिमत्वर्थे अर्णसः सलोपश्चेतिवप्रत्ययःसकारलोपश्च प्रत्ययस्वरः । नरं नयतेर्डिच्चेतिऋप्रत्ययः अमःसुत्वादनुदात्तत्वेप्रत्ययस्वरः यन्ति इण्गतावित्यस्य लटि इणोयणितियण् निघातः । वाजसनिं षणुदाने खनिकष्यज्यसिवसीत्यादिनाइप्रत्ययः परादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वम् । तूर्णिं ञित्वरासंभ्रमे वहिश्रीत्यादिनानिप्रत्ययः ज्वरत्वरेत्यादिनाऊठ् निदित्यतिदेशादाद्युदात्तः । अप्तुरं तुरत्वरणे क्विप् कृदुत्तरपदस्वरः । अभिषाचं षचसमवाये ण्यन्तस्यक्विप् ॥ २ ॥

अथतृतीया-

आकरेवसोर्जरितापनस्यतेनेहसस्तुभइन्द्रोदुवस्यति ।
विवस्वतःसदनआहिपिप्रियेसत्रासाहमभिमातिहनंस्तुहि ॥ ३ ॥

आऽकरे । वसोः । जरिता । पनस्यते । अनेहसः । स्तुभः ।
इन्द्रः । दुवस्यति । विवस्वतः । सदने । आ । हि । पिप्रिये ।
सत्राऽसहम् । अभिमातिऽहनम् । स्तुहि ॥ ३ ॥

जरिता शत्रूणांजरयितेन्द्रः आकरे आकीर्यतेयुद्धार्थधनमत्रेत्याकरोयुद्धं तस्मिन्वसोर्धनस्यस्थानभूतेयुद्धे पनस्यते सर्वैःस्तूयते यद्वा वसोः वसत्याभिमुख्येनतिष्ठतीतिवसुः शत्रुः तस्य जरयितेतियोजनीयं सइन्द्रः अनेहसः अपापाः स्तुभः स्तुतीः दुवस्यतिपारिचरति तासांफलंप्रयच्छन्पूजयतीत्यर्थः किञ्च सइन्द्रोविवस्वतः विशेषेणाग्निहोत्रार्थंवसतोहविष्मतोवा यजमानस्यसदनेगृहे आपिप्रियेहि सोमपानादिनाअत्यन्तंप्रीतोभवति खलु सत्रासाहं सत्यमेवशत्रूणामेवहन्तारं यद्वा मरुद्भिःसहशत्रूणामभिभवितारम् अतएवाभिमातिहनं शत्रूणांहन्तारमिन्द्रंस्तुहि हेविश्वामित्रेति ॥ आकरे कृविक्षेपे अधिकरणे ऋदोरबित्यप् थाथादिस्वरेणान्तोदात्तः । जरिता जॄष्वयोहानौ इत्यस्यान्तर्भावितण्यर्थस्यतृचिरूपं चित्त्वादन्तोदात्तः । पनस्यते पनस्यतिःस्तुतिकर्मा तस्य कर्मणिलटिरूपं निघातः । अनेहसः हन्तेर्नञिउपपदेनञिहनएहचेत्यसिप्रत्ययः एहइत्ययंचादेशोधातोः नञ्सुभ्यामितिस्वरेणान्तोदात्तः । स्तुभः स्तोभतिरर्चतिकर्मा क्विप् । दुवस्यति दुवःपरिचरणमात्मनइच्छतीत्यर्थेक्यच् निघातः । पिप्रिये प्रीङ्तर्पणे लिटिरूपं हियोगादनिघातः ॥ ३ ॥

अथचतुर्थी-

नृणामुंत्वानृतमंगीर्भिरुक्थैरभिप्रवीरमर्चतासबाधः ।
संसहसेपुरुमायोजिहीतेनमोअस्यप्रदिवएकईशे ॥ ४ ॥

नृणाम् । उँ इति । त्वा । नृऽतमम् । गीःऽभिः । उक्थैः । अभि ।
प्र । वीरम् । अर्चत । सऽबाधः । सम् । सहसे । पुरुऽमायः ।
जिहीते । नमः । अस्य । प्रऽदिवः । एकः । ईशे ॥ ४ ॥

हेइन्द्र सबाधः रक्षोघ्नमन्त्रोच्चारणेनतद्विषयबाधयासहवर्तन्तइतिसबाधः ऋत्विजः नृणांनृतमं मनुष्याणामतिशयेनस्वस्वकर्मणिनेतारं वीरंसामर्थ्योपेतं त्वां गीर्भिःस्तुतिसाधनभूतैर्वाक्यैरुक्थैःशस्त्रैश्चाभिमुख्येनप्रार्चत प्रकर्षेणार्चन्ति पुरुमायः वृत्रहननादिबहुकर्मासइन्द्रः सहसे बलायसंजिहीते गमनोद्यमंकरोति किंच प्रदिवः पुरातनः एकः असहायः सइन्द्रः नमः नमसोऽस्यहविर्लक्षणस्यान्नस्य ईशे ईष्टे यद्वा अस्य सर्वस्यजगतईष्टे तस्मादिन्द्रायनमः ॥ नृणां नामन्यतरस्यामितिविभक्तेरुदात्तत्वम् । अर्चत अर्चतेर्लटि छे-

स्तादेशः 'तिङांतिङोभवन्तीतिवचनात् । सबाधः बाधृविलोडने क्विप् वोपसर्जनस्येतिसहस्यसत्वं कृदुत्तरपदस्वरः । पुरुमायः अन्तोदात्तप्रकरणे त्रिचक्रादीनामुपसंख्यानामिति अन्तोदात्तत्वम् । ईशे ईशऐश्वर्ये इत्यस्यलटि लोपस्तआत्मनेपदेष्वितितलोपः निघातः ॥ ४ ॥

अथपञ्चमी–

पूर्वीरस्यनिष्षिधोमर्त्येषुपुरूवसूनिपृथिवीबिभर्ति ।
इन्द्रायद्यावओषधीरुतापोरयिंरक्षन्तिजीरयोवनानि ॥५॥१५॥

पूर्वीः । अस्य । निःऽसिधः । मर्त्येषु । पुरु । वसूनि । पृथिवी ।
बिभर्ति । इन्द्राय । द्यावः । ओषधीः । उत । आपः । रयिम् ।
रक्षन्ति । जीरयः । वनानि ॥ ५ ॥ १५ ॥

मर्त्येषु मनुष्येषु अस्येन्द्रस्य निष्षिधोनुशासनानि पूर्वीः हितोपदेशादिभिः प्रभूतानि नानाप्रकाराणिभवन्ति इन्द्रस्यशासितृत्वेमन्त्रः–उक्थमिन्द्रायशंस्यंवर्धनंपुरुनिष्षिधेइति । तथा शासकाय तस्मैइन्द्राय पृथिवी पुरुपुरूणि बहूनि वसूनि धनानि बिभर्ति अन्तर्धारयति किंच द्यावोद्युलोकाः ओषधीरोषधयः उतापिच आपोजलानि जीरयःजीर्यन्तइतिजीरयोमनुष्याः वनानि वृक्षाश्च एतेसर्वे इन्द्रस्याज्ञयातदुपभोगयोग्यं रयिं धनं रक्षन्ति ॥ निष्षिधः षिधुगत्यां क्विप् संहितायांनिसःसकारेण इणोव्यवधानंछान्दसत्वादनादृत्य उपसर्गात्सुनोतीत्यादिनाषत्वं निसःसकारस्यष्टुनाष्टुरितिषत्वम् ॥ ५ ॥

॥ इतितृतीयस्यतृतीयेपञ्चदशोवर्गः ॥ १५ ॥

अथषष्ठी–

तुभ्यंब्रह्माणिगिरइन्द्रतुभ्यंसत्रादधिरेहरिवोजुषस्व ।
बोध्याऽपिरवसोनूतनस्यसखेवसोजरितृभ्योवयोधाः ॥ ६ ॥

---

१ ऋ. सं. १. १. १९ ।

तुभ्यम् । ब्रह्माणि । गिरः । इन्द्र । तुभ्यम् ॥ सत्रा । दधिरे । हरिऽवः । जुषस्व । बोधि । आपिः । अवसः । नूतनस्य । सखे । वसो इति । जरितृऽभ्यः । वयः । धाः ॥ ६ ॥

हेहरिवः अश्ववन्निन्द्र तुभ्यंत्वदर्थंब्रह्माणिस्तोत्राणि तथा तुभ्यम् गिरःशस्त्राणिच सत्रा सत्यमेवदधिरे ऋत्विजोधारयन्ति तानिजुषस्व सेवस्व हेवसो सर्वस्यवासयितः सखे सखिभूत हेइन्द्र आपिर्व्याप्तस्त्वं नूतनस्य नवतरमवसोन्नलक्षणंहविर्बोधि त्वदर्थंदीयमानंजानीहि अतस्त्वं जरितृभ्यः स्तोतृभ्योऽस्मभ्यंवयोन्नंधाः देहि ॥ तुभ्यं ङयिचेत्याद्युदात्तत्वम् । जुषस्व जुषीप्रीतिसेवनयोरित्यस्यलोटिरूपं वाक्यभेदादनिघातः । बोधि बुध-अवगमनेइत्यस्य लोटि वाछन्दसीतिहेर्विकल्पेनङित्त्वादत्रपित्त्वाद्गुणः हुझल्भ्योहेर्धिरितिध्यादेशः ङित्वादन्तोदात्तः ॥ ६ ॥

अथसप्तमी—

इन्द्रंमरुत्वइहपाहिसोमंयथाशार्यातेअपिबःसुतस्य ।
तवप्रणीतीतवशूरशर्मन्नाविवासन्तिकवयःसुयज्ञाः ॥ ७ ॥

इन्द्र । मरुत्वः । इह । पाहि । सोमम् । यथा । शार्याते । अपिबः । सुतस्य । तव । प्रऽनीती । तव । शूर । शर्मन् । आ । विवासन्ति । कवयः । सुऽयज्ञाः ॥ ७ ॥

हेमरुत्वः मरुद्भिस्तद्वन्निन्द्र त्वम् इहास्मदीयेयज्ञे आगत्य सोमंपाहि पिब यथा त्वं पूर्वं शार्यातेः शर्यातेःपुत्रेतस्मिन्राजनियज्ञंकुर्वाणे सुतस्याभिषुतंसोममपिबः तथात्रपिबेत्यर्थः इन्द्रः शार्यातस्ययज्ञेसोमरसानापिबदित्येषोर्थःकौषीतकेस्पष्टमुक्तः । तथामन्त्रवर्णश्च—आस्मारथंवृषपाणेषुतिष्ठसिशार्यातस्यप्रभृतायेषुमन्दसइति । हेशूरेन्द्र तवसंबन्धिनि शर्मन् शर्मणि निर्बाधस्थानेस्थिताःसुयज्ञाःसुष्ठुकृतयज्ञाःकवयोमेधाविनोयजमानाःप्रणीती तवहविषांप्रणयनेनप्रापणेनआसमन्ताद्विवासन्ति त्वामेवपरिचरन्तिविवासतिःपरिचरणकर्मा ॥ शार्याते शर्यातेरयमित्यर्थे तस्येदमित्यण्प्रत्ययः । अपिबः यथायोगादनिघातः अडागमस्वरः । प्रणीती नयतेर्भावेक्तिन् तादौचनितिकृतीतिगतेःप्रकृतिस्वरत्वं सुपांसुलुगितितृतीयायाःसवर्णदीर्घः उपसर्गादसमासेपीतिणत्वम् ॥ ७ ॥

---

१ ऋ० सं० १. ४. ११.

अथाष्टमी–

सवावशानइहपाहिसोमंमरुद्भिरिन्द्रसखिभिःसुतंनः ।
जातंयत्त्वापरिदेवाअभूषन्महेभरायपुरुहूतविश्वे ॥ ८ ॥

सः । वावशानः । इह । पाहि । सोमम् । मरुत्ऽभिः । इन्द्र ।
सखिऽभिः । सुतम् । नः । जातम् । यत् । त्वा । परि । देवाः ।
अभूषन् । महे । भराय । पुरुऽहूत । विश्वे ॥ ८ ॥

हेइन्द्र वावशानः सोमंकामयमानः सताद्दशस्त्वं सखिभिः समानख्यानैर्मरुद्भिःसह नोऽस्मत्संबन्धिनीहास्मिन्यज्ञे सुतमभिषुतंसोमंपाहि पिब हेपुरुहूत पुरुभिराहूतेन्द्र जातं पानेनप्रबलंसंपन्नंयत्त्वं त्वां विश्वेसर्वेदेवाः महे महते भराय ह्रियन्ते योधानामायूंष्यत्रेतिभरः संग्रामः तस्मै संग्रामाय पर्यभूषन्सर्वतोलमकुर्वन् ॥ वावशानः वशेर्यङ्लुकि चानशिरूपं चित्त्वादन्तोदात्तः । अभूषन् भूषअलङ्कारेभ्वादिः लङिरूपं यद्योगादनिघातः । भराय हञ्हरणे अधिकरणेघः हृग्रहोर्भश्छन्दसीतिहकारस्यभकारः वृषादित्वादाद्युदात्तः ॥ ८ ॥

अथनवमी–

अप्तूर्येमरुतआपिरेषोमन्दन्निन्द्रमनुदातिवाराः ।
तेभिःसाकंपिबतुवृत्रखादःसुतंसोमंदाशुषःस्वेसधस्थे ॥ ९ ॥

अप्ऽतूर्ये । मरुतः । आपिः । एषः । अमन्दन् । इन्द्रम् ।
अनु । दातिऽवाराः । तेभिः । साकम् । पिबतु । वृत्रऽखादः ।
सुतम् । सोमम् । दाशुषः । स्वे । सधऽस्थे ॥ ९ ॥

हे मरुतः यएषइन्द्रः अप्तूर्ये अपांप्रेरणे आपिः युष्माकंसखासन्वर्तते दातिवाराः वारोवरणीयंबलंधनंवा दत्तबलाःदत्तधनावा तेमरुतःतमिन्द्रमन्वमन्दन् अहृष्यन् वृत्रखादः वृत्रस्यहिंसकः सइन्द्रः तेभिस्तैर्मरुद्भिःसाकं दाशुषः हविर्दत्तवतोयजमानस्य स्वे स्वकीये सधस्थे सहतिष्ठत्यस्मिन्निति सधस्थंगृहं तस्मिन्सुतमभिषुतंसोमंपिबतु ॥ अप्तूर्ये तूरीत्वराहिंसयोरित्यस्माद्घ्यादयश्चेतियत्प्रत्ययः यतोनावइत्याद्युदात्तः समासेकृदुत्तरपदस्वरः अमन्दन् मदिस्तुत्यादिषु परस्मैपदी पादादित्वादनिघातः । वृत्रखादः खादभक्षणे कर्मण्यण् । दाशुषः दाश्रृदाने

इत्यस्यक्वसौ दाश्वान्साह्वान्मीढ्वांश्चेतिद्विर्वचनाद्यभावः वसोःसंप्रसारणं प्रत्ययस्वरः । सधस्थे सधमादस्थयोश्छन्दसीति सहस्यसधादेशः ॥ ९ ॥

अथदशमी–

इदंह्यन्वोजंसासुतंराधानांपते । पिबात्व१स्यगिर्वणः ॥ १० ॥

इदम् । हि । अनु । ओजसा । सुतम् । राधानाम् ।
पते । पिब । तु । अस्य । गिर्वणः । ॥ १० ॥

हेराधानांपते धनानांस्वामिन् गिर्वणः गीर्भिःस्तुतिभिर्वननीय हेइन्द्र इदमनुअनेनानुक्रमेण उद्देशानुक्रमेणेत्यर्थः ओजसाबलेन ग्रावभिःसुतमभिषुतम्अस्येमंसोमं तु क्षिप्रं पिबहि ॥ १० ॥

अथैकादशी–

यस्ते अनुस्वधामसंत्सुतेनियंच्छतन्वंम्।सत्वांममत्तुसोम्यम्॥११॥

यः । ते । अनु । स्वधाम् । असंत् । सुते ।
नि । यच्छ । तन्वम् । सः । त्वा । ममत्तु । सोम्यम् ॥ ११ ॥

हेइन्द्र त्वदर्थं यःसोमः स्वधामन्नमन्वनुसृत्य ग्रावभिरभिषुतः असत्अस्ति सुते तस्मिन्सोमे तन्वंस्वकीयंशरीरंनियच्छ प्रेरय ससोमःसोम्यं सोमार्हं त्वा त्वांममत्तु मादयतु ॥ असत् अस्तेर्लेट्यडागमेरूपं यद्वृत्तयोगादनिघातः आगमस्यानुदात्तत्वेधातुस्वरः ॥ ११ ॥

अथद्वादशी–

प्रतेंअश्नोतुकुक्ष्योःप्रेन्द्रब्रह्मणाशिरंः । प्रबाहूशूररार्धसे ॥१२॥१६॥

प्र । ते । अश्नोतु । कुक्ष्योः । प्र । इन्द्र । ब्रह्मणा ।
शिरः । प्र । बाहू इति । शूर । राधसे ॥ १२ ॥ १६ ॥

हेइन्द्र ससोमस्तेतव कुक्ष्योः कुक्षेरुभयोःपार्श्वयोःप्राश्नोतु प्रकर्षेणव्याप्नोतु तथा ब्रह्मणास्तोत्रेणसहितःससोमः शिरः शरीरमवयवादिनाअवयवीलक्ष्यते त्वच्छरीरंप्राश्नोतु

हेशूरेन्द्र राधसेधनाय तव बाहूअपिप्राश्नोतु ॥ अश्नोतु अशूव्याप्ताविस्यस्यलोटि व्यत्ययेनपरस्मैपदं निघातः । कुक्ष्योः उदात्तयणोहल्पूर्वादितिविभक्तेरुदात्तत्वम् ॥ १२ ॥

॥ इतितृतीयस्यतृतीयेषोडशोवर्गः ॥ १६ ॥

धानावन्तमित्यष्टर्चंचतुर्दशंसूक्तंवैश्वामित्रमैन्द्रम् ॥ अत्रेयमनुक्रमणिका—धानावन्तमष्टौपूर्वोर्धेगायत्रंषष्ठीजगतीति । आदितश्चतस्रोगायत्र्यः तृतीयेधानाइतिषष्ठीजगती शिष्टास्त्रिष्टुभः सूक्तविनियोगोलिङ्गादवगन्तव्यः प्रातःसवनीयपुरोडाशस्यानुवाक्याधानावन्तमित्याद्या सूत्रितंच—धानावन्तंकरम्भिणमितिप्रातःसवनेनुवाक्येति ।

तत्रप्रथमा—

धानावन्तंकरम्भिणमपूपवन्तमुक्थिनम् । इन्द्रंप्रातर्जुषस्वनः ॥ १ ॥

धानाऽवन्तम् । करम्भिणम् । अपूपऽवन्तम् ।
उक्थिनम् । इन्द्र । प्रातः । जुषस्व । नः ॥ १ ॥

हेइन्द्र धानावन्तं धानाभृष्टयवास्तद्वन्तं करम्भिणं करम्भोदधिमिश्राःसक्तवः तद्वन्तम् अपूपवन्तं सवनीयपुरोडाशोपेतम् उक्थिनं शस्त्रिणं नोऽस्मदीयमिमंसोमंप्रातः प्रातःसवनेजुषस्व सेवस्व ॥ प्रातः स्वरादिष्वन्तोदात्तत्वेनपठितत्वादन्तोदात्तः ॥ १ ॥

अथद्वितीया—

पुरोळाशंपचत्यंजुषस्वेन्द्रागुरस्वच । तुभ्यंहव्यानिसिस्रते ॥ २ ॥

पुरोळाशम् । पचत्यम् । जुषस्व । इन्द्र । आ ।
गुरस्व । च । तुभ्यम् । हव्यानि । सिस्रते ॥ २ ॥

हेइन्द्र पचत्यं पचनेसाधुं पुरोळाशं पुरोदाशन्तएनमितिपुरोडाशोहविःतंजुषस्व किंच आगुरस्व पुरोडाशभक्षणार्थमुद्यमंकुरु हव्यानि हवनयोग्यानिपुरोडाशादीनिहवींषितुभ्यंत्वदर्थंसिस्रते आहवनीयंगच्छन्ति तानिसेवस्वेतिभावः ॥ पचत्यं पचनशब्दात्तत्रसाधुरितियत्प्रत्ययान्तस्यपदस्यछन्दसिचूत्वाभावादत्रयतोनावइत्यस्यप्राप्तिर्नास्ति तित्स्वरितः । गुरस्व गुरीउद्यमने शव्विकरणी निघातः । सिस्रते सृगतौ छन्दसिजुहोत्यादिः व्यत्ययेनात्मनेपदम् ॥ २ ॥

अथतृतीया—

पुरोळाशंचनोघसोजोषयासेगिरश्चनः । वधूयुरिवयोषणाम् ॥ ३ ॥

पुरोळाशम् । च । नः । घसः । जोषयासे । गिरः ।
च । नः । वधूयुःऽइव । योषणाम् ॥ ३ ॥

हेइन्द्र नोऽस्मत्संबन्धिनंपुरोळाशं घसः भक्षयच नोऽस्मदीयाःस्तुतिलक्षणागिरोजोषयासे सेवस्वच तत्रदृष्टान्तः—वधूयुरिवयोषणां यथा वधूयुः स्त्रीकामः योषणांभजनीयांयुवतिंसेवतेतद्वत् ॥ घसः घस्लृअदनेइत्यस्य लेट्यडागमेरूपं चवायोगेप्रथमेतिनानिघातः । जोषयासे जुषीप्रीतिसेवनयोरित्यस्यण्यन्तस्य लेट्याडागमेरूपम् आगमस्यानुदात्तत्वेणिचःस्वरः पादादित्वादनिघातः । वधूयुरिव सुपआत्मनःक्यच् क्याच्छन्दसीत्युप्रत्ययः प्रत्ययस्वरः । योषणां युषभजन इतिसौत्रोधातुः कृत्यल्युटोबहुलमितिल्युट् लित्स्वरः ॥ ३ ॥

अथचतुर्थी—

पुरोळाशंसनश्रुतप्रातःसावेजुषस्वनः । इन्द्रक्रतुर्हितेबृहन् ॥ ४ ॥

पुरोळाशम् । सनऽश्रुत । प्रातःऽसावे । जुषस्व ।
नः । इन्द्र । क्रतुः । हि । ते । बृहन् ॥ ४ ॥

हेसनश्रुत पुराणतयाप्रसिद्ध हेइन्द्र नोऽस्मत्संबन्धिनमिमंपुरोडाशं प्रातःसावे सूयते अत्रसोमइतिसावः तस्मिन्प्रातःसवनेजुषस्व यतस्तेतवक्रतुःकर्म बृहन्महद्धि ॥ प्रातःसावे षुञ् अभिषवे. कर्मणिघञ् प्रादिसमासः थाथादिस्वरेणान्तोदात्तः ॥ ४ ॥

माध्यन्दिनसवनेसवनीयपुरोडाशस्यमाध्यन्दिनस्यसवनस्यधानाइत्यनुवाक्या । सूत्रितञ्च—माध्यन्दिनस्यसवनस्यधानाइतिमाध्यन्दिनइति ।

अथपञ्चमी—

माध्यन्दिनस्यसवनस्यधानाःपुरोळाशमिन्द्रकृष्वेहचारुम् ।
प्रयत्स्तोताजरितातूर्ण्यर्थोवृषायमाणउपगीर्भिरीट्टे ॥५॥१७॥

माध्यंन्दिनस्य । सर्वनस्य । धानाः । पुरोळाशम् । इन्द्र ।
कृष्व । इह । चारुम् । प्र । यत् । स्तोता । जरिता । तूर्णिऽअर्थः ।
वृषऽयमाणः । उप । गीःऽभिः । ईट्टे ॥ ५ ॥ १७ ॥

हेइन्द्र माध्यन्दिनस्य मध्यन्दिनेभवस्यसवनस्यसंबन्धिनीर्धानाःभृष्टयवान् चारुं कमनीयं पुरोडाशंचइहकर्मण्यागत्यकृष्व भक्षणेनसंस्कुरु यद्यदाजरिता भवत्परिचरणंकुर्वाणःतूर्ण्यर्थःत्वांस्तोतुमितस्ततःत्वरितगमनः अतएव वृषायमाणः वृषइवाचरन् स्तोतागीर्भिःस्तुतिलक्षणाभिर्वाग्भिरुपसमीपेप्रैट्टे प्रकर्षेणस्तौति तदा पुरोडाशादिहवींषिभक्षयेतिभावः ॥ माध्यन्दिनस्य मध्यन्दिनशब्दात्तत्रभवार्थे उत्सादित्वादञ् ञित्वादाद्युदात्तः । चारुम् चरगतिभक्षणयोः दृसनिजनिचरिचटिरहिभ्योञुण् णित्त्वादुपधावृद्धिः ञित्वादाद्युदात्तः तूर्ण्यर्थः तूर्णि ञित्वरासंभ्रमेइत्यस्माद्वहिश्रीत्यादिनानिप्रत्ययः निश्च अर्थः ऋगतौ उषिकुषिगार्तिभ्यस्थन्निितिथन् बहुव्रीहौपूर्वपदस्वरः । वृषायमाणः वृषइवाचरतीत्यर्थे कर्तुःक्यङ्सलोपश्चेतिक्यङ् अकृत्सार्वधातुकयोर्दीर्घः ङित्त्वादनुदात्तङितआत्मनेपदं लट् शानच् तस्यलसार्वधातुकस्वरेधातुस्वरः । ईट्टे ईडस्तुतावित्यस्यलटिरूपं यद्योगादनिघातः ॥ ५ ॥

॥ इतितृतीयस्यतृतीयेसप्तदशोवर्गः ॥ १७ ॥

तृतीयसवनेसवनीयपुरोडाशस्य तृतीयेधानाइत्यनुवाक्या । सूत्रितञ्च—तृतीयेधानाःसवनेपुरुष्टुतेतितृतीयसवनइति ।

तृतीयेधानाःसवनेपुरुष्टुतपुरोळाशमाहुतंमामहस्वनः ।
ऋभुमन्तंवाजवन्तंत्वाकवेप्रयस्वन्तउपशिक्षेमधीतिभिः ॥६॥

तृतीये । धानाः । सर्वने । पुरुऽस्तुत । पुरोळाशम् । आऽहुतम् ।
ममहस्व । नः । ऋभुऽमन्तम् । वाजऽवन्तम् । त्वा । कवे ।
प्रयस्वन्तः । उप । शिक्षेम । धीतिऽभिः ॥ ६ ॥

हेपुरुष्टुत पुरुभिर्बहुभिःस्तोतृभिःस्तुत हेइन्द्र तृतीयेसवनेनोऽस्मदीयान्धानाहुतान्भृष्टयवान् आहुतंपुरोडाशंच मामहस्व भक्षणेनमहय हेकवे इन्द्र प्रयस्वन्तःसंभृतहविष्कावयम् ऋभुमन्तम् ऋभवोयेकेचनदेवाःतद्वन्तं वाजवन्तं वाजोनामसुधन्वनःपुत्रः तद्वन्तं त्वात्वां धीतिभिः

स्तुतिभिरुपशिक्षेम समीपेपरिचरेम ॥ आहुतं जुहोतेःकर्मणिक्तः गतिरनन्तरइतिगतेःस्वरः । ममहस्व महपूजायाम्इत्यस्ययङ्लुगन्तस्यलोटि व्यत्ययेनात्मनेपदं शपोलुगभावश्छान्दसः । शिक्षेम शिक्षतेराशीर्लिङि लिङ्याशिष्यङित्यङ्प्रत्ययः निघातः । धीतिभिः हिष्ठवत्सरत्रिंशत्थान्तानामित्यन्तोदात्तत्वम् ॥ ६ ॥

अथसप्तमी—

पूषण्वतेतेचकृमाकरम्भंहरिवतेहर्यश्वायधानाः ॥
अपूपमद्धिसगणोमरुद्भिःसोमंपिबवृत्रहाशूरविद्वान् ॥ ७ ॥

पूषण्ऽवते । ते । चकृम । करम्भम् । हरिऽवते । हरिऽअश्वाय । धानाः । अपूपम् । अद्धि । सऽगणः । मरुत्ऽभिः । सोमम् । पिब । वृत्रऽहा । शूर । विद्वान् ॥ ७ ॥

हेइन्द्र पूषण्वते पूषानामकश्चिद्देवःअदन्तकः तद्वते तेतुभ्यं करम्भं दधिमिश्रं सक्तुंचकृमभक्षणार्थंकुर्मः तथाचश्रुतिः—पूषाप्रपिष्टभागोदन्तकोहीति । हरिवते हरिनामकावश्वौ तद्वते हर्यश्वाय हरितवर्णाश्वयुक्तायेन्द्राय तुभ्यं धानाःभक्षणार्थंकुर्मः तथाचमन्त्रवर्णः—प्रसेतामश्वाविमुचेहशोणादिवेदिवेसदृशीरद्धिधानाइति । मरुद्भिःसगणस्त्वम् अपूपं पुरोडाशम् अद्धि भक्षय हेशूर असहाय हेइन्द्र वृत्रहावृत्रस्यहन्ता विद्वान्सर्वंजानानस्त्वंसोमंपिब ॥ पूषण्वते पूषशब्दस्यमतुप् अनोनुडितिनुडागमः रषाभ्यामितिणत्वम् । चकृम करोतेश्छान्दसेवर्तमानेलिटि क्रादित्वादिडभावः निघातः । हरिवते छन्दसीरइतिमतुपोवत्वम् ॥ ७ ॥

अथाष्टमी—

प्रतिधानाभरततूर्यमस्मैपुरोळाशंवीरतमायनृणाम् ।
दिवेदिवेसदृशीरिन्द्रतुभ्यंवर्धन्तुत्वासोमपेयायधृष्णो ॥ ८ ॥ १८ ॥

प्रति । धानाः । भरत । तूर्यम् । अस्मै । पुरोळाशम् । वीरऽतमाय । नृणाम् । दिवेऽदिवे । सऽदृशीः । इन्द्र । तुभ्यम् । वर्धन्तु । त्वा । सोमऽपेयाय । धृष्णो इति ॥ ८ ॥ १८ ॥

१ ऋ० सं० ३. २. १७.।

यजमानोध्वर्य्वादीन्प्रतिब्रूते—हे अध्वर्य्वादयः अस्माइन्द्रायधानाः तूयंक्षिप्रंप्रतिभरत संपादयत नृणांवीरतमायास्माइन्द्रायपुरोडाशंचसंपादयत अथप्रत्यक्षकृतः हेवृष्णो शत्रूणामभिभवनशील हेइन्द्र सदृशीरेकविधाः स्तुतयः तुभ्यंत्वदर्थं दिवेदिवे प्रतिदिवसमस्माभिःक्रियन्ते ताःस्तुतयः सोमपेयाय सोमपानार्थंत्वांवर्धन्तु उत्साहेनप्रवृद्धंकुर्वन्तु ॥ सदृशीः समानान्ययोश्चेतिकञ्प्रत्ययः टिड्ढाणञित्यादिनाङीप् दृग्दृशवतुष्वितिसमानस्यसभावः ॥ ८ ॥

॥ इतितृतीयस्यतृतीयेष्टादशोवर्गः ॥ १८ ॥

इन्द्रापर्वतेतिचतुर्विंशत्यृचंपञ्चदशंसूक्तम् अत्रेयमनुक्रमणिका—इन्द्रापर्वताचतुर्विंशतिराद्यैन्द्रापार्वती पञ्चदश्यादिद्वेवाचेससपर्यैंचतस्रोरथाङ्गस्तुतयोन्त्याअभिशापार्थास्तावसिष्ठद्वेषिण्योनवसिष्ठाःशृण्वन्ति दशमीषोळश्यौजगत्यौ त्रयोदशीगायत्रीद्वादशीविंशीद्वाविंश्योनुष्टुभोष्टादशीबृहतीति । विश्वामित्रऋषिः दशमीषोळशीच द्वे जगत्यौ त्रयोदशीगायत्री द्वादशीविंशीद्वाविंश्यस्तिस्रोऽनुष्टुभः अष्टादशीबृहती शिष्टास्त्रिष्टुभः आद्याइन्द्रापर्वतदेवताका पञ्चदशीषोडश्यौवाग्देवत्ये तदुत्तराश्चतस्रोरथाङ्गदेवताकाः शिष्टाऐन्द्र्यः ।

तत्रप्रथमा—

इन्द्रापर्वताबृहतारथेनवामीरिषआवहतंसुवीराः ।
वीतंहव्यान्यध्वरेषुदेवावर्धेथांगीर्भिरिळयामदन्ता ॥ १ ॥

इन्द्रापर्वता । बृहता । रथेन । वामीः । इषः । आ । वहतम् ।
सुऽवीराः । वातम् । हव्यानि । अध्वरेषु । देवा वर्धेथाम् ।
गीःऽभिः । इळया । मदन्ता ॥ १ ॥

इन्द्रापर्वता इन्द्रश्चपर्वतश्च हेइन्द्रापर्वतौ बृहतारथेनागत्य वामीः वननीयाः सुवीराः शोभनपुत्रोपेताः इषोन्नानि आवहतम् अस्मदर्थंधारयतं प्रयच्छतमित्यर्थः किंच हेदेवौ द्योतमानौ अध्वरेष्वस्मत्संबन्धिषुयज्ञेषु हव्यानि हवनयोग्यानिपुरोडाशादीनिहवींषि वीतं भक्षयतं तथा इळया अस्माभिर्दत्तेनहविषा मदन्ता हृष्यन्तौ युवां गीर्भिःस्तुतिलक्षणाभिरस्मदीयाभिर्वाग्भिर्वर्धेथां समृद्धौभवतम् ॥ इन्द्रापर्वता आमन्त्रितस्यपादादित्वात्षाष्ठिकमाद्युदात्तत्वम् । सुवीराः बहुव्रीहौ वीरवीर्यौचेत्युत्तरपदाद्युदात्तत्वम् । वीतं वीकान्त्यादिष्वित्यस्यलोटि अदादित्वाच्छपोलुक् प्रत्ययस्वरः । वर्धेथां वृधुवृद्धावित्यस्यलोटि आथामोलसार्वधातुकस्वरेधातुस्वरः ॥ १ ॥

अहर्गणेष्वन्त्यवर्जितेष्वहःसु हारियोजनस्यतिष्ठासुकमित्यनुवाक्या सूत्रितञ्च—तिष्ठासुकं मघवन्मापरागाअयंयज्ञोदेवयाअयंमियेधइति ।

अथद्वितीया—

तिष्ठासुकंमघवन्मापरागाःसोमस्यनुत्वासुषुतस्ययक्षि ।
पितुर्नपुत्रःसिचमारभेतइन्द्रस्वादिष्ठयागिराशचीवः ॥ २ ॥

तिष्ठ । सु । कम् । मघऽवन् । मा । परा । गाः । सोमस्य ।
नु । त्वा । सुऽसुतस्य । यक्षि । पितुः । न । पुत्रः । सिचम् ।
आ । रभे । ते । इन्द्र । स्वादिष्ठया । गिरा । शचीऽवः ॥ २ ॥

हेमघवन् धनवन्निन्द्र कं सुखेनास्मिन्यज्ञेसुतिष्ठ सुष्ठुकंचित्कालमत्रातिष्ठ मापरागाः अस्मदीयाद्यज्ञान्मागच्छ तत्रकारणमाह—सुषुतस्य सुष्ठु अभिषुतेनसोमस्य सोमेन नु क्षिप्रं त्वा त्वां यक्षि यजे हेशचीवः शक्तिमन्निन्द्र ते तव सिचं वस्त्रप्रान्तंस्वादिष्ठया स्वादुतरयास्तुतिलक्षणयागिरा आरभे आलभे गृह्णामीत्यर्थः तत्रदृष्टान्तः—पितुर्न यथा पुत्रः मधुरयावाचापितुर्मेनकस्यचैलाञ्चलंगृह्णातितद्वत् ॥ सुकमितिनिपातद्वयम् प्रथमस्यनिपाताआद्युदात्ताइत्याद्युदात्तत्वम् द्वितीयस्यचादयोनुदात्ताइत्यनुदात्तत्वम् । सोमस्ययक्षि यजदेवपूजासङ्गतिकरणदानेषुस्वरितञित इत्यात्मनेपदं तस्यलुङि सिचएकाचइतीट्प्रतिषेधः व्रश्चादिनाषत्वं षढोःकःसीतिकत्वं सिचःसकारस्यषत्वं निघातः । रभे डुलभष्प्राप्तौ लट्युत्तमइटिरूपं रलयोरभेदः निघातः । स्वादिष्ठया स्वादुशब्दादिष्ठनिरूपं नित्त्वादाद्युदात्तः ॥ २ ॥

अथतृतीया—

शंसावाध्वर्योप्रतिमेगृणीहीन्द्रायवाहःकृणवावजुष्टम् ।
एदंबर्हिर्यजमानस्यसीदाथाचभूदुक्थमिन्द्रायशस्तम् ॥ ३ ॥

शंसाव । अध्वर्यो इति । प्रति । मे । गृणीहि । इन्द्राय । वाहः ।
कृणवाव । जुष्टम् । आ । इदम् । बर्हिः । यजमानस्य ।
सीद । अथ । च । भूत् । उक्थम् । इन्द्राय । शस्तम् ॥ ३ ॥

शंसिष्यन्होताध्वर्युंप्रतिब्रूते—हेअध्वर्यो आवांशंसाव होतस्त्वमेवशंससि कथमहंशंसानि अतआह प्रतिमेगृणीहीति त्वंमेप्रतिगृणीहि ओथामोदैवेत्यादिकोहोतुरुत्साहजननःप्रतिगरस्तंदत्स्व तथेन्द्रायजुष्टंप्रीतियुक्तंवाहःस्तोत्रंकृणवाव करवाव त्वंयजमानस्यइदंबर्हिः अस्मिन्बर्हिष्यासीद उपविश अथचानन्तरम् इन्द्रायेन्द्रार्थमावाभ्यांक्रियमाणमुक्थंशस्त्रं शस्तंप्रशस्तमभूत् भवतु ॥ शंसाव शंसुस्तुतावित्यस्यलोट्युत्तमद्विवचनेरूपम् आडुत्तमस्येत्याडागमः उत्तमस्य पिद्वद्भावादनुदात्तत्वेधातुस्वरः । मे अनुप्रतिगृणश्चेतिसंप्रदानसंज्ञा । जुष्टं नित्यंमन्त्रेइत्याद्युदात्तत्वम् ॥ ३ ॥

अथचतुर्थी—

जायेदस्तंमघवन्त्सेदुयोनिस्तदित्त्वायुक्ताहरयोवहन्तु ।
यदाकदाचसुनवामसोमममग्निष्ट्वादूतोधन्वात्यच्छ ॥ ४ ॥

जाया । इत् । अस्तम् । मघऽवन् । सा । इत् । ऊँ इति ।
योनिः । तत् । इत् । त्वा । युक्ताः । हरयः । वहन्तु । यदा ।
कदा । च । सुनवाम । सोमम् । अग्निः । त्वा । दूतः ।
धन्वाति । अच्छ ॥ ४ ॥

हेमघवन् धनवन्निन्द्र अस्तम् अस्यन्तेक्षिप्यन्तेपदार्थाअत्रेत्यस्तंगृहं जायेत् जायैवगृहं भवति नगृहंगृहमित्याहुर्गृहिणीगृहमुच्यतइतिस्मृतेः तथा सेत् साजायैव योनिः पुरुषस्य मिश्रणस्थानम् उःप्रसिद्ध्यर्थः तस्मात्तदित् तत्रगृहेएवयुक्तारथेयोजिताहरयोऽश्वास्त्वात्वां वहन्तु वयंतु यदाकदाच त्वदर्थंसोमंसुनवामाभिषुतंकरवाम तदास्माभिःप्रहितोदूतोऽग्निं त्वात्वामच्छाभिमुख्येनधन्वाति गच्छेत् ॥ अस्तम् असुक्षेपणे असिहसिमृग्रिण्वामीत्यादिनातन्प्रत्ययः नित्त्वादाद्युदात्तः । सुनवाम षुञ्अभिषवेइत्यस्यलोटिरूपं यद्वृत्तयोगादनिघातः । त्वा युष्मत्ततक्षुष्वन्तःपादमितिसंहितायांषत्वम् । धन्वाति धविर्गत्यर्थः लेट्याडागमेरूपं निघातः ॥ ४ ॥

अहर्गणेअन्त्यवर्जितेष्वहःसुहारियोजनस्यवैकल्पिकीपरायाहीत्यनुवाक्या । परायाहिमघवन्नाचयाहीतिवानुवाक्येतिसूत्रितम् ।

अथपञ्चमी–

परायाहिमघवन्नाचयाहीन्द्रंभ्रातरुभयत्रातेअर्थम् ।
यत्रारथस्यबृहतोनिधानंविमोचनंवाजिनोरासभस्य॥५॥१९॥

परा । याहि । मघऽवन् । आ । च । याहि । इन्द्र । भ्रातः । उभयत्र । ते । अर्थम् । यत्र । रथस्य । बृहतः । निऽधानम् । विऽमोचनम् । वाजिनः । रासभस्य ॥ ५ ॥ १९ ॥

हेमघवन् धनवन्निन्द्र त्वंपरायाहि अस्मद्देवयजनात्पराङ्मुखोगृहंप्रतिगच्छन्न अथवा देवयजनंप्रत्यायाहि हेभ्रातः पोषक उभयत्रापितेतव अर्थम् अर्यते प्राप्यतइत्यर्थःप्रयोजनम् अस्तितत्रजाया अत्रसोमः प्रयोजनान्तरमाह–यत्रगृहंप्रतिगमनेबृहतोमहतोरथस्योपरिनिधानमवस्थानंप्रयोजनम् अत्रस्थितौरासभस्यहेषारवंकुर्वतोवाजिनोऽश्वस्यरथाद्विमोचनंप्रयोजनम् ॥ अर्थम् ऋगतौ उषिकुषिगार्तिभ्यस्थन्नितिथन् नित्स्वरः । निधानं दधातेर्भावेल्युट् लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् । रासभस्य रासृशब्दे रासिवल्लिभ्यांचेतिकर्तर्यभच्प्रत्ययःग्रामादित्वादाद्युदात्तः ॥ ५ ॥

॥ इतितृतीयस्यतृतीयेएकोनविंशोवर्गः ॥ १९ ॥

अन्त्येष्वहःसुहारियोजनस्यअपाःसोममित्यनुवाक्या सूत्रितञ्च–हारियोजनोपाःसोममस्तमिन्द्रप्रयाहीति ।

अथषष्ठी–

अपाःसोममस्तमिन्द्रप्रयाहिकल्याणीर्जायासुरणंगृहेते ।
यत्रारथस्यबृहतोनिधानंविमोचनंवाजिनोदक्षिणावत् ॥ ६ ॥

अपाः । सोमम् । अस्तम् । इन्द्र । प्र । याहि । कल्याणीः । जाया । सुऽरणम् । गृहे । ते । यत्र । रथस्य । बृहतः । निऽधानम् । विऽमोचनम् । वाजिनः । दक्षिणाऽवत् ॥ ६ ॥

हेइन्द्र सोममपाः अत्रैवस्थित्वासोमंपिब पीत्वा अस्तंगृहंप्रयाहि प्रकर्षेणगच्छ ते तवगृहेकल्याणीः मङ्गलकारिणी जायाशचीविद्यते सुरणंशोभनगीतादिध्वनिश्चास्ति यद्वा

सुरणं सुरमणीयंयथाभवतितथागृहेजायातिष्ठति यत्रेत्यादिगतं दक्षिणावत् अत्रस्थितौसत्यां रथेयोजितानांवाजिनांविमोचनं खादनपानादिनादक्षिणावत्प्रयोजनवद्भवति विमुक्तेभ्योवाजिभ्योखादनंपानं चोपहरन्ति ॥ अपाः पापाने लुङि गातिस्थेतिसिचोलुक् अडागमस्वरः। कल्याणीः कल्याणमस्याअस्तीतिमत्वर्थेछन्दसीवनिपाविवितिईप्रत्ययः। सुरणं रणशब्दार्थः अस्मादकृच्छ्रार्थेखल् लित्स्वरः प्रत्ययस्यापित्त्वादनुदात्तत्वेधातुस्वरः समासेकृदुत्तरपदस्वरः ॥ ६ ॥

अथसप्तमी–

इमेभोजाअङ्गिरसोविरूपादिवस्पुत्रासोअसुरस्यवीराः ।
विश्वामित्रायददतोमघानिसहस्रसावेप्रतिरन्तआयुः ॥ ७ ॥

इमे । भोजाः । अङ्गिरसः । विऽरूपाः । दिवः । पुत्रासः । असुरस्य । वीराः । विश्वामित्राय । ददतः । मघानि । सहस्रऽसावे । प्र । तिरन्ते । आयुः ॥ ७ ॥

हेइन्द्र इमेयागंकुर्वाणाः भोजाः सौदासाः क्षत्रियाः तेषांयाजकाविरूपानानारूपामेधातिथिप्रभृतयोङ्गिरसश्च दिवोसुरस्यदेवेभ्योपिबलवतोरुद्रस्यपुत्रासःपुत्रावीराबलवन्तोमरुतःते सर्वे विश्वामित्रायमह्यंसहस्रसावे सहस्रंसूयतेऽत्रेतिसावोश्वमेधः तस्मिन्नश्वमेधे मघानिमहनीयानिधनानि ददतःप्रयच्छन्तःसन्तः आयुर्जीवनमन्नंवाप्रतिरन्ते प्रकर्षेणवर्धयन्ति ॥ दिवस्पुत्रासइतिसंहितायांषष्ठ्याः पतिपुत्रेतित्रिसर्जनीयस्यसत्वम् । ददतः डुदाञ्दानेइत्यस्यशतरिरूपम् अभ्यस्तानामादिरित्याद्युदात्तत्वम् । तिरन्ते तरतेर्व्यत्ययेनशः ॥ ७ ॥

अथाष्टमी–

रूपंरूपंमघवाबोभवीतिमायाःकृण्वानस्तन्वं१ परिस्वाम् ।
त्रिर्यद्दिवःपरिमुहूर्तमागात्स्वैर्मन्त्रैरनृतुपाऋतावा ॥ ८ ॥

रूपम्ऽरूपम् । मघऽवा । बोभवीति । मायाः । कृण्वानः । तन्वम् । परि । स्वाम् । त्रिः । यत् । दिवः । परि । मुहूर्तम् । आ । अगात् । स्वैः । मन्त्रैः । अनृतुऽपाः । ऋतऽवा ॥ ८ ॥

मघवाधनवानिन्द्रः रूपंरूपं यद्यद्रूपंकामयतेतत्तद्रूपंबोभवीति तत्तद्रूपात्मकोभवति तत्रकारणमुच्यते—माया: अनेकरूपग्रहणसामर्थ्योपेता:कृण्वानःकुर्वाणः स्वांतन्वंस्वकीयांतनूं परि पञ्चम्यर्थे स्वस्माच्छरीरान्नानाविधानिशरीराणिनिर्मिमीते यद्वा स्वांतनूं नानाविधरूपोपेतांकरोति तथाचमन्त्रवर्णः-इन्द्रोमायाभिःपुरुरूपईयतइति । यद्यस्मात्स्वैर्मन्त्रैःस्वकीयैःस्तुतिलक्षणैर्वाक्यैराहूतः अनृतुपाः नकेवलमृतुष्वेवपिबति किन्तु अनृतुष्वपिबहुशःसोमंपिबन्नित्यर्थः ऋतावा सत्यवान्तादृशइन्द्रः दिवः स्वर्गलोकात्परिमुहूर्तमेकस्मिन्नेवमुहूर्ते नानादेशवर्तिषुयज्ञेषु तत्रापि त्रिः त्रिषुसवनेषुआगात् आगच्छति ॥ बोभवीति भवतेर्यङ्लुकि तिपि यङोवेतीडागमः निघातः । अगात् इणोलुङिरूपं यद्वृत्तयोगादनिघातः ॥ ८ ॥

अथनवमी—

**म॒हाँ ऋषि॑र्देव॒जा दे॒वजू॒तोऽस्त॑भ्ना॒त्सिन्धु॑मर्ण॒वं नृ॒चक्षाः॑ ।**
**वि॒श्वामि॑त्रो॒ यदव॑हत्सु॒दास॒मप्रि॑यायत कुशि॒केभि॒रिन्द्रः॑ ॥ १ ॥**

म॒हान् । ऋषि॑ः । दे॒व॒ऽजाः । दे॒वऽजू॑तः । अस्त॑भ्नात् । सिन्धु॑म् । अ॒र्ण॒वम् । नृ॒ऽचक्षाः॑ । वि॒श्वामि॑त्रः । यत् । अव॑हत् । सु॒ऽदास॑म् । अप्रि॑यायत । कु॒शि॒केभि॑ः । इन्द्रः॑ ॥ १ ॥

महान् तपसा अतिशयितसामर्थ्यवान् ऋषिरतीन्द्रियार्थद्रष्टा देवजाःद्योतमानानां तेजसांजनयिता देवजूतः तैस्तेजोभिराकृष्टः नृचक्षाः नृणां कर्मनेतॄणाम्अध्वर्य्वादीनामुपद्रष्टा सविश्वामित्रः अर्णवमुदकवन्तंसिन्धुंविपाट्छुतुद्र्योः संभेदमस्तभ्नात् निरुद्धवेगमकरोत् किञ्च सविश्वामित्रःसुदासंपैजवनंराजानंयद्यदा अवहत् अयाजयत् तदानीमिन्द्रःकुशिकेभिः कुशिकगोत्रोत्पन्नैर्ऋषिभिःसहाप्रियायत प्रियइवाचरत् ॥ अवहत वहप्रापणेइत्यस्यलङिरूपं यद्योगादनिघातः । अप्रियायत प्रियइवाचरतीत्यर्थे कर्तुःक्यङ्सलोपश्चेतिक्यङ् तदन्ताल्लङिरूपं पादादित्वादनिघातः ॥ ९ ॥

अथदशमी-

**हं॒साइ॑व कृणुथ॒ श्लोक॒मद्रि॑भि॒र्मद॑न्तो गी॒र्भिर॑ध्व॒रे सु॒ते सचा॑ ।**
**दे॒वेभि॑र्विप्रा ऋषयो नृचक्षसो॒ वि पि॑बध्वं कुशिकाः सो॒म्यं मधु॑ ॥ १० ॥ २० ॥**

१ ऋ० सं० ४. ७. ३३. ॥

हुंसाःइव । कृणुथ । श्लोकम् । अद्रिऽभिः । मदन्तः । गीःऽभिः ।
अध्वरे । सुते । सचा । देवेभिः । विप्राः । ऋषयः । नृऽचक्षसः ।
वि । पिबध्वम् । कुशिकाः । सोम्यम् । मधु ॥ १० ॥ २० ॥

हेविप्राः मेधाविनोहेऋषयोऽतीन्द्रियार्थस्यद्रष्टारोहेनृचक्षसोनृणांकर्मनेतॄणांविशेषेणद्रष्टारः हेकुशिकाः कुशिकगोत्रोत्पन्नाः हेपुत्राः अध्वरेयज्ञेअद्रिभिर्ग्रावभिःसोमेसुते अभिषुतेसोमेसतिगीर्भिर्मदन्तःस्तुतिभिर्देवान्मादयन्तोयूयं श्लोकं श्लोक्यतेशस्यतेऽनेनेतिश्लोकःशस्त्रं कृणुथ सम्यगुच्चारयत तत्रदृष्टान्तः—हंसाइव यथाहंसाःसम्यक्शब्दंकुर्वन्तितद्वत् किंच देवेभिःसचा यष्टव्यैर्देवैःसहितायूयं सोम्यंसोममयं मधुमधुकररसं विपिबध्वं परस्परव्यतिहारेणपिबत ॥ श्लोकं श्लोकृशब्दे करणेघञ् ञित्त्वादाद्युदात्तः । मदन्तः मदीहर्षेइत्यस्यान्तर्भावितण्यर्थस्यव्यत्ययेनशप् । पिबध्वं पापाने कर्तरिकर्मव्यतिहारेइत्यात्मनेपदम् । सोम्यं सोमशब्दात् मयेचेतियप्रत्ययः ॥ १० ॥

॥ इतितृतीयस्यतृतीयेविंशोवर्गः ॥ २० ॥

अथैकादशी—

उपप्रेतंकुशिकाश्चेतयध्वमश्वंरायेप्रमुञ्चतासुदासः ।
राजावृत्रंजङ्घनत्प्रागपागुदगथायजातेवरआपृथिव्याः ॥ ११ ॥

उप । प्र । इत । कुशिकाः । चेतयध्वम् । अश्वम् । राये ।
प्र । मुञ्चत । सुऽदासः । राजा । वृत्रम् । जङ्घनत् । प्राक् ।
अपाक् । उदक् । अथ । यजाते । वरे । आ । पृथिव्याः ॥ ११ ॥

हेकुशिकाः कुशिकगोत्रोत्पन्नाः हेपुत्राः उपप्रेत अश्वस्यसमीपेप्रकर्षेणगच्छत तत्रगत्वाचेतयध्वं सावधानाभवत यद्वा अश्वरक्षिणःसावधानान्कुरुत सुदासः पैजवनस्यराज्ञोश्वं राये तस्यदिग्विजयेनधनलाभायप्रमुञ्चत राजादेवानांस्वामीन्द्रः वृत्रं कर्मविघ्नकारिणमसुरंप्रागपागुदक् पूर्वपश्चिमोत्तरेषुदेशेषुजङ्घनत् भृशंजघान तस्मादश्वंविमुञ्चतेतिभावः अथानन्तरम् पृथिव्यावेरउत्तमेदेवयजनदेशेआयजाते समन्तात्सराजायजेत ॥ चेतयध्वं चितीसंज्ञानेइत्यस्यण्यन्तस्यलोटिरूपम् आमन्त्रितस्याविद्यमानत्वेन तिङउत्तरत्वान्ननिघातः । जङ्घनत् हनहिंसागत्योरित्यस्य यङ्लुकिनुगतोनुनासिकान्तस्येत्यभ्यासस्यनुगागमः तदन्ताल्लेट्यडागमः प्राक्अञ्चतेः

किनिरूपम् अनिगन्तोञ्चतौवप्रत्ययेइतिगतेःस्वरः । यजाते यजतेर्लेट्याडागमः निघातः । वरे वृञ्वरणेइत्यस्माद्ग्रहवृदृनिश्चिगमश्चेत्यप्प्रत्ययः तस्यपित्त्वादनुदात्तत्वेधातुस्वरः ॥ ११ ॥

अथद्वादशी—

यइमेरोदसीउभेअहमिन्द्रमतुष्टवम् ।
विश्वामित्रस्यरक्षतिब्रह्मेदंभारतंजनम् ॥ १२ ॥

यः । इमे इति । रोदसी इति । उभे इति । अहम् । इन्द्रम् । अतुस्तवम् ।
विश्वामित्रस्य । रक्षति । ब्रह्म । इदम् । भारतम् । जनम् ॥ १२ ॥

हेकुशिकाः कुशिकपुत्राःयोहंविश्वामित्रः उभेइमेरोदसीद्यावापृथिव्यौ इन्द्रमतुष्टवं स्तावयामि द्यावापृथिवीभ्यामिन्द्रस्यस्तोत्रंमयाकारितमित्यर्थः यद्वा उभयोरोदस्योरन्तरवस्थितमिन्द्रंस्तौमि स्तोत्रंकुर्वाणस्यविश्वामित्रस्यममेदमिन्द्रविषयंब्रह्मस्तोत्रंभारतं भरतकुलंजनंरक्षतिपालयति ॥ अतुष्टवं ष्टुञ्स्तुतौ ण्यन्तस्यलुङिचङिरूपं यद्वृत्तयोगादनिघातः । भारतं भरतशब्द उत्सादिः ञित्त्वादाद्युदात्तः ॥ १२ ॥

अथत्रयोदशी—

विश्वामित्राअरासतब्रह्मेन्द्रायवज्रिणे । करदिन्नःसुराधसः॥ १३॥

विश्वामित्राः । अरासत । ब्रह्म । इन्द्राय । वज्रिणे ।
करत् । इत् । नः । सुऽराधसः ॥ १३ ॥

विश्वामित्राः वज्रिणे वज्रहस्तायेन्द्राय ब्रह्मस्तोत्रमरासत अकुर्वत् स्तुतःसइन्द्रः नोस्मान्सुराधसः शोभनधनोपेतान्करादित् करोत्येव ॥ अरासत रासृशब्दे इत्यस्यलङि बहुलंछन्दसीतिशपोलुक् निघातः । करत् करोतेर्लुङि च्लेः कृमृदृरुहिभ्यश्छन्दसीत्यङादेशः । सुराधसः आद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम् ॥ १३ ॥

अथचतुर्दशी—

किंतेकृण्वन्तिकीकटेषुगावोनाशिरंदुह्रेनतपन्तिघर्मम् ।
आनोभरप्रमगन्दस्यवेदोनैचाशाखंमघवन्रंधयानः ॥ १४ ॥

किम् । ते । कृण्वन्ति । कीकटेषु । गावः न । आऽशिरम् ।
दुह्रे । न । तपन्ति । घर्मम् । आ । नः । भर । प्रऽमगन्दस्य ।
वेदः । नैचाऽशाखम् । मघऽवन् । रन्धय । नः ॥ १४ ॥

हेइन्द्र कीकटेषु अनार्यनिवासेपुजनपदेषु यद्वा कृताभिर्यागदानहोमलक्षणाभिःक्रियाभिः किंफलिष्यतीत्यश्रद्दधानाः प्रत्युत पिबतखादतायमेवलोकोनपरइतिवदन्तोनास्तिकाः कीकटास्तेपुगावस्तेतवार्किंकृण्वन्ति किंकुर्वन्ति नकचित्तत्रोपयोगंकुर्वन्तीत्यर्थः अनुपयोगंदर्शयति—आशिरंसोममिश्रणयोग्यंपयः नदुह्नेनदुहन्ति किंच धर्मप्रवर्ग्याख्यकर्मोपयुक्तंमहावीरपात्रंस्वपयःप्रदानद्वारेणनतपन्ति नदीपयन्ति एतेनसान्नाय्याद्यर्थमपिनोपयुज्यन्तइत्यपिसूचितंभवति एवंक्वचिदपिवैदिकेकर्मणिअनुपयुक्तास्ताःगाःनोस्मभ्यमाभरआहर नकेवलंताएव किंतर्हि प्रमगन्दस्यद्वैगुण्यादिलक्षणपरिमाणंगतोर्थोमामेवगमिष्यतीतिबुद्ध्यापरेषांददातीतिमगन्दोवार्धुषिकःतस्यापत्यंपुत्रादिःप्रमगन्दः प्रस्कण्वादिवदपत्यार्थःप्रशब्देनद्योत्यते तस्यात्यन्तकुसीदिकुलस्यवेदोधनमाहर किंच हेमघवन्धनवन्निन्द्र नैचाशाखंनीचासुशूद्रयोनिषुउत्पादिताः शाखाः पुत्रपौत्रादिपरम्परायेनसनीचाशाखः शूद्रापत्यैश्चकेवलैःशूद्रावेदीपतत्यधइतिचपातकहेतुत्वेनस्मरणात् तस्यसंबन्धिधनंनैचाशाखंतद्धनंनोऽस्मभ्यंरन्धय साधय एतेषांयद्धनंतत्रनोपयुज्यतेऽस्मदायत्तं तुतद्धनंयागादिद्वारातवोपयुज्यते तस्मात्तदस्मभ्यंप्रयच्छेतिभावः एतमर्थंयास्कोप्याह—किंतेकुर्वन्तिकीकटेपुगावःकीकटानामदेशोनार्यनिवासःकीकटाः किंकृताःकिंक्रियाभिरितिप्रेप्सावानैवचाशिरंदुह्रेनतपन्तिघर्मंघरणमाहरनःप्रमगन्दस्यधनानिमगन्दःकुसीदीमांगदोमामागमिष्यतीतिचददातितदपत्यंप्रमगन्दोत्यन्तकुसीदिकुलीनःप्रमदकोवायोयमेवास्तिलोकोनपरइतिप्रेप्सुःपण्डकोवापण्डकःपण्डगःप्रार्दकोवाप्रार्दयत्याण्डावाण्डावाणीइवव्रीडयतितत्स्यंनैचाशाखंनीचाशाखोनीचैःशाखःशाखाःशक्नोतेराणिररणात्तन्नोमघवन्रन्धयेतिरध्यतिर्वशगमनेइति[1] ॥ आशिरम् आङ्पूर्वाच्छ्रीणातेःक्विपि अपस्पृधेथामित्यादिनाशिरइत्यादेशः । दुह्रे दुहेर्लिटिइरयोरेइतिरेआदेशः द्विर्वचनस्यविकल्पितत्वाद्द्विर्वचनाभावः चादिलोपेविभाषेतिननिघातः । नैचाशाखं तस्येदमित्यण्प्रत्ययः । रन्धय रधेर्ण्यन्तस्यरधिजभोरचीतिनुमागमः ॥ १४ ॥

---

१ नि० ६. ३२. ।

ससर्परीद्गृचेप्राहुरितिहासंपुराविदः । सौदासनृपयज्ञेवैवसिष्ठात्मजशक्तिना । विश्वामित्रस्याभिभूतंबलंवाक्चसमन्ततः । वासिष्ठेनाभिभूतःसह्यवासीदथगाधिजः । तस्मैब्राह्मींतुसौरींवानाम्नात्वाचंससर्परीम् । सूर्यवेश्मनआहृत्यददुर्वैजमदग्नयः । कुशिकानांमतिःसावागमतिंतामपानुदत् ।

अथपञ्चदशी–

ससर्परीरमतिंबाधमानाबृहन्मिमायजमदग्निदत्ता ।
आसूर्यस्यदुहितातंतानश्रवोदेवेष्वमृतमजुर्यम् ॥ १५ ॥ २१ ॥

ससर्परीः । अमतिम् । बाधमाना । बृहत् । मिमाय ।
जमदग्निऽदत्ता । आ । सूर्यस्य । दुहिता । ततान ।
श्रवः । देवेषु । अमृतम् । अजुर्यम् ॥ १५ ॥ २१ ॥

जमदग्निदत्ताजमदग्निभिःप्रज्वलिताग्निभिर्ऋषिभिःसूर्यादाहृत्यास्मभ्यंदत्ता अमतिमज्ञानं बाधमानाससर्परीसर्वस्वरूपशब्दतयासर्पणशीलावाक् बृहत्प्रभूतंयथाभवतितथामिमायनभासिशब्दंकरोति सैषासूर्यस्यदुहितावाग्देवता देवेष्विन्द्रादिषु अजुर्यंक्षयरहितम् अमृतममृतलक्षणंश्रवोन्नमाततान समन्तात्स्वाहाकारवाचंतनोति ॥ जमदग्निदत्ता दाणदानेइत्यस्यनिष्ठायांदोदद्घोरितिददादेशः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरः । अजुर्यं जृवयोहानौ ऋहलोर्ण्यत् बहुलंछन्दसीत्युत्वं नञ्सुभ्यामित्यन्तोदात्तत्वम् ॥ १५ ॥

॥ इतितृतीयस्यतृतीयेएकविंशोवर्गः ॥ २१ ॥

अथषोडशी–

ससर्परीरभरत्तूयमेभ्योधिश्रवःपाञ्चजन्यासुकृष्टिषु ।
सापक्ष्या३ नव्यमायुर्दधानायांमेपलस्तिजमदग्नयोददुः ॥१६॥

ससर्परीः । अभरत् । तूयम् । एभ्यः । अधि । श्रवः ।
पाञ्चऽजन्यासु । कृष्टिषु । सा । पक्ष्या । नव्यम् । आयुः ।
दधाना । याम् । मे । पलस्तिऽजमदग्नयः । ददुः ॥ १६ ॥

ससर्परीः सर्वत्रगद्यपद्यात्मकत्वेनसर्पणशीलावाग्देवतापाञ्चजन्यासु कृष्टिषु निषादपञ्चमाश्चत्वारोवर्णास्तत्संबन्धिनीषुप्रजासुयत्श्रवोन्नंविद्यतेतदेभ्योऽस्मभ्यमध्यधिकंयथाभवतितथातूयंक्षिप्रमभरत् भरतु संपादयतु पलस्तिजमदग्नयःपलस्तयः पलिताः दीर्घायुषोजमदग्नयोमुनयःयांवाचंसूर्योदाहृत्यमेमह्यंददुः अददुः पक्ष्या पक्षस्यपक्षादिनिर्वाहकस्यसूर्यस्यदुहितासावाक् नव्यंनवतरमायुरन्नंजीवनंवादधाना ममकुर्वाणाभवतु ॥ पाञ्चजन्यासु बहिर्देवपञ्चजनेभ्यश्चेतिवक्तव्यमितिञ्यप्रत्ययः ञित्त्वादाद्युदात्तः । पक्ष्या पक्षेभवा दिगादित्वाद्यत् तित्स्वरितः । नव्यं नवशब्दाद्वस्वादित्वात्स्वार्थिकोयत् । पलस्तिजमदग्नयः कर्मधारयसमासः समासस्वरः ॥ १६ ॥

अथसप्तदशी—

स्थिरौगावौभवतांवीळुरक्षोमेषाविवर्हिमायुगंविशारि ।
इन्द्रःपातल्येददतांशरीतोररिष्टनेमेअभिनःसचस्व ॥ १७ ॥

स्थिरौ । गावौ । भवताम् । वीळुः । अक्षः । मा । ईषा । वि ।
वर्हि । मा । युगम् । वि । शारि । इन्द्रः । पातल्ये३ इति ।
ददताम् । शरीतोः । अरिष्टऽनेमे । अभि । नः । सचस्व ॥ १७ ॥

राज्ञःसुदासोयज्ञेअवभृथंकृत्वायज्ञशालातोनिर्गन्तुमिच्छन् रथेश्वादिकंयुञ्जानोविश्वामित्रोरथाङ्गानिस्तौति गावौ गच्छतइतिगावावश्वौ स्थिरौभवताम् अक्षश्चवीळुर्दृढोभवतु ईषादण्डश्चमाविवर्हि व्यूढोविनष्टोमाभवतु युगंचमाविशारि विशीर्णमाभवतु इन्द्रःपातल्येपतनशीलेकीलकेशरीतोःविशरणात्प्राक्ददतांधारयतु हेअरिष्टनेमे अहिंसितप्रधिविशिष्ट हेरथ नोऽस्मानभि आभिमुख्येन सचस्व संगतोभव ॥ विवर्हि वृहवृद्धौ विपूर्वोवृहिर्विनाशेवर्तते अस्मात्कर्मकर्तरिलुङि चिण्भावकर्मणोरितिचिण् चिणोलुगितितप्रत्ययस्यलुक् निघातः । युगं युगशब्दउञ्छादिषुरथाद्युपकरणेर्थे घञन्तत्वेननिपातनादगुणत्वं तत्रपाठादन्तोदात्तत्वम् । शारि शॄहिंसायामित्यस्यलुङिरूपम् । अरिष्टनेमे पादादित्वात्षाष्ठिकमाद्युदात्तत्वम् ॥ १७ ॥

अथाष्टादशी—

बलंधेहितनूषुनोबलमिन्द्रानळुत्सुनः ।
बलंतोकायतनयायजीवसेत्वंहिबलदाअसि ॥ १८ ॥

बल॑म् । धे॒हि॒ । त॒नूषु॑ । नः॒ । बल॑म् । इ॒न्द्र॒ । अ॒न॒ळुत्ऽसु॑ । नः॒ । बल॑म् ।
तो॒काय॑ । तन॑याय । जी॒वसे॑ । त्वम् । हि । ब॒ल॒ऽदाः । असि॑ ॥ १८ ॥

हेइन्द्र नोस्माकं तनूषु शरीरेषु बलंधेहि नोऽस्मत्संबन्धिरथवाहेष्वनळुत्सुअनडुत्सु बलं धेहि तोकाय पुत्राय तनयाय पौत्रायच जीवसे चिरंजीवनायबलमायुर्विधेहि एतादृशं दातृत्वं कुतइत्यतआह—त्वंबलदाः बलंददातीतिबलदाअसिहि सर्वेषुलोकेषुप्रसिद्धोसिखलु ॥ अनळुत्सु वहप्रापणे अनसिवहेःक्विप् अनसोडश्चेतिक्विप् अनसःसकारस्यडत्वं वहेर्यजादित्वात्संप्रसारणम् वसुस्रंसुध्वंस्वनडुहांदइतिहकारस्यदत्वं कृदुत्तरपदप्रकृतिस्वरः । असि हियोगादनिघातः सिपः-पित्त्वादनुदात्तत्वेधातुस्वरः ॥ १८ ॥

अथैकोनविंशी—

अ॒भि व्य॑यस्व ख॒दि॒रस्य॒ सा॒र॒मोजो॑ धेहि स्प॒न्द॒ने शिं॒शपा॑याम् ।
अक्ष॒ वीळो॒ वीळि॑त वी॒ळय॑स्व॒ मा या॒माद॒स्मादव॑ जीहिपो नः ॥ १९ ॥

अ॒भि । व्य॒य॒स्व॒ । ख॒दि॒रस्य॑ । सार॑म् । ओजः॑ । धे॒हि॒ । स्प॒न्द॒ने ।
शिं॒शपा॑याम् । अक्ष॑ । वी॒ळो॒ इति॑ । वी॒ळि॒त॒ । वी॒ळय॑स्व । मा ।
यामा॑त् । अ॒स्मात् । अव॑ । जी॒हि॒पः॒ । नः॒ ॥ १९ ॥

हेइन्द्र खदिरस्यसारं सारेणहिआणिःक्रियते तंखदिरस्यसारभूतमाणिमभिव्ययस्व अभितस्तत्तत्स्थानेषुदार्ढ्यार्थंनिधेहि स्पन्दनेरथस्यगमनेसति शिंशपायां शिंशपाख्यदारुनिर्मितेरथस्य फलके ओजोधेहि दार्ढ्यंकुरु हेवीळो दृढ वीळित अस्माभिर्दृढीकृत हेअक्ष वीळयस्व त्वंदृढोभव यद्वा अस्मान्दृढीकुरु यामाद्गच्छतोऽस्माद्रथान्नोऽस्मान्माअवजीहिपः मापीपतः ॥ खदिरस्य अजिरशिशिरेत्यादिनाकिरच्प्रत्ययान्तत्वेनानिपातनादन्तोदात्तः । वीळित वीळयतेर्ण्यन्तस्यनिष्ठाया-मिडागमः निष्ठायांसेटीतिणेर्लुक् । वीळयस्व आमन्त्रितस्याविद्यमानत्वेनपादादित्वादनिघातः । यामात् याप्रापणेइत्यस्मात्अर्तिस्तुसुहुसृइत्यादिनामन्प्रत्ययः नित्त्वादाद्युदात्तः । जीहिपः ओहाक्-त्यागे ण्यन्तस्यलुङिच्चाङिरूपम् अकारस्येकारश्छान्दसः ॥ १९ ॥

अथविंशी—

अ॒यम॒स्मान्वन॒स्पति॒र्मा च॒ हा मा च॑ रीरिषत् ।
स्व॒स्त्या गृ॒हेभ्य॒ आव॒सा आ वि॒मोच॑नात् ॥ २० ॥ २२ ॥

अयम् । अस्मान् । वनस्पतिः । मा । च । हाः । मा । च । रिरिषत् । स्वस्ति । आ । गृहेभ्यः । आ । अवऽसै । आ । विऽमोचनात् ॥ २० ॥ २२ ॥

यजमानआत्मनःश्रेयआशास्ते वनस्पतिः वनस्पतिनिर्मितोयंरथः रथारूढानस्मान्मा चहाः मात्याक्षीत् किञ्च मारीरिषत् अस्मान्माविनाशयतु किञ्च आगृहेभ्यः यावद्गृहान्प्राप्नुयामतावदस्मभ्यंस्वस्तिभवतु तथा आवसै पञ्चम्यर्थेचतुर्थी यावद्रथवेगावसानंतावत् आविमोचनात्यावद्रथयोजिताश्वविमोचनंतावत्स्वस्तिभवतु ॥ हाः ओहाक्त्यागे लुङि मन्त्रेघसेत्यादिनासिचोलुक् पुरुषव्यत्ययः चवायोगेप्रथमेतिननिघातः । रिरिषत् रिषहिंसायामित्यस्यण्यन्तस्यलुङिचङिरूपं द्वितीयत्वान्निघातः । गृहेभ्यः ग्रहेः गेहेकइतिकः पञ्चम्यपाङ्परिभिरितिपञ्चमी । अवसै षोन्तकर्मणि क्विप् चतुर्थ्येकवचनेआतोलोपाभावश्छान्दसः वृद्धिः एकादेशस्वरः ॥ २० ॥

॥ इतितृतीयस्यतृतीयेद्वाविंशोवर्गः ॥ २२ ॥

इन्द्रोतिभिरित्याद्याश्चतस्रोवसिष्ठद्वेषिण्यः पुराखलुविश्वामित्रशिष्यःसुदा(स्रो)नामाराजर्षिरासीत् सचकेनचित्कारणेनवसिष्ठद्वेष्योभूत् । विश्वामित्रस्तुशिष्यस्यरक्षार्थमाभिर्ऋग्भिर्वसिष्ठमशपत् इमाअभिशापरूपास्ताऋचोवसिष्ठानशृण्वन्ति ।

तत्राद्यासूक्तेएकविंशी—

इन्द्रोतिभिर्बहुलाभिर्नोअद्ययाच्छ्रेष्ठाभिर्मघवञ्छूरजिन्व । योनोद्वेष्ट्यधरःसस्पदीष्टयमुद्विष्मस्तमुप्राणोजहातु ॥ २१ ॥

इन्द्र । ऊतिऽभिः । बहुलाभिः । नः । अद्य । यात्ऽश्रेष्ठाभिः । मघऽवन् । शूर । जिन्व । यः । नः । द्वेष्टि । अधरः । सः । पदीष्ट । यम् । ऊँ इति । द्विष्मः । तम् । ऊँ इति । प्राणः । जहातु ॥ २१ ॥

परस्य शापंकरिष्यन्नादावात्मनोरक्षांकुरुतेप्रथमेनार्धर्चेन—हेशूर शौर्यवन्पराभिभवशक्त हेमघवन्धनवन्निन्द्र अद्यास्मिन्कालेयात् यातयतिर्वधकर्मा यातयतीतियात् सुपां-

सुलुगितिशसोलुक् यातःशत्रून्हिंसतोनोऽस्मानूतिभिस्त्वदीयाभीरक्षाभिर्जिन्व प्रीणय ' कीदृशीभिः बहुलाभिर्बह्वीभिःश्रेष्ठाभिःप्रशस्यतराभिः अथ शपति नोऽस्मान्यःशत्रुर्द्वेष्टि अस्मद्विषयामप्रीतिंकरोति सःअधरोनिकृष्टःसन्पदीष्ट पततु वयंच यमुद्विष्मःतमुतंद्वेष्यंप्राणःदेहमध्येवर्तमानःपञ्चवृत्तिर्वायुः जहातु परित्यजतु उशब्दौपूरकौ ॥ २१ ॥

अथद्वाविंशी–

परशुंचिद्वितपतिशिम्बलंचिद्विवृश्चति ।
उखाचिदिन्द्रयेषन्तीप्रयस्ताफेनमस्यति ॥ २२ ॥

परशुम् । चित् । वि । तपति । शिम्बलम् । चित् । वि ।
वृश्चति । उखा । चित् । इन्द्र । येषन्ती । प्रऽयस्ता । फेनम् ।
अस्यति ॥ २२ ॥

हेइन्द्र परशुंचित् चिच्छब्दउपमार्थः यथापरशुंकुठारंप्राप्यवृक्षोवितपति विशिष्टतापयुक्तोभवति एवंमदीयोद्वेष्टावितपतु शिम्बलंचित् शल्मलीकुसुमंयथाअनायासेनविवृश्चति विच्छिद्यते एवं सद्वेष्टाविवृश्चति विच्छिन्नावयवोभवतु प्रयस्ता प्रहतायेषन्तीस्रवन्तीउखाचित्स्थालीव सद्वेष्टामदीयमन्त्रसामर्थ्येनप्रहतःसन्फेनमस्यति फेनंमुखादुद्गिरतु ॥ २२ ॥

अथत्रयोविंशी–

नसायकस्यचिकितेजनासोलोधंनयन्तिपशुमन्यमानाः ।
नावाजिनंवाजिनाहासयन्तिनगर्दभंपुरोअश्वान्नयन्ति ॥ २३ ॥

न । सायकस्य । चिकिते । जनासः । लोधम् । नयन्ति । पशु ।
मन्यमानाः । न । अवाजिनम् । वाजिना । हासयन्ति ।
न । गर्दभम् । पुरः । अश्वात् । नयन्ति ॥ २३ ॥

पुराखलु तपसःक्षयोमाप्रापदितिशापान्निवृत्तंमौनिनंविश्वामित्रंवसिष्ठपुरुषाःबद्ध्वानीतवन्तः तान्प्रतिविश्वामित्रोब्रूते–हेजनासोजनाः सायकस्यावसानकारिणोविश्वामित्रस्यमन्त्रगणसामर्थ्यंनचिकिते भवद्भिर्नज्ञायते अतएवलोभंलुब्धंतपसःक्षयोमाभूदितिलोभेनतूष्णींस्थितमृषिंप-

शुमन्यमानाः पशुइतिनिपातः पशुशब्दसमानार्थः पशुवन्मन्यमानाः एतेनयन्ति बद्धास्वकीयं देशंप्रापयन्ति एवंस्वसामर्थ्यंप्रदर्श्यविसदृशोवसिष्ठोमयासहस्पर्धितुंनार्हतीतिधिक्करोति नावाजिनमिति अवाजिनं वाचामिनोवाजिनः सर्वज्ञः तद्विलक्षणंमूर्खजनंवाजिनावागीशाः नहासयन्ति हास्यास्पदंनकुर्वन्ति तेनसहनस्पर्धन्तइत्यर्थः तथागर्दभंरासभम् अश्वात्पुरः पुरस्तान्ननयन्ति एवमेवविसदृशोवसिष्ठोनमयास्पर्धितुमीष्टइत्यर्थः ॥ २३ ॥

अथचतुर्विंशी—

**इमइन्द्रभरतस्यपुत्राअपपित्वंचिकितुर्नप्रपित्वम् ।**
**हिन्वन्त्यश्वमरणंननित्यंज्यावाजंपरिणयन्त्याजौ ॥२४॥२३॥**

**इमे । इन्द्र । भरतस्य । पुत्राः । अपऽपित्वम् । चिकितुः ।**
**न । प्रऽपित्वम् । हिन्वन्ति । अश्वम् । अरणम् । न । नित्यम् ।**
**ज्याऽवाजम् । परि । नयन्ति । आजौ ॥ २४ ॥ २३ ॥**

हेइन्द्र भरतस्यपुत्राः भरतवंश्याइमेविश्वामित्राअपपित्वमपगमनंवसिष्ठेभ्यःचिकितुर्जानन्ति प्रपित्वंगमनंनजानन्ति शिष्टैःसहतेषांसंगतिर्नास्ति ब्राह्मणाएवतइत्यर्थः अपिच आजौ संग्रामेनित्यंसहजमरणंन अरिमिववसिष्ठान्प्रत्यश्वंहिन्वन्ति प्रेरयन्ति ततश्चज्यावाजंमौर्वीबलंधनुःपरिणयन्ति वसिष्ठान्हन्तुंशरसंधानेनव्यापयन्ति ॥ २४ ॥

॥ इतितृतीयस्यतृतीयेत्रयोविंशोवर्गः ॥ २३ ॥

॥ इतितृतीयेमण्डलेचतुर्थोनुवाकः ॥ ४ ॥

पञ्चमेनुवाकेनवसूक्तानि तत्रेमंमहइतिद्वाविंशत्यृचंप्रथमंसूक्तंत्रैष्टुभंवैश्वदेवं विश्वामित्रपुत्रस्यवाक्पुत्रस्यवाप्रजापतेरार्षम् अत्रेयमनुक्रमणिका—इमंमहेह्यधिकोक्तगोत्रःप्रजापतिर्हि वैश्वदेवंहेति । अस्मिन्सूक्तेआद्याग्नेयी ततःपरंसप्तर्चोद्यावापृथिव्याः ततःपराद्युदेवताका दशमी द्यावापृथिव्या एकादशीसावित्री ततःपरंसुक्रदितित्वाष्ट्री आर्भवीच विद्युद्रथेतिमारुती सारस्वतीच ततःपरंतिस्रोविष्ण्विन्द्राग्निदेवताकाः स्वदस्वेत्याग्नेयीति एवंवैश्वदेवंसूक्तं सूक्तविनियोगोलैङ्गिकः । अग्निप्रणयनेराजन्यस्येमंमहइतिप्रतिपत् । पञ्चम्यांपौर्णमास्यामित्यत्रसूत्रितम्—इमं महेविदथ्यायशूषमिति ।

सूक्तेप्रथमा—

इमंमहेविदथ्यायशूषंशश्वत्कृत्वईड्यायप्रजभ्रुः ।
शृणोतुनोदम्येभिरनीकैःशृणोत्वग्निर्दिव्यैरजस्रः ॥ १ ॥

इमम् । महे । विदथ्याय । शूषम् । शश्वत् । कृत्वः । ईड्याय ।
प्र । जभ्रुः । शृणोतु । नः । दम्येभिः । अनीकैः । शृणोतु ।
अग्निः । दिव्यैः । अजस्रः ॥ १ ॥

महेमहतेविदथ्यायविदथेयज्ञेमन्थनेननिष्पाद्यमानायईड्यायसर्वैःस्तुत्यायाग्नये शूषंसुखकरमिमं स्तोमंशश्वत्कृत्वःभूयोभूयःप्रजभ्रुः प्रभरन्ति प्रकर्षेणधारयन्ति उच्चारयन्तीत्यर्थः सोग्निर्दम्येभिः परेषांदमनकुशलैर्दमेगृहेविद्यमानैर्वाअनीकैस्तेजोभिर्युक्तःसन् नोऽस्मदीयमिमंस्तोत्रंशृणोतु दिव्यैर्दिविभवैस्तेजोभिरजस्रोनिरन्तरंयुक्तोग्निःइमंस्तोत्रंशृणोतु शश्वत्कृत्वईड्यायप्रजभ्रुरितिस्वानामेवैनं तच्छैष्ठ्यंगमयंतीतिब्राह्मणानुसारेण । महदादिगुणविशिष्टाययजमानायेममग्निंप्रजभ्रुः प्रहरन्त्यृत्विजइतिवाव्याख्येयम् उत्तरोर्धर्चःसमानएव ॥ विदथ्याय तत्रभवइत्यर्थेभवेछन्दसीतियत् तित्स्वरः । ईड्याय ईडवन्देत्यादिनाउदात्तत्वम् । दम्येभिः तत्रसाधुरितियत् यतोनावइत्याद्युदात्तत्वम् । दिव्यैः दिवमर्हतीत्यर्थेछन्दसिचेतियप्रत्ययः । अजस्रः जसुमोक्षणे नमिकम्पीत्यादिनाताच्छीलिकोरप्रत्ययः नञासमासेतस्यस्वरः ॥ १ ॥

अथद्वितीया—

महिमहेदिवेअर्चापृथिव्यैकामोमइच्छश्चरतिप्रजानन् ।
ययोर्हस्तोमेविदथेषुदेवाःसपर्यवोमादयन्तेसचायोः ॥ २ ॥

महि । महे । दिवे । अर्च । पृथिव्यै । कामः । मे । इच्छन् ।
चरति । प्रऽजानन् । ययोः । ह । स्तोमे । विदथेषु । देवाः ।
सपर्यवः । मादयन्ते । सचा । आयोः ॥ २ ॥

१ ऐ० ब्रा० १. २८ ।

हेस्तोत: महेमहत्यैदिवेद्युलोकदेवतायैमहत्यैपृथिव्यैचमहि महत्प्रजानन्प्रकर्षेणदेवतासामर्थ्यं विद्वांस्त्वंस्तोत्रमर्चकुरु मेममकामोमनोरथ: सर्वान्भोगानिच्छन्त्वरति सर्वत्रवर्तते आयोर्मनुष्यस्यविदथेषुयज्ञेषुयर्योर्द्यावापृथिव्यो:स्तोमेस्तोत्रेसपर्यव:पूजाकामादेवाइन्द्राद्या:स्तोतारोवासचामादयन्तेह सहमाद्यन्तिखलु पृथिव्यै उदात्तयणइतिविभक्तेरुदात्तत्वम् । सपर्यव: सपर्यामिच्छतीत्यर्थे सुप:क्यच् ॥ २ ॥

अथतृतीया–

युवोर्ऋतंरोदसीसत्यमस्तुमहेषुणःसुवितायप्रभूतम् ।
इदंदिवेनमोअग्नेपृथिव्यैसंपर्यामिप्रयसायामिरत्नम् ॥ ३ ॥

युवोः । ऋतम् । रोदसी इति । सत्यम् । अस्तु । महे । सु ।
नः । सुवितार्य । प्र । भूतम् । इदम् । दिवे । नमः । अग्ने ।
पृथिव्यै । सपर्यामि । प्रयसा । यामि । रत्नम् ॥ ३ ॥

हेरोदसी द्यावापृथिव्यौ युवोर्युवयोर्ऋतमानृशंस्यंसत्यंयथार्थमस्तु युवांनोऽस्माकंमहेमहतेसुवितायाभ्युदयाययज्ञसमाप्त्यर्थंसुसुष्ठुप्रभूतंप्रभवतं हेअग्ने दिवेपृथिव्यैच इदंनमोऽस्तु प्रयसा हविर्लक्षणेनान्नेनसपर्यामि परिचरामि रत्नमुत्तमंधनंयामि याचे यातिर्याच्ञाकर्मा ईमहइत्यादिषुपठितत्वात् ॥ षु संहितायांसुञइतिषत्वम् । न: संहितायांनश्चधातुस्थोरुषुभ्यइतिणत्वम् । सुविताय इण्गतौ अधिकरणेक्त: शोभनंगम्यतेस्मिन्निितिसुवितं उवङादेशश्छान्दस: । भूतं भवतेर्लोटि बहुलंछन्दसीतिशपोलुकिरूपं यद्वा छान्दसेलुङिगातिस्थेतिसिचोलुक् निघात: । दिवे पृथिव्यै नम:स्वस्तीत्यादिनाचतुर्थी । सपर्यामि कण्ड्वादि:परिचरणेवर्तते प्रत्ययस्वर: । यामि यातेर्लटिरूपं वाक्यभेदादनिघात: ॥ ३ ॥

अथचतुर्थी–

उतोहिवांपूर्व्याआविविद्रऋतावरीरोदसीसत्यवाचः ।
नरश्चिद्वांसमिथेशूरसातौववन्दिरेपृथिविवेविदानाः ॥ ४ ॥

उतो इति । हि । वाम् । पूर्व्याः । आऽविविद्रे । ऋतवरी इत्यृतऽवरी ।
रोदसी इति । सत्यऽवाचः । नरः । चित् । वाम् । समऽइथे ।
शूरऽसातौ । ववन्दिरे । पृथिवि । वेविदानाः ॥ ४ ॥

उतोअपिच हेऋतावरी ऋतंसत्यंतद्वत्यौ हेरोदसी द्यावापृथिव्यौ पूर्व्याः पूर्वेभवाःपुरातनाःसत्यवाचोमहर्षयः वांयुवाभ्यामाविविद्रे हितंतमपेक्षितमर्थंलेभिरेखलु तथा हेपृथिवि शूरसातौ शूराणांसातिर्लाभोयस्मिन्तस्मिन्समिथे संगमननिमित्तेयुद्धे नरश्चिदद्यतनामनुष्याः वांयुवयोर्माहात्म्यं वेविदानाजानन्तः अतः द्यावापृथिव्यौववन्दिरेस्तुवन्ति ॥ आविविद्रे विद्लृलाभेइत्ययमुभयपदी लिटि इरयोरेइतिरेइत्यादेशः सहसुपेत्यत्रसहेतियोगविभागादाङासहसमासः । समिथे इण्गतौ समीणइति थक्प्रत्ययः प्रत्ययस्वरः ॥ ४ ॥

अथपञ्चमी–

**कोअ॒द्धावे॑द॒कइ॒हप्रवो॑च॒द्दे॒वाँअच्छा॑प॒थ्या॒३॑कासमे॑ति ।**
**दद्द॑श्रएषामव॒मासदां॑सि॒परे॑षु॒यागुह्ये॑षुव्र॒तेषु॑ ॥ ५ ॥ २३ ॥**

कः । अ॒द्धा । वे॒द॒ । कः । इ॒ह । प्र । वो॒च॒त् । दे॒वान् । अच्छ॑ । प॒थ्या॑ । का । सम् । ए॒ति॒ । दद्द॑श्रे । ए॒षाम् । अ॒व॒मा । सदां॑सि । परे॑षु । या । गुह्ये॑षु । व्र॒तेषु॑ ॥ ५ ॥ २४ ॥

कोवाअद्धा सत्यभूतंतादृशमर्थंवेदवेत्ति कोवा इहास्मिन्प्रज्ञातमर्थंवोचत्ब्रवीति किंतदुच्यते–देवानच्छाभिलक्ष्य कापथ्या पथिसाधुःसमीचीनःकोमार्गःसमेति सम्यक्प्राप्नोतीतिकेनमार्गेणदेवतास्तर्पयितव्याइतिइममर्थंनकश्चिज्जानाति नकोपिब्रवीति किंतेदेवाविद्यन्ते बाढमित्याह–एषांदिविस्थितानांनक्षत्ररूपाणांदेवानामवमा अधोमुखानिसदांसिस्थानानिदद्दश्रेदृश्यन्ते तथापि परेषूत्तमेषुगुह्येषुदुर्ज्ञानेषुव्रतेषुकर्मस्वनुष्ठितेषुच यायानिदिविदेवस्थानानिलभ्यन्ते तत्रगन्तुं कोमार्गइतिवेदमन्तरेणनकश्चिज्जानातीत्यभिप्रायः ॥ अद्धा स्वरादिष्वन्तोदात्तत्वेनपठितत्वादन्तोदात्तः । वोचत् ब्रूञ्व्यक्तायांवाचि लुङि ब्रुवोवचिरितिवच्यादेशः अस्यतिवक्तिख्यातिभ्यइति च्लेरङादेशः वचउमित्युमागमः निघातः ॥ ५ ॥

॥ इतितृतीयस्यतृतीयेचतुर्विंशोवर्गः ॥ २४ ॥

अथषष्ठी–

**क॒विर्नृ॒चक्षा॑अ॒भिषी॑मचष्टऋ॒तस्य॒योना॒विघृ॑ते॒मद॑न्ती ।**
**नाना॑चक्राते॒सद॑नं॒यथा॒वेःस॑मा॒नेन॒क्रतु॑नासंवि॒दा॒ने ॥ ६ ॥**

कविः । नृऽचक्षाः । अभि । सीम् । अचष्ट । ऋतस्य । योना । विधृते इति विऽधृते । मदन्ती इति । नाना । चक्राते इति । सदनम् । यथा । वेः । समानेन । क्रतुना । संविदाने इति सम्ऽविदाने ॥ ६ ॥

कविःक्रान्तदर्शी नृचक्षाः नृणांद्रष्टासूर्यः सीमेतेद्यावापृथिव्यौअभ्यचष्ट सर्वतःपश्यति ऋतस्ययोनाजलस्यस्थानेऽन्तरिक्षेमदन्तीहृष्यन्त्यौविधृतेघृतमस्याओषधयः जलममुष्याइत्येवं- विधरसोपेतेसमानेन 'समानमेतदुदकमुच्चैत्यवचाहभिः । भूमिंपर्जन्याजिन्वन्तिदिवंजिन्वन्त्यग्नय'इति । परस्परप्रीणनाख्येनैकेनक्रतुनाकर्मणासंविदाने परस्परमैकमत्यंप्राप्ते ते द्यावापृथिव्यौ नानापृथग्भूतंसदनंस्थानंचक्राते तथाचश्रुतिः—इमौवैलोकौसहास्तांतौव्यैतामिति । तत्रदृष्टान्तः— यथावेःकुलायंनानाभवतितद्वत् ॥ अचष्ट चक्षिङ्व्यक्तायांवाचीत्यस्य लङि स्कोःसंयोगाद्यो- रितिककारलोपः निघातः । संविदाने विदज्ञानइत्यस्यसमोगमीत्यादिनाआत्मनेपदेशानच् चित्त्वादन्तोदात्तः ॥ ६ ॥

अथसप्तमी—

समान्याविर्युतेदूरेअन्तेध्रुवेपदेतस्थतुर्जागरूके ।
उतस्वसारायुवतीभवन्तीआदुब्रुवातेमिथुनानिनाम ॥ ७ ॥

समान्या । विर्युते इतिविऽयुते । दूरेअन्ते इति दूरेऽअन्ते । ध्रुवे । पदे । तस्थतुः । जागरूके इति । उत । स्वसारा । युवती इति । भवन्ती इति । आत् । ऊँ इति । ब्रुवाते इति । मिथुनानि । नाम॥७॥

समान्या समाने परस्परप्रीणनाख्येनकर्मणा ऐकमत्यंगते वियुते वियुज्यवर्तमानेदूरे- अन्ते दूरेन्तोवसानंययोस्तेदूरेअन्ते अविनाशिन्यौ ते द्यावापृथिव्यौ जागरूके जागरण- शीलेसत्यौ ध्रुवे अविनाशिनिपदेन्तरिक्षेतस्थतुः तिष्ठतः उतापिच युवती नित्यतरुण्यौ स्वसारा भगिन्यौ एकस्मादात्मनोजातेइतिभवन्तीतस्थतुरित्यन्वयः आदु अनन्तरम् उःपूरणः मिथु नानिद्वन्द्वानिनामउर्वीपृथ्वीबहुलेदूरेअन्तेरोदसीपुरोहितेइत्यादीनिनामानिब्रुवाते ते परस्परंब्रूतः

१ ऋ० सं० २. ३. २३. । २ ऐ० ब्रा० ४. २७. ।

कर्मणिकर्तृप्रत्ययः उर्व्यादिभिर्द्वन्द्वनामभिर्द्यावापृथिव्यावुच्येतेइत्यर्थः ॥ समान्या सुपांसुलुगितिविभक्तेर्डादेशः । दूरेअन्ते इण्गतौ दुरीणोलोपश्चेतिरक्प्रत्ययः धातोर्लोपश्च रोरीतिरेफलोपः ढ्रलोपइतितीर्घः अन्तशब्दोअमेरसिहसीत्यादिनातन्प्रत्ययान्तः सप्तम्युपमानेबहुव्रीहिः हलदन्तादितिसप्तम्याअलुक् पूर्वपदस्वरः । जागरूके जागृनिद्राक्षयेइत्यस्मात्ताच्छील्येर्थेजागरूकइत्यूकप्रत्ययः प्रत्ययस्वरः । स्वसारा नषट्स्वस्रादिभ्यइतिङीप्प्रतिषेधः ॥ ७ ॥

अथाष्टमी–

विश्वेदे॒तेजनि॑मा॒सम्वि॑विक्तो॒महो॑दे॒वान्बिभ्र॑ती॒नव्य॑थेते ।
एज॑द्ध्रु॒वंप॑त्यते॒विश्व॒मेकं॒चर॑त्पत॒त्रिविषु॑णं॒विजा॒तम् ॥ ८ ॥

विश्वा॑ । इत् । ए॒ते इति॑ । जनि॑म । सम् । वि॒वि॒क्तः । म॒हः ।
दे॒वान् । बिभ्र॑ती॒ इति॑ । न । व्य॒थे॒ते॒ इति॑ । एज॑त् । ध्रु॒वम् । प॒त्य॒ते॒ ।
विश्व॑म् । एक॑म् । चर॑त् । प॒त॒त्रि । विषु॑णम् । वि । जा॒तम् ॥ ८ ॥

एतेद्यावापृथिव्यौ विश्वेज्जानिम सर्वाण्यपिभूतजातानिसंविविक्तः अवकाशप्रदानेनसंविभज्यकुरुतः किंच महोमहतोदेवानिन्द्रसूर्यादीन्सरित्समुद्रपर्वतादींश्चबिभ्रती बिभ्राणे अपि नव्यथेते नखिद्येते किंच एजज्जङ्गमात्कं ध्रुवंस्थावरात्मकंच विश्वंजगदेकंस्थानंपृथिवीमेव पत्यतेऽभिगच्छाति तथा चरच्चश्चलंपशुजातंच पतत्रिपक्षिजातंच विषुणंविष्वक्नानारूपम् अनयोर्मध्येवितिष्ठते. उपसर्गवशाद्योग्यक्रियाध्याहारः ॥ विविक्तः विचिर्पृथग्भावे जुहोत्यादिः निघातः । बिभ्रती डुभृञ्धारणपोषणयोरित्यस्यशतरि नाभ्यस्ताच्छतुरितिनुमभावः अभ्यस्तस्वरः । एजत् एजृकम्पने शतरिरूपम् । पत्यते पदगतौ दिवादिरात्मनेपदी दकारस्यतकारःव्यत्ययेननिघातः ॥ ८ ॥

अथनवमी–

सना॑पुरा॒णमध्ये॑म्या॒रान्म॒हः पि॒तुर्ज॑नि॒तुर्जा॒मितन्नः॑ ।
दे॒वासो॒यत्र॑पनि॒तार॒एवै॑रु॒रौप॒थिव्यु॑ते॒तस्थु॒रन्तः॑ ॥ ९ ॥

सना॑ । पु॒राण॑म् । अधि॑ । ए॒मि॒ । आ॒रात् । म॒हः । पि॒तुः ।
ज॒नि॒तुः । जा॒मि । तत् । नः॒ । दे॒वासः॑ । यत्र॑ । प॒नि॒तारः॑ । एवैः॑ ।
उ॒रौ । प॒थि । विऽउ॑ते । त॒स्थुः । अ॒न्तरिति॑ ॥ ९ ॥

हेद्यौः महोमहत्याःपितुःसर्वस्वपालयित्र्याः जनितुर्जनयित्र्याः तव सना सनातनं पुराणं-पूर्वक्रमागतंनोऽस्माकंयदेतज्जामित्वं सर्वमेकस्माज्जातमितिद्यौर्भगिनीभवति तादृशं भगिनीत्वं तदारादधुना अध्येमि स्मरामि दिवःपितृत्वेजनयितृत्वेचमन्त्रवर्णः—द्यौर्मेपिताजनितानाभिरत्रेति । यत्रयस्यांदिव्यन्तर्मध्ये उरौविस्तीर्णेव्युते विविक्ते पथि नभसि पनितारस्त्वांस्तुवन्तोदेवासोदेवाः एवैर्गमनसाधनैःस्वैःस्वैर्वाहनैःसहिताःसन्तस्तस्थुः तत्रस्थितादेवामदीयंस्तोत्रंशृण्वन्त्वितिभावः ॥ पुराणं पुराशब्दात्शैषिकार्थे सायंचिरमितिट्युप्रत्ययः पुराणप्रोक्तेषुब्राह्मणकल्पेष्विति निपातना-त्तुडभावः निपातनादेवान्तोदात्तत्वम् । एमि इक्स्मरणे अदादिः लटिरूपं निघातः । विउते व्येञ् तन्तुसन्ताने कर्मणिक्तः यजादित्वात्संप्रसारणं गतिरनन्तरइतिगतेःप्रकृतिस्वरः । तस्थुः तिष्ठतेर्लि-टिरूपं यत्रयोगादनिघातः ॥ ९ ॥

अथदशमी—

इ॒मंस्तोमं॑रोदसी॒प्रब्र॑वीम्यृदू॒दराः॑शृणवन्न॒ग्नि॒जि॒ह्वाः ।
मि॒त्रःस॒म्राजो॒वरु॑णो॒युवा॑नआ॒दि॒त्यासः॑क॒वयः॑पप्र॒था॒नाः॥१०॥२५

इ॒मम् । स्तोम॑म् । रो॒द॒सी इति॑ । प्र । ब्र॒वी॒मि॒ । ऋ॒दू॒दराः॑ ।
शृ॒ण॒व॒न् । अ॒ग्नि॒ऽजि॒ह्वाः । मि॒त्रः । स॒म्ऽराजः॑ । वरु॑णः ।
युवा॑नः । आ॒दि॒त्यासः॑ । क॒वयः॑ । प॒प्र॒था॒नाः ॥ १० ॥ २५ ॥

हेरोदसी द्यावापृथिव्यौ इमंयुष्मदीयंस्तोमंस्तोत्रंप्रब्रवीमि प्रकर्षेणवदामि ऋदूदराः ऋ-दुमृदुउदरंयेषांतेऋदूदराः यद्वा मृदुरुदरेसोमोयेषांतेऋदूदराः अग्निजिह्वाः अग्निर्जिह्वास्थानीयो येषांतेतथोक्ताः सम्राजः सम्यग्दीप्यमानाः युवानोनित्यतरुणाः यद्वा यजमानानाभिमतफलैर्मिश्री-कुर्वन्तः कवयःक्रान्तदर्शिनः पप्रथानाः स्वानिस्वानिकर्माणिप्रथयन्तोआदित्यासःमित्रादयोदेवाः

---

१ ऋ. सं. २. ३. १०. ।

शृणवन् तदिदंस्तोत्रंशृण्वन्तु ॥ शृणवन् श्रुश्रवणेइत्यस्यलेट्यडागमः । अग्निजिह्वाः[१] त्रिचक्रादित्वादन्तोदात्तत्वम् । पप्रथानाः प्रथप्रख्यानेइत्यस्यकानचिरूपं चित्त्वादन्तोदात्तः ॥ १० ॥

॥ इतितृतीयस्यतृतीयेपञ्चविंशोवर्गः ॥ २५ ॥

अथैकादशी–

हिर॑ण्यपाणिः सवि॒ता सु॒जि॒ह्वस्त्रिरा दि॒वो वि॒दथे॒ पत्य॑मानः ।
दे॒वेषु॑ च सवितः॒ श्लोक॒मश्रे॒राद॒स्मभ्य॒मा सु॑व स॒र्वता॑तिम् ॥ ११ ॥

हिर॑ण्यऽपाणिः । स॒वि॒ता । सु॒ऽजि॒ह्वः । त्रिः । आ । दि॒वः ।
वि॒दथे॑ । पत्य॑मानः । दे॒वेषु॑ । च॒ । स॒वि॒त॒रिति॑ । श्लोक॑म् ।
अश्रेः॑ । आत् । अ॒स्मभ्य॑म् । आ । सु॒व॒ । सर्व॑ऽताति॑म् ॥ ११ ॥

हिरण्यपाणिः दानार्थंहिरण्यंपाणौहस्तेयस्यसतथोक्तः यद्वा देवकर्तृकयागेसवितुर्ऋत्विग्भूतस्यहस्तेप्राशित्रंभक्षणार्थम् अध्वर्यवोददुः तत्प्राशित्रंतस्यहस्तौचिच्छेद ततोऽध्वर्यवो हिरण्मयौहस्तौकृत्वासंदधुः ततोयंहिरण्यपाणिः तथाचकौषीतकं–सवित्रेप्राशित्रंप्रतिजहुस्तत्तस्यपाणीप्रचिच्छेदतस्मैहिरण्मयौप्रतिदधुस्तस्माद्धिरण्यपाणिरिति । सुजिह्वः शोभनवाक् सविता विदथेयज्ञे त्रिः त्रिषुसवनेषुदिवोनभसःसकाशादापत्यमानःआगच्छन्भवतीतिशेषः परोर्धर्चःप्रत्यक्षः हेसवितःत्वंदेवेषुस्तोतृषुविद्यमानंचश्लोकं श्लोक्यतेऽनेनेतिश्लोकःस्तोत्रं तदश्रेः प्राप्नुहिच आदनन्तरं सर्वतातिंसर्वमपेक्षितंफलमस्मभ्यमासुव प्रेरय ॥ हिरण्यपाणिः हिरण्यशब्दंयास्कोबहुधानिर्वक्ति—हिरण्यंकस्माद्ध्रियतआयम्यमानमितिवाह्रियतेजनाज्जनमित्यादिना[१] । पाणिशब्दंचबहुधानिर्विवेच–पाणिःपणायतेःपूजाकर्मणइति[२] । हर्यगतिकान्त्योः हर्यतेः कन्यन् हिरचेतिकन्यन् हिरइत्ययमादेशोधातोः नित्त्वादाद्युदात्तः बहुव्रीहौपूर्वपदस्वरः । पत्यमानः पदगतौ दिवादिरात्मनेपदी दकारस्यतकारश्छान्दसः । अश्रेः श्रिञ्सेवायामित्यस्यलङि बहुलंछन्दसीतिशपोलुक् चवायोगेप्रथमेतिनानिघातः । सुव षूप्रेरणे तुदादिः । सर्वतातिं सर्वदेवात्तातिल् स्वार्थिकोलित्स्वरः ॥ ११ ॥

---

१ नि० २. १०. । २ नि० २. २६. ।

अथद्वादशी–

सुकृत्सुपाणिःस्ववाँऋतावादेवस्त्वष्टावसेतानिनोधात् ।
पूषण्वन्तऋभवोमादयध्वमूर्ध्वग्रावाणोअध्वरमतष्ट ॥ १२ ॥

सुऽकृत् । सुऽपाणिः । स्वऽवान् । ऋतऽवा । देवः । त्वष्टा ।
अवसे । तानि । नः । धात् । पूषण्ऽवन्तः । ऋभवः ।
मादयध्वम् । ऊर्ध्वऽग्रावाणः । अध्वरम् । अतष्ट ॥ १२ ॥

सुकृत् सुष्ठुजगतःकर्ता सुपाणिःकल्याणपाणिः स्ववान्धनवान् ऋतावासत्यसंकल्पः त्वष्टादेवः तानियान्यस्माकमपेक्षितानि अवसेरक्षणायनोऽस्मभ्यंधात् ददातु ऋभवः उरुभान्तीत्यृभवः हेऋभवः पूषण्वन्तः पूष्णासहितायूयंमादयध्वम् अस्मान्धनप्रदानेनहृष्टान्कुरुत ऊर्ध्वग्रावाणः सोमाभिषवार्थमुद्यतग्रावाणःसन्तःऋत्विजइममस्मदीयमध्वरमतष्टाकुर्वन् ॥ अतष्ट तक्षूत्वक्षूतनूकरणे ऊदित्त्वादत्रेडभावः झलोझलीतिसिचोलोपः स्कोःसंयोगाद्योरितिककारलोप बहुवचनस्यैकवचनंछान्दसम् ॥ १२ ॥

अथत्रयोदशी–

विद्युद्रथामरुतऋष्टिमन्तोदिवोमर्याऋतजाताअयासः ।
सरस्वतीशृणवन्यज्ञियासोधातारयिंसहवीरंतुरासः ॥ १३ ॥

विद्युत्ऽरथाः । मरुतः । ऋष्टिऽमन्तः । दिवः । मर्याः ।
ऋतऽजाताः । अयासः । सरस्वती । शृणवन् । यज्ञियासः ।
धात । रयिम् । सहऽवीरम् । तुरासः ॥ १३ ॥

विद्युद्रथाः विद्योतमानरथोपेताः ऋष्टिमन्तोदीप्तिमन्तः ऋष्टिरायुधविशेषः तद्वन्तोवा दिवोद्योतमानाः द्योतमानस्यरुद्रस्यपुत्रावामर्याः शत्रूणांमारयितारः मनुष्येभ्योहितावा ऋतजाताः उदकाद्यज्ञाद्वाप्रादुर्भूताः यद्वा ऋतमुदकंजातंयेभ्यः तेऋतजाताः अयासः सततगमनशीलाः यज्ञियासः यज्ञार्हामरुतः सरस्वती गद्यपद्यरूपेणप्रसरणमस्यास्तीतिसरस्वती वाग्देवताच एतेसर्वेदेवामदीयमिमंस्तोमंशृणवन् शृण्वन्तु तुरासः अस्माकंफलप्रदानेत्वरणयुक्ताः

हेमरुतः सहवीरं पुत्रसहितंरयिंधनंधात अस्मभ्यंधत्त ॥ धात दधातेर्लोटि बहुलंछन्दसीतिशपोलुक् तप्तनप्तनथनाश्चेतितबादेशः पादादित्वादनिघातः तपःपित्त्वादनुदात्तत्वेधातुस्वरः । तुरासः तुरत्वरणे इगुपधलक्षणःकः आमन्त्रितत्वान्निघातः ॥ १३ ॥

अथचतुर्दशी–

विष्णुंस्तोमासःपुरुदस्ममर्काभगस्येवकारिणोयामनिग्मन् ।
उरुक्रमःकंकुहोयस्यंपूर्वीर्नमर्धन्तियुवतयोजनित्रीः ॥ १४ ॥

विष्णुम् । स्तोमासः । पुरुऽदस्मम् । अर्काः । भगस्यऽइव ।
कारिणः । यामनि । ग्मन् । उरुऽक्रमः । ककुहः । यस्य ।
पूर्वीः । न । मर्धन्ति । युवतयः । जनित्रीः ॥ १४ ॥

स्तोमासःस्तूयन्तेएभिरितिस्तोमाःस्तोत्राणि अर्काअर्चनीयानिशस्त्राणिचभगस्येवधनस्यकारिणः कर्तृणीवस्थितानितानियामनिसन्ततंप्रतायमानेऽस्मिन्यज्ञे पुरुदस्मं बहुकर्माणं यद्वा बहून्दस्यतिउपक्षपयतीतिपुरुदस्मः तं विष्णुं देवं ग्मन् गच्छन्तु पूर्वीःबह्व्यः जनित्रीः सर्वस्यजनयित्र्यः युवतयः परस्परमसंकीर्णाःककुहःकंस्कुभ्नन्तिविस्तारयन्तिककुभोदिशः यद्वा ककुबुच्छ्रयार्थः उच्छ्रिताइवहिदिशोवृक्षाग्रेषूपलभ्यमानास्तिष्ठन्ति एतादिशोयस्यविष्णोराज्ञां नमर्धन्ति नहिंसन्तिसविष्णुरुरुक्रमः उरुर्महान्क्रमः पादविक्षेपोयस्यसः त्रिविक्रमावतारे एकेनैवपादेनसर्वंजगदाक्रम्यातिष्ठत ॥ ग्मन् गमेर्लुङि मन्त्रेघसेत्यादिनाच्लेर्लुक् । ककुभः पृषोदरादित्वाद्रूपस्वरसिद्धिः ॥ १४ ॥

अथपञ्चदशी–

इन्द्रोविश्वैर्वीर्यैः३ःपत्यमानउभेआपंप्रौरोदसीमहित्वा ।
पुरन्दरोवृत्रहाधृष्णुषेणःसंगृभ्यानआभराभूरिपश्वः॥१५॥२६॥

इन्द्रः । विश्वैः । वीर्यैः । पत्यमानः । उभेइति । आ । पप्रौ ।
रोदसी इति । महिऽत्वा । पुरम्ऽदरः वृत्रऽहा । धृष्णुऽसेनः ।
सम्ऽगृभ्य । नः । आ । भर । भूरि । पश्वः ॥ १५ ॥ २६ ॥

विश्वैः सर्वैर्वीर्यैः सामर्थ्यैः पत्यमानः प्राप्यमाणः सइन्द्रः उभेरोदसीद्यावापृथिव्यौमहित्वा स्वकीयेनमहिम्नाआपप्रौ पूरयामास शेषःप्रत्यक्षकृतः पुरन्दरःशत्रुपुरांदारयिता वृत्रहा वृत्रस्यहन्ता धृष्णुषेणः पराभिभवनशीलसेनोपेतः समरुद्गणइत्यर्थः सत्वंपश्वः पशून्संगृभ्यसंगृह्य नोऽस्मभ्यंभूरिप्रभूतंयथाभवतितथा आभर देहि यद्वा पश्वःपशोर्भूरिबहुत्वंबहून्पशूंश्चयच्छेति ॥ पुरन्दरः दॄविदारणेइत्यस्यपुरःशब्देउपपदेपूःसर्वयोर्दारिसहोरितिखच्प्रत्ययः वाचंयमपुरन्दरौचेतिनिपातनात्पूर्वपदस्यअमागमः चित्त्वादन्तोदात्तः । धृष्णुषेणः पूर्वपदादितिसंहितायांषत्वं यदाषत्वं तदा रषाभ्यामितिणत्वम् । संगृभ्य ग्रहेर्ल्यपि स्थानिवद्भावात्संप्रसारणं हृग्रहोर्भश्छन्दसीतिभत्वं ल्तितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् । पश्वः पशुशब्दात्शसः जसादिषुछन्दसिवावचनमितिसवर्णदीर्घाभावः ॥ १९ ॥

॥ इतितृतीयस्यतृतीयेषड्विंशोवर्गः ॥ २६ ॥

अथषोडशी–

**नासत्यामेपितराबन्धुपृच्छासजात्यमश्विनोश्चारुनाम ।**
**युवंहिस्थोरयिदौनोरयीणांदात्रंरक्षेथेअकवैरदब्धा ॥ १६ ॥**

नासत्या । मे । पितरा । बन्धुऽपृच्छा । सऽजात्यम् । अश्विनोः ।
चारु । नाम । युवम् । हि । स्थः । रयिऽदौ । नः । रयीणाम् ।
दात्रम् । रक्षेथे इति । अकवैः । अदब्धा ॥ १६ ॥

हेनासत्यावश्विनौ बन्धुपृच्छा हविःप्रदातृत्वेनबन्धून्समानपेक्षितमर्थंपृच्छतइतिबन्धूनां प्रष्टारोयुवांमेपितरौपालयितारौभवतम् युवयोरश्विनोःसजात्यं सजातेभवंसंगतं चारुनामकमनीयंखलु हेअश्विनौ युवंयुवांनोस्मभ्यंरयीणांधनानांमध्येरयिदौ उत्तमस्यधनस्यदातारौस्थोहि भवथःखलु किंचअदब्धाकेनाप्यतिरस्कृतौयुवांदात्रंहविषांदातारंमामकवैरकुत्सितैःशोभनैःकर्मभिःरक्षेथे पालयतम् ॥ नासत्या नभ्राण्नपादित्यादिनानिपातनान्नञःप्रकृतिभावः । बन्धुपृच्छा पृच्छेःक्विप् सुपांसुलुगितिसुपोडादेशः । सजात्यं सजातेभवं भवेछन्दसीतियत् तित्स्वरितः । स्थः अस्तेर्लटिरूपं हियोगादनिघातः ॥ १६ ॥

अथसप्तदशी—

महत्तद्वः कवयश्चारुनामयद्धदेवाभवथविश्वइन्द्रे ।
सखऋभुभिःपुरुहूतप्रियेभिरिमांधियंसातयेतक्षतानः ॥ १७ ॥

महत् । तत् । वः । कवयः । चारु । नाम । यत् । ह । देवाः ।
भवथ । विश्वे । इन्द्रे । सखा । ऋभुऽभिः । पुरुऽहूत । प्रियेभिः ।
इमाम् । धियम् । सातये । तक्षत । नः ॥ १७ ॥

हेकवयोमेधाविनोहेदेवाः वोयुष्माकंतत्तादृशंमहत्प्रभूतंनामकर्मनमनंवा चारुमनोहरंखलु यद्येनकर्मणाविश्वेसर्वेयूयमिन्द्रे इन्द्रोपलक्षितेलोकेदेवाभवथह देवत्वंप्राप्नुथखलु हेपुरुहूत बहुभिराहूत हेइन्द्र त्वं प्रियेभिःप्रियतमैः ऋभुभिः ऋतेनभवन्तिऋतेनभान्तीतिवा ऋभुभिर्देवैःसखासि इन्द्रसहिताऋभवोयूयम् इमामस्मदीयांधियंस्तुतिंनोऽस्माकंसातयेधनादिलाभार्थंतक्षत स्वीकुरुत ॥ यत् सुपांसुलुगित्यादिनासुपोलुक् । भवथ भवतेर्लेट्रूपं यद्वृत्तयोगादनिघातः । सखऋभुभिरित्यस्यसंहितायांऋत्यकइतिप्रकृतिभावोह्रस्वत्वंच ॥ १७ ॥

अथाष्टादशी—

अर्यमाणोअदितिर्यज्ञियासोदब्धानिवरुणस्यव्रतानि ।
युयोतनोअनपत्यानिगन्तोःप्रजावान्नःपशुमाँअस्तुगातुः ॥ १८ ॥

अर्यमा । नः । अदितिः । यज्ञियासः । अदब्धानि । वरुणस्य ।
व्रतानि । युयोत । नः । अनपत्यानि । गन्तोः । प्रजाऽवान् । नः ।
पशुऽमान् । अस्तु । गातुः ॥ १८ ॥

अर्यमा ऋच्छातिसर्वदागच्छतीत्यर्यमासूर्यः अदितिर्देवमाता यज्ञियासोयज्ञार्हादेवायस्य वरुणस्यव्रतानिकर्माणि अदब्धान्यहिंसितानिभवन्तिसवरुणः तेचार्यमादयोदेवानोऽस्मान्रक्षन्त्वितिशेषः तेयूयंनोऽस्माकमनपत्यानि अपत्यानांपुत्राणामहितानिकर्माणि यद्वा पतनकारणंनभवतीत्यपत्यं तदन्यान्यनपत्यानि पतनकारणानिकर्माणिगन्तोः सन्मार्गाद्युयोत पृथक्कुरुत यथा तान्यहितानिकर्माणिनस्पृशन्तितथाकुरुतेत्यर्थः अथ गातुः गायन्तिस्तुवन्ती-

न्द्रादीनत्रेतिगातुर्गृहं नोऽस्मदीयंगृहंपशुमान्पश्वादियुक्तंप्रजावानपत्योपेतमस्तु ॥ अर्यमा ऋगतौ श्वन्नुक्षन्प्लीहन्क्लेदन्नित्यादिनानिपातनाद्रूपसिद्धिः । अदितिः दोङ्क्षयेइत्यस्यकर्तरिक्तिच् नञ्समासः अदितिरदीनेतियास्कः । छान्दसंहस्वत्वं नञःस्वरः । युयोत यौतेरमिश्री-भावकर्मणोलोटिबहुलंछन्दसीतिशपःश्लुः तप्तनबितितप्रत्ययस्यतबादेशः । गन्तोः गम्लृगतौ सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यइतितुन्प्रत्ययः नित्त्वादाद्युदात्तः । गातुः गापाहिभ्यश्चे-तितुप्रत्ययः ॥ १८ ॥

अथैकोनविंशी—

देवानांदूतःपुरुधप्रसूतोनागान्नोवोचतुसर्वताता ।
शृणोतुनःपृथिवीद्यौरुतापःसूर्योनक्षत्रैरुर्वन्तरिक्षम् ॥ १९ ॥

देवानाम् । दूतः । पुरुध । प्रऽसूतः । अनागान् । नः । वोचतु । सर्वऽताता । शृणोतु । नः । पृथिवी । द्यौः । उत । आपः । सूर्यः । नक्षत्रैः । उरु । अन्तरिक्षम् ॥ १९ ॥

पुरुध पुरुषुबहुषुदेशेषुप्रसूतः अग्निहोत्रार्थविहितः यद्वा पुरुभिर्यजमानैःप्रसूतः यष्टव्य-देवानाह्वानार्थप्रेरितोदेवानांदूतः तथाचतैत्तिरीयकम्—अग्निर्देवानांदूतआसीदिति । तादृशोऽग्निः कर्मकर्तृसाधनवैगुण्येनसापराधान्नोऽस्माननागानानागसः सर्वताता सर्वत्रवोचतुब्रवीतु किंच पृथिवीद्यौश्च उतापिचापःसूर्यश्च नक्षत्रैरुरुविस्तीर्णमन्तरिक्षंच एतेसर्वेदेवानोऽस्मदीयांस्तुतिं शृणोतु शृण्वन्तु प्रत्येकविवक्षयैकवचनम् ॥ प्रसूतः षूप्रेरणे कर्मणिक्तः गतिरनन्तरइतिगतेः प्रकृतिस्वरः । अनागान् शसि सकारलोपश्छान्दसः सवर्णदीर्घेकृतेतस्माच्छसोनइतिनत्वम् । वोचतु वचपरिभाषणे व्यत्ययोबहुलमितिशपोऽङादेशः वचउम् गुणः निघातः । नक्षत्रैः नक्षगतौ अमिनक्षियजिबन्धिपतिभ्योऽत्रन्नित्यत्रन्प्रत्ययः नित्त्वादाद्युदात्तः यद्वा नक्षरातिनक्षीयतइ-तिवानक्षत्रं नभ्राण्नपादितिनञःप्रकृतिभावः नञ्स्वरः ॥ १९ ॥

अथविंशी—

शृण्वन्तुनोवृषणःपर्वतासोध्रुवक्षेमासइळयामदन्तः ।
आदित्यैर्नोअदितिःशृणोतुयच्छन्तुनोमरुतःशर्मभद्रम् ॥ २० ॥

१ तै० ४. २२. ।

शृण्वन्तु । नः । वृषणः । पर्वतासः । ध्रुवऽक्षेमासः । इळया ।
मदन्तः । आदित्यैः । नः । अदितिः । शृणोतु । यच्छन्तु । नः ।
मरुतः । शर्म । भद्रम् ॥ २० ॥

वृषणः अभिमतफलसेचकामरुतः पर्वतासः पृणन्तिपूरयन्तिअर्थिनांकामानितिपर्वताग्रावाभिमानिनोदेवाः ध्रुवक्षेमासः निश्चलस्थानाः इळयाहविर्लक्षणान्नेनमदन्तोमाद्यन्तःसन्तः नोऽस्मदीयांस्तुतिंशृण्वन्तु किंच आदित्यैरपत्यभूतैरादित्यैरुपेतादितिर्नोऽस्मदीयांस्तुतिंशृणोतु मरुतश्चनोऽस्मभ्यंभद्रंकल्याणकरंशर्म सुखं यच्छन्तुददतु ॥ आदित्यैः अदितेरपत्यानीत्यर्थे दित्यदित्येतिण्यः प्रत्ययस्वरेणान्तोदात्तः सुपासहैकादेशेकृते एकादेशउदात्तः ॥ २० ॥

प्रवत्स्यन्यजमानः सदासुगइत्यृचंजपन्गच्छेत् सूत्रितश्च—सदासुगःपितुमाँअस्तुपन्थाइतिपन्थानमवरुह्येति ।

सूक्तेएकविंशी—

सदासुगःपितुमाँअस्तुपन्थामध्वादेवाओषधीःसंपिपृक्त ।
भगोमेअग्नेसख्येनमृध्याउद्रायोअश्यांसदनंपुरुक्षोः ॥ २१ ॥

सदा । सुऽगः । पितुऽमान् । अस्तु । पन्थाः । मध्वा । देवाः ।
ओषधीः । सम् । पिपृक्त । भगः । मे । अग्ने । सख्ये । न ।
मृध्याः । उत् । रायः । अश्याम् । सदनम् । पुरुऽक्षोः ॥ २१ ॥

हेअग्ने अस्माकंपन्थामार्गः सदा सर्वदा सुगःसुखेनगन्तुंशक्यः पितुमानन्नवांश्चास्तु हेदेवाःमध्वामाधुर्योपेतेन उदकेनओषधीःसंपिपृक्त संपर्चयत सेचयतेत्यर्थः हेअग्ने त्वयासख्ये संजातेसति मेममभगोधनंनमृध्याः नविनश्यतु किञ्च रायोधनस्य पुरुक्षोःबह्वन्नस्यच सदनंस्थानमुदश्यांप्राप्नुयाम् ॥ सदा स्वरादिष्वाद्युदात्तत्वेनपाठादाद्युदात्तः । पिपृक्त पृचीसंपर्के लोटिबहुलं छन्दसीतिशपःश्लुः बहुलंछन्दसीत्यभ्यासस्येत्त्वम् । मृध्याः मृधिर्हिंसार्थः लिङि तिङांतिङो भवन्तीतितिपःसिप् ॥ २१ ॥

पशौपुरोडाशस्विष्टकृतःस्वदस्वहव्येतियाज्या सूत्रितश्च—स्वदस्वहव्यासमिषोदिदीहीति पुरोडाशस्विष्टकृतइति ।

सूक्तेद्वाविंशी—

स्वदस्वहव्यासमिषोदिदीह्यस्मद्र्य१क्संमिमीहिश्रवांसि ।
विश्वाँअग्नेपृत्सुताञ्जेषिशत्रूनहाविश्वासुमनादीदिहीनः ॥२२॥२७॥

स्वदस्व । हव्या । सम् । इषः । दिदीहि । अस्मद्र्यक् । सम् ।
मिमीहि । श्रवांसि । विश्वान् । अग्ने । पृत्ऽसु । तान् । जेषि ।
शत्रून् । अहा । विश्वा । सुऽमनाः । दीदिहि । नः ॥ २२ ॥ २७ ॥

हेअग्ने हव्या हवनयोग्यानिहवींषिस्वदस्व स्वादय अस्माकमिषोन्नानिसंदिदीहि सम्यक्प्रकाशय दीपितानितानिश्रवांस्यन्नानि अस्मद्र्यक् अस्मदभिमुखानिसंमिमीहि संमानय कुर्वित्यर्थः ततः पृत्सुसंग्रामेषु तान्बाधकान्विश्वान्सर्वान्शत्रूनुजेषिजय अथ सुमनाः शोभनमनस्कःसन्नोऽस्माकंविश्वाहासर्वाण्यहानिदीदिहि अग्निहोत्रादिकर्मयोग्यानिप्रकाशय ॥ स्वदस्व स्वदआस्वादने लोटिरूपं थासोलसार्वधातुकस्वरेधातुस्वरः । दिदीहि दिवुक्रीडादावित्यस्यलोटि बहुलंछन्दसीतिविकरणस्यश्लुः परत्वाद्धलिचेतिदीर्घेकृते पश्चाद्वलिलोपः निघातः। अस्मद्र्यक् अस्मानञ्चतीत्यञ्चतेःक्विन् विष्वग्देवयोश्चटेरद्र्यञ्चतावप्रत्यये इत्यद्र्यादेशेयणि ततःपरस्यस्वरितत्वम्। मिमीहि माङ्मानेशब्देच जुहोत्यादिः तस्य लोटि व्यत्ययेनपरस्मैपदं निघातः । सुमनाः सोर्मनसीत्युत्तरपदाद्युदात्तत्वम् । दीदिहि दिवेर्यङ्लुकि लोटि तुजादित्वादभ्यासस्यदीर्घः वलिलोपः ॥ २२ ॥

॥ इतितृतीयस्यतृतीयेसप्तविंशोवर्गः ॥ २७ ॥

उषसःपूर्वाइतिद्वाविंशत्यृचंद्वितीयंसूक्तंत्रैष्टुभम् उषसइत्यनुक्रमणिका प्रजापतेरार्षंवैश्वदेवं प्रजापतिर्हिवैश्वदेवंहेतिपूर्वसूक्तेहिहशब्दप्रयोगात् सूक्तविनियोगोलैङ्गिकः । अत्राद्योषस्या ततःपरंनवर्चोऽग्न्यादिदेवताकाः ततःपराहोरात्रिदेवताका ततश्चतस्रोरोदस्यः पञ्चदशीद्युनिशोर्वा षोडशीदिग्देवताका ततःषड्ऋचः वर्षतःइन्द्रस्यकेचिदग्नेस्त्वष्टुश्चेतिमन्यन्ते ।

तत्रप्रथमा—

उषसःपूर्वाअधयद्व्यूषुर्महद्विजज्ञेअक्षरंपदेगोः ।
व्रतादेवानामुपनुप्रभूषन्महद्देवानामसुरत्वमेकम् ॥ १ ॥

उषसः । पूर्वाः । अध । यत् । विऽऊषुः । महत् । वि । जज्ञे ।
अक्षरम् । पदे । गोः । व्रता । देवानाम् । उप । नु । प्रऽभूषन् ।
महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १ ॥

· पूर्वाउदयकालात्प्राचीनाउषसोयद्यदाव्यूषुः व्युच्छान्ति अध तदानीम् अक्षरं नक्षरतीत्यक्षरम् अविनाश्यादित्याख्यंमहत्प्रभूतंज्योतिर्गोरुदकस्यपदेस्थानेसमुद्रेनभसिवाविजज्ञे उत्पद्यतेअथोदितेसूर्ये प्रभूषन्नग्निहोत्रादिकर्मसुप्रभवितुमिच्छन्यजमानःव्रताकर्माणिदेवानांनुक्षिप्रम् उपसमीपंतिष्ठति योग्यक्रियाध्याहारः तदिदंदेवानामेकंमुख्यम्असुरत्वमस्यातिक्षिपतिसर्वानित्यसुरः प्रबलः तस्यभावोसुरत्वंप्राबल्यं महदैश्वर्यम् ॥ व्यूषुः उषप्लुषदाहेइत्यस्यविपूर्वस्य लिट्युसिरूपं सहेतियोगविभागात्समासः यद्वृत्तयोगादनिघातः । प्रभूषन् भवतेःसनि द्विर्वचनस्यछन्दसिविकल्पितत्वादत्रद्विर्वचनाभावः तदन्ताच्छतरिरूपं प्रादिसमासः शतुर्लसार्वधातुकस्वरेधातुस्वरः ॥ १ ॥

अथद्वितीया—

मोषूणोअत्रजुहुरन्तदेवामापूर्वेअग्नेपितरःपदज्ञाः ।
पुराण्योःसद्मनोःकेतुरन्तर्महद्देवानामसुरत्वमेकम् ॥ २ ॥

मा इति । सु । नः । अत्र । जुहुरन्त । देवाः । मा । पूर्वे ।
अग्ने । पितरः । पदऽज्ञाः । पुराण्योः । सद्मनोः । केतुः ।
अन्तः । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ २ ॥

हेअग्ने अत्रास्मिन्कालेदेवाः नोऽस्मान्सुसुष्ठुमोजहुरन्त माहिंस्युः तथा पदज्ञाः कर्माण्यनुष्ठायदेवपदमनुभवन्तः पूर्वेपुरातनाःपितरः माहिंसिषुः यस्मात्केतुर्यज्ञानांप्रज्ञापकःसूर्यः पुराण्योः पुरातनयोःसद्मनोःसीदन्त्यनयोर्देवमनुष्याइतिसद्मनीरोदसी तयोरन्तर्मध्ये उदेति. तस्मादत्रमाहिंसन्नित्यर्थः महद्देवानामित्यादिपूर्ववत् ॥ जुहुरन्त ह्वृप्रसह्यकरणे लुङि जुहोत्यादित्वात्श्लुव्यत्ययेनात्मनेपदं बहुलंछन्दसीत्युत्वं संज्ञापूर्वकस्यविधेरनित्यत्वाददादेशाभावे अन्तादेशः ॥ २ ॥

अथतृतीया—

विमेपुरुत्रापतयन्तिकामाःशम्यच्छादीद्येपूर्व्याणि ।
समिद्धेअग्नावृतमिद्वदेममहद्देवानामसुरत्वमेकम् ॥ ३ ॥

वि । मे । पुरुऽत्रा । पतयन्ति । कामाः । शमि । अच्छ ।
दीद्ये । पूर्व्याणि । सम्ऽइद्धे । अग्नौ । ऋतम् । इत् । वदेम ।
महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ३ ॥

हेअग्ने मे मम पुरुत्रा बहवःकामाअभिलाषाः विपतयन्ति विविधंगच्छन्ति शमिअग्निष्टोमादिलक्षणंकर्माच्छाभिलक्ष्यअहं पूर्व्याणिपुरातनानिस्तोत्राणितदर्थंदीद्ये दीपयामि पश्चाद्यज्ञार्थमग्नौसमिद्धेदीप्यमानेसति ऋतमित्सत्यमेववदेम अनृतवचनेहियज्ञेवैगुण्यंस्यादिति ॥ पुरुत्रा देवमनुष्यपुरुषेत्यादिनात्राप्रत्ययः । पतयन्ति पत्लृगतौ स्वार्थिकोणिच् ॥ ३ ॥

अथचतुर्थी–

समानोराजाविभृतःपुरुत्राशयेशयासुप्रयुतोवनानु ।
अन्यावत्संभरतिक्षेतिमातामहद्देवानामसुरत्वमेकम् ॥ ४ ॥

समानः । राजा । विऽभृतः । पुरुऽत्रा । शये । शयासु ।
प्रऽयुतः । वना । अनु । अन्या । वत्सम् । भरति । क्षेति ।
माता । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ४ ॥

समानः साधारणःसर्वेषां यद्वा एकएवराजादीप्यमानोऽग्निःपुरुत्रा बहुषुदेशेषुविभृतः अग्निहोत्रार्थंविहृतोभवति यद्वा राजाभिषुतःसोमः सर्वेषुदेशेषुयज्ञार्थंविहृतोभवति सचाग्निः सोमोवाशयासु शेरते हविरादयःपदार्थाअत्रेतिशयावेद्यः तासु शयेशेतेनिवसतिवनानु अनुवनं वनेष्वरणिरूपेषुकाष्ठेषुप्रयुतोविभक्तोग्निर्वर्तते सोमश्चेद्वनेषुचमसेषुविभक्तोवर्तते तस्य द्वेमातरौद्यावापृथिव्यौ तयोरन्याद्यौः अस्याभूमेर्जायमानतयावत्सभूतमग्निंसोमंवाभरति वृष्ट्यादिरूपेणभरतिपोषयति मातावसुधाक्षेति केवलंनिवासयति ॥ विभृतः हृञ्हरणे कर्मणिक्तः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । पुरुत्रा अधिकरणेत्राप्रत्ययः ? । शये शीङ्स्वप्ने लोपस्तइति तकारलोपः शीङःसार्वधातुकेगुणः । शयासु शीङ्स्वप्ने एरजित्यधिकरणेअच् । भरति भृञ्भरणे भ्वादिः एकान्याभ्यांसमर्थाभ्यामितिपूर्वस्यानिघातः । क्षेति क्षिनिवासगत्योरित्यस्य बहुलं छन्दसीतिविकरणस्यलुक् ॥ ४ ॥

अथपञ्चमी–

आक्षित्पूर्वास्वपराअनूरुत्सद्योजातासुतरुणीष्वन्तः ।
अन्तर्वतीःसुवतेअप्रवीतामहद्देवानामसुरत्वमेकम् ॥ ५ ॥ २८ ॥

आऽक्षित् । पूर्वासु । अपराः । अनूरुत् । सद्यः । जातासु ।
तरुणीषु । अन्तरिति । अन्तःऽवतीः । सुवते । अप्रऽवीताः ।
महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ५ ॥ २८ ॥

पूर्वासुजीर्णास्वोषधीषु आक्षित् आवर्तमानः तथा अपराः नव्याओषधीरनूरुत् अनुरुन्धन् उत्पत्त्यानुगुण्येनानुतिष्ठन् अग्निःसूर्योवासद्योजातासुतदानीमुत्पन्नासुतरुणीषुपल्लवितासु ओषधीष्वन्तर्वर्तते ताओषधयः अप्रवीताः केनापिपुरुषेणानिषिक्तरेतस्काः अनभ्यक्तावा अन्तर्वतीः अग्निनागर्भवत्योभूत्वा सुवतेफलंपुष्पंचोत्पादयन्ति तदिदंदेवानामैश्वर्यम् । आक्षित् क्षिनिवासगत्योः क्विप् । अनूरुत् अनो ( नौ ) रुधकामेअस्मात्क्विप् अन्येषामपिदृश्यतइतिअनोर्दीर्घः कृत्स्वरः । तरुणीषु नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानमितिङीप् । अन्तर्वतीः झयइतिमतुपोवत्वम् । सुवते षूङ्प्राणिगर्भविमोचनेइत्यस्यलटिरूपं निघातः ॥ ५ ॥

॥ इतितृतीयस्यतृतीयेअष्टाविंशोवर्गः ॥ २८ ॥

अथषष्ठी–

शयुःपरस्तादधनुद्विमाताबन्धनश्चरतिवत्सएकः ।
मित्रस्यतावरुणस्यव्रतानिमहद्देवानामसुरत्वमेकम् ॥ ६ ॥

शयुः । परस्तात् । अध । नु । द्विऽमाता । अबन्धनः । चरति ।
वत्सः । एकः । मित्रस्य । ता । वरुणस्य । व्रतानि । महत् ।
देवानाम् । असुरऽत्वम् । एकम् ॥ ६ ॥

द्विमाता द्वेद्यावापृथिव्यौमातरौयस्यसद्विमता यद्वा द्वयोर्लोकयोर्निर्मातासूर्यः परस्तात्पश्चिमायांदिशि अस्तवेलायां शयुः शयानः अव्याप्रियमाणोभवति अधनु अथोदयवेलायाम् एकः द्यावापृथिव्योः साधारणस्तयोःरसादानाद्वत्सःपुत्रःअबन्धनः अप्रतिबद्धगतिरनालम्बनए-

कःसन्चरति नभसिगच्छति तातानीमानिमित्रस्यवरुणस्यमित्रावरुणयोर्व्रतानिकर्माणि ॥ शयुः शीङ्स्वप्ने भृमृशीतृचरिइत्यादिनाउप्रत्ययः । द्विमाता नद्यृतश्चेतिप्राप्तस्यकपः ऋतश्छन्दसीतिप्रतिषेधः ॥ ६ ॥

अथसप्तमी—

द्विमाताहोताविदथेषुसम्राळन्वग्रंचरतिक्षेतिबुध्नः ।
प्ररण्यानिरण्यवाचोभरन्तेमहद्देवानामसुरत्वमेकम् ॥ ७ ॥

द्विऽमाता । होता । विदथेषु । सम्ऽराट् । अनु । अग्रम् ।
चरति । क्षेति । बुध्नः । प्र । रण्यानि । रण्यऽवाचः । भरन्ते ।
महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ७ ॥

द्विमाता द्वयोर्लोकयोर्निर्माता विदथेषुयज्ञेषु होतादेवानामाह्वाता सम्राट्यज्ञेषुसम्यग्राजमानोग्निः अन्वग्रम् अग्रेदिविचरति सूर्यभूतस्तत्रवर्तते बुध्नःसर्वस्यकर्मणोमूलभूतःसन् क्षेति भूमौवसति यद्वा अग्रंमुख्यंभागंचरति भक्षयति क्षेति यजिवनांगृहेषुनिवसति यद्वा बुध्नः प्रतिष्ठा अन्तेभागी स्विष्टकृद्रूपेण प्रतिष्ठावैस्विष्टकृदितिश्रुतेः[1] । किंच रण्यवाचः रमणीयवाचःस्तोतारः रण्यानिरमणीयानिस्तोत्राणि प्रभरन्तेप्रणयन्ति प्रकर्षेणकुर्वन्ति तदिदंदेवानामैश्वर्यम् ॥ चरति चादिलोपइतिननिघातः ॥ ७ ॥

अथाष्टमी—

शूरस्येवयुध्यतोअन्तमस्यंप्रतीचीनंददृशेविश्वमायत् ।
अन्तर्मतिश्चरतिनिष्षिधंगोर्महद्देवानामसुरत्वमेकम् ॥ ८ ॥

शूरस्यऽइव । युध्यतः । अन्तमस्य । प्रतीचीनम् । ददृशे ।
विश्वम् । आऽयत् । अन्तः । मतिः । चरति । निःऽसिधम् ।
गोः । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ८ ॥

---

१ ऐ० ब्रा० २. ४.।

अन्तमस्य समीपेवर्तमानस्यदावाग्नेरायत् अभिमुखमागच्छत् विश्वंभूतजातं प्रतीचीनं पराङ्मुखं ददृशे दृश्यते तत्रदृष्टान्तः—शूरस्येव यथायुध्यतोयुद्धंकुर्वाणस्यशूरस्यसमर्थस्य राज्ञोभिमुखमागच्छत् परबलंपराङ्मुखंदृश्यतेतद्वत् मतिःसर्वैर्ज्ञायमानःसोऽग्निर्गोरुदकस्यनिःषिधंहिंसिकांदीप्तिमन्तश्चरति अन्तर्धारयति ॥ युध्यतः युधसंप्रहारे दिवादित्वात्तस्यशतरिरूपम् अन्तमस्य अन्तःशब्दादतइनिठनाविति ठन् अतिशयेनान्तिकइत्यर्थेतमप् तमेतादेश्चेति तादिलोपः नित्त्वादाद्युदात्तः । प्रतीचीनं प्रतिपूर्वस्याञ्चतेःक्विप् तस्माद्विभाषाञ्चेरदिक्स्त्रियामितिखः ईनादेशः प्रत्ययस्वरः । आयत् याप्रापणेइत्यस्याङ्पूर्वस्यशतरिरूपम् आङ्पूर्वस्य अयपयगताविव्यस्यशतरिरूपंवेतिव्युत्पत्त्यनवधारणादनवग्रहः ॥ ८ ॥

अथनवमी—

निवे॑वेतिपलि॒तोदू॒तआ॑स्व॒न्तर्म॒हाँश्च॑रतिरोच॒नेन॑ ।
वपूं॑षि॒बिभ्र॑द॒भिनो॒विच॑ष्टेम॒हद्दे॒वाना॑मसु॒र॒त्वमेक॑म् ॥ ९ ॥

नि । वे॒वेति । प॒लि॒तः । दू॒तः । आ॒सु । अ॒न्तः । म॒हान् । च॒र॒ति । रो॒च॒नेन॑ । वपूं॑षि । बिभ्र॑त् । अ॒भि । नः॒ । वि । च॒ष्टे॒ । म॒हत् । दे॒वाना॑म् । अ॒सु॒र॒ऽत्वम् । एक॑म् ॥ ९ ॥

पलितःपालयितापूर्णोवादेवानांदूतोऽग्निःआस्वोषधीषुनिवेवेति नितरांव्याप्यवर्तते महान्सोऽग्निःरोचनेनसूर्येणसहअन्तः रोदस्योर्मध्येचरति वपूंषिनानाविधानिरूपाणिबिभ्रत्सोऽग्निः नोअस्मान्यष्टॄनभिविचष्टे विशेषेणानुग्रहदृष्ट्यापश्यति ॥ वेवेति वीगत्यादिषु यङ्लुकि इडभावेरूपम् । रोचनेन सहार्थेतृतीया । बिभ्रत् डुभृञ्धारणपोषणयोरित्यस्यशतरिरूपम् अभ्यस्तस्वरः ॥ ९ ॥

अथदशमी—

विष्णु॑र्गो॒पाःप॑र॒मंपा॑ति॒पाथः॑प्रि॒याधामा॑न्य॒मृता॒दधा॑नः ।
अ॒ग्निष्टा॒विश्वा॒भुव॑नानिवेदम॒हद्दे॒वाना॑मसु॒र॒त्वमेक॑म् ॥ १० ॥ २९ ॥

विष्णु॑ः । गो॒पाः । प॒र॒मम् । पा॒ति॒ । पाथः॑ । प्रि॒या । धामा॑नि । अ॒मृता॑ । दधा॑नः । अ॒ग्निः । ता । विश्वा॑ । भुव॑नानि । वे॒द॒ । म॒हत् । दे॒वाना॑म् । अ॒सु॒र॒ऽत्वम् । एक॑म् ॥ १० ॥ २९ ॥

विष्णुर्व्याप्तः गोपाः सर्वस्यगोपायिता प्रिया प्रियतमानि अमृता क्षयरहितानि धामानि तेजांसिदधानःसोऽग्निः परमंपाथःस्थानंपाति रक्षति यद्वा धामानि लोकधारकाणि अमृता उदकानिदधानःसन् परमंपाथः उदकस्यस्थानम् अन्तरिक्षंपाति सोऽग्निःता तानि विश्वा सर्वाणिभुवनानिभूतजातानि वेद जानाति ॥ गोपाः गोपायतेःक्विपि अतोलोपयलोपौ अग्निष्टे- त्यत्रसंहितायांयुष्मत्ततत्क्षुःष्वन्तःपादमितिषत्वम् ॥ १० ॥

॥ इतितृतीयस्यतृतीयेएकोनत्रिंशोवर्गः ॥ २९ ॥

नानाचक्रातेयम्या३ वपूंषितयोरन्यद्रोचतेकृष्णमन्यत् ।
श्यावीचयदरुषीचस्वसारौमहद्देवानामसुरत्वमेकम् ॥ ११ ॥

नाना । चक्राते इति । यम्या । वपूंषि । तयोः । अन्यत् ।
रोचते । कृष्णम् । अन्यत् । श्यावी । च । यत् । अरुषी ।
च । स्वसारौ । महत् । देवानाम् । असुरऽत्वम । एकम् ॥ ११ ॥

यम्या यमरूपेमिथुनभूतेऽहश्चरात्रिश्चेत्येते नाना नानाविधानिवपूंषि शुक्लकृष्णादीनिरू- पाणिचक्राते कुरुतः श्यावी कृष्णवर्णा अरुषीशुक्लतयारोचमाना यत्येपरस्परंस्वसारौभवतः तयोर्मध्येअन्यदर्जुनमहःरोचते किरणसंबन्धाद्दीप्यते अन्यद्रात्रिलक्षणंकृष्णंतमःसंबन्धात्कृ- ष्णवर्णमाभाति ॥ यम्या सुपोडादेशः । रोचते एकान्याभ्यांसमर्थाभ्यामितिननिघातः ॥ ११ ॥

अथद्वादशी–

माताचयत्रदुहिताचधेनूसबर्दुघेधापयेतेसमीची ।
ऋतस्यतेसदसीळेअन्तर्महद्देवानामसुरत्वमेकम् ॥ १२ ॥

माता । च । यत्र । दुहिता । च । धेनू इति । सबर्दुघे इतिसबःऽदुघे ।
धापयेते इति । समीची इति समऽईची । ऋतस्य । ते इति । सदसि ।
ईळे । अन्तः । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १२ ॥

माता सर्वेषांनिर्मातृत्वान्माता पृथिवीचदुहिता दूरेनिहिताद्यौश्च दुहितादुर्हिता- दूरेहितादोग्धेर्वेतियास्कः[1] । एते सबर्दुघे सबरःस्वीयस्यक्षीररूपस्यरसस्यदोग्ध्र्यौ अत-

१ नि० ३. । ४. ।

एवधेनू जगतःप्रीणयित्र्यौ द्यावापृथिव्यौ यत्रान्तरिक्षे समीची परस्परंसंगतेसत्यौ धापयेते स्वकीयरसमन्योन्यंपाययेते ऋतस्योदकस्यसदसिस्थानभूतेतस्मिन्नन्तरिक्षेअन्तःस्थिते तेद्यावापृथिव्यावीळेऽहंस्तौमि यद्वा वृष्टिलक्षणंरसंद्यौःपृथिवींधापयते आहुतिलक्षणंरसं द्यांपृथिवीति एवमन्योन्यंमाताचदुहिताचभवतः ऋतस्यसदसिस्थाने यज्ञसदनेस्थितोऽहम् उभेस्तौमि ॥ सबर्दुघे सबःशब्दःक्षीरवाचीतिसंप्रदायविदआहुः तस्मिन्नुपपदेदुहप्रपूरणेइत्यस्माद्धातोः दुहःकब्घश्चेतिकप्रत्ययः घश्चान्तादेशः प्रत्ययस्यपित्त्वादनुदात्तत्वेधातुस्वरः । धापयेते धेट्पानेइत्यस्यण्यन्तस्यलटि निगरणचलनार्थेभ्यश्चेतिपरस्मैपदेप्राप्ते पादिषुधेटउपसंख्यानमित्यात्मनेपदं यद्वृत्तयोगादनिघातः ॥ १२ ॥

अथत्रयोदशी–

अन्यस्यांवत्संरिहतीमिमायकयाभुवानिदधेधेनुरूधः ।
ऋतस्यसापयसापिन्वतेळामहद्देवानामसुरत्वमेकम् ॥ १३ ॥

अन्यस्याः । वत्सम् । रिहती । मिमाय । कया । भुवा । नि ।
दधे । धेनुः । ऊधः । ऋतस्य । सा । पयसा । पिन्वत । इळा ।
महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १३ ॥

अन्यस्याःपृथिव्यावत्समग्निंरिहतीउदकधारारूपयाजिह्वयालिहन्तीद्यौः मिमाय मेघद्वाराध्वनिंकरोति धेनुः प्रीणयित्रीसाद्यौःकयाजलवर्जितयाभुवातत्रत्यंजलमादायस्वकीयमूधो मेघरूपंनिदधे उदकेननिहितंपुष्टमकरोत् यद्वा कयाभुवा कस्यांभुविप्रदेशेऊधःस्थानीयं मेघंनिदधेधारयतीतिनज्ञायतेवर्षाकालएवकेवलंदृश्यतेमेघः साजलवर्जिताइळापृथिवीऋतस्यसत्यभूतस्यादित्यस्यपयसा उदकेनापिन्वत वर्षाकालेसिक्ताभवति आदित्याज्जायतेवृष्टिरिति स्मृतेः ॥ रिहती लिहआस्वादनेइत्यस्यशतरिरूपं शतुरनुमइतिङीपउदात्तत्वम् ॥ अपिन्वत पिविसेचने मुचादिरात्मनेपदी निघातः ॥ १३ ॥

अथचतुर्दशी–

पद्यावस्तेपुरुरूपावपूंष्यूर्ध्वातस्थौत्र्यविंरेरिहाणा ।
ऋतस्यसद्मविचरामिविद्वान्महद्देवानामसुरत्वमेकम् ॥ १४ ॥

पद्या॑ । व॒स्ते॒ । पु॒रु॒ऽरूपा॑ । वपूं॑षि । ऊ॒र्ध्वा । त॒स्थौ॒ । त्रि॒ऽअविं॑म् ।
रेरि॑हाणा । ऋ॒तस्य॑ । सद्म॑ । वि । च॒रा॒मि॒ । वि॒द्वान् । म॒हत् ।
दे॒वाना॑म् । अ॒सु॒र॒ऽत्वम् । एक॑म् ॥ १४ ॥

पद्याजगत्स्रष्टुःपरमेश्वरस्यपद्भ्यांजातत्वात्पद्याभूमिः तथाचमन्त्रवर्णः—पद्भ्यांभूमिरिति[1] । यद्वा पादसंचारेसाधुःपद्याभूमिः पुरुरूपानानाविधस्वरूपाणिवपूंषिस्थावरजङ्गमात्मकानिरूपाणिवस्ते आच्छादयति सैषाभूमिरूर्ध्वाउत्तरवेद्यात्मनाउन्नतासतीस्वसारभूतेनहविषाऽव्यविं सार्धसंवत्सरवयस्कोवत्सःत्र्यविरुच्यते तत्प्रमाणमादित्यंत्रीन्लोकानवति स्वतेजसाव्याप्नोतीतित्र्यविरितिवा रेरिहाणालिहन्तीतस्थौ ऋतस्यसत्यभूतस्यादित्यस्यसद्मस्थानंविद्वान्जानानोऽहंविचरामि हविर्भिस्तमादित्यंपरिचरामि ॥ पद्या पादशब्दाद्वेच्छन्दसीतियत् पद्यत्यतदर्थइतिपादस्यपद्भावः यद्वा तत्रसाधुरितियत् यतोनावइत्याद्युदात्तत्वम् । अविम् अवरक्षणादिषु इन्नितीन्प्रत्ययः कृत्स्वरः । रेरिहाणा लिहआस्वादनेइत्यस्य यङ्लुकि शानचिरूपम् अभ्यस्तस्वरः ॥ १४ ॥

अथपञ्चदशी—

प॒देइ॑व॒निहि॑तेद॒स्मेअ॒न्तस्तयो॑र॒न्यद्गुह्य॑मा॒विर॒न्यत् ।
स॒ध्रीची॒नाप॒थ्या॑३सावि॑षू॒चीम॒हद्दे॒वाना॑मसुर॒त्वमेक॑म् १५॥३०

प॒दे॒इ॒वेति॑प॒देऽइ॑व । निहि॑ते॒इति॒निऽहि॑ते । द॒स्मे । अ॒न्तरिति॑ । तयोः॑ ।
अ॒न्यत् । गुह्य॑म् । आ॒विः । अ॒न्यत् । स॒ध्रीची॒ना । प॒थ्या॑ । सा ।
विषू॑ची । म॒हत् । दे॒वाना॑म् । अ॒सु॒र॒ऽत्वम् । एक॑म् ॥ १५ ॥ ३० ॥

पदेइवपद्येतेज्ञायेतेतत्तदसाधारणलिङ्गेनेतिपदे अहश्चरात्रिश्चेत्येतेदस्मेसर्वैर्दर्शनीयेतेउभे अन्तर्नभसिनिहितेस्थापितेइववर्तेते तयोरहोरात्रयोरन्यद्रात्रिलक्षणंगुह्यम् अप्रकाशमानतयागूढमिवास्ते अन्यदहःआविःसूर्यप्रकाशेनप्रकटंभवति सध्रीचीनाअहोरात्रयोःपरस्परमेलनरूपापथ्यामार्गःकालइत्यर्थः साविषूचीपुण्यकृतोपुण्यकृतश्चप्राप्नोतीतिविषूचीभवति सर्वेजनाः अहोरात्रयोर्वर्तन्ते यद्वा पदेइव देवमनुष्यादीनांस्थानभूतेद्यावापृथिव्यौ अन्तःअन्तरिक्षे

[1] ऋ० सं० ८. ४. १९. ।

निहितेवर्तेते तयोरन्यत्द्यौःगुह्यमस्माभिरदृश्यमानतयागूढंवर्तते अन्यत्पृथिवीआविःसर्वैर्दृश्यमानाप्रकटाभवति सध्रीचीनेतिपूर्ववत् ॥ सध्रीचीना सहपूर्वादञ्चतेःक्विन् सहस्यसध्रिरितिसध्र्यादेशः विभाषाञ्चेरदिक्स्त्रियामितिखः ॥ १५ ॥

॥ इतितृतीयस्यतृतीयेत्रिंशोवर्गः ॥ ३० ॥

अथषोडशी–

**आधेनवोधुनयन्तामशिश्वीःसबर्दुघाःशशयाअप्रदुग्धाः ।**
**नव्यानव्यायुवतयोभवन्तीर्महद्देवानामसुरत्वमेकम् ॥ १६ ॥**

आ । धेनवः । धुनयन्ताम् । अशिश्वीः । सबःऽदुघाः । शशयाः । अप्रऽदुग्धाः । नव्याःऽनव्याः । युवतयः । भवन्तीः । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १६ ॥

धेनवः वृष्टिद्वारासर्वस्यजगतःप्रीणयित्र्यः अशिश्वीः शिशुरहिताः यद्वा अशिशवः नभवन्तीत्यशिश्वीः शशयाः नभसिशयानावर्तमानाःकेनाप्यप्रदुग्धाः अक्षीणरसाः सबर्दुघाः उदकलक्षणस्यक्षीरस्यदोग्ध्र्यः युवतयःपरस्परंमिश्रणोपेताः नव्यानव्याःअतिशयेननूतनाभवन्तीः दिशोमेघावा आधुनयन्ताम् आदुहन्तु मेघपक्षे अशिश्वीःभवन्तीरित्यत्रलिङ्गव्यत्ययः ॥ धुनयन्तां धूञ्कम्पने णिचि धूञ्प्रीणोर्नुग्वक्तव्यइतिनुक् ह्रस्वश्छान्दसः । अशिश्वीः सख्यशिश्वीतिभाषायामितिव्यत्ययेनछन्दसिभवति ॥ १६ ॥

अथसप्तदशी–

**यदन्यासुवृषभोरोरवीतिसोअन्यस्मिन्यूथेनिदधातिरेतः ।**
**सहिक्षपावान्त्सभगःसराजामहद्देवानामसुरत्वमेकम् ॥ १७ ॥**

यत् । अन्यासु । वृषभः । रोरवीति । सः । अन्यस्मिन् । यूथे । नि । दधाति । रेतः । सः । हि । क्षपाऽवान् । सः । भगः । सः । राजा । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १७ ॥

वृषभः अपांवर्षकः यत्यःपर्जन्यात्मेन्द्रः अन्यासुदिक्षुरोरवीति मेघद्वाराभृशंशब्दंकरोति सपर्जन्यइन्द्रः अन्यस्मिन्यूथेदिशांवृन्देरेतउदकंनिदधाति तत्रवर्षति लोकेहिवृषभः कासुचि-

द्गोषुरेतःसेकार्थंरवंकरोति अन्यस्मिन्गोयूथेरेतःसिञ्चति तद्वत् सइन्द्रःक्षपावान्क्षिपतिशत्रूनुदकंवे-तिक्षेपणवान् यद्वा क्षपारात्रिः तथारात्रिपर्याययागानांस्तोत्राणांभागभूतायारात्रिःसोच्यते तद्वा-न्सभगः सर्वैर्भजनीयः सराजाहितत्तत्कर्मानुरूपफलप्रदानेनसर्वेषांराजाखलु ॥ रोरवीति रुशब्दे इत्यस्ययङ्लुगन्तस्यलटिरूपम् एकान्याभ्यांसमर्थाभ्यामितिप्रथमस्यननिघातः । यूथे युमिश्रणे तिथपृष्ठगूथयूथप्रोथाइतिथक्प्रत्ययान्तत्वेनानिपातनाद्दीर्घः । रेतः रीङ्स्रवणेइत्यस्मात्स्रुरी-भ्यांतुट्चेत्यसुन्प्रत्ययः तुडागमश्च नित्त्वादाद्युदात्तः ॥ १७ ॥

अथाष्टादशी–

वी॒रस्य॒नुस्व॒श्व्यं॑जना॑सः॒प्रनु॑वो॑चामवि॒दुर॑स्यदे॒वाः ।
षो॒ळ्हायु॒क्ताःपञ्च॑प॒ञ्चाव॑हन्ति॒म॒हद्दे॒वाना॑मसु॒र॒त्वमेक॑म् ॥ १८ ॥

वी॒रस्य॑ । नु । सु॒ऽअ॒श्व्य॑म् । ज॒ना॒सः॒ । प्र । नु । वो॒चा॒म॒ । वि॒दुः॒ । अ॒स्य॒ । दे॒वाः॒ । षो॒ळ्हा । यु॒क्ताः । पञ्च॑ऽपञ्च । आ । व॒ह॒न्ति॒ । म॒ह॒त् । दे॒वाना॑म् । अ॒सु॒र॒ऽत्वम् । एक॑म् ॥ १८ ॥

हेजनासोजनाः वीरस्यशूरस्येन्द्रस्य स्वश्व्यंशोमनाश्वोपेतत्वंनुक्षिप्रंप्रवोचाम प्रकर्षे-णवदाम तथा देवाअपि अस्येन्द्रस्यस्वश्वत्वंनुक्षिप्रंविदुर्जानन्ति किंतत्स्वश्वत्वंतदुच्यते षोळ्हा मासानांद्वन्द्वयोगकालेषोढादृश्यमानाऋतवोश्वानिरूप्यन्ते तेचषट्संख्याकाऋतवः हेमन्तशिशिर-योःसमासेनपञ्चपञ्चयुक्ताःसन्तः कालात्मकमिन्द्रमावहन्ति तदिदमिन्द्रस्यस्वश्वत्वं यद्दतुभि-रूढत्वम् ॥ षोळ्हा षषःशब्दात्संख्यायाविधार्थेधेतिधाप्रत्ययः षषउत्वंदतृदशधासूत्वमुत्तरपदादे-ष्टुत्वंचेत्युत्वंष्टुत्वंच प्रत्ययस्वरः ॥ १८ ॥

त्वाष्ट्रेपशौहविषोनुवाक्यादेवस्त्वष्टेत्येषा सूत्रितंच–देवस्त्वष्टासविताविश्वरूपोदेवत्वष्ट-र्येद्धचारुत्वमानडिति ।

सूक्तेएकोनविंशी–

दे॒वस्त्वष्टा॑सवि॒ता वि॒श्वरू॑पःपु॒पोष॑प्र॒जाःपु॑रु॒धाज॑जान ।
इ॒माच॒विश्वा॒भुव॑नान्यस्यम॒हद्दे॒वाना॑मसु॒र॒त्वमेक॑म् ॥ १९ ॥

देवः । त्वष्टा । सविता । विश्वऽरूपः । पुपोष । प्रऽजाः । पुरुधा । जजान । इमा । च । विश्वा । भुवनानि । अस्य । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १९ ॥

सवितान्तर्यामितयासर्वस्यप्रेरकोविश्वरूपोनानाविधरूपस्त्वष्टात्वष्टृनामकोदेवः प्रजाः पुरुधा-बहुधाजजानजनयति ताश्चपुपोष पोषयति इमा इमानि विश्वा विश्वानि सर्वाणिभुवना-निभूतजातानिच अस्यत्वष्टुःसंबन्धीनि ॥ विश्वरूपः बहुव्रीहौविश्वंसंज्ञायामितिपूर्वपदा-न्तोदात्तत्वम् ॥ १९ ॥

अथविंशी–

महीसमैरच्चम्वासमीचीउभेतेअस्यवसुनान्यृष्टे ।
शृण्वेवीरोविन्दमानोवसूनिमहद्देवानामसुरत्वमेकम् ॥ २० ॥

मही इति । सम् । ऐरत् । चम्वा । समीची इति समऽईची । उभे इति । ते इति । अस्य । वसुना । न्यृष्टेइतिनिऽऋष्टे । शृण्वे । वीरः । विन्दमानः । वसूनि । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ २० ॥

मही महत्यौ समीची परस्परंसंगते चम्वा चमन्तिअदन्तिअनयोर्देवमनुष्याइतिचम्वौ यद्वा चम्येते अद्येते भूतजातैरितिचम्वौद्यावापृथिव्यौ समैरत् इन्द्रःप्रजापत्यादिभिःस-म्यगयोजयत् तेउभेद्यावापृथिव्यौअस्येन्द्रस्यवसुनातेजसाधनेनवान्यृष्टे नितरांव्याप्तेभवतः वी-रःसमर्थःसइन्द्रः वसूनिशत्रूनभिभूयतदीयानिधनानिविन्दमानोलभमानःसन् शृण्वे सर्वैःश्रूयते तवेदिदमभितश्चेकितेवस्वित्यादिषुदृष्टत्वात् ॥ ऐरत् ईरगतावित्यस्यलङिरूपम् । न्यृष्टे ऋषी-गतौ कर्मणिक्तः । गतिरनन्तरइतिगतेः स्वरः । शृण्वे श्रुश्रवणेइत्यस्यव्यत्ययेनकर्मणिश्लुः लोपं-स्तआत्मनेपदेष्वितितलोपः । विन्दमानः विदॢलाभेइत्यस्य लटि शानचि रूपं तस्यलसार्वधा-तुकस्वरः ॥ २० ॥

अथैकविंशी–

इमांचनःपृथिवींविश्वधायाउपक्षेतिहितमित्रोनराजा ।
पुरःसदःशर्मसदोनवीरामहद्देवानामसुरत्वमेकम् ॥ २१ ॥

इ॒माम्। च॒। न॒। पृ॒थि॒वीम्। वि॒श्वऽधा॑याः। उप॑। क्षे॒ति॒।
हि॒तऽमि॑त्रः। न। राजा॑। पु॒रःऽसदः॑। श॒र्म॒ऽसदः॑। न। वी॒राः।
म॒हत्। दे॒वाना॑म्। अ॒सु॒र॒ऽत्वम्। एक॑म् ॥ २१ ॥

विश्वधायाः विश्वस्यधातासर्वान्नोवानोऽस्माकंराजेन्द्रः इमांपृथिवीम्न्तरिक्षंचउप तयोः समीपेक्षेतिनिवसति तत्रदृष्टान्तः—हितमित्रोन यथाकस्यचित्हितोपदेष्टासुहृत्समीपेनिवसति तद्वत् वीराःसमर्थायुद्धसहायामरुतः पुरःसदःयुद्धार्थंपुरतोनिश्चयेनगन्तारः इन्द्रस्यशर्मसदोन नश्चार्थे शर्मणि गृहेसीदन्तश्चभवन्तियत्रयत्रासौ तत्रतत्र संनिधिंकुर्वाणाइत्यर्थः ॥ क्षेति क्षिनिवासगत्योरित्यस्य लटिबहुलंछन्दसीतिविकरणस्यलुक् निघातः ॥ २१ ॥

अथद्वाविंशी—

नि॒ष्षिध्व॑रीस्त॒ओष॑धीरु॒तापो॑र॒यिंत॑इन्द्रपृथि॒वीबि॑भर्ति ।
सखा॑यस्तेवाम॒भाजः॑स्यामम॒हद्दे॒वाना॑मसु॒र॒त्वमेक॑म् ॥२२॥३१॥

निः॒ऽसिध्व॑रीः। ते॒। ओष॑धीः। उ॒त। आपः॑। र॒यिम्। ते॒।
इन्द्र॑। पृ॒थि॒वी। बि॒भ॒र्ति॒। सखा॑यः। ते॒। वा॒म॒ऽभाजः॑। स्या॒म॒।
म॒हत्। दे॒वाना॑म्। अ॒सु॒र॒ऽत्वम्। एक॑म् ॥ २२ ॥ ३१ ॥

हेपर्जन्यात्मकेन्द्र ओषधीरोषधयः तेनिष्षिध्वरीः निष्षिध्वर्योनितरांत्वत्कर्तृकसिद्धिमत्यः उतापिच आपस्त्वत्तोनिःसृताःपृथिवीतेतवभोगयोग्यंरयिंधनंबिभर्ति पुरूवसूनिपृथिवीबिभर्तीतिनिगमः । ततस्तेतवसखायःहविष्प्रदानेनोपकारकाःस्तोतारोवयंवामभाजः स्याम सर्वैर्वननीयधनभागिनोभवेम तदेतद्देवानांमहदैश्वर्यम् ॥ निष्षिध्वरीः षिधुसंराद्धौ संपदादिलक्षणोभावेक्विप् तदस्यास्तीत्यर्थेछन्दसीवनिपाविति वनिप् वनोरचेतिङीप्रेफश्च निसासहसमासः निसःसकारंछान्दसत्वादनादृत्य उपसर्गात्सुनोतीत्यादिनाषत्वं ङीपःपित्वादनुदात्तत्वेधातुस्वरः । बिभर्ति डुभृञ्धारणपोषणयोरित्यस्यलटि भृञामिदित्यभ्यासस्येत्त्वं निघातः । वामभाजः भजसेवायां भजोण्विरितिण्विः कृदुत्तरपदप्रकृतिस्वरः ॥ २२ ॥

॥ इतितृतीयस्यतृतीयेएकत्रिंशोवर्गः ॥ ३१ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेणसायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येतृतीयाष्टकेतृतीयोऽध्यायः ॥ ३ ॥ ३ ॥

# ॥ श्रीगणेशायनमः ॥

यस्यनिःश्वसितंवेदायोवेदेभ्योऽखिलंजगत् । निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥ १ ॥

नतामिनन्तीत्यष्टर्चंतृतीयंसूक्तं विश्वामित्रस्यवाचःपुत्रस्यवाप्रजापतेरार्षंत्रैष्टुभं वैश्वदेवं तथाचानुक्रमणिका—नताष्टाविति । सूक्तविनियोगोलिङ्गादवगन्तव्यः अस्मिन्सूक्तेप्रायेणादित्यैःसहसंवत्सरःस्तूयते ।

तत्रप्रथमा—

**ॐ नतामिनन्तिमायिनोनधीराव्रतादेवानांप्रथमाध्रुवाणि । नरोदसीअद्रुहावेद्याभिर्नपर्वतानिनमेतस्थिवांसः ॥ १ ॥**

न । ता । मिनन्ति । मायिनः । न । धीराः । व्रता । देवानाम् । प्रथमा । ध्रुवाणि । न । रोदसी इति । अद्रुहा । वेद्याभिः । न । पर्वताः । निऽनमे । तस्थिऽवांसः ॥ १ ॥

मायिनःकपटबुद्ध्युपेताः असुरादेवानामिन्द्रादीनांप्रथमानिसृष्ट्यनन्तरभावीनि ध्रुवाणि स्थिराणि केनापिचालयितुमशक्यानि ता तानि लोकेप्रसिद्धानि व्रता व्रतानि लोकपालादिकर्माणिनमिनन्ति नहिंसन्ति तथा धीराः विद्वांसोपिनहिंसन्ति तथा अद्रुहा देवमनुष्यादिषुप्रजासुद्रोहवर्जिते रोदसी द्यावापृथिव्यौ वेद्याभिः स्वाश्रयतयासर्वैर्वेदनीयाभिःप्रजाभिःसहितानिकर्म्प्राणिनमिमीतः तदेतदुपपादयति—तस्थिवांसः पृथिव्यामूर्ध्वतयास्थिताःपर्वताः ननिनमे निनमनीयानभवन्ति ॥ एतदुक्तंभवति—यद्देवमनुष्यादीनांद्यावापृथिव्याधारकतयावस्थानंयच्चपर्वतादीनामुन्नततयावस्थानंतदिदंदेवानांकर्मतन्नकोऽप्यन्यथयितुमर्हतीति ॥ मिनन्ति मीञ्हिंसायामित्यस्यलटि मीनातेर्निगमेइतिह्रस्वः निघातः । वेद्याभिः वेदनमर्हन्ति छन्दसिचेतियत्प्रत्ययः । निनमे णमुप्रह्वत्वेइत्यस्यकृत्यार्थेकेन्प्रत्ययः कृत्स्वरः ॥ १ ॥

अथद्वितीया—

**षड्भाराँएकोअचरन्बिभर्त्यृतंवर्षिष्ठमुपगावआगुः । तिस्रोमहीरुपरास्तस्थुरत्यागुहाद्वेनिहितेदर्श्येका ॥ २ ॥**

षट् । भारान् । एकः । अचरन् । बिभर्ति । ऋतम् । वर्षिष्ठम् ।
उप । गावः । आ । अगुः । तिस्रः । महीः । उपराः । तस्थुः ।
अत्याः । गुहा । द्वे इति । निहिते इति निऽहिते । दर्शि । एका ॥ २ ॥

अचरन्स्थायीएकःसंवत्सरःषट्षट्संख्याकान्भारान्भ्रियते पुष्पविकासादियेष्वितिभाराऋतवः तान्वसन्तादीन्बिभर्ति अवयवत्वेनधारयति तथा ऋतंसत्यभूतंवर्षिष्ठंवृद्धतरमादित्यात्मकं तमेवसंवत्सरं गावोरश्मयःउपआअगुःप्राप्नुवन्ति किञ्च तस्मिन्नेवसंवत्सरे अत्याअतनशीलाः आगमापायधर्मोपेतास्तिस्रोमहीः त्रयोलोकाःउपराः उपर्युपरिवर्तमानाः तस्थुःतिष्ठन्ति लोकत्रयमेवदर्शयति गुहा गुहायांस्वात्मनिद्वेभूमी द्यौश्चान्तरिक्षंचेत्येतेनिहिते नदृश्येते एकाभूमिर्दर्शिसर्वभूताधारतयादृश्यते ॥ भारान् डुभृञ्धारणपोषणयोरित्यस्मादधिकरणेघञ् कर्षात्वतोघञइत्यन्तोदात्तत्वम् । निहिते दधातेःकर्मणिनिष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । दर्शि दृशिर्प्रेक्षणे कर्मणिलुङिचिणि चिणोलुगितिप्रत्ययस्यलुक् वाक्यभेदादानिघातः ॥ २ ॥

अथतृतीया-

त्रिपाजस्योवृषभोविश्वरूपउतत्र्युधापुरुधप्रजावान् ।
त्र्यनीकःपत्यतेमाहिनावान्त्सरेतोधावृषभःशश्वतीनाम् ॥ ३ ॥

त्रिऽपाजस्यः । वृषभः । विश्वऽरूपः । उत । त्रिऽउधा । पुरुध ।
प्रजाऽवान् । त्रिऽअनीकः । पत्यते । माहिनऽवान् । सः ।
रेतःऽधाः । वृषभः । शश्वतीनाम् ॥ ३ ॥

त्रिपाजस्यः ग्रीष्मवर्षाहेमन्ताख्यैस्त्रिभिर्ऋतुभिः पाजस्यमुरोयस्यसत्रिपाजस्यः त्र्युरस्क इत्यर्थः उरोवचनश्चपाजस्यशब्दः इन्द्रस्यक्रोडोदित्यैपाजस्यमिति अश्वमेधमन्त्रेउरःपरतयाम्नानात् । पाजसिबलेसाधुरितिव्युत्पत्तेश्च । सर्वेषामङ्गानांमध्येउरसोबलवत्त्वात् । वृषभः स्वावयवभूतैर्वर्षर्तौ अपांवर्षकःविश्वरूपः तत्तदृत्वसाधारणकार्यैःपुष्पविकासादिभिर्लिङ्गैर्नानारूपः उतापिच त्र्युधावसन्तशरद्धेमन्ताख्यैःत्रिभिर्ऋतुभिरूधोयस्यसत्र्युधा प्रजावान्प्रकर्षेणजायन्तइतिव्रीह्यादयःप्रजाः पुरुध नानाप्रकारेणविद्यमानव्रीहियवादिरूपप्रजावान् किञ्च त्र्यनीकः त्रिभिरुष्णवर्षशीताख्यैरनेकैर्गुणैरुपेतः माहिनावान्महत्त्ववान्संवत्सराभिमानीदेवः पत्यतेआगच्छति वृषभःसेचनसमर्थःससंवत्सरःशश्वतीनांबह्वीनामोषधीनांपुष्पफलादिसंपत्त्ये

रेतोधारेतसउदकस्यधर्तोभवति ॥ व्युधा बहुव्रीहेरूधसोनङित्यनङ् सर्वविधीनांछन्दसिविकल्पितत्वात्पुंस्यपिभवति ऊकारस्यह्रस्वश्छान्दसः उत्तरपदान्तोदात्तप्रकरणेत्रिचक्रादीनांछन्दस्युपसंख्यानमित्युत्तरपदान्तोदात्तत्वम् ॥ ३ ॥

अथचतुर्थी–

**अभीकेआसांपदवीरंबोध्यादित्यानांमह्वेचारुनाम ।**
**आपश्चिदस्माअरमन्तदेवीःपृथग्व्रजन्तीःपरिषीमवृञ्जन् ॥ ४ ॥**

अभीके । आसाम् पदऽवीः । अबोधि । आदित्यानाम् । अह्वे । चारु । नाम । आपः । चित् । अस्मै । अरमन्त । देवीः । पृथक् । व्रजन्तीः । परि । सीम् । अवृञ्जन् ॥ ४ ॥

संवत्सरः आसामोषधीनामभीकेसमीपे पदवीः पदानितत्तद्गुणविशिष्टपुष्पफलादीनिवेतिप्रजनयतीतिपदवीःसन्नबोधि बुध्यते सावधानोवर्तते तथा आदित्यानाम् आदित्यामासाःसंख्यासाम्यात् यद्वा आदित्यसंक्रमणनिमित्तत्वादादित्यामासाः मेषादिस्थेसवितरियोयोमासःप्रपूर्यतेचान्द्रःचैत्राद्यःसज्ञेयइतिस्मृतेः । तेषांचैत्रादीनांमासानांचारुनाममधुश्चमाधवश्चेत्यादिनामधेयम् अह्वे आह्वयामि उच्चारयामीत्यर्थः किंच देवीःद्योतनशीलाःपृथगितस्ततोव्रजन्तीर्गच्छन्त्यः आपश्चित् आपोपि अस्मैसंवत्सरायअरमन्त संवत्सरसंबन्धिमासचतुष्टयेवृष्टिद्वारारमन्ते ताआपः सीमेनंसंवत्सरंपर्यवृञ्जन् अष्टसुमासेषुपरिवर्जयन्ति ॥ पदवीः वीगत्यादिषु क्विप् । अबोधि बुधअवगमनेइत्यस्यलुङि दीपजनबुधपूरितायिप्यायिभ्योन्यतरस्यामितिकर्तरिचिण् चिणोलुक् निघातः । आदित्यानाम् आदित्यसंबन्धिनइत्यर्थे दित्यदित्यादित्यपत्युत्तरपदाण्ण्यइतिण्यः अतोलोपयलोपौ प्रत्ययस्वरः । अह्वे ह्वयतेर्लुङि सिचआत्मनेपदेष्वन्यतरस्यामित्यङादेशः गुणः निघातः । अवृञ्जन् वृजीवर्जनेइत्यस्यलङिश्नमिरूपं निघातः ॥ ४ ॥

अथपञ्चमी–

**त्रीषधस्थासिन्धवस्त्रिःकवीनामुतत्रिमाताविदथेषुसम्राट् ।**
**ऋतावरीर्योषणास्तिस्रोअप्यास्त्रिरादिवोविदथेपत्यमानाः ॥ ५ ॥**

त्री । सधऽस्थां । सिन्धवः । त्रिः । कवीनाम् । उत । त्रिऽमाता । विदथेषु । सम्ऽराट् । ऋतऽवरीः । योषणाः । तिस्रः । अप्याः । त्रिः । आ । दिवः । विदथे । पत्यमानाः ॥ ५ ॥

प्रजापतिःस्वविज्ञानंसिन्धूनांनिवेदयति—हेसिन्धवः आपः सर्वसाक्षिण्योयूयंमदीयंवचःशृणुतेतिशेषः त्रीषधस्था त्रयोलोकाः तेचप्रत्येकंत्रिर्भवन्ति तथा त्रयोवाइमेत्रिवृतोलोकाइतिश्रुतिः । नद्यावइन्द्रमोजसानान्तरिक्षाणिवज्रिणंनविव्यचन्तभूमयइति प्रत्येकंबहुवचनश्रवणात् बहुवचनंचकपिञ्जलन्यायेनत्रित्वेपर्यवसितं तेचलोकाःकवीनांदेवानांनिवासस्थानानिभवन्ति उतापिच त्रिमाता त्रयाणाममीषांलोकानांनिर्मातासंवत्सरःसूर्योवा विदथेषुयज्ञेषु सम्राट् यजनीयतयासम्यग्दीप्यमानोवर्तते तथा ऋतावरीः उदकवत्यःआप्याःनभस्याआप्तव्यावातिस्रोयोषणाः त्रिसंख्याकाःइळासरस्वतीभारतीत्येवंरूपाः परस्परमिश्रणोपेतादेवताः विदथेयज्ञे दिवःदिवसस्य त्रिः त्रिषुसवनेषु आपत्यमानाआगच्छन्त्योभवन्ति ॥ सधस्था पूर्वपदादितिसंहितायांषत्वम् । योषणाः युषइतिसौत्रोधातुःल्युटिरूपं लित्स्वरः । तिस्रः तिसृभ्योजसइत्याद्युदात्तत्वम् । अप्याः अपइत्यन्तरिक्षनाम तत्रभवा भवेछन्दसीतियत् यतोनावइत्याद्युदात्तत्वम् ॥ ५ ॥

अथषष्ठी—

त्रिरादिवःसवितर्वार्याणिदिवेदिवआसुवत्रिर्नोअह्नः ।
त्रिधातुरायआसुवावसूनिभगत्रातर्धिषणेसातयेधाः ॥ ६ ॥

त्रिः । आ । दिवः । सवितः । वार्याणि । दिवेऽदिवे । आ । सुव । त्रिः । नः । अह्नः । त्रिऽधातु । रायः । आ । सुव । वसूनि । भग । त्रातः । धिषणे । सातये । धाः ॥ ६ ॥

सवितः सर्वस्यप्रेरक हेआदित्य दिवः द्युलोकादागत्य त्वंवार्याणिसर्वैःसंभजनीयानिधनानि दिवेदिवे प्रतिदिनं त्रिरासुव त्रिवारमस्मभ्यंप्रेरय प्रयच्छेत्यर्थः तदेवोच्यते—भग सर्वैर्भजनीय त्रातःअस्माकंरक्षक हेआदित्य त्रिधातु त्रिधातूनिपशुकनकरत्नभेदेनत्रिप्रकाराणिवसूनिधनानि रायःरान्तिक्षीरादीनीतिरायोगोधनानि तानिचनोऽस्मभ्यमह्नःसंबन्धिषुत्रिःत्रिषुस-

१ ऐ० ब्रा० २. १७. । २ ऋ० सं० ५. ८. ११. ।

वनेषु आसुव प्रयच्छ धिषणेमाध्यमिकेहेवाक् सातयेधनलाभाय धाः अस्मान्कुरु ॥ त्रिः द्वित्रि-चतुर्भ्यः सुजितिसुच् चित्स्वरः । सुव षूप्रेरणे तुदादिःलोटिरूपम् । त्रिधातु डुधाञ्धारणपोषणयो-रित्यस्मात्सितनिगमिमसीत्यादिनातुन्प्रत्ययः । धिषणे आमन्त्रितत्वान्निघातः ॥ ६ ॥

अथसप्तमी–

त्रिरादिवःसवितासोषवीतिराजानामित्रावरुणासुपाणी ।
आपश्चिदस्यरोदसीचिदुर्वीरत्नंभिक्षन्तसवितुःसवाय ॥ ७ ॥

त्रिः । आ । दिवः । सविता । सोसवीति । राजाना । मित्रावरुणा ।
सुऽपाणी । आपः । चित् । अस्य । रोदसी इति । चित् ।
उर्वी इति । रत्नम् । भिक्षन्त । सवितुः । सवाय ॥ ७ ॥

सवितादेवः दिवोदिवसस्य त्रिः त्रिषुकालेषु आसोषवीतिअस्मभ्यंधनान्यासुवतु प्रेरयतु किञ्च राजाना राजानौ सुपाणी कल्याणपाणी मित्रावरुणौ आपः आप्नोतिसर्वं जगदित्यापोन्तरिक्षं नित्यबहुवचनान्तत्वाद्बहुवचनं चिदपिच उर्वीविस्तीर्णेरोदसीद्यावापृथिव्यौ एतादेवताः सवितुः प्रेरकस्यास्यदेवस्य सवाय सवेनप्रेरणेनरत्नमपेक्षितमर्थंभिक्षन्त याचन्ते ॥ सोसवीति षूप्रेरणेइत्यस्य यङ्लुकिलटिरूपम् । मित्रावरुणा देवताद्वन्द्वेचेत्युभयपदप्रकृतिस्वरत्वम् । भिक्षन्त भिक्षयाच्ञायामित्यस्यलङिरूपम् । सवाय जवसवौचेत्यजन्तत्वेननिपातनादन्तोदात्तत्वम् ॥ ७ ॥

अथाष्टमी–

त्रिरुत्तमादूणशारोचनानित्रयोराजन्त्यसुरस्यवीराः ।
ऋतावानइषिरादूळभासस्त्रिरादिवोविदथेसन्तुदेवाः ॥ ८ ॥ १ ॥

त्रिः । उत्ऽतमा । दुःऽनशा । रोचनानि । त्रयः । राजन्ति ।
असुरस्य । वीराः । ऋतऽवानः । इषिराः । दुःऽदभासः ।
त्रिः । आ । दिवः । विदथे । सन्तु । देवाः ॥ ८ ॥ १ ॥

दूणशा दुर्नशाकेनापिविनाशयितुमशक्यानि रोचनानिदीप्यमानानित्रिः त्रीण्युत्तमा उत्तमानि स्थानानिसन्ति एतेषु त्रिषुस्थानेषु असुरस्य अस्यतिक्षिपतिसर्वमित्यसुरः का-

ह्यात्मासंवत्सरः तस्य वीराःपुत्रास्त्रयोग्निवायुसूर्यरूपाः राजन्ति शोभन्ते तानेवविशिनष्टि ऋतावानः ऋतंसत्यभूतमग्निहोत्रादिकंकर्मतद्वन्तः इषिराः यज्ञार्थंशीघ्रगतिमन्तः दूळभासः दुर्दभासःकेनापिस्वतेजसातिरस्कर्तुमशक्याएतेसर्वेदेवाः विदथेस्मदीयेयज्ञे दिवोहःसंबन्धिषु त्रिःत्रिषुसवनेषु आसन्तुसमन्ताद्यजनीयतयाभवन्तु ॥ उत्तमा उत्तमशश्वत्तमौसर्वत्रेत्युञ्छादिषुपाठादन्तोदात्तत्वम् । दूणशा नशेरकृच्छ्रार्थेखल् दुरोदाशनाशदभेषूत्वंवक्तव्यमितिरेफस्यउत्वम् उत्तरपदादेष्टुत्वं लित्स्वरः । दूळभासः पूर्ववदुत्वष्टुत्वे ॥ ८ ॥

॥ इतितृतीयस्यचतुर्थेप्रथमोवर्गः ॥ १ ॥

प्रमेविविक्वानितिषळृचंचतुर्थसूक्तं वैश्वामित्रंत्रैष्टुभं विश्वेदेवादेवता अत्रानुक्रमणिका—प्रमेषळिति । सूक्तविनियोगोलैङ्गिकः ।

तत्रप्रथमा—

प्रमेविविक्वाँअविदन्मनीषांधेनुंचरन्तींप्रयुतामगोपाम् ।
सद्यश्चिद्यादुदुहेभूरिधासेरिन्द्रस्तदग्निःपनितारोअस्याः ॥ १ ॥

प्र । मे । विविक्वान् । अविदत् । मनीषाम् । धेनुम् । चरन्तीम् । प्रऽयुताम् । अगोपाम् । सद्यः । चित् । या । दुदुहे । भूरि । धासेः । इन्द्रः । तत् । अग्निः । पनितारः । अस्याः ॥ १ ॥

विविक्वान् विवेकवानिन्द्रोग्निर्वामेममनीषांदेवताविषयांस्तुतिंप्राविदत् प्रकर्षेणजानातु तत्र दृष्टान्तः—चरन्तींयवसेइतस्ततोगच्छन्तींप्रयुतांपृथग्भूतामेकाकिनीम् अगोपांगोपृरहितांयथाकामंचरन्तींधेनुंनवसूतिकांगामिव देवतानांप्रीणयित्रींस्तुतिमविददित्यन्वयः यास्तुतिरूपाधेनुः सद्यश्चित्तदानीमेवधासेः धारयतिप्राणान्धीयतेदीयतेर्थिभ्यइतिवाधासिरन्नं कर्मणिषष्ठी भूरि बह्वन्नमपेक्षितंफलंदुदुहेदुग्धे इन्द्रोग्निरन्येचदेवाअस्याःस्तुतिरूपायाधेनोस्तत्तस्यान्नभूतस्यपयसः पनितारःस्तोतारोभवन्ति यद्वा इन्द्राग्नीस्तोतारोवयंचअस्याधेनोस्तत्पयःप्राप्नुमः ॥ विविक्वान् विचिर्पृथग्भावेइत्यस्यक्वसौरूपम् । अविदत् विदज्ञानेइत्यस्यलङि बहुलंछन्दसीति शः । दुदुहे दुहप्रपूरणेइत्यस्यलिटिरूपं यद्वृत्तयोगादनिघातः प्रत्ययस्वरः । पनितारः पनस्तुतावित्यस्यतृचिरूपम् ॥ १ ॥

अथद्वितीया—

इन्द्रः॒सु॒पू॒षावृष॑णा॒सु॒हस्ता॑दि॒वोनप्री॒ताः॑श॒श॒यंदु॑दु॒ह्रे ।
विश्वे॒यद॑स्यां॒र॒णयं॑न्तदे॒वाःप्रवो॒त्र॑वसवः॒सु॒म्नम॑श्याम् ॥ २ ॥

इन्द्रः॑ । सु । पू॒षा । वृष॑णा । सु॒ऽहस्ता॑ । दि॒वः । न । प्री॒ताः । श॒श॒यम् । दु॒दु॒ह्रे । विश्वे॑ । यत् । अ॒स्या॒म् । र॒णय॑न्त । दे॒वाः । प्र । व॒ः । अत्र॑ । व॒स॒वः॒ । सु॒म्नम् । अ॒श्या॒म् ॥ २ ॥

वसवःसर्वस्यवासयितारोहेदेवाः इन्द्रःपूषाच वृषणाअभिमतफलस्यसेक्तारौ सुहस्ता कल्याणपाणीनासत्यौमित्रावरुणौवाराजानामित्रावरुणासुपाणीइत्यादिषुदृष्टत्वात् एतेसर्वेदेवाः नेतिसंप्रत्यर्थे इदानींप्रीताः सन्तः शशयं नभसिशयानंमेघं दिवोनभसःसकाशात् सुदुदुह्रे वृष्टिद्वाराअपेक्षितफलंसुष्ठुदुहन्ति यद्यस्माद्विश्वेसर्वेदेवाः अस्यांवेद्यांरणयन्त रमयन्ते वोयुष्माकंसंबन्धिन्यत्रलोके सुम्नंसुखकरमपेक्षितफलंप्राश्यांप्राप्नुयाम् । सुहस्ता हसेरसिहसीत्यादिनातन्प्रत्ययः नित्त्वादाद्युदात्तः बहुव्रीहावाद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम् । दुदुह्रे दुहप्रपूरणे इत्यस्यलिटिइरगोरे । रणयन्त रमुक्रीडायां ण्यन्तस्यलटिरूपं वर्णव्यापत्तिः । अश्याम् अशूव्याप्तावित्यस्यलिङि बहुलंछन्दसीतिविकरणस्यलुक् व्यत्ययेनपरस्मैपदम् ॥ २ ॥

अथतृतीया—

या॒जा॒मयो॒वृष्ण॑इ॒च्छन्ति॑श॒क्तिंन॑म॒स्यन्ती॑र्जानते॒गर्भ॑मस्मिन् ।
अच्छा॑पु॒त्रंधे॒नवो॑वावशा॒नाम॒हश्च॑रन्ति॒बिभ्र॑तं॒वपूं॑षि ॥ ३ ॥

याः । जा॒मयः॑ । वृष्णे॑ । इ॒च्छन्ति॑ । श॒क्तिम् । न॒म॒स्यन्तीः॑ । जा॒न॒ते॒ । गर्भ॑म् । अ॒स्मि॒न् । अच्छ॑ । पु॒त्रम् । धे॒नवः॑ । वा॒व॒शा॒नाः । म॒हः । च॒र॒न्ति॒ । बिभ्र॑तम् । वपूं॑षि ॥ ३ ॥

याजामयः जमन्तिवर्षाकालेप्रादुर्भवन्तीतिजामयओषधयः वृष्णे अपांवर्षकायेन्द्राय शक्तिंसेचनसामर्थ्यमिच्छन्ति नमस्यन्तीः प्रह्वीभूतास्ताओषधयोस्मिन्निन्द्रेगर्भंवृष्टिद्वारापुष्पफलादिलक्षणगर्भाधानादिसामर्थ्यंजानतेजानन्ति वावशानाः फलंकामयमानाधेनवः सर्वस्यप्री-

णयिष्यओषधयः महः महान्तिनानाप्रकाराणिवपूंषिरूपाणिबिभ्रतं व्रीहियवनीवारादिफललक्षणंपुत्रंतनयमच्छाभिमुख्येन चरन्ति प्राप्नुवन्ति लोकेहिहंभारवंकुर्वाणाधेनवःवत्समभिलक्ष्यगच्छन्तितद्वत् यद्वा जामयः जमन्तिसर्वत्रप्रसरन्तीतिजामयःसूर्यदीप्तयः वृष्णे अपांवर्षकायस्वरश्मिभिर्भौमान्रसानादायपुनर्वर्षतीतिवर्षकःसूर्यः आदित्याज्जायतेवृष्टिरितिस्मृतेश्च । तस्मैवर्षणशक्तिमिच्छन्ति तादीप्तयःअस्मिन्नादित्ये गर्भमब्रूपगर्भाधानसामर्थ्यंजानन्ति ॥ जामयः जमतेर्गतिकर्मणोजमिवसिभ्यामिणितिविधीयमानोबहुवचनादस्मादपिभवति । नमस्यन्तीः नमस्शब्दान्नमोवरिवश्चित्रङःक्यजितिक्यच् तदन्ताच्छतरिरूपं प्रत्ययस्वरः । जानते ज्ञाअवबोधनेइत्यस्यलटिरूपम् । अच्छ निपातस्यचेतिसंहितायांदीर्घः ॥ ३ ॥

अथचतुर्थी—

अच्छांविवक्मिरोदसीसुमेकेग्राव्णोयुजानोअध्वरेमनीषा ।
इमाउतेमनवेभूरिवाराऊर्ध्वाभवन्तिदर्शतायजत्राः ॥ ४ ॥

अच्छ । विवक्मि । रोदसी इति । सुमेके इति सुऽमेके । ग्राव्णः ।
युजानः । अध्वरे । मनीषा । इमाः । ऊँ इति । ते । मनवे ।
भूरिऽवाराः । ऊर्ध्वाः । भवन्ति । दर्शताः । यजत्राः ॥ ४ ॥

अध्वरेयज्ञेग्राव्णः सोमाभिषवार्थमुपलान्युजानः प्रयुञ्जानोहं सुमेकेसुरूपेरोदसीद्यावापृथिव्यौ मनीषा मनसईषयास्तुतिलक्षणयावाचा अच्छ विवक्मि आभिमुख्येनस्तौमि हे अग्ने ते तव भूरिवाराः यजमानैर्बहुवारंवरणीयाः दर्शताः कमनीयतयादर्शनीयाः यजत्राः पूज्याः इमादीप्तयः मनवे मनुष्यव्यवहारार्थम् ऊर्ध्वाः ऊर्ध्वमुखाभवन्ति ॥ विवक्मि वचपरिभाषणे लटि. बहुलंछन्दसीतिशपःश्लुःअर्तिपिपर्त्योश्च बहुलंछन्दसीत्यभ्यासस्येत्त्वं चकारस्यकुत्वंव्यत्ययेन । युजानः युजिबुधिदृशःकिच्चेत्यानच् कित्त्वादगुणः चित्त्वादन्तोदात्तः । मनीषा सुपोडादेशः ॥ ४ ॥

अथपञ्चमी—

यातेजिह्वामधुमतीसुमेधाअग्नेदेवेषूच्यतउरूची ।
तयेहविश्वाँअवसेयजत्रानासादयपाययाचामधूनि ॥ ५ ॥

या । ते । जि॒ह्वा । मधु॑ऽमती । सु॒ऽमे॒धाः । अग्ने॑ । दे॒वेषु॑ । उ॒च्यते॑ ।
उ॒रू॒ची । तया॑ । इ॒ह । विश्वा॑न् । अव॑से । यज॑त्रान् । आ ।
सा॒दय । पा॒यय॑ । च॒ । मधू॑नि ॥ ५ ॥

हेअग्ने तेतवमधुमतीउदकवतीसुमेधाःशोभनामेधाप्रज्ञायस्याःसा सर्वस्यज्ञापयित्री या जिह्वाज्वालाउरूचीबहुव्याप्तिः सती देवेषुमध्ये आह्वानार्थमुच्यते प्रेर्यते यद्वा मधुमती माधुर्यवती सुमेधाःशोभनप्रज्ञानोपेता उरूची महतइन्द्रादीनञ्चतिपूजयतीत्युरूची जिह्वा वाक् देवेष्वाह्वानार्थंप्रेर्यते तयाजिह्वया यजत्रान्यजनीयान्देवान् विश्वान्देवानिह कर्मणि अस्माकमवसेरक्षणायआसादय उपवेशय किञ्च तान्विश्वान्देवान्मधूनिमदकरान्सोमान्पायय ॥ सुमेधाः नित्यमसिच्प्रजामेधयोरित्यसिच् । उच्यते वचपरिभाषणे कर्मणियक्रिरूपं यद्वृत्तयोगादनिघातः । उरूची अञ्चतेःक्विन् अञ्चतेश्चोपसंख्यानमितिङीप् अनुदात्तस्यचयत्रोदात्तलोपइतिङीपउदात्तत्वम् । पायय पापानेइत्यस्यणौपरतःशाछासाह्वाव्यावेपांयुगितियुक् तिङउत्तरत्वादनिघातः ॥ ५ ॥

अथषष्ठी—

याते॑अग्ने॒पर्व॑तस्येव॒धारा॒संश्च॑न्ती॒पी॒पय॑द्देवचि॒त्रा ।
ताम॒स्मभ्यं॒प्रम॑तिंजातवे॒दो॒वसो॒रास्व॑सुम॒तिंवि॒श्वज॑न्याम् ।६।२।

या । ते॒ । अ॒ग्ने॒ । पर्व॑तस्यऽइव । धारा॑ । अस॑श्चन्ती । पी॒पय॑त् ।
दे॒व॒ । चि॒त्रा । ताम् । अ॒स्मभ्य॑म् । प्रऽम॑तिम् । जा॒तऽवे॒दः॒ ।
वसो॒ इति॑ । रास्व॑ । सु॒ऽम॒तिम् । वि॒श्वऽज॑न्याम् ॥ ६ ॥ २ ॥

देव दीप्यमान हेअग्ने चित्रानानारूपा असश्चन्ती अस्मदन्यत्रसङ्गतिमकुर्वाणा या ते तवप्रमतिः प्रकृष्टाबुद्धिःपीपयत् अपेक्षितफलदानेनास्मान्वर्धयति तत्रदृष्टान्तः–पर्वतस्येवधारा, यथा पर्वतस्यमेघस्यउदकस्यधाराओषधिवनस्पत्यादिषुसंगतिंकुर्वाणातान्वर्धयतितद्वत् वसोसर्वस्यवासयितः जातवेदः जातप्रज्ञ हे अग्ने तांप्रमतिंपरहितकरणसमर्थांबुद्धिमस्मभ्यंरास्व दत्स्व तथा विश्वजन्यां सर्वजनहितांसुमतिंशोभनांबुद्धिंदत्स्व ॥ असश्चन्ती सश्चतिर्गतिकर्मा शतरि उगितश्चेतिङीप् नञ्समासेनञ्स्वरः । पीपयत् पापाने ण्यन्तस्यलुङिचङिरूपं चङ्यन्यतरस्यामितिचङिपरतः

पूर्वस्योदात्तत्वं यद्वृत्तयोगादनिघातः । प्रमतिं तादौचनितिकृत्यतौवितिगतेःप्रकृतिस्वरत्वम् । रास्व रादाने व्यत्ययेनात्मनेपदं लोटिरूपम् आमन्त्रितस्याविद्यमानत्वान्निघाताभावः ॥ ६ ॥

॥ इतितृतीयस्यचतुर्थेद्वितीयोवर्गः ॥ २ ॥

धेनुःप्रत्नस्येतिनवर्चंपञ्चमंसूक्तं वैश्वामित्रंत्रैष्टुभमाश्विनं तथाचानुक्रान्तं—धेनुर्नवाश्विनामिति । प्रातरनुवाकेआश्विनेक्रतौत्रैष्टुभेछन्दस्याश्विनशस्त्रेचास्यसूक्तस्यविनियोगः सूत्रितञ्च—धेनुःप्रत्नस्यकउश्रवदितिसूक्तेइति । व्यूढेदशरात्रेद्वितीयेछन्दोमेप्रउगशस्त्रे अयमाश्विनश्चतुर्थस्तृचः द्वितीयस्याग्निंवइतिखण्डेसूत्रितम्—धेनुःप्रत्नस्यकाम्यंदुहानाब्रह्माणइन्द्रोपयाह्नि विद्वानिति ।

तत्रप्रथमा—

धे॒नुः प्र॒त्नस्य॒ काम्यं॒ दुहा॑ना॒न्तः पु॒त्रश्च॑रति॒ दक्षि॑णायाः ।
आ द्यो॑त॒निं व॑हति शु॒भ्रया॑मो॒षसः॒ स्तोमो॑ अ॒श्विना॑वजीगः ॥ १ ॥

धे॒नुः । प्र॒त्नस्य॑ । काम्य॑म् । दुहा॑ना । अ॒न्तरिति॑ । पु॒त्रः ।
च॒र॒ति॒ । दक्षि॑णायाः । आ । द्यो॒त॒निम् । व॒ह॒ति॒ । शु॒भ्रऽया॑मा ।
उ॒षसः॑ । स्तोमः॑ । अ॒श्विनौ॑ । अ॒जी॒ग॒रिति॑ ॥ १ ॥

धेनुःप्रीणयित्रीउषाः प्रत्नस्यपुरातनस्याग्नेःकाम्यंकमनीयंपयोदुहानादोग्ध्रीभवति दक्षिणायाउषसःपुत्रःसूर्यस्तस्याअन्तश्चरति उषसोनन्तरंशुभ्रयामा सूर्यकिरणसंपर्काच्छुभ्रतयायामोगमनंयस्यासौशुभ्रयामादिवसः द्योतनिंसर्वस्यप्रकाशकंसूर्यमावहति बिभर्ति अतउषसःपुराअश्विनौस्तोतुं स्तोमःस्तोत्रकारी होत्रादिरजीगः जागर्ति उत्तिष्ठति ॥ शुभ्रयामा याप्रापणे आतोमनिन् बहुव्रीहौपूर्वपदस्वरः । अजीगः जागृनिद्राक्षये लङितिपि अदादित्वाच्छपोलुक् आकारस्यईकारश्छान्दसः गुणेकृते हल्ङ्यादिनातिपोलोपः ॥ १ ॥

अथद्वितीया—

सु॒युग्व॑हन्ति॒ प्रति॑ वामृ॒तेनो॒र्ध्वा भ॑वन्ति पि॒तरे॑व॒ मेधाः॑ ।
जरे॑थाम॒स्मद्वि प॒णेर्म॑नी॒षां यु॒वोरव॑श्चकृ॒मा या॑तम॒र्वाक् ॥ २ ॥

सुऽयुक् । वहन्ति । प्रति । वाम् । ऋतेन । ऊर्ध्वाः । भवन्ति ।
पितराऽइव । मेधाः । जरेथाम् । अस्मत् । वि । पणेः । मनीषाम् ।
युवोः । अवः । चकृम । आ । यातम् । अर्वाक् ॥ २ ॥

हेअश्विनौ सुयुक् सुष्ठुरथेयोजिताअश्वाऋतेनसत्यभूतेनरथेनवांयुवांप्रतिवहन्ति यज्ञंप्रत्यागमनायधारयन्ति मेधाः यज्ञाश्च ऊर्ध्वाःयुष्मदभिमुखमूर्ध्वमुखाभवन्ति तत्रदृष्टान्तः–पितराइव यथापुत्राःपितरौमातापितरावभिलक्ष्यगच्छन्तितद्वत् अस्मदस्मत्तःसकाशात्पणेर्मनीषामासुरींबुद्धिंविजरेथां विशेषेणनाशयतं वयंतु युवोर्युवयोरवः हविर्लक्षणमन्नं चकृमकुर्मः युवामर्वाक्अस्मदभिमुख्येनायातम् ॥ सुयुक् युजेःक्विप् सुपांसुलुगितिसुपोलुक् । पितरेव पितामात्रेतिपितुःशेषः सुपोडादेशः । जरेथां जॄष्वयोहानौ ण्यन्तस्य जनीजॄष्क्नसुरञ्जोऽमन्ताश्चेतिमित्त्वाद्ध्रस्वभावः छन्दस्युभयथेतिआथामआर्धधातुकत्वाण्णिलोपः शपःपित्त्वादनुदात्तत्वेधातुस्वरः ॥ २ ॥

अथतृतीया–

सुयुग्भिरश्वैःसुवृतारथेनदस्राविमंशृणुतंश्लोकमद्रेः ।
किमङ्गवांप्रत्यवर्तिंगमिष्ठाहुर्विप्रासोअश्विनापुराजाः ॥ ३ ॥

सुयुक्ऽभिः । अश्वैः । सुऽवृता । रथेन । दस्रौ । इमम् । शृणुतम् ।
श्लोकम् । अद्रेः । किम् । अङ्ग । वाम् । प्रति । अवर्तिम् ।
गमिष्ठा । आहुः । विप्रासः । अश्विना । पुराऽजाः ॥ ३ ॥

हेअश्विनौ सुयुग्भिः सुष्ठुयोजितैरश्वैःसुवृता पुनःपुनरावर्ततइतिवृच्चक्रं शोभनचक्रोपेतेनरथेनागत्य दस्रौ शत्रूणामुपक्षपयितारौ युवामद्रेःआद्रियतेसर्वैरित्यद्रिःस्तोता तस्येमंश्लोकं स्तोत्रं शृणुतम् अङ्ग हेअश्विनौ विप्रासोमेधाविनः पुराजाः पुरातनाऋषयः वां युवामवर्तिमस्माकंवृत्तिहानिंप्रति गमिष्ठा अतिशयेनगन्तारावितिकिमाहुः किंकथयन्तीति किं नकथयन्तीत्यर्थः । प्रथमाष्टकेष्टमेध्यायेसुवृतारथेनेत्यादिगतम् । गमिष्ठा गन्तृशब्दादिष्ठनिरूपम् ॥ ३ ॥

अथचतुर्थी–

आमन्येथामागतंकच्चिदेवैर्विश्वेजनासोअश्विनाहवन्ते ।
इमाहिवांगोऋजीकामधूनिप्रमित्रासोनददुरुस्रोअग्रे ॥ ४ ॥

आ । मन्येथाम् । आ । गतम् । कत् । चित् । एवैः । विश्वे । जनासः ।
अश्विना । हवन्ते । इमा । हि । वाम् । गोऽऋजीका । मधूनि ।
प्र । मित्रासः । न । ददुः । उस्रः । अग्रे ॥ ४ ॥

कच्चिदितिप्रश्ने हेअश्विनौ आमन्येथाम् इमांमदीयांस्तुतिंजानीतं किञ्च एवैर्गमनसाधनै-रश्वैरागतं यज्ञंप्रत्यागच्छतं विश्वेसर्वेजनासःस्तोतारः अश्विनाअश्विनौ वां युवांहवन्ते स्तुति-लक्षणाभिर्वाग्भिराह्वयन्ति किञ्च गोऋजीकागवांपयसामिश्रणोपेतानिमधूनिमदकराणिसोमर-सरूपाणिइमाइमानिहवींषि युवाभ्यांप्रददुरध्वर्य्वादयःप्रयच्छन्ति तत्रदृष्टान्तः—मित्रासोन यथा मित्राणिमित्रेभ्योपेक्षितंददतितद्वत् उस्रः वसतिनभसीत्युस्रःसूर्यः अग्रे उषसोग्रेउदेति तस्मादाग-च्छतमितिभावः ॥ मन्येथां मनज्ञाने दिवादिः लोटिरूपम् । इमा सुपोडादेशः । गोऋजीका प्रकृ-त्यान्तःपादमितिएङःप्रकृतिभावः । ददुः दाणृदानेइत्यस्यलिटिउसिरूपं हियोगादनिघातः । उस्रः वसनिवासे स्फायितञ्चीत्यादिनारक् कित्त्वात्संप्रसारणं शासिवसिघसीनांचेतिषत्वाभा-वश्छान्दसः ॥ ४ ॥

अथपञ्चमी—

**तिरःपुरूचिदश्विनारजांस्याङ्गूषोवांमघवानाजनेषु ।**
**एहयातंपथिभिर्देवयानैर्दस्राविमेवांनिधयोमधूनाम् ॥ ५ ॥ ३ ॥**

तिरः । पुरु । चित् । अश्विना । रजांसि । आङ्गूषः । वाम् ।
मघऽवाना । जनेषु । आ । इह । यातम् । पथिऽभिः । देवऽयानैः ।
दस्रौ । इमे । वाम् । निऽधयः । मधूनाम् ॥ ५ ॥ ३ ॥

हेअश्विनौ पुरूचित् बहून्यपिरजांसिस्थानानि तिरः स्वतेजसातिरस्कुर्वन्तौ वां युवाम् इहकर्माणि देवयानैः पथिभिर्मार्गैरायातम् आगच्छतं मघवाना धनवन्तौ हेअश्विनौ जनेषुस्तो-तृषु वां युवयोराङ्गूषः आसमन्ताद्घोषणीयंस्तोत्रंवर्तते दस्रौ शत्रूणामुपक्षपयितारौ हेअश्विनौ वांयुवयोर्मधूनांमदकराणांसोमानामिमेनिधयः निधीयतेत्रसोमइतिनिधयःपात्रविशेषाःसन्ति तस्मादागच्छतमितिभावः ॥ आङ्गूषः आङ्पूर्वाद्घुषेःकर्मणिघञ् आघुष्यतइत्याघोषः घोइत्य-स्यपृषोदरादित्वाद्गूइत्यादेशः आङोनुनासिकश्छन्दसीत्यनच्यपि अनुनासिकश्छान्दसः यद्वा

अग्निर्गत्यर्थः अस्मादङ्गूषइतिसूत्रेणोषच्प्रत्ययान्तोनिपातितः अङ्गतिगच्छतिदेवानित्यङ्गूषःस्तोत्रं अङ्गूषएवाङ्गूषः प्रज्ञादित्वात्स्वार्थिकोण्प्रत्ययस्वरः । एहयातमित्यर्धर्चोगतः ॥ ५ ॥

॥ इतितृतीयस्यचतुर्थेतृतीयोवर्गः ॥ ३ ॥

. अप्तोर्यामेतिरिक्तोक्थ्येवाकशस्त्रेपुराणमोकइतिचतस्रोविकल्पेनयाज्याः सूत्रितश्च—यदिनाधीयात्पुराणामोकःसख्यंशिवंवामितिचतस्रोयाज्याइति ।

सूक्तेषष्ठी—

पुराणमोकंःसख्यंशिवंवांयुवोर्नराद्रविणंजह्नाव्याम् ।
पुनंःकृण्वानाःसख्याशिवानिमध्वांमदेमसहनूसमानाः ॥ ६ ॥

पुराणम् । ओकंः । सख्यम् । शिवम् । वाम् । युवोः । नरा ।
द्रविणम् । जह्नाव्याम् । पुनरितिं । कृण्वानाः । सख्या ।
शिवानिं । मध्वा । मदेम । सह । नु । समानाः ॥ ६ ॥

हेअश्विनौ वांयुवयोःपुराणंपुरातनं सख्यंसखित्वम् ओकः सेव्यं शिवंकल्याणकरंभवति किञ्च हेनरा नरौ अस्मदीयस्यकर्मणोनेतारौ युवोःयुवयोर्द्रविणंधनंजह्नाव्यां जह्नुकुलजायां भवानि शिवानिसुखकराणि युवयोःसख्या सख्यानि पुनःपुनःकृण्वानाःकुर्वन्तःसमानाः हविष्प्रदानेनोपकारकत्वान्मित्रभूतावयंमध्वामदकरेणसोमेनयुवांसहयुगपत् नुक्षिप्रंमदेम हर्षयेम ॥ सख्यं सख्युर्भावइत्यर्थेसख्युर्यइतियप्रत्ययः । जह्नाव्यां जह्नोःसंबन्धिनीत्यर्थे तस्येदमित्यण् ओर्गुणः ह्रस्वदीर्घयोर्व्यत्ययः । मदेम मदीहर्षेइत्यस्याशीर्लिङि लिङ्याशिष्यङित्यङ्प्रत्ययः निघातः ॥ ६ ॥

अथसप्तमी—

अश्विनावायुनांयुवंसुंदक्षानियुद्भिंश्चसजोषसायुवाना ।
नासंत्यातिरोअंह्व्यंजुषाणासोमंपिबतमस्रिधासुदानू ॥ ७ ॥

अश्विना । वायुना । युवम् । सुऽदक्षा । नियुत्ऽभिः । च ।
सऽजोषसा । युवाना । नासत्या । तिरःऽअंह्व्यम् । जुषाणा ।
सोमम् । पिबतम् । अस्रिधा । सुदानू इतिं सुऽदानू ॥ ७ ॥

सुदक्षा शोभनसामर्थ्योपेतौ युवाना नित्यतरुणौ नासत्या नविद्यतेअसत्यंययोस्तौ सुदानू शोभनफलस्यदातारौ हेअश्विनौ वायुनानियुद्भिश्च सजोषसासजुषाणौ सोमविषयप्रीतियुक्तौ अस्रिधा अनुपक्षीणौ युवं युवांतिरोअह्न्यम् अह्नितिरोहिते हूयमानमिमं सोमंपिबतम् ॥ नियुद्भिः यौतेःक्विप् । तिरोअह्न्यम् अह्निभवमह्न्यं भवेछन्दसीतियत् तिरोभूतमह्न्यंयस्मिन्कालेसतिरोअह्न्यः बहुव्रीहौपूर्वपदप्रकृतिस्वरः ॥ ७ ॥

अथाष्टमी-

अश्विनापरिवामिषःपुरूचीरीयुर्गीर्भिर्यतमानाअमृध्राः ।
रथोहवामृतजाअद्रिजूतःपरिद्यावापृथिवीयन्तिसद्यः ॥ ८ ॥

अश्विना । परि । वाम् । इषः । पुरूचीः । ईयुः । गीःऽभिः । यतमानाः । अमृध्राः । रथः । ह । वाम् । ऋतऽजाः । अद्रिऽजूतः । परि । द्यावापृथिवी इति । यन्ति । सद्यः ॥ ८ ॥

हेअश्विनौ परूचीः पुरुतममञ्चन्तिगच्छन्तीतिपुरूचीः बहूनि इषोहविर्लक्षणान्यन्नानि वां युवां परीयुःपरितोगछन्ति तथा अमृध्राः केनाप्यतिरस्कृताः यतमानाः कर्मणिप्रवर्तमानाः स्तोतारः गीर्भिःस्तुतिलक्षणाभिर्वाग्भिर्युवांपरिचरन्ति ऋतजा ऋतस्योदकस्यजनयिता ऋते यज्ञेप्रादुर्भवतीतिवा अद्रिजूतः स्तोतृभिराकृष्टः वांयुवयोःरथः द्यावापृथिवी द्यावापृथिव्यौ सद्यस्तदानीमेवपरियातिह सर्वतःप्राप्नोतिखलु अश्विनोरथस्यवेगवत्त्वेमन्त्रवर्णः—योवामश्विनामनसोजवीयान्रथःस्वश्वोविशआजिगातीति[1] । अतःकारणादस्मदीयंयज्ञंप्रत्यागच्छतमितिभावः ॥ ईयुः इण्गतावित्यस्य लिटि दीर्घइणःकितीत्यभ्यासस्यदीर्घः पादादित्वादनिघातः । यतमानाः यतीप्रयत्नेइत्यस्यशानचिरूपं शपःपित्त्वादनुदात्तत्वेशानचोलसार्वधातुकस्वरेणानुदात्तत्वेधातुस्वरः । ऋतजाः जनेर्विट् विड्वनोरित्यात्वम् । अद्रिजूतः जूइतिसौत्रोधातुः कर्मणिक्तः तृतीयाकर्मणीतिपूर्वपदस्वरः ॥ ८ ॥

१ ऋ० सं० ७. ६. १२.

अथनवमी–

अश्विनामधुषुत्तमोयुवाकुःसोमस्तंपातमागतंदुरोणे ।
रथोहवांभूरिवर्पःकरिक्रत्सुतावतोनिष्कृतमागमिष्ठः ॥ ९ ॥ ४ ॥

अश्विना । मधुसुतऽतमः । युवाकुः । सोमः । तम् । पातम् ।
आ । गतम् । दुरोणे । रथः । ह । वाम् । भूरि । वर्पः ।
करिक्रत् । सुतऽवतः । निःऽकृतम् । आऽगमिष्ठः ॥ ९ ॥ ४ ॥

हेअश्विनौ यःसोमः मधुषुत्तमः मधुरसमत्यन्तंप्रेरयन् युवाकुर्युवांकामयमानोवर्तते यद्वा युवाकुर्वसतीवरीप्रभृतिभिर्मिश्रितइत्यर्थः तमिमंसोमंपातं पिबतं दुरोणेऽस्माकंगृहेआगतमागच्छतं भूरि प्रभूतं वर्पोवारकं तेजःसर्वैर्वरणीयंधनंवा करिक्रत् पुनःपुनःकुर्वन् वांयुवयोरथःसुतवतःसोममभिषुतवतोयजमानस्यनिष्कृतं निरित्येपसमित्येतस्यस्थानेइतियास्कः । संस्कारि यद्वा संस्कृतं गृहमागमिष्ठ ह अतिशयेनागच्छन्भवतिखलु ॥ युवाकुः यौतेः कटिकुपिभ्यांकाकुरितिकाकुर्बाहुल्कादस्मादपिभवति प्रत्ययस्वरेणमध्योदात्तः । करिक्रत् करोतेर्यङ्लुकि शतरि दाधर्तिदर्धर्तिदर्धर्षीत्यादिनाचुत्वाभावेयणादेशेकृतेङ्गस्यानृकारान्तत्वादभ्यासस्यरिगागमोनप्राप्नोतीतिसोपिनिपात्यते अभ्यस्तस्वरः । निष्कृतं करोतेरादिकर्मणिक्तः संस्कर्तुंप्रवृत्तइत्यर्थः थाथादिस्वरः ॥ ९ ॥

॥ इतितृतीयस्यचतुर्थेचतुर्थोवर्गः ॥ ४ ॥

मित्रोजनानितिनवर्चंषष्ठंसूक्तं वैश्वामित्रं त्रैष्टुभमैत्रं मित्रोमैत्रंचतुर्गायत्र्यन्तामित्यनुक्रमणिका । आदितःपञ्चत्रिष्टुभः शिष्टाश्चतस्रोगायत्र्यः मित्रोदेवता अग्निहोत्रार्थेपयसिवर्षाबिन्दुपतनेमित्रोजनानित्यनयासमिधमादध्यात् । सूत्रितञ्च–मित्रोजनान्यातयतिब्रुवाणइतिसमिदाधानमिति ।

तत्रप्रथमा–

मित्रोजनान्यातयतिब्रुवाणोमित्रोदाधारपृथिवीमुतद्याम् ।
मित्रःकृष्टीरनिमिषाभिचष्टेमित्रायहव्यंघृतवज्जुहोत ॥ १ ॥

१ नि० १२. ७.।

मित्रः । जनान् । यातयति । ब्रुवाणः । मित्रः । दाधार । पृथिवीम् । उत । द्याम् । मित्रः । कृष्टीः । अनिऽमिषा । अभि । चष्टे । मित्राय । हव्यम् । घृतऽवत् । जुहोत ॥ १ ॥

ब्रुवाणःस्तूयमानः शब्दंकुर्वाणोवा मित्रः प्रकर्षेणसर्वैर्मीयतेतथासर्वान्वृष्टिप्रदानेनत्रायतइतिवामित्रःसूर्यः जनान्कर्षकादिजनान् यातयति कृष्यादिकर्मसुप्रयत्नंकारयति तथामित्रएव पृथिवीम् उतापिचद्याम् एतावुभौलोकौवृष्टिद्वारान्नंयागांश्चजनयन् दाधारधारयति तथा सति मित्रःअनिमिषाअनिमिषेणानुग्रहदृष्ट्याकृष्टीःकर्मवतोमनुष्यानभिचष्टे सर्वतःपश्यति एतत्सर्वंज्ञात्वा हेऋत्विजः घृतवदुपस्तरणाभिघारणयुक्तंहव्यं हवनयोग्यंपुरोडाशादिकं तस्मैमित्रायदेवायजुहोत जुहुत प्रयच्छतेत्यर्थः । उक्तार्थंयास्कोब्रवीति–मित्रोजनान्यातयति ब्रुवाणःशब्दंकुर्वन्मित्रएवधारयतिपृथिवींचदिवंचमित्रःकृष्टीरनिमिषन्नभिविपश्यतीतिकृष्टयइतिमनुष्यनामकर्मवन्तोभवन्तिविकृष्टदेहावामित्रायहव्यंघृतवज्जुहोतीतिव्याख्यातंजुहोतिर्दानकर्मेति ॥ यातयति यतीप्रयत्नइत्यस्यण्यन्तस्यलटिरूपम् । दाधार तुजादीनामित्यभ्यासस्यदीर्घः । जुहोत जुहोतेर्लोटि प्रत्ययस्यतबादेशः गुणःनिपातः ॥ १ ॥

देवसुवांहविःषुमित्रस्यसत्यस्यप्रसमित्रेतियाज्या एषैवप्रातर्होमस्यकालात्ययनिमित्तेमैत्रे चरौयाज्या सूत्रितञ्च–प्रसमित्रमर्तोअस्तुप्रयस्वांस्त्वांनष्टवान्महिमायएच्छतइति । ततइष्टिर्मित्रःसूर्योभियोमहिनादिवंप्रसमित्रमर्तोअस्तुप्रयस्वानितिसंस्थितायामितिच ।

सूक्तेद्वितीया–

**प्रसमि॑त्र॒मर्तो॑अस्तु॒प्रय॑स्वा॒न्यस्त॑आदित्य॒शिक्ष॑तिव्र॒तेन॑ ।**
**नह॑न्यते॒नजी॑यते॒त्वोतो॒नैन॒मंहो॑अश्नो॒त्यन्ति॑तो॒नदू॒रात् ॥ २ ॥**

प्र । सः । मित्र । मर्तः । अस्तु । प्रयस्वान् । यः । ते । आदित्य । शिक्षति । व्रतेन । न । हन्यते । न । जीयते । त्वाऽऊतः । न । एनम् । अंहः । अश्नोति । अन्तितः । न । दूरात् ॥ २ ॥

हेआदित्यव्रतेनयज्ञेनयुक्तोयोमनुष्यःतेतुभ्यंशिक्षति हविर्लक्षणमन्नंददाति हेमित्र मर्तोमनुष्यः प्रयस्वानन्नवान्प्रास्तु प्रभवतु त्वोतस्त्वयारक्षितः समनुष्यः केनापिनहन्यते नबाध्यते नजीयते नाभिभूयतेच एनंतुभ्यंहविर्दत्तवन्तंपुरुषमंहःपापमन्तितःसमीपान्नाश्नोति नप्राप्नोति ।

१ नि० १०. २२. ।

दूरादपिनप्राप्नोति शिक्षतिर्दानकर्मा व्यत्ययेनपरस्मैपदं यद्वृत्तयोगादनिघातः । जीयते जयतेःकर्मणियकि अकृत्सार्वधातुकयोरितिदीर्घः । त्वोतः तृतीयाकर्मणीतिपूर्वपदस्वरः । अश्नोति अशूव्याप्तौ स्वादिः व्यत्ययेनपरस्मैपदम् ॥ २ ॥

देवसुवांहाविष्षुमित्रस्यसत्यस्यानुवाक्या । अनमीवासइळयामदन्तःप्रसमित्रमर्तोअस्तु प्रयस्वानितिसूत्रम् ।

सैषातृतीया—

अनमीवासइळयामदन्तोमितज्ञवोवरिमन्नापृथिव्याः ।
आदित्यस्यव्रतमुपक्षियन्तोवयंमित्रस्यसुमतौस्याम ॥ ३ ॥

अनमीवासः । इळया । मदन्तः । मितऽज्ञवः । वरिमन् । आ ।
पृथिव्याः । आदित्यस्य । व्रतम् । उपऽक्षियन्तः । वयम् ।
मित्रस्य । सुऽमतौ । स्याम ॥ ३ ॥

हेमित्र अनमीवासः रोगवर्जिताः इळयान्नेनमदन्तोमाद्यन्तःपृथिव्यावरिमन्विस्तीर्णेप्रदेशे मितज्ञवः मितजानुकाः आयथाकामंसर्वत्रगच्छन्तः आदित्यस्यसंबन्धिव्रतंकर्मोपक्षियन्तः तस्य कर्मणःसमीपेनिवसन्तः तदीयंकर्मकुर्वाणाइत्यर्थः तादृशावयंमित्रस्यादित्यस्यसुमतौशोभना-यामनुग्रहबुद्ध्यांस्यामवर्तेमहि ॥ मदन्तःमदीहर्षेइत्यस्यशतरिव्यत्ययेनशप् । मितज्ञवः जानुशब्द-स्यज्ञुश्छान्दसः । वरिमन् उरुशब्दात्पृथ्वादित्वादिमनिच् प्रियस्थिरेत्यादिनावरादेशः सुपांसुलु-गितिसप्तम्यालुक् व्यत्ययेनाद्युदात्तः ॥ ३ ॥

अथचतुर्थी—

अयंमित्रोनमस्यःसुशेवोराजासुक्षत्रोअजनिष्टवेधाः ।
तस्यवयंसुमतौयज्ञियस्यापिभद्रेसौमनसेस्याम ॥ ४ ॥

अयम् । मित्रः । नमस्यः । सुऽशेवः । राजा । सुऽक्षत्रः ।
अजनिष्ट । वेधाः । तस्य । वयम् । सुऽमतौ । यज्ञियस्य ।
अपि । भद्रे । सौमनसे । स्याम ॥ ४ ॥

अयंपूर्वमन्त्रेप्रतिपादितोमित्रः सूर्यः नमस्यः सर्वैर्नमस्करणीयः सुशेवः शोमनसुखः सुखेनसेव्यइत्यर्थः राजा सर्वस्यजगतःप्रकाशप्रदानेनस्वामी सुक्षत्रःक्षत्रशब्देनबलमुच्यते शोभनबलोपेतः वेधाःसर्वस्यजगतोविधाता एवंगुणोपेतःसूर्यः अजनिष्ट प्रादुरभूत् तस्यएवंविधगुणोपेतस्ययज्ञियस्ययज्ञार्हस्यसूर्यस्यसुमतौशोभनायांबुद्ध्यांभद्रेकल्याणकारिणिसौमनसे सौमनस्येपि यजमानावयं स्यामभवेम ॥ नमस्यः नमासिसाधुःतत्रसाधुरितियत् तित्स्वरितः । अजनिष्ट जनीप्रादुर्भावेइत्यस्यलुङिसिचिरूपम् । सौमनसे सुमनसइदमित्यर्थेतस्येदमित्यण्प्रत्ययस्वरः ॥ ४ ॥

अथपञ्चमी—

**म॒हाँआ॑दि॒त्योनम॑सोप॒सद्यो॑यात॒यज्ज॑नोगृण॒तेसु॒शेवः॑ ।**
**तस्मा॑ए॒तत्पन्य॑तमाय॒जुष्ट॑म॒ग्नौमि॒त्राय॑ह॒विरा जु॑होत ॥५॥५॥**

म॒हान् । आ॒दि॒त्यः । नम॑सा । उ॒प॒ऽसद्यः॑ । या॒त॒यत्ऽज॑नः ।
गृ॒ण॒ते । सु॒ऽशेवः॑ । तस्मै॑ । ए॒तत् । पन्य॑ऽतमाय ।
जुष्ट॑म् । अ॒ग्नौ । मि॒त्राय॑ । ह॒विः । आ । जु॒हो॒त ॥ ५ ॥ ५ ॥

योयमादित्योमहान् अतएवनमसानमस्कारेणोपसद्यः सर्वैरुपसदनीयः यातयज्जनः प्रातःप्रातःस्वस्वकर्मणिप्रवर्तनीयाजनायेनेतिसतथोक्तः गृणते स्तोत्रंकुर्वतेजनायसुशेवश्चभवति तस्मै पन्यतमाय स्तुत्यतमाय मित्रायादित्याय जुष्टंप्रीतिविषयमेतद्धविः अग्नावाजुहोतजुहुत ॥ यातयज्जनः यतीप्रयत्नेइत्यस्यण्यन्तस्यशतरिरूपं बहुव्रीहौपूर्वपदप्रकृतिस्वरेप्राप्तेमरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम् । गृणते गृशब्दे शतुरनुमइतिविभक्तेरुदात्तत्वम् । पन्यतमाय पनतेरघ्न्यादित्वाद्यतियतोनावइत्याद्युदात्तत्वम् । जुष्टं नित्यंमन्त्रेइत्याद्युदात्तत्वम् ॥ ५ ॥

॥ इतितृतीयस्यचतुर्थेपञ्चमोवर्गः ॥ ५ ॥

अभिप्लवषडहेदशरात्रेचसप्तदशैकविंशादिस्तोमेसतिहोत्रकशस्त्रेष्वावापस्थानेपञ्चसप्तादिसंख्याकाऋच आवपनीयाः तत्रमैत्रावरुणशस्त्रेमित्रस्यचर्षणीधृतइत्याद्याश्चतस्रआवापार्थाः सूत्रितञ्च—मित्रस्यचर्षणीधृतइतिचतस्रोमैत्र्यइति ।

अथषष्ठी—

मित्रस्यंचर्षणीधृतोवोदेवस्यंसानसि ।
द्युम्नंचित्रश्रंवस्तमम् ॥ ६ ॥

मित्रस्यं । चर्षणिऽधृतः । अवः । देवस्यं ।
सानसि । द्युम्नम् । चित्रश्रवःऽतमम् ॥ ६ ॥

चर्षणीधृतोमनुष्याणांवृष्टिप्रदानेनधारकस्यमित्रस्यदेवस्यसंबन्धिअवोन्नं सानसि सर्वैः संभजनीयं द्युम्नं त्वदीयंधनंच चित्रश्रवस्तमम् अतिशयेनचायनीयकीर्तियुक्तम् ॥ सानसि सनोतेःसानसिपर्णसीत्यादिनासिच्प्रत्ययान्तत्वेननिपातनादुपधावृद्धिः चित्त्वादन्तोदात्तः स्वमोरितिस्वमोर्लुक् ॥ ६ ॥

प्रातर्होमस्यकालात्ययेमैत्रेष्टिः तस्यामभियोमहिनेत्यनुवाक्या सूत्रितश्च—अभियोमहिनादिवं प्रसमित्रमर्तोअस्तुप्रयस्वानिति ।

सैषासप्तमी—

अभियोमंहिनादिवंमित्रोबभूवंसप्रथाः ।
अभिश्रवोभिःपृथिवीम् ॥ ७ ॥

अभि । यः । महिना । दिवंम् । मित्रः । बभूवं ।
सऽप्रथाः । अभि । श्रवःऽभिः । पृथिवीम् ॥ ७ ॥

योमित्रः महिना स्वकीयेनमहिम्ना दिवमन्तरिक्षमभिबभूवाभिभवति . समित्रः सप्रथाः प्रथःप्रसिद्धिः कीर्तिः तत्सहितःश्रवोभिर्वृष्टिद्वाराउत्पादितैरन्नैः पृथिवीमप्यभिभवति बह्वन्नयुक्तांकरोतीत्यर्थः ॥ सप्रथाः प्रथप्रख्याने असुन् वोपसर्जनस्येतिसहस्यसभावः ॥ ७ ॥

अथाष्टमी—

मित्रायपञ्चंयेमिरेजनांअभिष्टिंशवसे ।
सदेवान्विश्वान्बिभर्ति ॥ ८ ॥

मि॒त्राय॑ । पञ्च॑ । ये॒मि॒रे॒ । जनाः॑ । अ॒भिष्टि॑ऽशवसे । सः । दे॒वान् । विश्वा॑न् । बि॒भ॒र्ति॒ ॥ ८ ॥

पञ्चजनाः निषादपञ्चमाश्चत्वारोवर्णा अभिष्टिशवसेशत्रूणामभिगन्तृबलयुक्तायमित्राययेमिरे हवींष्युद्यच्छन्ति सतादृशोमित्रः विश्वान्सर्वान्देवान्बिभर्ति स्वस्वरूपतयाधारयति ॥ अभिष्टिशवसे इषेर्मन्त्रेवृषेत्यादिनाक्तिन् तादौचनितीत्यभेरन्तोदात्तत्वं शकन्ध्वादित्वात्पररूपत्वं बहुव्रीहौपूर्वपदस्वरः ॥ ८ ॥

अथनवमी—

मि॒त्रो दे॒वेष्वा॒यु॒षु॒ जना॑य वृ॒क्तब॑र्हिषे । इष॑इ॒ष्टव्र॑ता अकः ॥९॥६॥

मि॒त्रः । दे॒वेषु॑ । आ॒यु॒षु॑ । जना॑य । वृ॒क्तऽब॑र्हिषे । इषः॑ । इ॒ष्टऽव्र॑ताः । अ॒क॒रित्य॑कः ॥ ९ ॥ ६ ॥

मित्रोभगवानादित्योदेवेषुद्योतमानादिगुणयुक्तेषु आयुषुमनुष्येषुमध्येयोजनोवृक्तबर्हिः वृक्तंलूनंबर्हिर्येनसः लवनसादनपूर्वंहविषोदाता ऋत्विगित्यर्थः तस्मैवृक्तबर्हिषे जनाय इष्टव्रताः इष्टानिकल्याणानिव्रतानिकर्माणियाभिः सिध्यन्तिताइषः तादृशान्यन्नानि अकःकरोति तस्मैददातीत्यर्थः ॥ वृक्तबर्हिषे ओव्रश्चूछेदने कर्मणिनिष्ठायां यस्यविभाषेतीट्प्रतिषेधः बहुव्रीहौ पूर्वपदस्वरः । अकः करोतेर्लुङि छन्दसिमन्त्रेवृषेत्यादिनालुक् सिपोहल्ङ्यादिलोपः निघातः ॥ ९ ॥

॥ इतितृतीयस्यचतुर्थेषष्ठोवर्गः ॥ ६ ॥

इहेहवइतिसप्तर्चंसप्तमंसूक्तं वैश्वामित्रंजागतमृभुदेवताकम् अन्त्यस्यामृचइन्द्रदेवताकश्च तथाचानुक्रान्तम्—इहेहसप्तार्भवंजागतंत्र्यृचोन्त्यऐन्द्रश्चेति । सूक्तविनियोगोलैङ्गिकः आद्याश्चतस्रः पृष्ठ्याभिप्लवषडहयोःप्रथमेहनिवैश्वदेवशस्त्रेआर्भवनिविद्धानीयाः सूत्रितञ्च—इहेहवइतिचतस्रइति ।

तत्रप्रथमा—

इ॒हेह॑ वो॒ मन॑सा ब॒न्धुता॑ नर उ॒शिजो॑ जग्मुर॒भि तानि॒ वेद॑सा । याभि॑र्मा॒याभिः॒ प्रति॑जूतिवर्पसः॒ सौध॑न्वना य॒ज्ञियं॑ भा॒गमा॑न॒श ॥ १ ॥

इहऽइह । वः । मनसा । बन्धुता । नरः । उशिजः । जग्मुः ।
अभि । तानि । वेदसा । याभिः । मायाभिः । प्रतिजूतिऽवर्पसः ।
सौधन्वनाः । यज्ञियम् । भागम् । आनश ॥ १ ॥

हेऋभवः वोयुष्माकंबन्धुता बध्नन्तिफलेनसंयोजयन्तीतिबन्धवः कर्माणि तेषांभावोबन्धुताइहेहसर्वत्रमनसासर्वैर्ज्ञायते नरःहेमनुष्याः ऋभवः उशिजः यज्ञभागंकामयमानाभवन्तः वेदसायज्ञभागप्रापककर्मविषयज्ञानेनतानितादृशानिकर्माणि अभिजग्मुःप्राप्नुवन्ति कानितानि मायाभिः मीयन्तेज्ञायन्तेइतिमायाः कर्माणि याभिर्मायाभिः यैःकर्मभिः प्रतिजूतिवर्पसः प्रतिपक्षाभिभवनशीलतेजोयुक्ताः सौधन्वनाः सुधन्वनामाङ्गिरसःपुत्रःकश्चिदृषिस्तस्यपुत्राः सौधन्वनाः ते चत्रयः ऋभुर्विभ्वावाजइति एतन्नामकायूयं यज्ञियंयज्ञार्हंभागंसोमपानादिलक्षणम् आनश व्याप्ताः स्थ तथाचमन्त्रवर्णः—ऋभुर्विभ्वावाजोदेवाँअगच्छतस्वपसोयाज्ञियंभागमैतनेति । अयमर्थोब्राह्मणेपि—ऋभवोवैदेवेषुतपसासोमपीथमभ्यजयन्नित्यत्रोपाख्यानपूर्वकंस्पष्टमभिहितः । यद्वा नरः कर्मणांनेतारोहेऋभवः उशिजःकामयमानाः वेदसाहविर्लक्षणेनधनेनयुक्ताःस्तोतारः वोयुष्माकं तानि चमसभक्षणादीनिकर्माणि बन्धुताबन्धुतयासख्येनमनसाजग्मुरभिगच्छन्ति कानीत्याशङ्कायामाह—यैश्चमसभक्षणादिभिःकर्मभिर्यज्ञार्हंभागंयूयमाप्नुत तान्यभिगच्छन्ति युष्माकंबुद्धिनैपुणानिचिन्तयन्तीत्यर्थः ॥ इहेह नित्यवीप्सयोरितिद्विर्वचनं परस्याम्रेडितत्वादनुदात्तत्वेपूर्वपदस्वरः । बन्धुता बन्धबन्धने शॄस्वृस्निहीत्यादिनाकर्तरिउप्रत्ययः समूहेइत्यर्थेग्रामजनबन्धुसहायेभ्यस्तलितितल् लित्स्वरः ॥ १ ॥

अथद्वितीया—

याभिःशचीभिश्चमसाँअपिंशतययाधियागामरिणीतचर्मणः ।
येनहरीमनसानिरतक्षततेनदेवत्वमृभवःसमानश ॥ २ ॥

याभिः । शचीभिः । चमसान् । अपिंशत । यया । धिया ।
गाम् । अरिणीत । चर्मणः । येन । हरी इति । मनसा । निःऽअतक्षत ।
तेन । देवऽत्वम् । ऋभवः । सम् । आनश ॥ २ ॥

---

१ ऋ० सं० २. ३. ५. । २ ऐ० ब्रा० ३. ३० ।

हेऋभवः याभिःशचीभिःशक्तिभिश्चमसान्चतुरः अपिंशत विभक्तवन्तःस्थ यथाधिया प्रज्ञयागामृतामरिणीतचर्मणः चर्मणायोजनात्प्रापितवन्तःस्थ येनमनसाप्रज्ञानेनहरीएतन्नामकाविन्द्रस्याश्वौनिरतक्षत नितरामकुरुत तथाचमन्त्रवर्णः—यइन्द्रायवचोयुजाततक्षुर्मनसाहरीइति । तेनसर्वेणानेनकर्मणादेवत्वंयज्ञभागार्हत्वलक्षणंदेवभावंसमानश सम्यक्प्राप्ताःस्थ ॥ अपिंशत पिशअवयवे तुदादिः तस्यलङि मध्यमेरूपंयद्वृत्तयोगादनिघातः अरिणीत रीगतिरेषणयोः क्र्यादिःतस्यलङिरूपम् अत्रापिपूर्ववदनिघातः । निरतक्षत तक्षूत्वक्षूतनूकरणे लङिरूपं पूर्ववदनिघाते तिङिचोदात्तवतीतिगतेर्निघातः अनुदात्तः । आनश अश्नोतेर्लिटिरूपं निघातः ॥ २ ॥

अथतृतीया—

इन्द्रस्यसख्यमृभवःसमानशुर्मनोर्नपातोअपसोदधन्विरे ।
सौधन्वनासोअमृतत्वमेरिरेविष्ट्वीशमीभिःसुकृतःसुकृत्यया ॥ ३

इन्द्रस्य । सख्यम् । ऋभवः । सम् । आनशुः । मनोः । नपातः । अपसः । दधन्विरे । सौधन्वनासः । अमृतऽत्वम् । आ । ईरिरे । विष्ट्वी । शमीभिः । सुऽकृतः । सुऽकृत्यया ॥ ३ ॥

मनोर्नपातः मनुष्यस्याङ्गिरसःपुत्राःअपसः यागादिलक्षणकर्मवन्तः ऋभवः इन्द्रस्यसख्यं समानख्यानत्वंसमानशुः सम्यक्प्राप्नुवन् तथा इन्द्रस्यसख्यंप्राप्तास्तेऋभवःदधन्विरे पूर्वमनुष्यत्वेनमरणयोग्याअपिइदानीमिन्द्रस्यसख्येनप्राणान्धारयान्ति तथाचमन्त्रवर्णः—अधारयन्तवह्नयइति । सौधन्वनासःसुधन्वनामकस्यऋषेःपुत्राऋभवःसुकृतःशोभनकर्माणः सन्तः प्रभूतैःशमीभिः देवत्वप्राप्तिप्रतिबन्धनिवारणहेतुभिःकर्मभिःसुकृत्यया शोभनेनकर्मणाच विष्ट्वीव्याप्य अमृतत्वमेरिरे देवत्वंप्रापुः तथाचमन्त्रान्तरमाम्नायते—मर्तासः सन्तोअमृतत्वमानशुरिति ॥ नपातः नभ्राण्नपादित्यादिनानञःप्रकृतिभावः । दधन्विरे धविर्गत्यर्थः व्यत्ययेनात्मनेपदं लिटिरूपम् । ईरिरे ईरगतौ मन्त्रत्वादाम्नभवति निघातः । सुकृत्यया करोतेर्भावे कृञःशचेतिक्यप् प्रत्ययस्वरपत्ययेनान्तोदात्तत्वं समासेकृदुत्तरपदस्वरः ॥ ३ ॥

---

१ ऋ. सं. १. २. १. । २ ऋ० सं० १. १. २ । ३ ऋ० सं० १. ७. ३०. ।

अथचतुर्थी–

इन्द्रेणयाथसरथंसुतेसचाँअथोवशानांभवथासहश्रिया ।
नवःप्रतिमैसुकृतानिवाघतःसौधन्वनाऋभवोवीर्याणिच ॥ ४ ॥

इन्द्रेण । याथ । सऽरथम् । सुते । सचा । अथो इति । वशानाम् ।
भवथ । सह । श्रिया । न । वः । प्रतिऽमै । सुऽकृतानि ।
वाघतः । सौधन्वनाः । ऋभवः । वीर्याणि । च ॥ ४ ॥

हेऋभवः यूयम् इन्द्रेणसचा सह सरथं समानमेकंरथमारुह्य सुते अभिषुतसोमवतियज्ञे याथ गच्छथ अथोअनन्तरम् इन्द्रेणसहैकरथमारूढायूयं वशानाम् उश्यतेकाम्यते यजमानेनस्वर्गादिलक्षणंफलमेभिरितिवशामनुष्याः तेषां श्रियास्तुतिहविरादिरूपयासहिताः भवथ हेसौधन्वनाः सुधन्वनःपुत्रा वाघतः अमृतत्वादिलक्षणफलस्यवोढारः मेधाविनो वेतियास्कः । तादृशाहेऋभवः वोयुष्माकंसुकृतानि देवत्वस्यप्रापकाणिशोभनानिकर्माणिनप्रतिमै प्रतिमातुमियत्तयापरिच्छेत्तुंनकेनापिशक्यानि तथा वीर्याणि युष्माकंसामर्थ्यानिच नैवप्रतिमातुंशक्यानि ॥ वशानां वशकान्तौ वशिरण्योरुपसंख्यानमितिकरणेऽप्प्रत्ययः प्रत्ययस्यपित्त्वादनुदात्तत्वेधातुस्वरः वशाशब्दोवन्ध्यावचनश्चेदन्तोदात्तोभवति वशामेषाअवसृष्टासआहुताइति । वः युष्मच्छब्दस्यषष्ठीबहुवचनेवसादेशः निघातः । प्रतिमै माङ्माने विचू प्रतिमाप्रतिमानंतस्यचतुर्थ्येकवचनेआतोलोपश्छान्दसः एकादेशस्वरः ॥ ४ ॥

आभिप्लविकेपञ्चमेहनिवैश्वदेवशस्त्रे इन्द्रऋभुभिरित्याभवस्तृचः सूत्रितश्च–घृतवती भुवनानामभिश्रियेन्द्रऋभुभिर्वाजवद्भिरितिन्यृचाविति । आद्यातृतीयसवनेहोतुःप्रस्थितयाज्या सूत्रितश्च–इन्द्रऋभुभिर्वाजवद्भिःसमुक्षितमिन्द्रावरुणासुतपाविमंसुतमिति ।

सैषापञ्चमी–

इन्द्रऋभुभिर्वाजवद्भिःसमुक्षितंसुतंसोममावृषस्वागभस्त्योः ।
धियेषितोमघवन्दाशुषोगृहेसौधन्वनेभिःसहमत्स्वानृभिः॥ ५॥

---

१ नि० ११. १६. । २ ऋ० सं०८. ४.२२. ।

इन्द्र॑ । ऋ॒भु॒ऽभिः॑ । वा॒ज॒व॒त्ऽभिः॑ । सम्ऽउ॑क्षितम् । सु॒तम् । सोम॑म् । आ । वृ॒ष॒स्व॒ । गभ॑स्त्योः । धि॒या । इ॒षि॒तः । म॒घ॒ऽव॒न् । दा॒शुषः॑ । गृ॒हे । सौ॒ध॒न्व॒नेभिः॑ । स॒ह । म॒त्स्व॒ । नृऽभिः॑ ॥ ५ ॥

हे इन्द्र वाजवद्भिः वाजोनामऋभूणांभ्राता यद्वा वाजोन्नं तत्सहितैर्ऋभुभिःसहितस्त्वं समुक्षितं सम्यगद्भिःसिक्तंग्रावभिःसुतंसोमं गभस्त्योः बप्सत्यदन्त्याभ्यामन्नमिति गृह्णन्ति पदार्थानाभ्यामितिवागभस्ती बाहू तयोर्बाह्वोरावृषस्व आक्षारय प्रहमुभाभ्यांगृहीत्वासोमंपिबेत्यर्थः हेमघवन् धनवन् हेइन्द्र धिया स्तोत्ररूपेणकर्मणा इषितः प्रेरितस्त्वं दाशुषोहविर्दत्तवतोयजमानस्यगृहे सौधन्वनेभिः सुधन्वनःपुत्रैर्नृभिर्मनुष्यैर्ऋभुभिःसह साकं मत्स्व सोमपानेनहृष्टोभव ॥ समुक्षितम् उक्षसेचने कर्मणिक्तः गतिरनन्तरइतिगतेःस्वरः । गभस्त्योः भसभर्त्सनदीप्त्योरित्यस्माद्भसेर्गट्चेतिसूत्रेणतिप्रत्ययोधातोर्गडागमश्च यद्वा गृह्णातेः पृषोदरादित्वादेवंरूपंनेयम् । मत्स्व मदिस्तुत्यादिषु लोटिबहुलंछन्दसीतिविकरणस्यलुकूनिपातः ॥ ५ ॥

अथषष्ठी–

इन्द्र॑ऋभु॒मान्वाज॑वान्मत्स्वे॒हनो॒ऽस्मिन्त्सव॑ने॒शच्या॑पुरुष्टुत । इ॒मानि॒तुभ्यं॒स्वस॑राणि॒येमि॒रेव्र॒तादे॒वाना॒ंमनु॑षश्च॒धर्म॑भिः ॥६॥

इन्द्र॑ । ऋ॒भु॒ऽमान् । वाज॑ऽवान् । म॒त्स्व॒ । इ॒ह । नः॒ । अ॒स्मिन् । सव॑ने । शच्या॑ । पु॒रु॒ऽस्तु॒त॒ । इ॒मानि॑ । तुभ्य॑म् । स्वस॑राणि । ये॒मि॒रे॒ । व्र॒ता । दे॒वाना॑म् । मनु॑षः । च॒ । धर्म॑ऽभिः ॥ ६ ॥

पुरुष्टुत बहुभिःस्तुत हेइन्द्र ऋभुमान् ऋभुणातद्वान् वाजवान् वाजेनऋभोर्भ्रात्रायुक्तः शच्या इन्द्राण्याकर्मणावासहितःसन् नोऽस्माकमिहकर्मण्यस्मिन्तृतीयसवने मत्स्व हृष्टोभव हेइन्द्र तुभ्यं त्वदर्थमिमानि स्वसराण्यहानियेमिरे तवसोमपानार्थंत्रिषुसवनेषुनियतान्यासते किञ्च देवानामग्न्यादीनां व्रता व्रतानि कर्माणिचमनुषोमनुष्यस्यधर्मभिःकर्मभिः साकंत्वदर्थंनियतान्यासते ॥ ६ ॥

अथसप्तमी–

इन्द्र॑ऋ॒भुभि॑र्वा॒जिभि॑र्वा॒जय॑न्नि॒हस्तोम॑ंजरि॒तुरुप॑याहि॒य॒ज्ञिय॑म् । श॒तंकेते॑भिरिषि॒रेभि॑रा॒यवे॑स॒हस्र॑णीथोअध्व॒रस्य॒होम॑नि ॥ ७ ॥

इन्द्र । ऋभुऽभिः । वाजिऽभिः । वाजयन् । इह । स्तोमम् ।
जरितुः । उप । याहि । यज्ञियम् । शतम् । केतेभिः ।
इषिरेभिः । आयवे । सहस्रऽनीथः । अध्वरस्य । होमनि ॥ ७ ॥ ७ ॥

हेइन्द्र वाजिभिः वाजयुक्तैर्ऋभुभिःसहितस्त्वं वाजयन्स्तोतुर्वाजमन्नंकुर्वाणइह यज्ञे यज्ञियं यज्ञार्हं जरितुःस्तोमं स्तोत्रमुपयाहि आगच्छ पुनःकिंविशिष्टः केतेभिःकेत्यते ज्ञायते सर्वमेभिरितिकेताःप्राज्ञामरुतःतैः शतंशत[illegible]याकैरिषिरेभिरिषिरैर्गमनकुशलैरश्वैः सहितःआयवे मनुष्या[illegible]नमानायसहस्रनी[illegible]ः बहुप्रक[illegible]नयनोपेतः अध्वरस्य नविद्यते ध्वरोहिंसायस्य तादृशस्य सोम[illegible] होमनि होमे आगच्छेतिशेषः ॥ वाजयन् वाजंकरोतीतिणिच् णाविष्ठवदितीष्ठवद्भावात्तुरिष्ठेमेयःस्वितिटिलोपः । केतेभिः कितज्ञाने घञ् ञित्त्वादाद्युदात्तः ॥ ७ ॥

॥ इतितृतीयस्यचतुर्थेसप्तमोवर्गः ॥ ७ ॥

उषोवाजेनेतिसप्तर्चमष्टमंसूक्तं वैश्वामित्रमुषोदेवताकं तथाचानुक्रान्तम्—उषऔषस्यमिति प्रातरनुवाकेउषःक्रतौआश्विनशस्त्रेचत्रैष्टुभेछन्दस्येतस्यसूक्तस्यविनियोगः सूत्रितश्च—उषो वाजेनेदमुत्यादिति ।

तत्रप्रथमा—

उषोवाजेनवाजिनिप्रचेताःस्तोमंजुषस्वगृणतोमघोनि ।
पुराणीदेवियुवतिःपुरंन्धिरनुव्रतंचरसिविश्ववारे ॥ १ ॥

उषः । वाजेन । वाजिनि । प्रऽचेताः । स्तोमम् । जुषस्व ।
गृणतः । मघोनि । पुराणी । देवि । युवतिः । पुरम्ऽधिः ।
अनु । व्रतम् । चरसि । विश्वऽवारे ॥ १ ॥

वाजेन वाजिनि अन्नेनान्नवति तथाचमन्त्रः[1]—संवाजैर्वाजिनीवंतीति । मघोनि धनवति हेउषः प्रचेताः प्रकृष्टज्ञानवतीसती गृणतस्तवस्तोत्रंकुर्वतस्तोतुःस्तोमंस्तोत्रंजुषस्व यद्वा वाजेन

---

१ ऋ० सं० १. ४. ५. ।

हविर्लक्षणेनान्नेनसह स्तोमंजुषस्वेतिसंबन्धः विश्ववारे विश्वैःसर्वैर्वरणीये हेउषोदेवि पुराणी पुरातनी युवतिरित्युपमा तद्वत् शोभमाना सुसंकाशामातृमृष्टेवयोषेतिवत् पुरन्धिः पुरुबहुधीः स्तोत्रलक्षणंकर्मयस्याःसा बहुस्तोत्रवती पुरन्धिर्बहुधीरितियास्कः । पुरन्धिः शोभमानावाए वंविधगुणोपेतात्वम् अनुव्रतं यज्ञकर्माभिलक्ष्यचरसि यष्टव्यतयावर्तसे ॥ मघोनि मघशब्दा- न्मतुबर्थे छन्दसीवनिपाविवितिवनिप् स्त्रियाम् ऋन्नेभ्योङीप् श्वयुवमघोनामतद्धितेइतिसंप्रसार- णेकृतेगुणः संबुद्धौअम्बार्थनद्योर्ह्रस्वः निघातः । पुराणी पुराणशब्दःपुराणप्रोक्तेष्वित्यन्तोदा- त्तत्वेननिपातितः टिड्ढाणञितिङीप् अनुदात्तस्यचयत्रोदात्तलोपइत्यन्तोदात्तत्वम् । पुरन्धिः पृषोदरादित्वादुकारस्यअमादेशः ईकारस्यह्रस्वश्च आद्युदात्तप्रकरणेदिवोदासादीनांछन्दस्युपसंख्या- नमित्याद्युदात्तत्वम् ॥ १ ॥

अथद्वितीया—

उषोदेव्यमर्त्याविभाहिचन्द्ररथासूनृताईरयन्ती ।
आत्वावहन्तुसुयमासोअश्वाहिरण्यवर्णांपृथुपाजसोये ॥ २ ॥

उषः । देवि । अमर्त्या । वि । भाहि । चन्द्रऽरथा । सूनृताः ।
ईरयन्ती । आ । त्वा । वहन्तु । सुऽयमासः । अश्वाः ।
हिरण्यऽवर्णाम् । पृथुऽपाजसः । ये ॥ २ ॥

हेउषोदेवि अमर्त्या मरणधर्मरहिताचन्द्ररथासुवर्णमयरथोपेतासूनृताःप्रियसत्यरूपावाचः ईरयन्ती उच्चारयन्ती तथाचमन्त्रवर्णः—सुम्नावरीसूनृताईरयन्तीति[1] । तादृशीत्वंविभाहि सूर्यकिर- णसंबन्धाद्विशेषेणदीप्यस्व पृथुपाजसः प्रभूतबलयुक्ताअरुणवर्णायेअश्वाविद्यन्ते सुयमासः सुष्ठु नियन्तुंशक्यारथेयोजितास्तेअश्वाः हिरण्यवर्णांत्वात्वामावहन्तु ॥ सुयमासः यमेरकृच्छ्रार्थेखल् लित्स्वरः ॥ २ ॥

अथतृतीया—

उषःप्रतीचीभुवनानिविश्वोर्ध्वातिष्ठस्यमृतस्यकेतुः ।
समानमर्थंचरणीयमानाचक्रमिवनव्यस्यावंवृत्स्व ॥ ३ ॥

१ ऋ० सं० २. १. ६. । २ नि० ६. १३. । ३ ऋ० सं० १. ८. ३.

उर्षः । प्रतीची । भुर्वनानि । विश्वा । ऊर्ध्वा । तिष्ठसि ।
अमृतस्य । केतुः । समानम् । अर्थम् । चरणीयमाना ।
चक्रम्ऽईव । नव्यसि । आ । ववृत्स्व ॥ ३ ॥

हेउषोदेवि विश्वासर्वाणिभुवनानिभूतजातानि प्रतीची प्रत्याभिमुख्येनाञ्चतिप्राप्नोतीतिप्रतीची अमृतस्यमरणधर्मरहितस्यसूर्यस्यकेतुःप्रज्ञापयित्रीत्वम् ऊर्ध्वानभस्युन्नतातिष्ठसि नव्यसि पुनःपुनर्जायमानतयानवतरे हेउषोदेवि अर्थमर्यतेगम्यतेयस्मिन्नित्यर्थोमार्गः समानमेकंमार्गम् उदयात्प्राचीनकाललक्षणंचरणीयमाना चरितुमिच्छन्तीत्वमाववृत्स्व पुनःपुनस्तस्मिन्मार्गेआवृत्तामव तत्रदृष्टान्तः—चक्रमिव यथानभसिचरितुः सूर्यस्यरथाङ्गंपुनःपुनरावर्ततेतद्वत् ॥ प्रतीची प्रतिपूर्वादञ्चतेःक्विन् अञ्चतेश्चोपसंख्यानमितिङीप् अचइत्यकारलोपे चाविति दीर्घः उदात्तनिवृत्तिस्वरेणान्तोदात्तः । केतुः चायृपूजानिशामनयोरित्यस्माच्चायःकीचेतितुःकीइत्यादेशः आर्धधातुकलक्षणोगुणः । अर्थम् अर्तेस्थन्प्रत्ययः । नव्यसि नवशब्दादीयसुनिङीपिरूपम् ईकारलोपश्छान्दसः । ववृत्स्व वृतुवर्तने बहुलंछन्दसीतिविकरणस्यश्लुः ? ॥ ३ ॥

अथचतुर्थी—

अवस्यूमैवचिन्वतीमघोन्युषायातिस्वसरस्यपत्नी ।
स्व१र्जनन्तीसुभगासुदंसाआन्ताद्दिवःपप्रथआपृथिव्याः ॥ ४ ॥

अव । स्यूमंऽइव । चिन्वन्ती । मघोनी । उषाः । याति ।
स्वसरस्य । पत्नी । स्वः । जनन्ती । सुऽभगा । सुऽदंसाः । आ ।
अन्तात् । दिवः । पप्रथे । आ । पृथिव्याः ॥ ४ ॥

येयमुषाः स्यूमेव वस्त्रमिव विस्तृतंतमोवाचिन्वती अवचयमपक्षयंप्रापयन्ती मघोनी धनवती स्वसरस्य सुष्ठुअस्यतिक्षिपातितमइतिस्वसरःसूर्योवासरोवा तस्यपत्नीसतीयाति गच्छति स्वःस्वकीयंतेजः जनन्तीजनयन्ती सुभगा सुधना सौभाग्ययुक्तावा सुदंसाः शोभनाग्निहोत्रकर्मासेयमुषाः दिवोद्युलोकस्यआन्तात्पृथिव्याश्चान्तादवसानात् पप्रथे प्रथतेप्रकाशतइत्यर्थः ॥ स्यूमेव षिवुतन्तुसंताने अविषिविशुषिभ्यःकिदितिमन्प्रत्ययः च्छ्वोःशूडनुनासिकेचेत्यूठ् यणादेशः सुपांसुलुगितिशेर्लुक् नित्त्वादाद्युदात्तः । चिन्वती शतुरनुमइतिङीपउदात्त-

त्वम् । जनन्ती जनजननेइत्यस्यण्यन्तस्यशतरिरूपं छन्दस्युभयथेतिशपआर्धधातुकत्वेन णिलोपः ॥ ४ ॥

अथपञ्चमी–

अच्छावोदेवीमुषसंविभातींप्रवोभरध्वंनमसासुवृक्तिम् ।
ऊर्ध्वंमधुधादिविपाजोअश्रेत्प्ररोचनारुरुचेरण्वसन्दृक् ॥ ५ ॥

अच्छ । वः । देवीम् । उषसम् । विऽभातीम् । प्र । वः । भरध्वम् । नमसा । सुऽवृक्तिम् । ऊर्ध्वम् । मधुऽधा । दिवि । पाजः । अश्रेत् । प्र । रोचना । रुरुचे । रण्वऽसन्दृक् ॥ ५ ॥

हेस्तोतारः वोयुष्मानच्छाभिलक्ष्यविभातीं शोभमानामुषसंदेवींप्रति वोयुष्माकंसंबन्धिनानमसानमस्कारेणसह सुवृक्तिं शोभनांस्तुतिंप्रभरध्वं यूयंकुरुत मधुधा मधुराणिस्तुतिलक्षणानिवाक्यानिदधातीतिमधुःस्तोमः तंधारयतीतिवा यद्वा मधुधा आदित्यस्यधात्री यद्वा अवग्रहाभावादव्युत्पन्नावयवमखण्डमिदंपदम् उषोनाम सेयमुषाः दिविनभस्यूर्ध्वम् ऊर्ध्वाभिमुखंपाजस्तेजःअश्रेत् श्रयति तथा रोचना रोचनशीलारण्वसंदृक् रमणीयदर्शनोषाः प्ररुरुचे प्रकर्षेणदीप्यते यद्वा रोचना लोकान्प्ररुरुचे प्रकर्षेणस्वतेजसादीपयाति तथाचमन्त्रवर्णः–व्युच्छन्तीहिरश्मिभिर्विश्वमाभासिरोचनमिति ॥ रण्वेसंदृक् रवेर्गत्यर्थस्याच्प्रत्ययः इदित्वान्नुमागमः संपूर्वादृशेःकिन् बहुव्रीहौपूर्वपदप्रकृतिस्वरः ॥ ५ ॥

अथषष्ठी–

ऋतावरीदिवोअर्कैरबोध्यारेवतीरोदसीचित्रमस्थात् ।
आयतीमग्नउषसंविभातींवाममेषिद्रविणंभिक्षमाणः ॥ ६ ॥

ऋतऽवरी । दिवः । अर्कैः । अबोधि । आ । रेवती । रोदसी इति । चित्रम् । अस्थात् । आऽयतीम् । अग्ने । उषसम् । विऽभातीम् । वामम् । एषि । द्रविणम् । भिक्षमाणः ॥ ६ ॥

१ ऋ० सं० १. ४. ६. ।

ऋतावरी सत्यवती येयमुषाः दिवोद्युलोकादर्कैस्तेजोभिरबोधि सर्वैर्ज्ञायते ततः रेवती धनवती येयं रोदसीद्यावापृथिव्यौचित्रंनानाविधरूपयुक्तंयथाभवतितथाअस्थात् सर्वतोव्याप्यतिष्ठति हेअग्ने आयतीं त्वदभिमुखमागच्छन्तींविभातींभासमानामुषसमुषोदेवींभिक्षमाणो हवींषियाचमानस्त्वं वामं वननीयंद्रविणम् अग्निहोत्रादिलक्षणंधनम् एषिप्राप्नोषि ॥ अबोधि वुधअवगमने कर्मणिलुङि चिण्भावकर्मणोरितिचिण् चिणोलुक् । रेवती रयिशब्दात्मतुप् छन्दसीरइतिवत्वं रयेर्मतौबहुलमितिसंप्रसारणं परपूर्वत्वे गुणः उगितश्चेतिङीप् रेशब्दाच्चोपसंख्यानमितिमतुपउदात्तत्वम् ॥ ६ ॥

अथसप्तमी--

ऋतस्यबुध्नउषसामिषण्यन्वृषामहीरोदसीआविवेश ।
महीमित्रस्यवरुणस्यमायाचन्द्रेवभानुंविदधेपुरुत्रा ॥ ७ ॥ ८ ॥

ऋतस्य । बुध्ने । उषसाम् । इषण्यन् । वृषा । मही इति । रोदसी इति । आ । विवेश । मही । मित्रस्य । वरुणस्य । माया । चन्द्राऽइव । भानुम् । वि । दधे । पुरुऽत्रा ॥ ७ ॥ ८ ॥

वृषा वृष्टिद्वारापांप्रेरकः आदित्यः ऋतस्याग्निहोत्रादिकर्मकरणेसत्यभूतस्याह्नोबुध्नेमूलेउषसामिषण्यन् प्रेरणंकुर्वन् महीमहत्यौरोदसीद्यावापृथिव्यौआविवेश सर्वतःप्रविष्टवान् यद्वा वृषा वर्षिता इषण्यन्सर्वतोगच्छन् उषःसंबन्धीरश्मिसमूहोरोदसीद्यावापृथिव्यावाविष्टवानितियोजनीयं ततउषाः महीमहती मित्रस्यवरुणस्यमित्रावरुणयोर्मायाप्रमारूपासती चन्द्रेवसुवर्णानीव भानुंस्वप्रभांपुरुत्रा बहुषुदेशेषुविदधे विदधाति सर्वत्रप्रसारयति ॥ मही अल्लोपश्छान्दसः । पुरुत्रा देवमनुष्येत्यादिनाधिकरणेत्राप्रत्ययः ॥ ७ ॥

॥ इतितृतीयस्यचतुर्थेऽष्टमोवर्गः ॥ ८ ॥

इमाउवामित्यष्टादशर्चंनवमंसूक्तम् अत्रेयमनुक्रमणिका--इमाउद्व्यूनैन्द्रावरुणबार्हस्पत्यपौष्णसावित्रसौम्यमैत्रावरुणास्त्र्यृचाः अन्त्योजमदग्न्यार्षोवा चतुर्थ्याद्यागायत्र्यइति । कृत्स्नस्यविश्वामित्रऋषिः अन्त्यस्यत्र्यृचस्यजमदग्निर्वा आद्यास्तिस्रस्त्रिष्टुभः शिष्टाःपञ्चदशगायत्र्यः प्रथमस्यैन्द्रावरुणौदेवता द्वितीयस्यबृहस्पतिः तृतीतस्यपूषा चतुर्थस्यसविता पञ्चमस्यसोमः षष्ठस्यमित्रावरुणौ आभिप्लविकेषूक्थ्येषुतृतीयसवनेस्तोमवृद्धौसत्यांस्वस्वशस्त्रे होत्रकाअन्त्यसूक्तम-

वशोभ्यस्तोभाभिशंसनार्थंत्र्यृचादिसंख्याऋचआवपेयुः । तत्रमैत्रावरुणस्यावापार्थमाद्यस्त्र्यृचः सूत्रितश्च—इमाउवांभृमयोमन्यमानाइतितिस्रइति ।

तत्रप्रथमा—

इमाउंवांभृमयोमन्यमानायुवावतेनतुज्यांअभूवन् ।
क्व१त्यदिन्द्रावरुणायशोवांयेनस्मासिनंभरथःसखिभ्यः ॥ १ ॥

इमाः । ऊँ इति । वाम् । भृमयः । मन्यमानाः । युवाऽवते ।
न । तुज्याः । अभूवन् । क्व । त्यत् । इन्द्रावरुणा । यशः ।
वाम् । येन । स्म । सिनम् । भरथः । सखिऽभ्यः ॥ १ ॥

हेइन्द्रावरुणौ वांयुवयोःसंबन्धिन्यः मन्यमानाः बलिभिःशत्रुभिरभिमन्यमानाः अतएवभृमयः भ्रमणशीलाः इमाः प्रजाः उःपूरणः युवावते तृतीयार्थेचतुर्थी यौवनवताबलिनाशत्रुणा तुज्याहिंस्यानाभूवन् नभवन्तु वां युवयोः त्यत् तादृशंयशःक्व कुत्रास्ते येनयशसासखिभ्योस्मभ्यंसिनमन्नंभरथःस्म प्रदातुंसंपादयथः तत्क्वास्तइत्यन्वयः यद्वा हेइन्द्रावरुणौवांयुवयोः संबन्धिन्यः इमाः अस्माभिःक्रियमाणाभृमयः युवां प्राप्तुं भ्रमणशीलाः मन्यमानाः मन्यतिरर्चतिकर्मा युवामर्चन्त्यः ताःस्तुतयः युवावते युवाभ्यांसदृशाय अन्यस्मैदेवायनतुज्याः तुजतिर्दानकर्मार्थः प्रदेयामाभूवन् शिष्टंसमानम् ॥ भृमयः भ्रमुअनवस्थाने भ्रमेःसंप्रसारणंचेतिइन्प्रत्ययःसंप्रसारणंचव्यत्ययेनान्तोदात्तत्वम् । युवावते युष्मदस्मभ्यांछन्दसिसादृश्यउपसंख्यानमितिवतुप् अविभक्तावपियुवादेशश्छान्दसः । तुज्याः तुजहिंसादाननिकेतनेषु अघ्न्यादयश्चेतियत् यतोनावइत्याद्युदात्तत्वम् । सिनं षिञ्बन्धने इण्षिञ्दीङुष्यविभ्योनगितिनक् व्यत्ययेनाद्युदात्तत्वम् ॥ १ ॥

अथद्वितीया—

अयमुंवांपुरुतमोरयीयञ्छश्वत्तममवसेजोहवीति ।
सजोषाविन्द्रावरुणामरुद्भिर्दिवापृथिव्याशृणुतंहवंमे ॥ २ ॥

अयम् । ऊँ इति । वाम् । पुरुऽतमः । रयिऽयन् । शश्वत्ऽतमम् ।
अवसे । जोहवीति । सऽजोषौ । इन्द्रावरुणा । मरुत्ऽभिः ।
दिवा । पृथिव्या । शृणुतम् । हवम् । मे ॥ २ ॥

हेइन्द्रावरुणौ रयीयन् रयिमात्मनइच्छन् अयमु पुरुतमः वैदिककर्मप्रवृत्ततयातिशयेन पुरुर्महान्यजमानः अवसे रक्षणायान्नायवा वां युवां शश्वत्तमं सर्वदाजोहवीति भृशमाह्वयति मरुद्भिर्देवविशेषैर्दिवापृथिव्याचसजोषौ संगतौ युवां मे मम हवंयुष्मदीयमाह्वानंशृणुतम् ॥ पुरुतमः तमपोव्यत्ययेनाद्युदात्तत्वम् । जोहवीति ह्वयतेर्यङ्लुकि अभ्यस्तस्यचेतिसंप्रसारणेकृते रूपम् । दिवा ऊडिदमितिविभक्तेरुदात्तत्वम् । पृथिव्या उदात्तयणोहल्पूर्वादित्युदात्तत्वम् । हवं ह्वयतेर्भावेनुपसर्गस्येत्यप्प्रत्ययस्यपित्त्वादनुदात्तत्वम् ॥ २ ॥

अथतृतीया—

अस्मेतदिंद्रावरुणावसुष्यादस्मेरयिर्मरुतःसर्ववीरः ।
अस्मान्वरूत्रीःशरणैरवन्त्वस्मान्होत्राभारतीदक्षिणाभिः ॥३॥

अस्मे इति । तत् । इन्द्रावरुणा । वसु । स्यात् । अस्मे इति ।
रयिः । मरुतः । सर्वऽवीरः । अस्मान् । वरूत्रीः । शरणैः ।
अवन्तु । अस्मान् । होत्रा । भारती । दक्षिणाभिः ॥ ३ ॥

हेइन्द्रावरुणौ अस्मे अस्मासुतदभिलषितंतादृशंवसुधनंस्याद्भवतु हेमरुतः सर्ववीरः सर्वेषुकर्मसुवीरःसमर्थः रयिः पुत्रपशुसंघः पशवोवैरयिरितितैत्तिरीयकम् । सःअस्मेअस्माकंभवतु वरूत्रीः सर्वैःसंभजनीयादेवपत्न्यः शरणैः शृणन्तिशीतादिक्लेशमितिशरणानिगृहाः तैरस्मानवन्तु होत्राहूयन्तेस्यांहवींषीति यद्वा हूयतेतत्रप्राणइतिहोत्रावाक् तथाचश्रुतिः—वाचिहिप्राणंजुहुमःप्राणेवावाचमिति । यद्वा होत्रेतियज्ञनाम हूयतेऽत्रहविरितियज्ञश्चवागुच्यते वाचं यच्छन्तिवाग्वैयज्ञइतिब्राह्मणम्[1] । तादृशीभारतीसरस्वतीदक्षिणाभिर्गोरूपाभिर्दक्षिणाभिः यद्वा उदाराभिर्वाग्भिरस्मान्पालयतु यद्वा होत्रा होतुरग्नेः पत्नीभारतीसूर्यपत्नीचसरस्वतीचतिस्रोदेव्यःपालयन्त्विति ॥ वसुष्यादित्यत्रसंहितायांपूर्वपदादितिषत्वम् । वरूत्रीः प्रसितस्कभितेत्यादिनाङीबन्तत्वेननिपातानादिष्टसिद्धिः । होत्रा हुदानादनयोः हुयामाश्रुभसिभ्यस्त्रन्नितिअधिकरणेत्रन्प्रत्ययः ॥ ३ ॥

अथचतुर्थी—

बृहस्पतेजुषस्वनोहव्यानिविश्वदेव्य । रास्वरत्नानिदाशुषे ॥४॥

[1] ऐ० ब्रा० ५. २४.।

बृहस्पते । जुषस्व । नः । हव्यानि ।
विश्वऽदेव्य । रास्व । रत्नानि । दाशुषे ॥४॥

विश्वदेव्य सर्वदेवहित हेबृहस्पते नोऽस्मत्संबन्धीनिहव्यानिहवनयोग्यानिपुरोडाशादीनि हवींषिजुषस्व सेवस्व ततस्त्वं दाशुषेहविर्दत्तवतेयजमानाय महांरत्नान्युत्तमानिधनानिरास्व देहि ॥ रास्व रादाने व्यत्ययेनात्मनेपदम् ॥ ४ ॥

अथपञ्चमी—

शुचिमर्कैर्बृहस्पतिमध्वरेषुनमस्यत । अनाम्योजआचके ॥५॥१॥

शुचिम् । अर्कैः । बृहस्पतिम् । अध्वरेषु ।
नमस्यत । अनामि । ओजः । आ । चके ॥ ५ ॥ १ ॥

हेऋत्विजः यूयम् अध्वरेषु शुचिं शुद्धं बृहस्पतिमर्कैरर्चनीयैःस्तोत्रैर्नमस्यत परिचरत अनामि अनमनशीलं परैरनभिभवनीयम् ओजस्तस्यबलमाचके सर्वतोयाचे ॥ बृहस्पतिं वनस्पत्यादित्वादुभयपदप्रकृतिस्वरः । चके कमेर्लिट्युत्तमेमकारलोपश्छान्दसः ॥ ५ ॥

॥ इतितृतीयस्यचतुर्थेनवमोवर्गः ॥ ९ ॥

अथषष्ठी—

वृषभंचर्षणीनांविश्वरूपमदाभ्यम् । बृहस्पतिंवरेण्यम् ॥ ६ ॥

वृषभम् । चर्षणीनाम् । विश्वऽरूपम् । अदाभ्यम् ।
बृहस्पतिम् । वरेण्यम् ॥ ६ ॥

चर्षणीनांमनुष्याणांवृषभमभिमतफलवर्षकंविश्वरूपंव्याप्तरूपं यद्वा विश्वरूपनामकगोवाहनोपेतं तथाचमन्त्रवर्णः—बृहस्पतिर्विश्वरूपामुपाजयतइति[1] । अदाभ्यं केनाप्यतिरस्करणीयं वरेण्यं सर्वैर्भजनीयंबृहस्पतिमाचकेइतिपूर्वेणान्वयः ॥ विश्वरूपं बहुव्रीहौविश्वंसंज्ञायामिति पूर्वपदान्तोदात्तत्वम् यद्वा विश्वरूपाअस्यसन्तीति अर्शआदित्वादच्प्रत्ययः मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम् । अदाभ्यं दभेश्चेतिवक्तव्यमितिण्यत्प्रत्ययः ॥ ६ ॥

1 ऋ० सं० ९. ३. ५.

अथसप्तमी-

इयंतेपूषन्नाघृणेसुष्टुतिर्देवनव्यसी । अस्माभिस्तुभ्यंशस्यते ॥७॥

इयम् । ते । पूषन् । आघृणे । सुऽस्तुतिः । देव । नव्यसी ।
अस्माभिः । तुभ्यम् । शस्यते ॥ ७ ॥

आघृणे दीप्तिमन् हेपूषन् देव नव्यसी नवतरी इयं सुष्टुतिःशोभनास्तुतिरूपावाक् ते त्वत्संबंधिनीभवति सैषास्तुतिः अस्माभिः स्तोतृभिःतुभ्यंत्वदर्थंशस्यतेतांजुषस्वेत्युत्तरेणान्वयः ॥ ७ ॥

अथाष्टमी-

तांजुषस्वगिरंममवाजयन्तीमवाधियम् । वधूयुरिवयोषणाम् ॥८॥

ताम् । जुषस्व । गिरम् । मम । वाजऽयन्तीम् । अव । धियम् ।
वधूयुःऽइव । योषणाम् ॥ ८ ॥

हेपूषन् स्तोत्रंकुर्वाणस्य मम तां तादृशींगिरंस्तुतिलक्षणांवाचंजुषस्व सेवस्व स्तुत्याप्रीतस्त्वं वाजयन्तीं वाजमन्नमिच्छन्तीं हर्षकारिणींधियमिमांस्तुतिंप्रति अवाभिगच्छ तत्रदृष्टान्तः— वधूयुरिव यथावधूयुः स्त्रीकामः योषणांस्त्रियंप्रत्यागच्छतितद्वत् ॥ वाजयन्तीं वाजशब्दादिच्छतीत्यर्थेक्यच् तदन्ताच्छतरिरूपं ङीपोनुदात्तत्वेप्रत्ययस्वरः । अव अवरक्षणादिष्वित्यस्यलोटिरूपम् ॥ ८ ॥

अथनवमी-

योविश्वाभिविपश्यतिभुवनासंचपश्यति । सनःपूषाविताभुवत् ॥९॥

यः । विश्वा । अभि । विऽपश्यति । भुवना । सम् । च ।
पश्यति । सः । नः । पूषा । अविता । भुवत् ॥ ९ ॥

यःपूषा विश्वाभुवनासर्वान्लोकानभि आभिमुख्येनविपश्यति विशेषेणपश्यति किंच तानिसंपश्यति तद्वस्तुयाथात्म्यंसम्यक्जानाति सतादृशःपूषादेवः नोऽस्माकमवितारक्षकोभुवत् भवतु ॥ विपश्यति यद्वृत्तयोगादनिघातःशपःपित्त्वादनुदात्तत्वेधातुस्वरः तिङिचोदात्तवतीतिगतेर्निघातः । पश्यति अत्रसकर्मकत्वात्परस्मैपदं पूर्ववदनिघातः । भुवत् भवतेर्लेट्यडागमः भूसुवोस्तिङीतिगुणप्रतिषेधेउवङादेशः निघातः ॥ ९ ॥

दशरात्रस्यषष्ठेहनिवैश्वदेवशस्त्रेतत्सवितुरितिद्वेऋचौप्रतिपत्त्यृचस्याद्वितीयतृतीये । सूत्रितञ्च–तत्सवितुर्वरेण्यमितिद्वेदोपोआगादिति । अभिप्लवपृष्ठ्यषडहयोर्द्वितीयेहनिवैश्वदेवशस्त्रे प्रतिपत्त्यृचस्यैतेएवप्रथमाद्वितीये । सूत्रितञ्च–तत्सवितुर्वरेण्यमितिद्वेआविश्वदेवमिति ।

सैषादशमी–

**तत्स॑वि॒तुर्वरे॑ण्यं॒भर्गो॑दे॒वस्य॑धीमहि।धियो॒योनः॑प्रचो॒दया॑त् १०॥१०**

तत् । स॒वि॒तुः । वरे॑ण्यम् । भर्गः॑ । दे॒वस्य॑ । धी॒म॒हि॒ ।
धियः॑ । यः । नः॒ । प्र॒ऽचो॒दया॑त् ॥ १० ॥ १० ॥

यःसवितादेवःनोऽस्माकंधियःकर्माणिधर्मादिविषयावाबुद्धीः प्रचोदयात् प्रेरयेत् तत्तस्यसर्वासुश्रुतिषु प्रसिद्धस्य देवस्य द्योतमानस्य सवितुः सर्वान्तर्यामितयाप्रेरकस्यजगत्स्रष्टुः परमेश्वरस्यआत्मभूतं वरेण्यंसर्वैरुपास्यतयाज्ञेयतयाचसंभजनीयं भर्गः अविद्यातत्कार्ययोर्भर्जनाद्भर्गः स्वयंज्योतिः परब्रह्मात्मकंतेजःधीमहि तद्योहंसोसौयोसौसोहमितिवयंध्यायेम यद्वा तदितिभर्गोविशेषणं सवितुर्देवस्यतत्तादृशंभर्गःधीमहि किंतदित्यपेक्षायामाह–यइतिलिङ्गव्यत्ययः यद्भर्गोधियःप्रचोदयात् तद्ध्यायेमेतिसमन्वयः यद्वा यःसवितासूर्यः धियःकर्माणिप्रचोदयात् प्रेरयति तस्यसवितुःसर्वस्यप्रसवितुर्देवस्यद्योतमानस्यसूर्यस्यतत्सर्वैर्दृश्यमानतयाप्रसिद्धं वरेण्यं सर्वैःसंभजनीयंभर्गःपापानांतापकंतेजोमण्डलंधीमहि ध्येयतयामनसाधारयेम यद्वा भर्गः–शब्देनान्नमभिधीयते यःसवितादेवोधियःप्रचोदयति तस्यप्रसादाद्भर्गोन्नादिलक्षणंफलंधीमहि धारयामः तस्याधारभूताभवेमेत्यर्थः भर्गश्शब्दस्यान्नपरत्वेधीशब्दस्यकर्मपरत्वेचआथर्वणं–वेदांश्छन्दांसिसवितुर्वरेण्यंभर्गोदेवस्यकवयोन्नमाहुः कर्माणिधियस्तदुतेप्रब्रवीमिप्रचोदयन्त्सवितायाभिरेतीति ॥ भर्गः भ्रस्जपाके असुन् भ्रस्जोरोपधयोरमन्यतरस्यामितिरोपधयोर्लोपः रमागमः न्यङ्क्वादित्वात् कुत्वम् । धीमहि ध्यायतेर्लिङि बहुलंछन्दसीतिसंप्रसारणं व्यत्ययेनात्मनेपदं यद्वा धीङ्आधारे लिङिबहुलंछन्दसीतिविकरणस्यलुक् । प्रचोदयात् चोदयतेर्लेटि आडागमः यद्वृत्तयोगादनिघातः आगमस्यानुदात्तत्वेणिचःस्वरः ॥ १० ॥

॥ इतितृतीयस्यचतुर्थेदशमोवर्गः ॥ १० ॥

श्रीशाङ्करभाष्यम्–

अथसर्वदेवात्मनः सर्वशक्तेःसर्वावभासकतेजोमयस्यपरमात्मनः सर्वात्मकत्वद्योतनार्थं सर्वात्मकत्वप्रतिपादकगायत्रीमहामन्त्रस्योपासना(न)प्रकारः प्रकाश्यते–तत्रगायत्रींप्रणवादिसप्तव्याहृ-

स्युपेतांशिरःसमेतांसर्ववेदसारमितिवदन्ति एवंविशिष्टागायत्रीप्राणायामैरुपास्या सप्रणवव्याहृतित्रयोपेताप्रणवान्तागायत्रीजपादिभिरुपास्या तत्रशुद्धगायत्रीप्रत्यक्ब्रह्मैक्यबोधिका धियो योनःप्रचोदयादिति नोस्माकंधियोबुद्धीः यः प्रचोदयात् प्रेरयेदिति सर्वबुद्धिसंज्ञान्तःकरणप्रकाशकसर्वसाक्षीप्रत्यगात्मेत्युच्यते तस्यप्रचोदयाच्छब्दनिर्दिष्टस्यात्मनः स्वरूपभूतंपरंब्रह्म तत्सवितुरित्यादिपदैर्निर्दिश्यते तत्र ओंतत्सदितिनिर्देशोब्रह्मणस्त्रिविधःस्मृतइति तच्छब्देनप्रत्यग्भूतंस्वतःसिद्धंपरंब्रह्मोच्यते सवितुरितिसृष्टिस्थितिलयलक्षणकस्यसर्वप्रपञ्चस्यसमस्तद्वैतविभ्रमस्याधिष्ठानंलक्ष्यते । वरेण्यमिति सर्ववरणीयंनिरतिशयानन्दरूपम् । भर्गइत्यविद्यादिदोषभर्जनात्मकज्ञानैकविषयत्वम् । देवस्येति सर्वद्योतनात्मकाखण्डचिदेकरसम् । सवितुर्देवस्येत्यत्रषष्ठ्यर्थोराहोःशिरोवदौपचारिकः बुद्ध्यादिसर्वदृश्यसाक्षिलक्षणंयन्मेस्वरूपंतत्सर्वाधिष्ठानभूतं परमानन्दंनिरस्तसमस्तानर्थरूपंस्वप्रकाशचिदात्मकंब्रह्मेत्येवंधीमहिध्यायेम । एवंसतिसहब्रह्मणास्वविवर्तजडप्रपञ्चेनरज्जुसर्पन्यायेनापवादसामानाधिकरण्यरूपमेकत्वं सोयमितिन्यायेनसर्वसाक्षिप्रत्यगात्मनोब्रह्मणासहतादात्म्यरूपमेकत्वंभवतीतिसर्वात्मकब्रह्मबोधकोयंगायत्रीमन्त्रःसंपद्यते । सप्तव्याहृतीनामयमर्थः—भूरितिसन्मात्रमुच्यते ॥ १ ॥ भुवइतिसर्वंभावयतिप्रकाशयतीतिव्युत्पत्त्याचिद्रूपमुच्यते ॥ २ ॥ सुव्रियतइतिव्युत्पत्त्यास्वरितिसुष्ठुसर्वैर्व्रियमाणसुखस्वरूपमुच्यते ॥ ३ ॥ महइतिमहीयतेपूज्यतइतिव्युत्पत्त्यासर्वातिशयत्वमुच्यते ॥ ४ ॥ जनइतिजनयतीतिजनः सकलकारणत्वमुच्यते ॥ ५ ॥ तपइतिसर्वतेजोरूपत्वम् ॥ ६ ॥ सत्यमितिसर्वबाधारहितम् ॥ ७ ॥ एतदुक्तंभवति—यत्लोकेसद्रूपंतदोङ्कारवाच्यंब्रह्मैव आत्मनोऽस्यसच्चिद्रूपस्यभावादिति । अथभूरादयः सर्वलोकाओङ्कारवाच्यब्रह्मात्मकाः नतद्व्यतिरिक्तंकिञ्चिदस्तीति । व्याहृतयोऽपिसर्वात्मकब्रह्मबोधिकाः ॥ गायत्रीशिरसोप्ययमेवार्थः आपइत्याप्नोतीतिव्युत्पत्त्याव्याप्तित्वमुच्यते । ज्योतिरितिप्रकाशरूपत्वं रसइतिसर्वातिशयत्वम् अमृतमितिमरणादिसंसारनिर्मुक्तत्वं . सर्वव्यापिसर्वप्रकाशकसर्वोत्कृष्टनित्यमुक्तमात्मरूपंसच्चिदानन्दात्मकंयदोङ्कारवाच्यंब्रह्म तदहमस्मीतिगायत्रीमन्त्रस्यार्थः । गुहाशयब्रह्महुताशनोहंकर्त्रेदमंशाख्यहविर्हुतंसत् । विलीयतेनेदमहंभवानीत्येषप्रकारस्तुविभिद्यतेत्र । यदस्तियद्भातितदात्मरूपंनान्यत्ततोभातिनचान्यदस्ति । स्वभावसंवित्प्रतिभातिकेवलाग्राह्यंगृहीतेतिमृषैवकल्पना ॥ इतिश्रीमच्छङ्करभगवत्पादकृतौ गायत्रीभाष्यंसमाप्तम् ॥

अथैकादशी—

**दे॒वस्य॑ सवि॒तुर्व॒यं वा॑ज॒यन्तः॒ पुर॑न्ध्या । भग॑स्य रा॒तिमी॑महे ॥ ११ ॥**

देवस्य । सवितुः । वयम् । वाजऽयन्तः । पुरम्ऽध्या ।
भगस्य । रातिम् । ईमहे ॥ ११ ॥

वाजयन्तः वाजमन्नमात्मनइच्छन्तोवयंदेवस्यद्योतमानस्यसवितुःपुरन्ध्यातद्विषयस्तुत्या प्रज्ञयावा भगस्यभजनीयस्यधनस्यरातिंदानम् ईमहेयाचामहे ॥ रातिं मन्त्रेवृषेत्यादिनाक्तिनउदात्तत्वम् ॥ ११ ॥

अथद्वादशी–

देवंनरःसवितारंविप्रायज्ञैःसुवृक्तिभिः । नमस्यन्तिधियेषिताः ॥१२

देवम् । नरः । सवितारम् । विप्राः । यज्ञैः ।
सुवृक्तिऽभिः । नमस्यन्ति । धिया । इषिताः ॥ १२ ॥

नरः कर्मणांनेतारोविप्रामेधाविनोध्वर्य्वादयः धियेषिताः कर्मणाबुद्ध्यावाप्रेर्यमाणाःसन्तः सवितारंदेवंत्वांयज्ञैर्यजनीयैर्हविर्भिः सुवृक्तिभिः शोभनस्तोत्रैश्चनमस्यन्ति परिचरन्ति ॥ नमस्यन्ति नमोवरिवश्चित्रङःक्यजितिक्यच् ॥ १२ ॥

अग्नीषोमप्रणयनेसोमोजिगातीत्याद्यास्तिस्रऋचः । सूत्रितञ्च–सोमोजिगातिगातुविद्देवानांतमस्यराजावरुणस्तमश्विनेत्यर्धर्चमारभेदिति ।

सैषात्रयोदशी–

सोमोजिगातिगातुविद्देवानामेतिनिष्कृतम् । ऋतस्ययोनिमासदम्

सोमः । जिगाति । गातुऽवित् । देवानाम् । एति ।
निःऽकृतम् । ऋतस्य । योनिम् । आऽसदम् ॥ १३ ॥

गातुवित् गातुर्मार्गः तंजानानःसोमोजिगातिगच्छति गन्तव्यंस्थानंदर्शयति–देवानां निष्कृतंसंस्कृतम् आसदंसर्वैरासदनीयम् ऋतस्ययज्ञस्ययोनिंस्थानं हविर्धानाख्यमेतिप्राप्नोति ॥ जिगाति गास्तुतौ जुहोत्यादिः ॥ १३ ॥

अथचतुर्दशी–

सोमोअस्मभ्यंद्विपदेचतुष्पदेचपशवे । अनमीवाइषस्करत् ॥१४॥

सोमः । अस्मभ्यम् । द्विऽपदे । चतुःऽपदे । च ।
पशवे । अनमीवाः । इषः । करत् ॥ १४ ॥

सोमः स्तोतृभ्योऽस्मभ्यं तथाद्विपदेस्मदीयेभ्योद्विपाद्भ्यः चतुष्पदेपशवेचतुष्पाद्भ्योगवादिपशुभ्यश्च अनमीवारोगवर्जितानिइषोन्नानिकरत्करोतु ॥ चतुष्पदे भसंज्ञायां पादस्यपद्भावः इसुसोःसामर्थ्येइतिसांहितायाम् आदेशप्रत्ययोरितिषत्वं बहुव्रीहौपूर्वपदस्वरः । करत् करोतेर्लेट्यडागमः । इषस्करदित्यत्रसंहितायांकःकरदित्यादिनासत्वम् ॥ १४ ॥

अथपञ्चदशी–

अस्माकमायुर्वर्धयन्नभिमातीःसहमानः।सोमःसधस्थमासदत्॥१५

अस्माकम् । आयुः । वर्धयन् । अभिऽमातीः । सहमानः ।
सोमः । सधऽस्थम् । आ । असदत् ॥ १५ ॥

ससोमोदेवः अस्माकमायुरन्नंजीवनंवावर्धयन्वृद्धिंप्रापयन् अभिमातीः कर्मविघ्नकारिणः शत्रून्सहमानोऽभिभवन्नस्माकंसधस्थंहविर्धानाख्यंस्थानम् आसदत् आसीदतु ॥ असदत् सदेर्लेटिरूपं निघातः ॥ १५ ॥

अग्निष्टोमेप्रातःसवनेमैत्रावरुणशस्त्रेआनोमित्रावरुणेतिस्तोत्रियस्तृचः सूत्रितश्च—आनोमित्रावरुणानोगन्तंरिशादसेति । चतुर्विंशेहनिप्रातःसवनेमैत्रावरुणशस्त्रेआनोमित्रावरुणेतिषळहस्तोत्रियसंज्ञकस्तृचः सूत्रितश्च—आनोमित्रावरुणामित्रंवयंहवामहइति । स्तोमवृद्धावयमेवतृचआवापार्थः सूत्रितश्च—आनोमित्रावरुणेतितृचाविति । दाक्षायणयज्ञेद्वेअमावास्येकर्तव्ये तत्रोत्तरस्याममावास्यायांद्वितीयेहनिमैत्रावरुणआनोमित्रावरुणेतितस्यानुवाक्या सूत्रितश्च—आनोमित्रावरुणायद्वांहिष्ठंनातिविदेसुदानूइति ।

सैषाषोडशी–

आनोमित्रावरुणाघृतैर्गव्यूतिमुक्षतम् । मध्वारजांसिसुक्रतू॥१६॥

आ । नः । मित्रावरुणा । घृतैः । गव्यूतिम् । उक्षतम् ।
मध्वा । रजांसि । सुक्रतू इति सुऽक्रतू ॥ १६ ॥

सुक्रतू शोभनकर्माणौ हेमित्रावरुणौ नोऽस्माकंगव्यूतिं गवांमार्गंगोनिवासस्थानं घृतैःक्षरणसाधनैः पयोभिराउक्षतं समन्तात्सिञ्चतम् अस्मभ्यंदोग्ध्रीर्गाःप्रयच्छतमितिभावः रजांस्यस्मदावासस्थानानिमध्वामधुरेणरसेनासिञ्चतम् ॥ गव्यूतिं गोर्यूतौछन्दसीतिवान्तादेशः । मध्वा सर्वविधीनांछन्दसिविकल्पितत्वादत्रनुमागमाभावः ॥ १६ ॥

अथसप्तदशी–

उरुशंसानमोवृधामह्नादक्षस्यराजथः । द्राघिष्ठाभिःशुचिव्रता १७

उरुऽशंसा । नमःऽवृधा । मह्ना । दक्षस्य ।
राजथः । द्राघिष्ठाभिः । शुचिऽव्रता ॥ १७ ॥

शुचिव्रता परिशुद्धकर्माणौ हेमित्रावरुणौ उरुशंसा उरुभिर्बहुभिःशंसनीयौ यद्वा उरु महत् शंसःशस्त्रं ययोस्तौ नमोवृधा नमसाहविर्लक्षणेनान्नेनस्तोत्रेणवावर्धमानौ द्राघिष्ठाभिः अत्यन्तंदीर्घस्तुतिलक्षणाभिर्वाग्भिः युक्तौ युवांदक्षस्यदक्षंधनंबलंवा तस्य मह्ना महत्त्वेन राजथः ईशाथे ॥ उरुशंसा शंसुस्तुतौ कर्मणिघञ् कृत्स्वरः । द्राघिष्ठाभिः दीर्घशब्दादिष्ठनि प्रियस्थिरेत्यादिनाद्राघीत्यादेशः नित्त्वादाद्युदात्तः ॥ १७ ॥

मैत्रावरुणस्यग्रहस्ययाज्यागृणानाजमदग्निनेत्येषा सूत्रितश्च–होतायक्षन्मित्रावरुणागृणानाजमदग्निनेति । अध्यायोपाकरणेमण्डलाद्यन्तहोमेगृणानाजमदग्निनेत्येषा ।

सूक्तेष्टादशी–

गृणानाजमदग्निनायोनावृतस्यसीदतम् । पातंसोममृतावृधा १८

गृणाना । जमत्ऽअग्निना । योनौ । ऋतस्य । सीदतम् ।
पातम् । सोमम् । ऋतऽवृधा ॥ १८ ॥ ११ ॥

हेमित्रावरुणौ जमदग्निना एतन्नामकेनमहर्षिणा गृणाना स्तूयमानौ यद्वा जमदग्निना प्रज्वलिताग्निना विश्वामित्रेणस्तूयमानौ युवाम् ऋतस्ययज्ञस्ययोनौ देवयजनाख्येदेशे सीदतम् उपविशतम् ऋतावृधा ऋतस्यकर्मफलस्यवर्धयितारौ युवां सोमंपातं पिबतम् ॥ गृणाना गृशब्दे कर्मणिशानच् चित्त्वादन्तोदात्तः । सीदतं सदेर्लोटि पाघ्रेत्यादिनासीदादेशः । पातं पापाने बहुलंछन्दसीतिशपोलुक् ॥ १८ ॥

॥ इतितृतीयस्यचतुर्थेएकादशोवर्गः ॥ ११ ॥

॥ इतितृतीयेमण्डलेपञ्चमोऽनुवाकः ॥ ५ ॥

॥ इतितृतीयंमण्डलंसमाप्तम् ॥ ३ ॥

## ॥ श्रीगणेशायनमः ॥

# अथचतुर्थमण्डलम्.

वामदेवेचतुर्थेमण्डलेपञ्चानुवाकाः तत्रप्रथमेनुवाकेदशसूक्तानि तेपुत्वांह्यग्नेसदमिदिति विंशत्यृचंप्रथमंसूक्तम् । अत्रेयमनुक्रमणिका—त्वांह्यग्नेविंशतिरष्ट्यतिजगतीधृतयआद्याउपाद्याश्च-तस्रोवारुण्यश्चवेति । मण्डलद्रष्टावामदेवऋषिः प्रथमाचतुःषष्ट्यक्षराअष्टिः द्वितीयाद्विपञ्चाशा-दक्षराअतिजगती तृतीयाद्वासप्तत्यक्षराधृतिः चतुर्थ्याद्या अनादेशपरिभाषयासप्तदशत्रिष्टुभः कृत्स्नस्यसूक्तस्यमण्डलादिष्वाग्नेयमितिपरिभाषयाअग्निर्देवता द्वितीयाद्याश्चतस्रोवरुणदेवत्यावा सूक्तविनियोगोलैङ्गिकः आद्याध्यायोपाकरणेमण्डलादिहोमेविनियुक्तम् ।

तत्रप्रथमा—

ॐ त्वांह्यग्नेसदमित्समन्यवोदेवासोदेवमरतिंन्येरिरइतिक्रत्वान्येरिरे । अमर्त्यंयजतमर्त्येष्वादेवमादेवंजनतप्रचेतसंविश्वमादेवंजनतप्रचेतसम् ॥ १ ॥

त्वाम् । हि । अग्ने । सदम् । इत् । सऽमन्यवः । देवासः । देवम् । अरतिम् । निऽएरिरे । इति । क्रत्वा । निऽएरिरे । अमर्त्यम् । यजत । मर्त्येषु । आ । देवम् । आऽदेवम् । जनत । प्रऽचेतसम् । विश्वम् । आऽदेवम् । जनत । प्रऽचेतसम् ॥ १ ॥

वामदेवःस्तौति—हेअग्ने समन्यवः मन्युःस्पर्धा तयासहवर्तमानाः स्वसमानैःस्पर्धमानाइत्यर्थः देवासोदेवनशीलाइन्द्रादयोदेवाः देवंद्योतमानमरतिंशीघ्रंगन्तारंत्वांसदमित् सदैवन्येरिरे हि स्पर्धानिमित्तेयुद्धेप्रेरयन्तिखलु इतिशब्दोहेत्वर्थः यस्माद्देवाःत्वांयुद्धार्थंनितरांप्रेरयन्तितस्माद्यजमानाःक्रत्वास्तुतिलक्षणेनकर्मणान्येरिरे यज्ञकर्मणिदेवान्हविःप्रापयितुं देवानाह्वातुं च त्वां नितरांप्रेरयन्तिखलु यजत यजनीय हेअग्ने अमर्त्यंमरणधर्मरहितम् आसर्वतोदेवंद्योतमानंप्रचेतसं प्रकृष्टंकर्मविषयंचेतोज्ञानंयस्यतादृशंत्वांमर्त्येषुयागंकुर्वाणेषुमनुष्येषुआदेवमागन्तारंजनत देवाहविःअर्पणार्थमजनयन् तथाप्रचेतसंकर्माभिज्ञमादेवंतत्तद्यज्ञेष्वागन्तारं त्वां विश्वंजनत

युगपन्नानादेशवर्तिषुयज्ञेषुयौगपद्येनहविरामयनार्थंम्यासंदेवाअकुर्वन् ॥ न्येरिरे ईरगतौ लिटि मन्त्रत्वादाम्नभवति सहेतियोगविभागात्समासः हियोगादनिघातः । क्त्वा जसादिषुछन्द-सिवावचनमितिनादेशाभावः यणादेशः ॥ १ ॥

अथद्वितीया—

**सभ्रातंरंवरुंणमग्नआवंवृत्स्वदेवाँअच्छांसुमतीयज्ञवंनसं ज्येष्ठंयज्ञवंनसम् । ऋतावांनमादित्यंचर्षणीधृतंराजांनं चर्षणीधृतंम् ॥ २ ॥**

सः । भ्रातंरम् । वरुंणम् । अग्ने । आ । ववृत्स्व । देवान् । अच्छं । सुऽमती । यज्ञऽवंनसम् । ज्येष्ठंम् । यज्ञऽवंनसम् । ऋतऽवांनम् । आदित्यम् । चर्षणिऽधृतंम् । राजांनम् । चर्षणिऽधृतंम् ॥ २ ॥

हेअग्ने सतादृशस्त्वं भ्रातरमेकस्थानवासेनभ्रातरंवरुणंवृणोत्युदकमितिवरुणः तंदेवं यज्ञवनसं यज्ञैर्वननीयैर्हविर्भिःसंभजनीयं यज्ञवनसंचयज्ञस्यसंभक्तारंज्येष्ठमतिशयेनप्रशस्यम् ऋतावानमपांस्वामितयोदकवन्तंसत्यवन्तंवाआदित्यमदितेःपुत्रंचर्षणीधृतं मनुष्याणामुदकप्र-दानेनधारकं सुमती शोभनबुद्ध्या हेतुनाचर्षणीधृतं चर्षणिभिर्विद्वद्भिर्धृतंराजानंराजन्तमेता-दृशंवरुणंदेवंदेवान्देवनशीलांस्तोतॄनच्छाभिलक्ष्य आववृत्स्व आवर्तय अभिमुखीकुरु ॥ व-वृत्स्व वृतुवर्तने लोटि बहुलंछन्दसीतिविकरणस्यश्लुः निघातः । सुमती मन्त्रेवृषेत्यादिना क्तिन्नुदात्तः सुपांसुलुगितितृतीयायाःपूर्वसवर्णदीर्घः एकादेशस्वरः । ज्येष्ठं प्रशस्यस्येष्ठ-निज्यचेतिज्यादेशः नित्त्वादाद्युदात्तः एकादेशस्वरः । यज्ञवनसं वनषणसंभक्तौ कर्मकर्त-रिच असुन्प्रत्ययः गतिकारकयोरपिपूर्वपदप्रकृतिस्वरत्वंचेतिपूर्वपदस्वरः ॥ २ ॥

प्रवर्ग्येभिष्टवेउत्तरस्मिन्पटलेसखेसखायमित्येषा सूत्रितंच—सखेसखायमभ्याववृत्स्वोर्ध्वे-ऊषुणऊतयइति ।

सैषातृतीया—

**सखेसखांयमभ्यावंवृत्स्वाशुंनचक्रंरथ्येंवरंह्यास्मभ्यंदस्मरंह्यां । अग्नेंमृळीकंवरुंणेसचांविदोमरुत्सुंविश्वभांनुषु ॥ तोकायंतुजेशुंशुचानशंकृंध्यस्मभ्यंदस्मशंकृंधि ॥ ३ ॥**

सखे॑ । सखा॑यम् । अ॒भि । आ । व॒वृ॒त्स्व॒ । आ॒शुम् । न । च॒क्रम् ।
रथ्या॑ऽइव । रंह्या॑ । अ॒स्मभ्य॑म् । द॒स्म॒ । रंह्या॑ । अग्ने॑ । मृ॒ळी॒कम् ।
वरु॑णे । सचा॑ । वि॒दः॒ । म॒रुत्ऽसु॑ । वि॒श्वऽभा॑नुषु । तो॒काय॑ ।
तु॒जे । शु॒शु॒चा॒न॒ । शम् । कृ॒धि॒ । अ॒स्मभ्य॑म् । द॒स्म॒ । शम् । कृ॒धि॒ ॥ ३ ॥

सखे सखिभूत दस्म दर्शनीय हेअग्ने त्वं तवसखायंवरुणमस्मभ्यम् अस्मदर्थम् आववृत्स्व अभिमुखीकुरु तत्रदृष्टान्तः—रंह्या रंहणेगमनेसाधुभूतौरथ्येव रथेयोजितावश्वौयथा आशुं शीघ्रगन्तृचक्रंलक्ष्यदेशंप्रत्यभिमुखीकुरुतःतद्वत् हेअग्ने सचा तवसहायेवरुणेमृळीकंसुखकरंहविः विदः लब्धवानसि तथा विश्वभानुषु सर्वतोव्याप्ततेजस्केषुमरुत्सु सुखकरंलब्धवानसि आग्नीवरुणाऽऽग्निमारुतयोःकर्मणोरिष्टवानसीत्यर्थः शुशुचान दीप्यमान हेअग्ने तोकाय तुज्यतेपीड्यतेनेनमातागर्भवासेनेतितोकंपुत्रः तस्मैतुजेतुजतिगच्छत्यनेनानृण्यंपितेतितुक् पौत्रः तस्मै शंसुखं कृधि कुरु दस्म दर्शनीय हेअग्ने अस्मभ्यंशंकृधि सुखंकुरु ॥ रथ्येव रथस्येमावित्यर्थेरथाद्यदितियत् सुपांसुलुतिसुपोडादेशः । रंह्या रंहशब्दात्तत्रसाधुरितियत्प्रत्ययः यतोनावइत्याद्युदात्तत्वम् ॥ ३ ॥

त्वंनोअग्नइत्येतदारभ्येदंसूक्तम्उत्तराणिसूक्तानिचप्रातरनुवाकेआग्नेयेक्रतौत्रैष्टुभेछन्दसिआश्विनशस्त्रेचविनियुक्तानि सूत्रितञ्च—त्वंनोअग्नेवरुणस्यविद्वानित्येतत्प्रभृतीनिचत्वारीति । अवभृथेष्टयांस्विष्टकृदर्थेअग्नीवरुणौयष्टव्यौ तत्र त्वंनोअग्नइतिद्वेयाज्यानुवाक्ये सूत्रितञ्च—अग्नीवरुणौस्विष्टकृदर्थेत्वंनोअग्नेवरुणस्यविद्वानितिद्वेइति । अस्नातोयद्यग्निहोत्रंजुहुयात्तदाग्निवारुणीष्टिः तस्यामेतेएवयाज्यानुवाक्ये तदाहुर्यआहिताग्निरित्युपक्रम्याम्नातं तस्ययाज्यानुवाक्ये त्वंनोअग्नेवरुणस्यविद्वान्सत्वंनोअग्नेवमोभवोतीति ।

सैषाचतुर्थी—

त्वंनो॑अग्ने॒वरु॑णस्यवि॒द्वान्दे॒वस्य॒हेळोऽव॑यासिसीष्ठाः ।
यजि॑ष्ठो॒वह्नि॑तमः॒शोशु॑चानो॒विश्वा॒द्वेषां॑सि॒प्रमु॑मुग्ध्य॒स्मत् ॥४॥

त्वम् । नः॒ । अ॒ग्ने॒ । वरु॑णस्य । वि॒द्वान् । दे॒वस्य॑ । हेळः॑ । अव॑ ।
या॒सि॒सी॒ष्ठाः॒ । यजि॑ष्ठः । वह्नि॑ऽतमः । शोशु॑चानः । विश्वा॑ ।
द्वेषां॑सि । प्र । मु॒मु॒ग्धि॒ । अ॒स्मत् ॥ ४ ॥

हेअग्ने विद्वान्सर्वपुरुषार्थसाधनोपायज्ञस्त्वं देवस्य द्योतमानस्यवरुणस्यहेळःक्रोधान्नः अस्मत्संबन्धिनःवरुणकर्तृकान्पाशग्रहणान् अवयासिसीष्ठाः अपनय किञ्च यजिष्ठोयष्टृतमः वह्नितमो हविषामतिशयेनवोढा शोशुचानोतिशयेनदीप्यमानस्त्वं विश्वा सर्वाणिद्वेषांसि पापानि द्वेष्टॄणि रजांसिनाऽस्मदस्मत्तः प्रमुमुग्धि प्रकर्षेणमोचय ॥ हेळः हेडृअनादरे क्विप् शसिरूपं शसः सुप्त्वादनुदात्तत्वेधातुस्वरः । यासिसीष्ठाः यसेर्ण्यन्तादाशीर्लिङ् यासिसीयुडागमः छन्दस्युभयथेतिलिङःसार्वधातुकत्वाण्णिलोपाभावः अवपूर्वोयासिर्विनाशेवर्तते । मुमुग्धि मुञ्चतेर्लोटि रूपं बहुलंछन्दसीतिशपः श्लुः ॥ ४ ॥

अथपञ्चमी—

सत्वंनोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौ ।
अवयक्ष्वनोवरुणंरराणोवीहिमृळीकंसुहवोनएधि ॥ ५ ॥ १२ ॥

सः । त्वम् । नः । अग्ने । अवमः । भव । ऊती । नेदिष्ठः । अस्याः । उषसः । विऽउष्टौ । अव । यक्ष्व । नः । वरुणम् । रराणः । वीहि । मृळीकम् । सुऽहवः । नः । एधि ॥ ५ ॥ १२ ॥

हेअग्ने सतादृशस्त्वमूती ऊत्या रक्षणेननोऽस्माकं अवमः अर्वाचीनः प्रत्यासन्नःसन् अस्याउषसोव्युष्टौव्युच्छन्नेप्रातःकालेअग्निहोत्रादिकर्मसिद्ध्यर्थंनेदिष्ठोभव अतिशयेनास्मदन्तिकस्थोभव यद्वा ऊत्यागमनेनास्माकमवमोरक्षकोभव किञ्च नोस्माकंवरुणं वरुणकृतंजलोदरादिरोगमुआवरकंपापंवा अवयक्ष्व अवयज विनाशयेत्यर्थः रराणः अस्माभिर्दत्तेहविषिरममाणः यद्वा यजमानेभ्योत्यन्तंफलप्रदस्त्वं मृळीकं सुखकरमिदंहविः वीहि भक्षय किञ्च नोस्माकं सुहवःशोभनाह्वानोपेतः एधिभव ॥ नेदिष्ठः अन्तिकशब्दादिष्ठनि अन्तिकबाढयोर्नेदसाधावितिनेदत्यादेशः नित्त्वादाद्युदात्तः । रराणः रमतेःकानचि मकारलोपश्छान्दसः यद्वा रातेर्यङ्लुकिव्यत्ययेनकानच् अभ्यस्तानामादिरित्याद्युदात्तः । एधि अस्तेर्लोटि घ्वसोरेद्धावभ्यासलोपश्चेति एइत्यादेशः तस्यासिद्धत्वात् हुझल्भ्योहेर्धिः निपातः ॥ ५ ॥

॥ इतितृतीयस्यचतुर्थेद्वादशोवर्गः ॥ १२ ॥

अथषष्ठी—

अस्यश्रेष्ठासुभगस्यसंदृग्देवस्यचित्रतमामर्त्येषु ।
शुचिघृतंनतप्तमघ्न्यायाःस्पार्हादेवस्यमंहनेवधेनोः ॥ ६ ॥

अस्य । श्रेष्ठा । सुऽभगस्य । सम्ऽदृक् । देवस्य । चित्रऽतमा । मर्त्येषु । शुचि । घृतम् । न । तप्तम् । अघ्न्यायाः । स्पार्हा । देवस्य । मंहनाऽइव । धेनोः ॥ ६ ॥

अस्यसुभगस्य सुष्ठुभजनीयस्याग्नेर्देवस्यश्रेष्ठा अतिशयेनप्रशस्या संदृक् संदृष्टिर्मर्त्येषुचित्रतमातिशयेनचायनीयापूजनीयाभवति स्पार्हा सर्वैःस्पृहणीयाचभवति तत्रदृष्टान्तः–यथादेवस्यक्षीरंकामयमानस्यपुरुषस्यअघ्न्याः अहन्तव्यायागोः शुचितेजोयुक्तंघृतंक्षरणयुक्तंतप्तंशृतं क्षीरंस्पृहणीयंभवति तत्रैवदृष्टान्तान्तरं–यथा गांभिक्षमाणस्यमर्त्यस्यधेनोःदोग्ध्र्यागोर्मंहनेव मंहतिर्दानकर्मा दानंयथाप्रियकरंभवतितद्वत् ॥ सुभगस्य आद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम् । स्पार्हा कर्षात्वतोघञोन्तउदात्तः । देवस्य दीव्यतीतिदेवः दीव्यतेःकान्त्यर्थस्यपचाद्यचिरूपम् ॥ ६ ॥

अथसप्तमी–

त्रिरस्यतापरमासन्तिसत्यास्पार्हादेवस्यजनिमान्यग्नेः ।
अनन्तेअन्तःपरिवीतआगाच्छुचिःशुक्रोअर्योरोरुचानः ॥ ७ ॥

त्रिः । अस्य । ता । परमा । सन्ति । सत्या । स्पार्हा । देवस्य । जनिमानि । अग्नेः । अनन्ते । अन्तरिति । परिऽवीतः । आ । अगात् । शुचिः । शुक्रः । अर्यः । रोरुचानः ॥ ७ ॥

अग्नेरग्न्यभिमानिनोऽस्यदेवस्यत्रिःत्रीणि अग्निवायुसूर्यात्मनात्रीणि तातानिप्रसिद्धानि परमा उत्तमानि सत्या यथार्थभूतानि जनिमानि जन्मानि स्पार्हा सर्वैः स्पृहणीयानिसन्ति यद्वा अग्नेरेवत्रीणिजन्मानि दिवस्परिप्रथमंजज्ञेअग्निरिति त्रीणिजानापरिभूषन्त्यस्येत्येवमादिषुमन्त्रेषु प्रसिद्धानि । अनन्तेअपर्यन्तेनभस्यन्तर्मध्येस्वतेजसापरिवीतः परिवेष्टितः शुचिः सर्वस्य शोधकः शुक्रोदीप्तियुक्तः अतएवरोरुचानःभृशंदीप्यमानः अर्यः स्वामी तादृशोदेवः अगात् अस्मदीयंयज्ञंप्रत्यागच्छतु ॥ सत्या शेश्छन्दसिबहुलमितिशेर्लुक् । परिवीतः व्येञ्संवरणे कर्मणिक्तः यजादित्वात्संप्रसारणं गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । अर्यः ऋगतौ अर्यः स्वामिवैश्ययोरितियत्प्रत्ययान्तोनिपातितः स्वामिन्यन्तोदात्तत्वंवक्तव्यमित्यन्तोदात्तत्वम् ॥ ७ ॥

---

१ ऋ० सं० ७. ८. २८. । २ ऋ० सं० १. ७. १. ।

अथाष्टमी–

**सदूतोविश्वेदभिवंष्टिसद्माहोताहिरंण्यरथोरंसुंजिह्वः ।**
**रोहिदंश्वोवपुष्योविभावासदांरण्वःपितुमतींवसंसत् ॥ ८ ॥**

सः । दूतः । विश्वा । इत् । अभि । वष्टि । सद्म । होता ।
हिरंण्यऽरथः । रम्ऽसुजिह्वः । रोहित्ऽअश्वः । वपुष्यः ।
विभाऽवा । सदा । रण्वः । पितुमतींऽइव । सम्ऽसत् ॥ ८ ॥

देवानांदूतः होता देवानामाह्वाता हिरण्यरथः सुवर्णमयरथोपेतः रंसुजिह्वःरमणीयशोभनज्वालोपेतः सताद्दशोऽग्निः विश्वेत्सर्वाण्येवसद्म देवयजनस्थानानि अभिवष्टिकामयते पुनश्चकीदृशः रोहिदश्वः रोहितवर्णाअश्वायस्यसतथोक्तः वपुष्यः वपुषिरूपेसाधुः विभावा कान्तियुक्तः अतएवसदासर्वदारण्वोरमणीयोभवति तत्रदृष्टान्तः–पितुमतीवसंसत् यथान्नादिवत्समृद्धंगृहंरमणीयंतद्वत् ॥ रंसुजिह्वः रमतेरन्येभ्योपिदृश्यतइतिविच् बहुव्रीहौपूर्वपदस्वरः । वपुष्यः तत्रसाधुरितियत् तित्स्वरितः । विभावा छन्दसीवनिपावितिवनिप् ॥ ८ ॥

अथनवमी–

**सचेतयन्मनुषोयज्ञबंन्धुःप्रतंमह्यारंशनयांनयन्ति ।**
**सक्षेत्यस्यदुर्यासुसाधंन्देवोमर्तस्यसधनित्वमाप ॥ ९ ॥**

सः । चेतयत् । मनुषः । यज्ञऽबन्धुः । प्र । तम् । मह्या । रशनयां ।
नयन्ति । सः । क्षेति । अस्य । दुर्यासु । साधन् । देवः । मर्तस्य ।
सधनिऽत्वम् । आप ॥ ९ ॥

यज्ञबन्धुः यज्ञेग्निहोत्रादौबन्धनंविनियोजनंयस्यसतथोक्तः सोग्निर्मनुषः कर्मणिप्रवृत्तान्मनुष्यान्चेतयत्जानाति मह्या महत्यारशनयास्तुतिरूपयारज्ज्वायुक्तं तंताद्दशमग्निंप्रणयन्ति उत्तरवेद्यादिषु अध्वर्य्वादयःप्रक्षिपन्ति मर्तस्य मनुष्यस्यास्ययजमानस्यदुर्यासु गृहेषु साधन् अभीष्टानिसाधयन्सोऽग्निःक्षेतिवसति सदेवोद्योतमानोऽग्निः सधनित्वं यस्यगृहेनिवसतितेनधनिनासाहित्यमाप प्राप्नोति प्रभूतंधनंयजमानायदापयित्वातेनसहितोभवदित्यर्थः ॥ साधन् राधसाधसंसिद्धौ ण्यन्तस्यशतरिरूपम् ॥ ९ ॥

अथदशमी–

सतूनौअग्निर्नयतुप्रजानन्नच्छारत्नंदेवभक्तंयदस्य ।
धियायद्विश्वेअमृताअकृण्वन्द्यौष्पिताजनितासत्यमुक्षन् ॥१०॥१३

सः । तु । नः । अग्निः । नयतु । प्रऽजानन् । अच्छ । रत्नम् ।
देवऽभक्तम् । यत् । अस्य । धिया । यत् । विश्वे । अमृताः ।
अकृण्वन् । द्यौः । पिता । जनिता । सत्यम् । उक्षन् ॥ १० ॥१३॥

प्रजानन्सर्वंजानानःसोऽग्निः देवभक्तं देवैर्देवनशीलैः स्तोतृभिःसंभजनीयम् अस्याग्नेःसंबन्धियदुत्तमंरत्नंधनमस्तितद्रत्नमच्छाभिमुख्येनतुक्षिप्रंनोऽस्मान्नयतुप्रापयतु अमृताःमरणधर्मरहिताःविश्वेसर्वेदेवाःधियाहर्लक्षणेनकर्मणाहेतुना यत्यमग्निं अकृण्वन् हविषांप्रापयितारमकुर्वन् यस्यचाग्नेःद्यौः पितापालयित्रीजनिताजनयित्रीच अग्नेदिवःसूनुरसिप्रचेताइतिश्रवणात् । यद्वा द्यौर्देवनशीलआदित्यः पिताजनयिताच आदित्यादग्निरित्याम्नानात् । सत्यंयथार्थभूतं तमग्निमुक्षन् घृताद्याहुतिभिरध्वर्य्वादयःसिञ्चन्ति ॥ देवभक्तं भजसेवायां कर्मणिक्तः तृतीया कर्मणीतिपूर्वपदप्रकृतिस्वरः । उक्षन् उक्षसेचने लङिरूपं बहुलंछन्दसीत्यडभावः ॥ १० ॥

॥ इतितृतीयस्यचतुर्थेत्रयोदशोवर्गः ॥ १३ ॥

अथैकादशी–

सजायतप्रथमःपस्त्यासुमहोबुध्नेरजसोअस्ययोनौ ।
अपादशीर्षागुहमानोअन्तायोयुवानोवृषभस्यनीळे ॥ ११ ॥

सः । जायत । प्रथमः । पस्त्यासु । महः । बुध्ने । रजसः । अस्य ।
योनौ । अपात् । अशीर्षा । गुहमानः । अन्ता । आऽयोयुवानः ।
वृषभस्य । नीळे ॥ ११ ॥

सोऽग्निःप्रथमआहवनीयादिरूपतयाश्रेष्ठःसन् पस्त्यासु यजमानानांगृहेषु जायत अजायत आहुत्यधिकरणतयासंपद्यते तथा महोमहतोऽस्यरजसोन्तरिक्षस्यबुध्नेमूलेपृथिव्यांतत्रापियोनावुत्तरवेद्यादिस्थानेसंपद्यते सोग्निरपात् पादवर्जितः अशीर्षा शिरोवर्जितः तदेवाह–

१ ऋ० सं० ३. १. २५.।

अन्ता आद्यन्तेपादशिरसीगुहमानः अविज्ञेयपादशिराइत्यर्थः वृषभस्य वर्षणसमर्थस्यमेघस्य नीळे निलयेनभसि आयोयुवानः धूमाकारेणात्मानमायोजयन्वर्तते यद्वा यःप्रथमोवैद्युतोग्निः पस्त्यासुनदीषुबुध्नेन्तरिक्षेमहोमहतोरजसउदकस्यतेजसोवा योनौ स्थानेच चराति अपादशीर्षापादशिरोवर्जिता अन्ता आत्मनःपर्यन्तप्रदेशान् स्वतेजसागुहमानःआच्छादयन् पुनश्चायोयुवानः तानितेजांसिस्वात्मनिमिश्रीकुर्वन् वृषभस्यमेघस्यनीळेस्थानेनभसिचरति सोग्निरधुनाकर्मयोग्यतयाजायत ॥ अपात् पादस्यलोपोहस्त्यादिभ्यइत्यकारलोपः समासान्तः । गुहमानः गुहूसंवरणे शब्विकरणी शानचिरूपं शानचोलसार्वधातुकस्वरेकृतेप्रत्ययस्वरः । आयोयुवानः युमिश्रणे यङ्लुकिशानचिरूपम् अभ्यस्तस्वरेणाद्युदात्तः ॥ ११ ॥

अथद्वादशी—

प्रशर्धँआर्तप्रथमंविपन्यँऋतस्ययोनावृषभस्यनीळे ।
स्पार्होयुवावपुष्योविभावासप्तप्रियासोजनयन्तवृष्णे ॥ १२ ॥

प्र । शर्धः । आर्त । प्रथमम् । विपन्या । ऋतस्य । योना । वृषभस्य । नीळे । स्पार्हः । युवा । वपुष्यः । विभाऽवा । सप्त । प्रियासः । अजनयन्त । वृष्णे ॥ १२ ॥

हेअग्ने विपन्या स्तुत्यायुक्तम् ऋतस्योदकस्य योनौ स्थाने वृषभस्य वर्षणसमर्थस्यमेघस्य नीळे कुलायभूतेन्तरिक्षे वैद्युताग्निरूपेणत्वांवर्तमानंशर्धस्तेजः प्रथमंप्रार्त प्रकर्षेण गच्छति यश्चाग्निःस्पार्हः सर्वैःस्पृहणीयः युवा नित्यतरुणः वपुष्यःकमनीयः विभावा दीप्तिमान् तस्मैवृष्णे अभिमतफलवर्षकायाग्नये प्रियासः प्रियाःसप्तहोत्रकाः अजनयन्त स्तोत्रमकुर्वन् ॥ आर्त ऋगतौ लङि व्यत्ययेनात्मनेपदं निपातः । विपन्या पनचेत्यस्य इन्प्रत्ययः कृदिकारादक्तिनइतिङीष् प्रत्ययस्वरेणान्तोदात्तः उदात्तयणोहल्पूर्वादितिविभक्तेरुदात्तत्वम् । विपन्यँऋतस्येत्यत्र संहितायामिकोसवर्णेशाकल्यस्यह्रस्वश्चेत्यनिकोपिह्रस्वः अनुनासिकश्च ॥ १२ ॥

अथत्रयोदशी—

अस्माकमत्रपितरोमनुष्याअभिप्रसेदुर्ऋतमाशुषाणाः ।
अश्मव्रजाःसुदुघावव्रेअन्तरुदुस्राआजन्नुषसोहुवानाः ॥ १३ ॥

अस्माकम् । अत्र । पितरः । मनुष्याः । अभि । प्र । सेदुः । ऋतम् ।
आशुषाणाः । अश्मऽव्रजाः । सुऽदुघाः । व्रव्रे । अन्तः । उत् ।
उस्राः । आजन् । उषसः । हुवानाः ॥ १३ ॥

अत्रलोके पूर्वेमनुष्याःअस्माकंपितरोङ्गिरसः ऋतंयज्ञमाशुषाणाः अश्नुवानाःसन्तः अभिप्रसेदुः अग्निमभिलक्ष्यप्रजग्मुः तेङ्गिरसः अग्निपरिचर्याबलात् अश्मव्रजाःपर्वतैःपरिवृताःवव्रेवृणोत्याच्छादयतीतिवव्रं पर्वतबिलान्तर्वर्तितमः तस्मिन्नन्तर्मध्येस्थिताः सुदुघाः सुष्ठुदोग्ध्रीः उस्राः पणिभिरपहृतागाः उदाजन् तस्माद्बिलान्निरगमयन् किंकुर्वन्तः तमसो विध्वंसिनीरुषसोदेवीःप्रकाशार्थं हुवानाआह्वयन्तः ॥ वव्रे वृणोतेरौणादिकः कःकृञादीनांद्वेभवतइतिद्विर्वचनम् ॥ १३ ॥

अथचतुर्दशी—

**तेमर्मृजतदद्दृवांसोअद्रिंतदेषामन्येअभितोविवोचन् ।**
**पश्वयन्त्रासोअभिकारमर्चन्विदन्तज्योतिश्चकृपन्तधीभिः॥१४॥**

ते । मर्मृजत । दद्दृऽवांसः । अद्रिम् । तत् । एषाम् । अन्ये ।
अभितः । वि । वोचन् । पश्वऽयन्त्रासः । अभि । कारम् ।
अर्चन् । विदन्त । ज्योतिः । चकृपन्त । धीभिः ॥ १४ ॥

तेङ्गिरसः अद्रिंपणिभिरपहृतानांगवांनिरोधकंपर्वतं दद्दृवांसोविदारयन्तःसन्तः मर्मृजत अग्निंपर्यचरन् एषामङ्गिरसांतत्तादृशंकर्म अन्येमहर्षयोभितःसर्वत्रजगतिविवोचन् विशेषेण अकथयन् पश्वयन्त्रासः पशुनिर्गमनार्थानियन्त्राणिउपायायेषांतेङ्गिरसः कारं अभिमतस्यप्रयोजनस्यकर्तारमग्निमभ्यर्चयन्नस्तुवन् ततस्तमोपहम् आदित्याख्यंज्योतिर्विदन्तालभन्त ततो धीभिर्बुद्धिभिश्चकृपन्त यज्ञानकुर्वन् ॥ मर्मृजत मृजूष्शुद्धौ यङ्लुकि लङि व्यत्ययेनात्मनेपदं निपातः । चकृपन्त कृपूसामर्थ्ये ण्यन्तस्यलुङिचङि सन्वद्भावाभावश्छान्दसः ॥ १४ ॥

अथपञ्चदशी—

**तेगव्यतामनसादृध्रमुब्धंगायेमानंपरिषन्तमद्रिम् ।**
**दृह्ळंनरोवचसादैव्येनव्रजंगोमन्तमुशिजोविवव्रुः॥१५॥१४॥**

ते । गव्यता । मनसा । दृध्रम् । उब्धम् । गाः । येमानम् । परि ।
सन्तम् । अद्रिम् । दृळ्हम् । नरः । वचसा । दैव्येन । व्रजम् ।
गोऽमन्तम् । उशिजः । वि । वव्रुरितिवव्रुः ॥ १५ ॥ १४ ॥

नरः कर्मणांनेतारः उशिजोऽग्निंकामयमानास्तेऽङ्गिरसः गव्यतागाइच्छतामनसादृध्रं गवां निर्गमनद्वारनिरोधकमुब्धं समुब्धंसंहतं यद्वा उभिःपूरणार्थः गोभिः पूर्णंगाः येमानंनियच्छन्तं परिसर्वतःसन्तंवर्तमानंदृह्ळंदृढंगोमन्तं गोभिर्युक्तंव्रजं गवांनिवासस्थानम् अद्रिंपर्वतं दैव्येनाग्निविषयेणवचसावेदात्मकेनस्तोत्रेण विवव्रुः गोनिर्गमनार्थमुद्घाटितवन्तः ॥ उब्धम् उभ्नातिर्हन्तिनासमानार्थः यद्वा उम्भपूरणे कर्मणिक्तः । येमानं यमेःकानचि एत्वाभ्यासलोपौ चित्त्वादन्तोदात्तः । परिषन्तमित्यत्रसंहितायामुपसर्गप्रादुर्भ्यामस्तिर्यच्परइतिषत्वम् ॥ १५ ॥

॥ इतितृतीयस्यचतुर्थेचतुर्दशोवर्गः ॥ १४ ॥

अथषोडशी—

तेमन्वतप्रथमंनामधेनोस्त्रिःसप्तमातुःपरमाणिविन्दन् ।
तज्जानतीरभ्यनूषतव्राआविर्भुवदरुणीर्यशसागोः ॥ १६ ॥

ते । मन्वत । प्रथमम् । नाम । धेनोः । त्रिः । सप्त । मातुः ।
परमाणि । विन्दन् । तत् । जानतीः । अभि । अनूषत ।
व्राः । आविः । भुवत् । अरुणीः । यशसा । गोः ॥ १६ ॥

हेअग्ने तेस्तोत्रंकुर्वाणाअङ्गिरसः मातुर्जनन्याधेनोर्वाचः संबन्धिनाम स्तुतिसाधकं शब्दमात्रं प्रथमंपूर्वमन्वत अजानत पश्चात्तस्यावाचःसंबन्धीनि त्रिःसप्त एकविंशतिसंख्याकानि स्तुतिसाधनानि छन्दांसि तानिच गायत्र्यादीनिजगत्यन्तानिसप्तअतिजगत्यादीन्यतिधृत्यन्तानिसप्तकृतिप्रभृतीन्युत्कृतिपर्यन्तानिसप्तेति एवं त्रिःसप्तच्छन्दांसि परमाण्युत्तमानिविन्दन्नलभन्त एवंविधच्छन्दोयुक्तैर्मन्त्रैरग्निमस्तुवन्नित्यर्थःतत्तः जानतीः सर्वंजानानाः व्राः व्राइत्युषोनाम उषसः अभ्यनूषत अस्तुवन् ततोगोःसूर्यस्ययशसातेजसासह अरुणीः अरुणवर्णोषाः आविर्भुवत् आविरभूत् । यद्वा तेऽङ्गिरसः प्रथमंपुरातनंनाम एहि सुरभिगुग्गुलुगन्धिनीति धेनोर्नामधेयं मन्वतोच्चारयामासुः मातुर्भूम्याः स्वभूतानिपणिभिरपहृतानि त्रिःसप्तरत्नानिविन्दन् तदुच्चारितंनामजानन्त्योगावः अभ्यनूषत हंभारवलक्षणंशब्दमकुर्वन् तदानीमुषाःप्रादुरभूदिति ॥ जानतीः शतुरनुमोनद्यजादी

इतिङीपउदात्तत्वम् । अनूषत णुस्तुतौ लुङिरूपं कुटादित्वादगुणः । अरुणीः सोरलोपश्छान्दसोगौरीर्मिमायेतिवत् ॥ १६ ॥

अथसप्तदशी–

नेशत्तमोदुधितंरोचतद्यौरुद्देव्याउषसोभानुरर्त ।
आसूर्योबृहतस्तिष्ठदज्राँऋजुमर्तेषुवृजिनाचपश्यन् ॥ १७ ॥

नेशत् । तमः । दुधितम् । रोचत । द्यौः । उत् । देव्याः । उषसः ।
भानुः । अर्त । आ । सूर्यः । बृहतः । तिष्ठत् । अज्रान् ।
ऋजु । मर्तेषु । वृजिना । च । पश्यन् ॥ १७ ॥

तमः रात्रिकृतंध्वान्तंदुधितं दुधिःप्रेरणकर्मा प्रातरग्निविहरणकाले उषसाप्रेरितंसत् नेशत् अनश्यत् ततोद्यौरन्तरिक्षंरोचतादीप्यत ततोदेव्याः देवनशीलायाउषसोभानुः प्रभा उदत उद्गच्छति अथ सूर्यः बृहतोमहतः अज्रानजरान्पर्वतान्गमनशीलान्रश्मीन्वा आतिष्ठदध्यतिष्ठत् किंकुर्वन् मर्त्येषुमनुष्येषु विद्यमानमृजुसत्कर्म वृजिना वृजिनानि अनृजून्यसत्कर्माणिच पश्यन्नध्यतिष्ठदितिशेषः ॥ नेशत् णशअदर्शने लुङि णशिमन्योरलिङ्येत्वंवक्तव्यमित्येत्वं शपः पित्त्वादनुदात्तत्वेधातुस्वरः । रोचत रुचदीप्तौ लङिरूपं वाक्यभेदादनिघातः ॥ १७ ॥

अथाष्टादशी–

आदित्पश्चाबुबुधानाव्यख्यन्नादिद्रत्नंधारयन्तद्युभक्तम् ।
विश्वेविश्वासुदुर्यासुदेवामित्रधियेवरुणसत्यमस्तु ॥ १८ ॥

आत् । इत् । पश्चा । बुबुधानाः । वि । अख्यन् । आत् । इत् ।
रत्नम् । धारयन्त । द्युऽभक्तम् । विश्वे । विश्वासु । दुर्यासु ।
देवाः । मित्र । धिये । वरुण । सत्यम् । अस्तु ॥ १८ ॥

आदित्सूर्योदयानन्तरं बुबुधानाः पणिभिरपहृताः निरोधान्निर्गतागाः जानानाः अङ्गिरसः पश्चा पश्चात्पृष्ठचदशोषुव्यख्यन् अशेषेण तागाः अपश्यन् तथा आदिदनन्तरं द्युभक्तं दीप्तियुक्तं देवैःसंभक्तंवा रत्नं पणिभिरपहृतंधनंच धारयन्ताधारयन् लब्धगोधनानामङ्गिरसां विश्वासु दु-

यासु सर्वेषुगृहेषु विश्वेयजनीयाः सर्वेदेवाआजग्मुः हेमित्र मित्रभूत हेवरुणोपद्रवाणांवारक हेअग्ने धिये कर्मणांकर्त्रे स्तोत्रेवा यजमानाय सत्यमस्तु यदेतत्तवोपद्रववारणसामर्थ्यंतद्यथार्थभूतमस्तु ॥ पश्वा पश्वपश्चाचच्छन्दसीतिनिपातितः । बुबुधानाः बुधेर्लिटि कानचिरूपं चित्त्वादन्तोदात्तः । द्युभक्तं भजसेवायां कर्मणिक्तप्रत्ययः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरः ॥ १८ ॥

सूक्तेएकोनविंशी—

अच्छावोचेयशुशुचानमग्निंहोतारंविश्वभरसंयजिष्ठम् ।
शुच्यूधोअतृणन्नगवामन्धोनपूतंपरिषिक्तमंशोः ॥ १९ ॥

अच्छ । वोचेय । शुशुचानम् । अग्निम् । होतारम् ।
विश्वऽभरसम् । यजिष्ठम् । शुचि । ऊधः । अतृणन् । न । गवाम् ।
अन्धः । न । पूतम् । परिऽसिक्तम् । अंशोः ॥ १९ ॥

हेअग्ने शुशुचानं भृशंदीप्यमानं होतारं देवानामाह्वातारं विश्वभरसम् आहुतिद्वारावृष्टिप्रदानेन विश्वस्यपोषकं यजिष्ठं यष्टृतममग्निं त्वामच्छाभिलक्ष्यवोचेय स्तवानि गवामूधःशुचि शुद्धंपयःनातृणत् तवआहुत्यर्थंयजमानोनदोग्धि अंशोः सोमलताखण्डस्यसंबन्धि अन्धोरसाख्यमन्नं पूतं दशापवित्रेणशोधितं सन्नपरिषिक्तं गृहेषु नप्रक्षिप्तं किंत्वनेनयजमानेनकेवलंस्तुतिरेवक्रियते ॥ वोचेय ब्रूञआशीर्लिङि ब्रुवोवचिः लिङ्याशिष्यङ् छन्दस्युभयथेतिसार्वधातुकत्वात्सीयुटःसलोपः । अतृणत् उतृदिर्हिंसानादरयोः दोहनमेवऊधोहिंसनम् । परिषिक्तं सिञ्चतेःकर्मणिक्तः उपसर्गात्सुनोतीतिसंहितायांषत्वं गतिरनन्तरइतिगतेःस्वरः ॥ १९ ॥

अथविंशी—

विश्वेषामदितिर्यज्ञियानांविश्वेषामतिथिर्मानुषाणाम् ।
अग्निर्देवानामवआवृणानःसुमृळीकोभवतुविश्ववेदाः ॥२०॥१५॥

विश्वेषाम् । अदितिः । यज्ञियानाम् । विश्वेषाम् । अतिथिः ।
मानुषाणाम् । अग्निः । देवानाम् । अवः । आऽवृणानः । सुऽमृळीकः ।
भवतु । विश्वऽवेदाः ॥ २० ॥ १५ ॥

अयमग्निर्विश्वेषांसर्वेषांयज्ञियानांयज्ञार्हाणांदेवानामदितिः अदितिर्देवमाता तद्वद्देवानांपोषकइत्यर्थः यद्वा विश्वेषांदेवानामदितिः भूस्थानीयः आधारभूतइतियावत् अयंवाग्निर्वैश्वानरइति श्रुतेः । तथायमग्निर्विश्वेषांमानुषाणामतिथिरतिथिवत्पूज्योभवति देवानां देवनशीलानांस्तोतॄणामवोन्नंहविरावृणानःसंभजन् जातवेदाःजातंसर्ववेत्तीतिजातवेदाः सोग्निस्तेषांस्तोतॄणांसुमृळीकः सुखकरो भवतु ॥ अतिथिः अतसातत्यगमने ऋतन्यञ्जीत्यादिनाइथिन्प्रत्ययः नित्त्वादाद्युदात्तः । मानुषाणां मनोरपत्यानीत्यर्थे मनोर्जातावञ्यतौषुक्चेतिअञ्प्रत्ययः षुगागमश्च ञित्त्वादाद्युदात्तः ॥ २० ॥

॥ इतितृतीयस्यचतुर्थेपञ्चदशोवर्गः ॥ १५ ॥

योमर्त्येष्वितिविंशत्यृचंद्वितीयंसूक्तं वामदेवस्यार्षंत्रैष्टुभमाग्नेयं योमर्त्येष्वित्यनुक्रमणिका । अस्यसूक्तस्यप्रातरनुवाकाश्विनशस्त्रयोःपूर्वसूक्तएवविनियोगउक्तः ।

तत्रप्रथमा—

**योमर्त्येष्वमृतंऋतावादेवोदेवेष्वरतिर्निधायि ।**
**होतायजिष्ठोमह्नाशुचध्यैहव्यैरग्निर्मनुषईरयध्यै ॥ १ ॥**

**यः । मर्त्येषु । अमृतः । ऋतऽवा । देवः । देवेषु । अरतिः । निऽधायि । होता । यजिष्ठः । मह्ना । शुचध्यै । हव्यैः । अग्निः । मनुषः । ईरयध्यै ॥ १ ॥**

अमृतः मरणधर्मरहितः योग्निर्मर्त्येषुमनुष्येषु ऋतावा सत्यवान्निधायि निहितः यद्वा मर्त्येषुमनुष्यसंबन्धिषुवागादीन्द्रियेषुनिहितः अग्निर्वाग्भूत्वामुखंप्राविशदितिश्रुतेः । देवोदेवनशीलोयोग्निः इन्द्रादिषुदेवेषुअरतिरभिगन्ताशत्रूणां यद्वा देवलोकेगन्ता निधायि निहितः सचहोतादेवानामाह्वातायजिष्ठोयष्टृतमोग्निः मह्नास्वकीयेनमहतातेजसाशुचध्यै दीपितुमुत्तरवेद्यां निहितः किंच हव्यैर्हवनीयैराज्यपुरोडाशादिभिर्हविर्भिर्हेतुभिर्मनुषोमनुष्यस्ययजमानस्यईरयध्यै स्वर्गप्रतिप्रेरणायनिहितः ॥ अरतिः ऋगतौ वहिवस्यर्तिभ्याश्चिदिति अतिप्रत्ययः चित्त्वादन्तोदात्तः । निधायि दधातेःकर्मणिलुङिरूपं परादिश्छन्दसीत्युत्तरपदाद्युदात्तत्वम् । शुचध्यै शुचदीप्तौ तुमर्थेकध्यैप्रत्ययः कित्त्वादगुणः प्रत्ययस्वरः । ईरयध्यै ईरयतेस्तुमर्थेशध्यैप्रत्ययः शित्त्वेनसार्वधातुकत्वाण्णिलोपाभावः ॥ १ ॥

१ तै० ब्रा० ३. ९. १७. ।

अथद्वितीया–

इहत्वंसूनोसहसोनोअद्यजातोजाताँउभयाँअन्तरंग्ने ।
दूतईयसेयुयुजानऋष्वऋजुमुष्कान्वृषणःशुक्राँश्च ॥ २ ॥

इह । त्वम् । सूनो इति । सहसः । नः । अद्य । जातः । जातान् ।
उभयान् । अन्तः । अग्ने । दूतः । ईयसे । युयुजानः । ऋष्व ।
ऋजुऽमुष्कान् । वृषणः । शुक्रान् । च ॥ २ ॥

हेसहसःसूनो बलस्यपुत्राग्ने अद्यास्मिन्दिवसेनोऽस्मदीये इहकर्मणिजातः आधानपवमानेष्टिभिःसंस्कृतस्त्वं जातानुत्पन्नानुभयान्देवमनुष्यानन्तः तेषांमध्येदूतः हवींषि देवान्प्रापयितुमीयसे गच्छसि किंकुर्वन् हेऋष्व दर्शनीयाग्ने ऋजुमुष्कान् मुष्कशब्देनमांसलोभिधीयते ऋजवःप्रसाधकाः ऋजवश्चतेमुष्काश्चेतिऋजुमुष्काः तान्वृषणः रेतःसेचनसमर्थान् शुक्रान्दीप्यमानानश्वांश्च युयुजानः स्वरथेयोजयन्नीयसे यद्वा ऋष्व महन्नग्ने युयुजानः हविर्वहनेनियुज्यमानस्त्वं वृषणः हविःसेचनसमर्थान्यजमानान्देवांश्चईयसे ॥ सूनोसहसः परमपिछन्दसीतिसहसःपराङ्गवद्भावाद्वयोःसर्वानुदात्तत्वम् । ईयसे ईङ्गतौ दिवादिः निघातः । युयुजानः युजेर्वर्तमानेलिटि कानचिरूपम् । ऋष्व संहितायामृत्यकइतिप्रकृतिभावः । ऋजुमुष्कान् समासस्वरः ॥ २ ॥

अथतृतीया–

अत्यावृधस्नूरोहिताघृतस्नूऋतस्यमन्येमनसाजविष्ठा ।
अन्तरीयसेअरुषायुजानोयुष्मांश्चदेवान्विशआचमर्तान् ॥ ३ ॥

अत्या । वृधस्नू इति वृधऽस्नू । रोहिता । घृतस्नू इति घृतऽस्नू ।
ऋतस्य । मन्ये । मनसा । जविष्ठा । अन्तः । ईयसे । अरुषा ।
युजानः । युष्मान् । च । देवान् । विशः । आ । च । मर्तान् ॥ ३ ॥

हेअग्ने ऋतस्यसत्यभूतस्यतवसंबन्धिनौमनसामनसोपिजविष्ठा वेगवत्तमौ वृधस्नू वर्धयतीतिवृधमन्नंतत्क्षरन्तौ घृतस्नू घृतमुदकं तत्स्रवन्तौ रोहितवर्णौअत्याअश्वौ मन्येस्तौमि अरुषा आरोचमानौ तावश्वौ युजानोरथेयुजानस्त्वं युष्मान्देवेष्वग्नेरन्तर्भावाद्यजनीयरूपेणकीर्तनं

युष्मान्यष्टव्यान्देवान्विशः परिचारकान्मर्तान्मनुष्यानन्तः षष्ठ्यर्थेद्वितीया तेषांमध्ये आसमन्तादीयसे हविःस्वीकर्तुंयजमानान्गच्छसि तद्धविः प्रदातुं देवान्गच्छसि ॥ मन्ये मन्यतिरर्चतिकर्मा । मनसा सुपांसुलुगितिपञ्चम्याआकारः । युजानः युजिर्योगे युधिबुधिदृशेःकिच्चेतिआनच्प्रत्ययः चित्त्वादन्तोदात्तः ॥ ३ ॥

अथचतुर्थी–

अर्यमणंवरुणंमित्रमेषामिन्द्राविष्णूमरुतोअश्विनोत ।
स्वश्वोअग्नेसुरथःसुराधाएदुवहसुहविषेजनाय ॥ ४ ॥

अर्यमणम् । वरुणम् । मित्रम् । एषाम् । इन्द्राविष्णू इति । मरुतः ।
अश्विना । उत । सुऽअश्वः । अग्ने । सुऽरथः । सुऽराधाः । आ ।
इत् । ऊँ इति । वह । सुऽहविषे । जनाय ॥ ४ ॥

हेअग्ने स्वश्वःशोभनाश्वोपेतः सुरथः शोभनरथः सुराधाः शोभनगन्धोपेतस्त्वम् एषां मर्त्यानांमध्ये सुहविषे शोभनहविष्काय जनाय यजमानाय अर्यमादीनुतापिच अश्विनौ यष्टव्यान्देवानावहेदु आह्वयैव ॥ इन्द्राविष्णू ऋज्रेन्द्रेत्यादिनानिपातनादिन्द्रशब्दआद्युदात्तः देवताद्वन्द्वेचेत्युभयपदप्रकृतिस्वरत्वम् । सुहविषेइत्यत्र नन्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् ॥ ४ ॥

अथपञ्चमी–

गोमाँअग्नेविमाँअश्वीयज्ञोनृवत्सखासदमिदप्रमृष्यः ।
इळावाँएषोअसुरप्रजावान्दीर्घोरयिःपृथुबुध्नःसभावान् ।५।१६।

गोऽमान् । अग्ने । अविऽमान् । अश्वी । यज्ञः । नृवत्ऽसखा ।
सदम् । इत् । अप्रऽमृष्यः । इळाऽवान् । एषः । असुर । प्रजाऽवान् ।
दीर्घः । रयिः । पृथुऽबुध्नः । सभाऽवान् ॥ ५ ॥ १६ ॥

हेअसुर बलवन् हेअग्ने एषःमदीयोयंयज्ञः गोमान्गोभिस्तद्वान् अविमान् अवयःमेषाअस्यसन्तितद्वान् अश्वी अश्वोपेतश्चास्तु नृवत्सखा नरः कर्मणांनेतारोध्वर्य्वादयस्तद्वन्तः सखायोऽनुष्ठातारोयजमानायस्यसतथोक्तः सदमित् सदैवअप्रमृष्यः अप्रमृष्यश्चास्तु तथा इळावान् इळाहविर्लक्षणमन्नं तद्वान् प्रजावान् पुत्रपौत्रादियुक्तश्चास्तु दीर्घःअविच्छिन्नानुष्ठानो-

पेतः रयिर्धनवान् लुप्तमत्वर्थीयः पृथुबुध्नः पृथूनिबहुलानिबुध्नानिधनादीनिकारणानियस्य सतथोक्तः सभावान् उपद्रष्टृरूपसभायुक्तश्चास्तु ॥ नृवत्सखा नरोयेषांसन्तीतिनृवत् मतुप् तस्य छान्दसंवत्वं ह्रस्वनुड्भ्यांमतुबितिमतुपउदात्तत्वं बहुव्रीहौपूर्वपदस्वरः ॥ ५ ॥

॥ इतितृतीयस्यचतुर्थेषोडशोवर्गः ॥ १६ ॥

अथषष्ठी-

**यस्तइध्मंजभरत्सिष्विदानोमूर्धानंवाततपतेत्वाया ।**
**भुवस्तस्यस्वतवाँ॑ पायुरग्नेविश्वस्मात्सीमघायतउरुष्य ॥ ६ ॥**

यः । ते । इध्मम् । जभरत् । सिस्विदानः । मूर्धानम् । वा । ततपते । त्वाऽया । भुवः । तस्य । स्वऽतवान् । पायुः । अग्ने । विश्वस्मात् । सीम् । अघऽयतः । उरुष्य ॥ ६ ॥

हेअग्ने तेत्वदर्थं यःपुमान्सिष्विदानः स्विद्यद्गात्रःसन् इध्मं त्वत्समिन्धनार्थंकाष्ठमारंजभरदाहरति योवात्वाया त्वत्कामनया मूर्धानं स्वमस्तकं ततपते काष्ठभारेणतापयति तस्यतादृशस्यपुंसः स्वतवान् स्वतवान्धनवानितितलवकारेउक्तं धनवान् भुवःभवसि पायुः पालयितासि सीमेनंविश्वस्मात् अघायत् अघायतः अघंपापमिच्छतः पुरुषादुरुष्यरक्ष ॥ जभरत् हरतेर्लुङिचङिरूपं चङ्यन्यतरस्यामितिचङ्पूर्वस्योदात्तत्वम् । सिष्विदानः ञिष्विदागात्रप्रक्षरणे कानचिरूपं संहितायामादेशप्रत्यययोरितिधातुसकारस्यषत्वम् । त्वाया त्वामात्मनइच्छतीत्यर्थेक्यच् प्रत्ययोत्तरपदयोश्चेतिमपर्यन्तस्यत्वादेशः दकारस्यछान्दसमात्वं क्यजन्ताद्धातोर्भावेअप्रत्ययादित्यकारप्रत्ययः सुपांसुलुगितितृतीयायाआकारः एकादेशस्वरः । भुवः भवतेर्लेट्यडागमेरूपं भूसुवोस्तिङीतिगुणप्रतिषेधः आगमस्यानुदात्तत्वेधातुस्वरः । स्वतवाँ॑पायुरित्यत्र संहितायांस्वतवान्पायावितिनकारस्यरुत्वम् अत्रानुनासिकःपूर्वस्यतुवेतिआकारोनुनासिकः रेफस्यविसर्जनीयः कुप्वो॒क॒पौचेति॒पादेशः । अघायतः अघमात्मनइच्छतीत्यर्थे सुपःक्यच् । अश्वाघस्यादित्यात्वं तदन्ताच्छतृप्रत्ययः शतुरनुमइतिविभक्तेरुदात्तत्वम् । उरुष्य उरुशब्दःकण्ड्वादिः लोटिरूपं निपातः ॥ ६ ॥

अथसप्तमी—

यस्तेभरादन्नियतेचिदन्नंनिशिषन्मन्द्रमतिथिमुदीरत् ।
आदेवयुरिनधतेदुरोणेतस्मिन्रयिर्ध्रुवोअस्तुदास्वान् ॥ ७ ॥

यः । ते । भरात् । अन्निऽयते । चित् । अन्नम् । निऽशिषत् ।
मन्द्रम् । अतिथिम् । उत्ऽईरत् । आ । देवऽयुः । इनधते ।
दुरोणे । तस्मिन् । रयिः । ध्रुवः । अस्तु । दास्वान् ॥ ७ ॥

हेअग्ने यःपुमान् अन्नियते अन्नमिच्छते तेतुभ्यंहविर्लक्षणंपुरोडाशादिकमन्नंभरात् दातुंबिभृयात् चिदितिचार्थे यश्चमन्द्रंमदकरंसोमंनिशिषत् नितरांप्रयच्छति यश्चातिथिमतिथिवत्पूज्यंत्वामुदीरत् उत्तरवेद्यांप्रणयति आअपिच यश्चदेवयुः देवत्वंकामयमानः दुरोणे स्वकीयगृहे इनधतेत्वांसामिद्भिःसमिन्धते तस्मिन्नेतस्मिन्पुरुषेरयिः पुत्रःध्रुवः आस्तिक्यबुद्ध्यावैदिके मार्गेनिश्चलोऽस्तु तथा दास्वान् औदार्योपेतश्चास्तु ॥ भरात् डुभृञ्धारणपोषणयोरित्यस्यलेट्याडागमेरूपं यद्वृत्तयोगादनिघातः । अन्नियते अन्नमात्मनइच्छन् क्यच् क्यचिचेतीत्वं ह्रस्वश्छान्दसः । निशिषत् शासुअनुशिष्टौ लुङि सर्तिशास्त्यर्तिभ्यश्चेतिच्लेरङादेशः शासइदङ्हलोरितीत्त्वम् । उदीरत् ईरगतौ लेटि व्यत्ययेनपरस्मैपदम् अडागमः आगमस्यानुदात्तत्वेधातुस्वरः तिङिचोदात्तवतीतिगतेर्निघातः । इनधते ञिइन्धीदीप्तौ लटि व्यत्ययेनशप् रुधादित्वात् श्नम् श्नान्नलोपइतिधातुनकारस्यलोपः क्ङित्परत्वाभावात्श्नसोरल्लोपाभावः यद्वृत्तयोगादनिघातः श्नमःस्वरः । दास्वान् दासृदाने संपदादिलक्षणोभावेक्विप् तदस्यास्तीतिमतुप् मादुपधाया इतिवत्वं प्रत्ययस्यापित्त्वादनुदात्तत्वेधातुस्वरः ॥ ७ ॥

अथाष्टमी—

यस्त्वादोषायउषसिप्रशंसात्प्रियंवात्वाकृणवतेहविष्मान् ।
अश्वोनस्वेदमआहेम्यावान्तमंहसःपीपरोदाश्वांसम् ॥ ८ ॥

यः । त्वा । दोषा । यः । उषसि । प्रऽशंसात् । प्रियम् । वा ।
त्वा । कृणवते । हविष्मान् । अश्वः । न । स्वे । दमे । आ ।
हेम्याऽवान् । तम् । अंहसः । पीपरः । दाश्वांसम् ॥ ८ ॥

हेअग्ने यःपुमान् दोषा दोषायांरात्रौत्वा त्वांप्रशंसात् संस्तुयात् यश्चोषसि प्रातःकाले त्वां प्रशंसेत् हविष्मान्संभृतहविष्कोयोवायजमानः त्वात्वांप्रियंहविर्भिःप्रीतंकृणवते कुर्यात् आ अथ दाश्वांसं हविर्दत्तवन्तंतंतादृशंयजमानंस्वेदमेस्वकीयेगृहे हेम्यावान् सुवर्णनिर्मितकक्ष्यावानश्वोन अश्वइव संचरंस्त्वम् अंहसःपापरूपाद्दारिद्यात् पीपरः पारंनय तस्मैयजमानायबहुधनंप्रयच्छेत्यर्थः ॥ दोषा सप्तम्याआकारः । प्रशंसात् शंसुस्तुतौ लेट्याडागमेरूपम् । कृणवते कृविहिंसाकरणयोरित्यस्यलेटि धिन्विकृण्व्योरचेत्युप्रत्ययः लेटोडाटावित्यडागमः यद्वृत्तयोगादनिघातः प्रत्ययस्वरः । हेम्यावान् हेमार्हेति छन्दसिचेतियप्रत्ययः । पीपरः पृपालनपूरणयोरित्यस्यण्यन्तस्य लुङिचङिरूपं निघातः ॥ ८ ॥

अथनवमी—

यस्तुभ्यंमग्नेअमृतांयदाशद्दुवस्त्वेकृणवंतेयतस्रुंक् ।
नसरायाशशमानोवियोषन्नैनमंहःपरिवरदघायोः ॥ ९ ॥

यः । तुभ्यम् । अग्ने । अमृताय । दाशत् । दुवः । त्वे इति ।
कृणवते । यतऽस्रुक् । न । सः । राया । शशमानः । वि । योषत् ।
न । एनम् । अंहः । परि । वरत् । अघऽयोः ॥ ९ ॥

हेअग्ने योयजमानः अमृताय मरणधर्मरहिताय तुभ्यंदाशत् हवींषिप्रयच्छेत् यतस्रुक् संयतस्रुक् यश्चयजमानः त्वे त्वयि दुवः परिचर्याकृणवते करोति शशमानः स्तोत्रंकुर्वाणः सयजमानोरायाधनेननवियोषत् नपृथग्भवेत् सदाधनयुक्तोभवेदित्यर्थः अघायोः पापमिच्छतोहिंसकस्यसंबन्धि अंहः आहननंपापमेनं यजमानंनपरिवरत् नपरिवृणुयात् नस्पृशेदित्यर्थः ॥ दाशत् दाशृदाने लेट्यडागमेरूपम् । त्वे सुपांसुलुगितिसप्तम्याःशेआदेशः । कृणवते यद्वृत्तयोगादनिघातः । योषत् युमिश्रणे लेटि सिब्बहुलमितिसिप् अडागमः निघातः । वरत् वृञ् वरणे लेटिरूपम् ॥ ९ ॥

अथदशमी—

यस्यत्वमग्नेअध्वरंजुजोषोदेवोमर्तस्यसुधितंरराणः ।
प्रीतेदसद्धोत्रासायविष्ठासामयस्यविधतोवृधासः ॥ १० ॥ १७ ॥

यस्यं । त्वम् । अग्ने । अध्वरम् । जुजोषः । देवः । मर्तस्य । सुऽधितम् । ररांणः । प्रीता । इत् । असत् । होत्रां । सा । यविष्ठ । असाम । यस्यं । विधतः । वृधासः ॥ १० ॥

हेअग्ने रराणः रममाणः देवोदीप्यमानस्त्वं यस्यमर्तस्य मनुष्यस्यसंबन्धिसुधितंत्वदर्थंसुष्ठुनिहितम् अध्वरमनुपहतंहविर्लक्षणमन्नंजुजोषः सेवसे हेयविष्ठ युवतम सा होत्रा सःहोतायजमानः प्रीतेदसत्प्रीतएवभवेत् असामतस्ययजमानस्यसंबन्धिनोभवेम यस्यविधतः अग्निपरिचर्यांकुर्वतोयजमानस्यहोत्रादयो वृधासः यज्ञस्यवर्धयितारोभवन्ति ॥ जुजोषः जुषीप्रीतिसेवनयोरित्यस्यबहुलंछन्दसीतिश्लुः अडागमः अभ्यस्तस्वरः । सुधितं दधातेर्निष्ठायां सुधितवसुधितेतिनिपातनाद्धयादेशः गतिरनन्तरइतिगतेःस्वरः । असाम अस्तेर्लोटि आडुत्तमस्यपिच्चेत्याडागमः उत्तमस्यपिद्वद्भावादनुदात्तत्वेधातुस्वरः । विधतः विधविधाने तुदादिः शातुरनुमइतिविभक्तेरुदात्तत्वम् ॥ १० ॥

॥ इतितृतीयस्यचतुर्थेसप्तदशोवर्गः ॥ १७ ॥

अथैकादशी–

चित्तिमचित्तिंचिनवद्विविद्वान्पृष्ठेववीतावृजिनाचमर्तान् ।
रायेचनः स्वपत्यायदेवदितिंचरास्वादितिमुरुष्य ॥ ११ ॥

चित्तिम् । अचित्तिम् । चिनवत् । वि । विद्वान् । पृष्ठाऽईव । वीता । वृजिना । च । मर्तान् । राये । च । नः । सुऽअपत्यायं । देव । दितिम् । च । रास्वं । अदितिम् । उरुष्य ॥ ११ ॥

विद्वान्प्राणिनांपुण्यपापरूपाणिकर्माणिजानानः सोग्निः चित्तिं ज्ञातव्यं पुण्यम् अचित्तिम् अनुपादेयत्वेनाचेतनीयंपापं यद्वा चित्तिंज्ञानम् अचित्तिम् अज्ञानं विचिनवत् विचिनोतु पृथक्करोतु तत्रदृष्टान्तः–पृष्ठेव यथाश्वपालोश्वानांवीता कान्तानिवृजिनादुर्वहाणिच पृष्ठा पृष्ठानि ज्ञेयोपादेयत्वेनपृथक्करोतितद्वत् किञ्च मर्तान्पुण्यकृतोऽपुण्यकृतश्चमनुष्यान्पृथक्करोतु हेदेवअग्ने स्वपत्याय शोभनपुत्रोपेताय रायेधनाय नोऽस्मान्कुरु दितिं दातारंचरास्वदेहि अदितिं पञ्चम्यर्थेद्वितीया आदातुःसकाशादुरुष्य रक्ष ॥ चित्तिं चितीसंज्ञाने स्त्रियांक्तिन् नित्त्वादाद्युदा-

स्तः । चिनवत् चिनोतेर्लेट्यडागमः । दिर्तिं दाणूदाने कर्मणिक्तिच् । रास्व रादाने लोटि व्यत्ययेनात्मनेपदं चवायोगेप्रथमेतिननिघातः ॥ ११ ॥

अथद्वादशी–

कविंशंशासुःकवयोदब्धानिधारयन्तोदुर्यास्वायोः ।
अतस्त्वंदृश्याँअग्नएतान्पड्भिःपश्येरद्भुताँअर्यएवैः ॥ १२ ॥

कविम् । शशासुः । कवयः । अदब्धाः । निऽधारयन्तः । दुर्यासु । आयोः । अतः । त्वम् । दृश्यान् । अग्ने । एतान् । पट्ऽभिः । पश्येः । अद्भुतान् । अर्यः । एवैः ॥ १२ ॥

हेअग्ने आयोर्मनुष्यस्यदुर्यासु गृहेषु अदब्धाः केनाप्यतिरस्कृतानिधारयन्तः निवसन्तः कवयः क्रान्तदर्शोदेवाः कविंमेधाविनं त्वांशशासुः होताभवेतिशशंसुः अतःकारणात् अर्यः यज्ञस्यस्वामी त्वं दृश्यान्दर्शनीयानद्भुतानाश्चर्यरूपोपेतानिन्द्रादीनेतान्देवानेवैर्गमनशीलैःपड्भिः पादैःस्वतेजोभिःपश्येः जानीथाः ॥ दृश्यान् दृशिर्प्रेक्षणे ऋदुपधाच्चाकॢपिचृतेरितिकर्मणिक्यप् कित्वादगुणः पित्त्वादनुदात्तत्वेधातुस्वरः ॥ १२ ॥

अथत्रयोदशी–

त्वमग्नेवाघतेसुप्रणीतिःसुतसोमायविधतेयविष्ठ ।
रत्नंभरशशमानायघृष्वेपृथुश्चन्द्रमवसेचर्षणिप्राः ॥ १३ ॥

त्वम् । अग्ने । वाघते । सुऽप्रनीतिः । सुतऽसोमाय । विधते । यविष्ठ । रत्नम् । भर । शशमानाय । घृष्वे । पृथु । चन्द्रम् । अवसे । चर्षणिऽप्राः ॥ १३ ॥

हेयविष्ठ युवतम घृष्वे दीप्तियुक्त यद्वा परेषांवर्षणशील हेअग्ने चर्षणिप्राः अपेक्षितफलप्रदानेनमनुष्याणांकामपूरकः सुप्रनीतिः सुष्ठूत्तरवेद्यांप्रणयनीयस्त्वं सुतसोमायविधतेत्वपरिचरणंकुर्वतेशशमानायत्वांस्तुवतेवाघतेयज्ञनिर्वाहकाययजमानाय पृथु प्रभूतं चन्द्रमाह्लादकारिरत्नमुत्तमंधनम् अवसे रक्षणायभर आहर प्रयच्छेत्यर्थः ॥ सुप्रणीतिः णीञ्प्रापणे

कर्मणीक्तिन् तादौचनितिकृतीतिअनन्तरप्रशब्दस्योदात्तत्वम् । पृथुश्चन्द्रामित्यत्रसंहितायां ह्स्वाच्चन्द्रोत्तरपदेमन्त्रेइतिसुडागमः श्चुत्वेनशकारः ॥ १३ ॥

अथचतुर्दशी–

अधाह्यद्वयमग्नेत्वायापड्भिर्हस्तेभिश्चकृमातनूभिः ।
रथंनक्रन्तोअपसाभुरिजोर्ऋतंयेमुःसुध्यआशुषाणाः ॥ १४ ॥

अध । ह । यत् । वयम् । अग्ने । त्वाऽया । पट्ऽभिः । हस्तेभिः । चकृम । तनूभिः । रथम् । न । क्रन्तः । अपसा । भुरिजोः । ऋतम् । येमुः । सुऽध्यः । आशुषाणाः ॥ १४ ॥

हेअग्ने अधह अथखलु वयंत्वाया त्वत्कामनया पड्भिः पादैःहस्तेभिः हस्तैस्तनूभिरन्यैश्चावयवैश्चकृम यत्यस्मात्कारणात् कर्मसिद्ध्यर्थं त्वामुपपादयामः तस्मात्सुध्यः सुकर्माणः आशुषाणाः कर्माणिव्याप्नुवन्तः तेङ्गिरसः ऋतं सत्यभूतं त्वांभुरिजोः बिभ्रतःकर्मकरणसामर्थ्यंपदार्थान्वेतिभुरिजौ बाहू तयोःअपसामन्थनाख्येनकर्मणायेमुः उद्यच्छन्ति तत्रदृष्टान्तः– रथंन यथा क्रन्तः कारवः शिल्पिनः क्रामन्तोध्वगावाहस्तयोर्यथारथमुद्यच्छन्तितद्वत् यद्वा भुरिजोः देवान्मनुष्यांश्च बिभृतइतिभुरिजौ द्यावापृथिव्यौ तयोर्मध्ये अपसापरिचरणकर्मणासत्यभूतंतमग्निं येमुरुद्यच्छन्ति ॥ अध संहितायांनिपातस्यचेतिदीर्घः । क्रन्तः करोतेःशतरि बहुलंछन्दसीतिविकरणस्यलुक् प्रत्ययस्वरः । भुरिजोः डुभृञ्धारणपोषणयोः भृञउच्चेतीजिप्रत्ययेधातोर्ऋकारस्यरपरः प्रत्ययस्वरः ॥ १४ ॥

अथपञ्चदशी–

अधामातुरुषसःसप्तविप्राजायेमहिप्रथमावेधसोनॄन् ।
दिवस्पुत्राअङ्गिरसोभवेमाद्रिंरुजेमधनिनंशुचन्तः ॥ १५ ॥

अध । मातुः । उषसः । सप्त । विप्राः । जायेमहि । प्रथमाः । वेधसः । नॄन् । दिवः । पुत्राः । अङ्गिरसः । भवेम । अद्रिम् । रुजेम । धनिनम् । शुचन्तः ॥ १५ ॥

वामदेवान्यैःपङ्क्तिराङ्गिरोभिःसहब्रूते अथापिच मातुरुषसःसकाशात्सप्त सप्तसंख्याकाविप्राःप्राज्ञावयंस्मः प्रथमाःश्रेष्ठावयंवेधसोऽग्नेःपरिचारकान्नृन्वेधसोविधातॄन्रश्मीन्वाजायेमहि वयंजनयामः दिवोद्योतमानस्यादित्यस्यपुत्रावयम् अङ्गिरसोभवेम भूतिमन्तःस्याम शुचन्तोदीप्यमानावयंधनिनमुदकवन्तमद्रिंमेघंरुजेम वर्षार्थंभिद्याम यद्वा धनिनंपणिनामकासुरापहृतगोधनयुक्तमद्रिंपर्वतंरुजेम अङ्गिरसामादित्यपुत्रत्वमेवमाम्नायते—तस्ययद्रेतसःप्रथममुद्दीप्यततदसावादित्योभवदित्युपक्रम्ययेङ्गाराआसंस्तेङ्गिरसोभवन्निति ॥ जायेमहि जनीप्रादुर्भावे लिङि ज्ञाजनोर्जेतिजादेशः । वेधसः डुधाञ्धारणपोषणयोरित्यस्माद्विधाञोवेधचेत्यसिप्रत्ययः धातोर्वेध्इत्यादेशः । दिवस्पुत्राइत्यत्र संहितायांपष्ठ्याःपतिपुत्रेतिविसर्जनीयस्यसत्वम् । रुजेम रुजोभङ्गे अदादिः लिङिरूपम् ॥ १५ ॥

॥ इतितृतीयस्यचतुर्थेष्टादशोवर्गः ॥ १८ ॥

अथषोडशी—

**अधायथानःपितरःपरासःप्रत्नासोअग्नऋतमाशुषाणाः ।**
**शुचीदयन्दीधितिमुक्थशासःक्षामाभिन्दन्तोअरुणीरपव्रन् ॥१६॥**

अध । यथा । नः । पितरः । परासः । प्रत्नासः । अग्ने । ऋतम् । आशुषाणाः । शुचि । इत् । अयन् । दीधितिम् । उक्थऽशसः । क्षाम । भिन्दन्तः । अरुणीः । अप । व्रन् ॥ १६ ॥

हेअग्ने अधापिच परासःश्रेष्ठाः प्रत्नासःपुराणाः ऋतंसत्यभूतं यज्ञं यथायथावदाशुषाणाः अश्नुवानानोऽस्माकंपितरोङ्गिरसः शुचिदीप्तंस्थानमयन् अगच्छन् तथा दीधितिं तेजश्चागच्छन् किंच उक्थशासः उक्थानांशस्त्राणांशंसितारः क्षाम क्षयकारणंतमःपापंवा भिन्दन्तोविनाशयन्तोङ्गिरसः अरुणीः अरुणवर्णाःपणिभिरपहृतागाः उषसोवा अपव्रन् अपावृण्वन्प्रकाशितवन्तइत्यर्थः ॥ अयन् इण्गतौ लङि इणोयणितियण् व्यत्ययेन अडागमः । दीधितिं दीधीङ्दीप्तिदेवनयोरित्यस्मात्क्तिनिह्रस्वश्छान्दसःनित्त्वादाद्युदात्तः । उक्थशासः उक्थशब्देउपपदे शंसुस्तुतावित्यस्मान्मन्त्रेश्वेतवहोक्थशस्पुरोडाशोण्विनितिण्विन् नकारलोपश्चनिपातनादेव पदकालेह्रस्वश्छान्दसः । अरुणीः गौरादिङीषन्तः एकादेशस्वरः । व्रन् वृणोतेर्लुङि मन्त्रेघसेत्यादिनाच्लेर्लुक् निघातः ॥ १६ ॥

१ ऐ० ब्रा० ३. ३४. ।

आग्रयणे आग्नेन्द्रस्यहविषःसुकर्माणइतियाज्या सुत्रितश्च—सुकर्माणःसुरुचोदेवयन्तो विश्वेदेवासआगतेति ।

सैषासप्तदशी—

सुकर्माणःसुरुचोदेवयन्तोयोनदेवा जनिमाधमन्तः ।
शुचन्तोअग्निंववृधन्तइन्द्रमूर्वंगव्यंपरिषदन्तोअग्मन् ॥ १७ ॥

सुऽकर्माणः । सुऽरुचः । देवऽयन्तः । अयः । न । देवाः । जनिम । धमन्तः । शुचन्तः । अग्निम् । ववृधन्तः । इन्द्रम् । ऊर्वम् । गव्यम् । परिऽसदन्तः । अग्मन् ॥ १७ ॥

सुकर्माणः सुष्ठु अनुष्ठितयागादिकर्माणः सुरुचः शोभनदीप्तयः देवयन्तोदेवान्कामयमानाः देवाः देवनशीलाः स्तोतारः जनिम स्वकीयंमानुषंजन्म धमन्तः यागादिलक्षणेनकर्मणा निर्मलीकुर्वन्तः तत्रदृष्टान्तः—अयोन यथाकर्माराः अयोभस्त्रेणधमन्तितद्वत् तादृशाअग्निंशुचन्तोहविर्भिर्दीपयन्तइन्द्रंववृधन्तः सोमेनस्तुत्यावावर्धयन्तः अङ्गिरसः परिषदन्तः परितःसीदन्तः सन्तः ऊर्वं महान्तं गव्यं गोसङ्घम् अग्मन् प्राप्नुवन् ॥ सुकर्माणः सोर्मनसीइत्युत्तरपदाद्युदात्तत्वम् । धमन्तः ध्माशब्दाग्निसंयोगयोः शतरिपाघ्राध्मादिनाधमेत्यादेशः शपःपित्त्वादनुदात्तत्वे शतुर्लसार्वधातुकस्वरः । ववृधन्तः वृधुवर्धने व्यत्ययेनपरस्मैपदं शतरिशपःश्लुः । गव्यं गवांसमूह इत्यर्थे खलगोरथादितियः । अग्मन् गमेर्लुङि च्लेर्लुकिरूपम् ॥ १७ ॥

अथाष्टादशी—

आयूथेवक्षुमतिपश्वोअख्यद्देवानांयज्जनिमान्त्युग्र ।
मर्तानांचिदुर्वशीरकृप्रन्वृधेचिदर्यउपरस्यायोः ॥ १८ ॥

आ । यूथाऽइव । क्षुऽमति । पश्वः । अख्यत् । देवानाम् । यत् । जनिम । अन्ति । उग्र । मर्तानाम् । चित् । उर्वशीः । अकृप्रन् । वृधे । चित् । अर्यः । उपरस्य । आयोः ॥ १८ ॥

उग्र तेजस्विन् हेअग्ने देवानामङ्गिरसांसम्बन्धियज्जनिम गोसंघमन्ति पर्वतस्यसमीपे आख्यत् आसमन्तादिन्द्रोपश्यत् तत्रदृष्टान्तः—यूथेव यथापश्वःपशूनांगवांयूथानिक्षुमति अन्नवत्याढ्यगृहेवर्तमानानिपश्यन्तिजनास्तद्वत् यद्वा हेअग्ने तवपरिचारकोङ्गिरसोगणः देवानामिन्द्रादीनांयज्जनिम योयंजनः अन्तिमदन्तिके पश्वः पाणिभिरपहृतान्पशूनाख्यत् समन्तात्पश्यति तत्रदृष्टान्तः—यथाक्षुमतिशब्दंकुर्वाणेगवांयूथायूथेपश्वःपशून्पश्यन्तितद्वत् मर्तानांचित् मनुष्याणाम्उर्वशीः ऊरुभ्यामश्नुवानाः ऊरुभ्यामश्नुतइतियास्कः । प्रजाः अकृप्रन् ताभिरानीताभिर्गोभिः कॢप्ताः समर्थाअभवन् चिदपिच अर्यःस्वामीलब्धगोधनउपरस्यउप्तस्यनिषिक्तस्यापत्यस्यवृधेवर्धनायसमर्थोभवति तथा आयोर्मनुष्यस्य भृत्यादेश्चपोषणेसमर्थोभवति ॥ १ यूथेव शसःसप्तम्यावाडादेशः । क्षुमति क्षुदित्यन्ननाम यद्वा टुक्षुशब्दे भावेक्विप् छान्दसस्तकारलोपः तदस्यास्तीतिमतुप् ह्रस्वनुड्भ्यांमतुबिति मतुपउदात्तत्वम् । अख्यत् ख्याप्रकथने लुङिच्लेरस्यतिवक्तिख्यातिभ्योङित्यङादेशः आतोलोपः । जनिम जनीप्रादुर्भावे हृजनिभ्यामिमनजिति इमनिन्प्रत्ययः नित्त्वादाद्युदात्तः । अकृप्रन् कृपूसामर्थ्ये लङिबहुलंछन्दसीतिविकरणस्यलुक् रुडागमः ॥ १८ ॥

अथैकोनविंशी—

अकर्मते स्वपसो अभूम ऋतमवस्रन्नुषसो विभातीः ।
अनूनमग्निंपुरुधासुश्चन्द्रंदेवस्यमर्मृजतश्चारुचक्षुः ॥ १९ ॥

अकर्म । ते । सुऽअपसः । अभूम । ऋतम् । अवस्रन् । उषसः । विऽभातीः । अनूनम् । अग्निम् । पुरुध । सुऽचन्द्रम् । देवस्य । मर्मृजतः । चारु । चक्षुः ॥ १९ ॥

हेअग्ने तेतव परिचरणमकर्म अकुर्म तेनकर्मणास्वपसःशोभनकर्माणोभूम विभातीः व्युच्छन्त्यउषसः ऋतंतेजोवस्रन् आच्छादयन्ति धारयन्तीत्यर्थः । तथा ताउषसः अनूनं संपूर्णं पुरुधा बहुधा सुचन्द्रं सुष्ठ्वाह्लादकारिणं यद्वा सुहिरण्यमग्निंधारयन्ति किञ्च देवस्यद्योतमानस्यतवचारुमनोहरंचक्षुः तेजोमर्मृजतः परिचरन्तोवयंस्वपसोऽभूमेतिपूर्वेणान्वयः ॥ अकर्म करोतेर्लङि बहुलंछन्दसीतिविकरणस्यलुक् । मर्मृजतः मृजूष्शुद्धौ यङ्लुकि रुग्रिकौ चलुकीत्यभ्यासस्यरुगागमः शतरि नाभ्यस्ताच्छतुरितिनुमभावः अभ्यस्तस्वरः ॥ १९ ॥

---

१ नि० ५.१३.।

अथविंशी—

एतातेंअग्नउचथांनिवेधोवोंचामकवयेताजुंषस्व ।
उच्छोंचस्वकृणुहिवस्यंसोनोमहोरायःपुंरुवारयंन्धि ॥ २० ॥ १९ ॥

एता । ते । अग्ने । उचथांनि । वेधः । अवोंचाम । कवयें । ता ।
जुषस्व । उत । शोचस्व । कृणुहि । वस्यंसः । नः । महः । रायः ।
पुरुऽवार । प्र । यन्धि ॥ २० ॥

वेधः विधातः हेअग्ने कवयेमेधाविने तेतुभ्यम् एता एतान्युचथानि उक्थानिशस्त्राण्यवोचाम त्वं तातानिजुषस्वसेवस्व किञ्च त्वमुच्छोचस्व उद्दीप्यस्व नोस्मान्वस्यसः अतिशयेन धनयुक्तान्कृणुहिकुरुतदेवोच्यते—पुरुवार पुरुभिर्बहुभिर्वरणीय महोरायोमहद्धनंप्रयन्धि अस्मभ्यंप्रयच्छ ॥ अवोचाम वचपरिभाषणे लुङि च्लेरङादेशः पादादित्वादनिघातः । कृणुहि कृविहिंसाकरणयोरित्यस्यलोटिरूपं तिङउत्तरत्वादनिघातः । वस्यसः वसुमच्छब्दादीयसुनि विन्मतोर्लुगितिमतुपोलुकिटिलोपेचकृते ईकारलोपश्छान्दसः । यन्धि यमेर्लोटि बहुलंछन्दसीति विकरणस्यलुक् वाछन्दसीतिहेर्विकल्पेनापित्त्वादङितश्चेतिधिरादेशः ॥ २० ॥

॥ इतितृतीयस्यचतुर्थएकोनविंशोवर्गः ॥ १९ ॥

आवोराजानमितिषोडशर्चंतृतीयंसूक्तं वामदेवस्यार्षं त्रैष्टुभमाग्नेयम्आवःषोळशेत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोर्विनियोगउक्तः ।

अथप्रथमा—

आवोराजांनमध्वरस्यंरुद्रंहोतांरंसत्ययजंरोदंस्योः ।
अग्निंपुरातंनयित्नोरचित्ताद्धिरंण्यरूपमवंसेकृणुध्वम् ॥ १ ॥

आ । वः । राजांनम् । अध्वरस्यं । रुद्रम् । होतांरम् । सत्यऽयजंम् ।
रोदंस्योः । अग्निम् । पुरा । तनयित्नोः । अचित्तांत् । हिरंण्यऽरूपम् ।
अवंसे । कृणुध्वम् ॥ १ ॥

हेऋत्विग्यजमानाः अध्वरस्ययज्ञस्यराजानमधिपतिं होतारं देवानामाह्वातारं रुद्रं रोरूयमाणं द्रवन्तं शत्रून्रोदयन्तंवा यद्वा एषावाअग्नेस्तनूर्यद्रुद्रइति रुद्रात्मकं रोदस्योर्घावापृथिव्योःसत्ययजं सत्यस्यान्नस्यदातारं यद्वा सत्ययजंसत्येनहविषादेवान्यजन्तं यद्वा रोदस्योर्द्यावापृथिव्योर्वर्तमानंहिरण्यरूपंसुवर्णप्रभम् एवंविधमग्निं वोयुष्माकम् अवसे रक्षणाय तनयित्नोस्तनयित्नुरशनिःसह्याकस्मिकःतत्सदृशादचित्तात् नविद्यतेचित्तंयास्मिन्तदचित्तं चित्तोपलक्षितसर्वेन्द्रियोपसंहारोमरणमितियावत् तन्मरणात्पुराप्रागेव आकृणुध्वं यूयंसमन्ताद्धविर्भिरग्निंभजध्वम् ॥ रुद्रं रोदयतेरोदेर्णिलुक्चेतिरक्प्रत्ययः । तनयित्नोः तनिःशब्दार्थः चुरादिरदन्तः स्तनिशुषिपुषिगामिमनिभ्योणेरित्नुजितिइत्नुच्प्रत्ययः चित्स्वरेणान्तोदात्तः सुपासहैकादेशेएकादेशस्वरः । कृणुध्वं कृविर्हिंसाकरणयोश्च लोटिरूपम् ॥ १ ॥

अथद्वितीया—

**अयंयोनिश्चकृमायंवयन्तेजायेवपत्यउशतीसुवासाः । अर्वाचीनःपरिवीतोनिषीदेमाउतेस्वपाकप्रतीचीः ॥ २ ॥**

अयम् । योनिः । चकृम । यम् । वयम् । ते । जायाऽइव । पत्ये । उशती इति । सुऽवासाः । अर्वाचीनः । परिऽवीतः । नि । सीद । इमाः । उँ इति । सुऽअपाक । प्रतीचीः ॥ २ ॥

हेअग्ने त्वदर्थं यमुत्तरवेदिलक्षणंप्रदेशंवयंचकृम कुर्मः अयंयोनिः तवस्थानंभवति तत्रदृष्टान्तः—जायेव यथापत्येउशतीपतिंकामयमानासुवासाःशोभनवस्त्रोपेताजायास्वात्मसमीपेतस्यस्थानंकरोतितद्वत् हेस्वपाक स्वपस्क सुकर्मन् अग्ने त्वंपरिवीतः यष्टव्यदेवैस्तेजोभिर्वापरिवीतः अर्वाचीनोऽस्मदभिमुखःसन् निषीदोत्तरवेद्यामुपविश तत्रास्थितस्यतेतव इमा ज्वालाःस्तुतयोवाप्रतीचीः त्वदाभिमुखाःप्रवर्तन्ते ॥ चकृम करोतेर्लिटिरूपं वाक्यभेदान्निघाताभावः । अर्वाचीनः विभाषाञ्चेरदिगितिखः । परिवीतः व्येञ्संवरणे कर्मणिनिष्ठा यजादित्वात्संप्रसारणं गतिरनन्तरइतिगतेःस्वरः ॥ २ ॥

अथतृतीया—

**आशृण्वतेअदृपितायमन्मनृचक्षसेसुमृळीकायवेधः । देवायशस्तिममृतायशंसग्रावेवसोतामधुषुद्यमीळे ॥ ३ ॥**

आऽशृण्वते । अदृपिताय । मन्म । नृऽचक्षसे । सुऽमृळीकाय । वेधः । देवाय । शस्तिम् । अमृताय । शंस । ग्रावाऽइव । सोता । मधुऽसुत् । यम् । ईळे ॥ ३ ॥

वेधः स्तोत्राणांकर्तः हेस्तोतः आशृण्वते स्तोत्राकर्णनपराय अदृपिताय अदृप्ताय अप्रमत्ताय नृचक्षसे नृणांद्रष्ट्रे सुमृळीकाय सुसुखाय अमृताय मरणधर्मरहितायदेवाय तस्मैअग्नयेमन्म स्तोत्रं शस्तिं शस्त्रंच शंस मधुसुत् मदकरस्यसोमस्यसोता तत्रदृष्टान्तः—ग्रावेव यथाग्रावासोमस्यसोतातद्वत् सोमाभिषवंकुर्वाणोयजमानोयमग्निमीळेस्तौति तस्मैशंसेतिसमन्वयः यद्वा मधुसुत् सोमसुद्यजमानः अग्निमीळेस्तौति तत्रदृष्टान्तः—यथाग्रावासोमस्यसोताशब्दं करोति [1]प्रैतेवदन्तुप्रवयंवदामग्रावभ्यइत्यत्रग्राव्णांकर्तृत्वंश्रुतमिति ॥ आशृण्वते शतुरनुमङ्तिविभक्तेरुदात्तत्वम् । ईळे ईडस्तुतौ लटिलोपस्तआत्मनेपदेष्वितितलोपः यद्वा लिटितशब्दस्यैशादेशेकृतेरूपम् ॥ ३ ॥

अथचतुर्थी—

त्वंचिन्नःशम्याअग्नेअस्याऋतस्यबोध्यृतचित्स्वाधीः ।
कदातउक्थासधमाद्यानिकदाभवन्तिसख्यागृहेते ॥ ४ ॥

त्वम् । चित् । नः । शम्यै । अग्ने । अस्याः । ऋतस्य । बोधि । ऋतऽचित् । सुऽआधीः । कदा । ते । उक्था । सधऽमाद्यानि । कदा । भवन्ति । सख्या । गृहे । ते ॥ ४ ॥

हेअग्ने त्वंचित् त्वमेव शम्यै शमीशब्दःकर्मनाम अस्याःशम्यै शम्याःनोऽस्मत्संबन्धिनोस्यकर्मणःदेवताभवसि हेऋतचित् सत्यज्ञ हेअग्ने स्वाधीः सुकर्मासुध्यानोवात्वम् ऋतस्यबोधि अस्मदीयंस्तोत्रंबुध्यस्व तेतव सधमाद्यानि सहमदनिमित्तानि उक्था शस्त्राणि कदाकस्मिन्कालेभवन्ति भविष्यन्ति तथास्मदीयेगृहे तेत्वयासहसख्यासख्यानिकदाभविष्यन्ति ॥ सधमाद्यानि मादयतेर्ण्यन्तस्याचोयदितियत् सधमादस्थयोरिति सहस्यसधादेशः । भवन्ति विभाषाकदाकर्ह्योरितिभविष्यदर्थेलट् ॥ ४ ॥

---

१ ऋ० सं० ८. ४. २९. ।

अथपञ्चमी—

कथाहतद्वरुणायत्वमंग्नेकथादिवेगर्हसेकंनआगः ।
कथामित्रायमीळ्हुषेपृथिव्यैब्रवःकदर्यम्णेकद्भगाय ॥ ५ ॥ २० ॥

कथा । ह । तत् । वरुणाय । त्वम् । अग्ने । कथा । दिवे ।
गर्हसे । कत् । नः । आगः । कथा । मित्राय । मीळ्हुषे । पृथिव्यै ।
ब्रवः । कत् । अर्यम्णे । कत् । भगाय ॥ ५ ॥ २० ॥

हेअग्ने त्वंतदस्मदीयं पापं वरुणायकथागर्हसे केनहेतुनागर्हापूर्वमावेदयेः हेतिपूरणः दिवे द्युलोकायद्योतमानायसूर्यायवाकथा कथंतत्पापमावेदयेः नोऽस्माकमागस्तत्पापंकत् किमस्ति त्वत्परिचरणान्नास्तीत्यर्थः तथा मीळ्हुषेअभिमतफलसेक्त्रेमित्राय पृथिव्यैच कथाब्रवः कथमागोब्रूयाः अर्यम्णेदेवायकत्कथं भगाय एतन्नामकायचदेवायकत्कथंब्रूयाः ॥ कथा किंशब्दात्थाहेतौचच्छन्दसीतिथाप्रत्ययः प्राग्दिशोविभक्तिरितिविभक्तिसंज्ञायांकिमःकइतिकादेशः । मीळ्हुषे मिहसेचने क्वसौ दाश्वान्साह्वान्मीढ्वांश्चेतिनिपातितः । ब्रवः ब्रूञ्व्यक्तायांवाचि लेटि लेटोडाटावित्यडागमः पादादित्वादनिघातः आगमस्यानुदात्तत्वाद्धातुस्वरः ॥ ५ ॥

॥ इतितृतीयस्यचतुर्थेविंशोवर्गः ॥ २० ॥

अथषष्ठी—

कद्धिष्ण्यासुवृधसानोअंग्नेकद्वातायप्रतवसेशुभंये ।
परिज्मनेनासत्यायक्षेब्रवःकदग्नेरुद्रायनृघ्ने ॥ ६ ॥

कत् । धिष्ण्यासु । वृधसानः । अग्ने । कत् । वाताय । प्रऽतवसे ।
शुभम्ऽये । परिऽज्मने । नासत्याय । क्षे । ब्रवः । कत् ।
अग्ने । रुद्राय । नृऽघ्ने ॥ ६ ॥

हेअग्ने धिष्ण्यासु आग्नीध्रीयादिधिष्ण्येषु वृधसानःघृताद्याहुतिभिर्वर्धमानस्त्वं कत्कथंब्रूयाः प्रतवसे प्रकृष्टबलाय शुभंये शुभस्यप्रापयित्रे परिज्मने परितोगन्त्रे नासत्याय सत्यस्यनेत्रे यद्वा नविद्यतेसत्यंयस्यतस्मै वाताय वायवे यद्वा नासत्यायेतिवचनव्यत्ययः नासत्याभ्यामश्विभ्यांक्षे क्षेतिपृथिवीमाह क्षियन्तिनिवसन्त्यस्यांप्राणिनइतितस्यैक्षेपृथिव्यैच

कत्कथंब्रूयाः हेअग्ने नृघ्ने नृणांपापकृतांहन्त्रे रुद्रायदेवाय कत्कथमागोब्रवोब्रूयाः ॥ वृषसानः वृधुवर्धने असानजित्यनुवृत्तौ ऋञ्जिवृधिमन्दिसहिभ्यःकिदित्यसानच्प्रत्ययः कित्त्वादगुणः चित्त्वादन्तोदात्तः । शुभंये याप्रापणेवित् तत्पुरुषेकृतिबहुलमितिद्वितीयायाअलुक् कृत्स्वरः । क्षे क्षिनिवासगत्योः अन्येभ्योपिदृश्यतइतिअधिकरणेडः ततष्टाप् चतुर्थ्येकवचने आतोधातोरित्यत्रातइतियोगविभागादाकारलोपः । नृघ्ने हनहिंसागत्योः बहुलंछन्दसीति क्विप् ॥ ६ ॥

अथसप्तमी–

कथामहेपुंष्टिम्भरायंपूष्णेकद्रुद्रायसुमंखायहविर्दे ।
कद्विष्णंवउरुगायायरेतोब्रवःकदंग्नेशरंवेबृहत्यै ॥ ७ ॥

कथा । महे । पुष्टिम्ऽभरायं । पूष्णे । कत् । रुद्रायं ।
सुऽमंखाय । हविःऽदे । कत् । विष्णंवे । उरुऽगायायं ।
रेतः । ब्रवः । कत् । अग्ने । शरंवे । बृहत्यै ॥ ७ ॥

हेअग्ने महे महते पुष्टिम्भराय पुष्टिधारकाय पूष्णे एतन्नामकायदेवाय कथा केनहेतुना पापंब्रवीथाः सुमखाय सुपूजनीयाय सुयज्ञायवा हविर्दे अग्निरूपेणदेवानांहविर्दात्रे यद्वा स्विष्टकृत्त्वात् हविषोदात्रेरुद्रायकत्कथंब्रूयाः तथा उरुगायाय उरुभिर्बहुभिर्गीयमानाय यद्वा प्रभूतकीर्तयेविष्णवेरेतःक्षयहेतुपापंकत्कथंवदः शरवे शृणातिपक्वाओषधीरितिशरुःशरत्संवत्सरः यद्वा हिंसिका निर्ऋतिः बृहत्यैमहत्यैशरवे निर्ऋत्यैवाकत्कथंपापंब्रवः ब्रूयाः ॥ पुष्टिम्भराय डुभृञ्धारणपोषणयोः संज्ञायांभृतॄवृजीत्यादिनाखच् अरुर्द्विषदजन्तस्यमुमितिपूर्वपदस्यमुमागमः चित्त्वादन्तोदात्तः समासेकृत्स्वरः । हविर्दे अनुदात्तस्यचयत्रोदात्तलोपइतिसुपउदात्तत्वम् । शरवे शृहिंसायां शृस्वृस्निहित्रप्यसीत्यादिनाउप्रत्ययः निदित्यनुवृत्तेराद्युदात्तः ॥ ७ ॥

अथाष्टमी–

कथाशर्धायमरुतांमृतायंकथासूरेबृंहतेपृच्छ्यमांनः ।
प्रतिंब्रवोदिंतयेतुरायसाधांदिवोजांतवेदश्चिकित्वान् ॥ ८ ॥

कथा । शर्धाय । मरुताम् । ऋताय । कथा । सूरे । बृहते ।
पृच्छ्यमानः । प्रति । ब्रवः । अदितये । तुराय । साध । दिवः ।
जातवेदः । चिकित्वान् ॥ ८ ॥

हेअग्ने ऋताय गन्त्रे सत्यभूतायवामरुतांशर्धाय बलभूताय गणाय कथा केनहेतुना मदीयमागःप्रतिब्रूयाः तेनपृच्छ्यमानःसन् तस्मैबृहतेमहतेसूरेसूर्यायकथाकथंवदेः तथा अदितये देव्यै तुराय त्वरितगमनायवायवे अदितये अदीनायतुरायवाप्रतिब्रवः मदीयमागःकथंप्रतिब्रूयाः यस्मादेवंतस्मात् हेजातवेदोग्ने चिकित्वान् तत्सर्वंजानानस्त्वं दिवोदीप्तान्देवान्साध साधय गच्छ यद्वा दिवोद्युलोकस्ययज्ञवहनलक्षणंकार्यंसाध कुरु ॥ सूरे सर्वविधीनां छन्दसिविकल्पितत्वात् ङेर्यत्वाभावः अतोगुणेइतिपररूपत्वम् । पृच्छ्यमानः प्रच्छज्ञीप्सायां कर्मणियक् ग्रहिज्येत्यादिनासंप्रसारणं शानचोलसार्वधातुकानुदात्तत्वेयक्स्वरः । साध राधसाधसंसिद्धौ अन्तर्भावितण्यर्थस्यलोटिव्यत्ययेनशप् ॥ ८ ॥

अथनवमी—

ऋतेनंऋतंनियंतमीळआगोरामासचामधुमत्पक्वमंग्ने ।
कृष्णासतीरुशंताधासिनैषाजामर्येणपयसापीपाय ॥ ९ ॥

ऋतेन । ऋतम् । निऽयतम् । ईळे । आ । गोः । आमा । सचा ।
मधुऽमत् । पक्वम् । अग्ने । कृष्णा । सती । रुशता । धासिना ।
एषा । जामर्येण । पयसा । पीपाय ॥ ९ ॥

हेअग्ने ऋतेनसत्यभूतेनयज्ञेननियतमनुस्यूतमृतमुदकं गोर्धेनोःपयईळे आयाचे सान्नाय्यादिहविरर्थंगव्यंपयः त्वांयाचइत्यभिप्रायः आमाअपक्वा सा गोः मधुमन्माधुर्योपेतंपक्वंपयः सचासहधारयति कृष्णा कृष्णवर्णासतीएषागौः रुशतीश्वेतेनधासिना प्राणिनां धारकेणजामर्येणजायन्तइतिजाःप्रजास्तासाममर्येणअमरणनिमित्तेनतेनपयसापीपाय प्रजाःप्याययतितवैषमहिमायद्रसान्परिणामयन्नेवंकरोषि ॥ पीपाय प्यायतेर्लिटि लिड्यङोश्चेतिपीभावः ॥ ९ ॥

अथदशमी–

ऋतेनाहिष्मावृषभश्चिदक्तःपुमाँअग्निःपयसापृष्ठ्येन ।
अस्पन्दमानोअचरद्वयोधावृषाशुक्रंदुदुहेपृश्निरूधः ॥१०॥२१॥

ऋतेन । हि । स्म । वृषभः । चित् । अक्तः । पुमान् । अग्निः ।
पयसा । पृष्ठ्येन । अस्पन्दमानः । अचरत् । वयःऽधाः ।
वृषा । शुक्रम् । दुदुहे । पृश्निः । ऊधः ॥ १० ॥ २१ ॥

वृषभः अभिमतफलवर्षकः पुमान्श्रेष्ठःसोग्निः ऋतेनसत्यभूतेनपृष्ठ्येन धारकेणपयसा अक्तः सिक्तोभवति हिस्मचित् वयःपूरणाःवयोधाःअन्नदः सोग्निः अस्पन्दमानः एकत्रावस्थितः सन् एवाचरत् सर्वत्रतेजसाचरति तथा वृषा अपांवर्षकः पृश्निःसूर्यः शुक्रंपयः ऊधोन्तरिक्षंमेघंवादुदुहे दोग्धि ॥ अक्तः अञ्जूव्यक्तिम्रक्षणगतिषु कर्मणिनिष्ठा । दुदुहे द्विकर्मकोयंधातुः । ऊधः अकथितंचेतिकर्मसंज्ञा ॥ १० ॥

॥ इतितृतीयस्यचतुर्थएकविंशोवर्गः ॥ २१ ॥

अथैकादशी–

ऋतेनाद्रिंव्यसन्भिदन्तःसमङ्गिरसोनवन्तगोभिः ।
शुनंनरःपरिषदन्नुषासमाविःस्वरभवज्जातेअग्नौ ॥ ११ ॥

ऋतेन । अद्रिम् । वि । असन् । भिदन्तः । सम् । अङ्गिरसः ।
नवन्त । गोभिः । शुनम् । नरः । परि । सदन् । उषसम् ।
आविः । स्वः । अभवत् । जाते । अग्नौ ॥ ११ ॥

अङ्गिरसः मेधातिथिप्रभृतयः ऋतेनयज्ञेनहेतुनागवांनिरोधकमद्रिंपर्वतं भिदन्तोविदारयन्तःसन्तः व्यसन् व्यक्षिपन् ततस्तेगोभिः संनवन्त समगच्छन् नरः कर्मणांनेतारः ते शुनं सुखेनउषसंपरिसदन्परितः प्राप्नुवन् ततः स्वःसूर्योप्याविरभवत् सर्वमेतदग्नौत्वयिजातेमन्थनेन निष्पादितेसत्यभूदिति ॥ असन् अस्यतेर्लुङि च्लेरस्यतिवक्तीत्यादिनाअङादेशः अनित्यमागमानुशासनमितिथुगभावः ॥ ११ ॥

अथद्वादशी–

ऋतस्यदेवीरमृताअमृक्ताअर्णोभिरापोमधुमद्भिरग्ने ।
वाजीनसर्गेषुप्रस्तुभानःप्रसदमित्स्रवितवेदधन्युः ॥ १२ ॥

ऋतेन । देवीः । अमृताः । अमृक्ताः । अर्णःऽभिः । आपः ।
मधुमत्ऽभिः । अग्ने । वाजी । न । सर्गेषु । प्रऽस्तुभानः । प्र ।
सदम् । इत् । स्रवितवे । दधन्युः ॥ १२ ॥

हेअग्ने अमृताः अमरणहेतवः अमृक्ताः रक्षःप्रभृतिभिरबाधिताः मधुमद्भिर्माधुर्योपेतैरर्णोभिरुदकैर्युक्तादेवीःदेव्योनद्यः ऋतेनसत्येनयज्ञेनवाहेतुना आपः आप्तव्याः सत्यः सदमित् सदैव स्रवितवे स्रवणायप्रदधन्युः प्रगच्छन्ति तत्रदृष्टान्तः–वाजीन यथासर्गेषुप्रेरणेषुप्रस्तुभानः प्रोत्साह्यमानोश्वःप्रगच्छतितद्वत् ॥ आपः आपृव्याप्तौ आप्नोतेःक्विप्ह्रस्वश्चेतिकर्मणिक्विप् अप्तृन्नित्यादिना जसिदीर्घः । प्रस्तुभानः स्तोभतिरर्चतिकर्मा ॥ १२ ॥

अथत्रयोदशी–

माकस्ययक्षंसदमिद्धुरोगामावेशस्यप्रमिनतोमापेः ।
माभ्रातुरग्नेअनृजोर्ऋणंवेर्मासख्युर्दक्षंरिपोर्भुजेम ॥ १३ ॥

मा । कस्य । यक्षम् । सदम् । इत् । हुरः । गाः । मा । वेशस्य ।
प्रऽमिनतः । मा । आपेः । मा । भ्रातुः । अग्ने । अनृजोः ।
ऋणम् । वेः । मा । सख्युः । दक्षम् । रिपोः । भुजेम ॥ १३ ॥

हेअग्ने हुरोऽस्माकंहिंसकस्यकस्यचिदपिजन्तोर्यक्षं यज्ञं सदमित्सदैवमागाः कदाचिदपिमागच्छ प्रमिनतोहिंसकस्य वेशस्य प्रातिवेश्यस्य यज्ञंमागाः तथा आपेर्मद्व्यतिरिक्तस्यबन्धोर्यज्ञंमागच्छ तथा अनृजोः कुटिलचित्तस्यभ्रातुः ऋणमृणवद्देयंहविःमावेः माकामयथाः तथा वयमपि सख्युर्मित्रस्य रिपोः शत्रोर्दत्तंभोगसमर्थंधनंमाभुजेम नभुञ्जीमहि किन्तु त्वया दत्तंधनंभुञ्जीमहि ॥ हुरः ह्वृप्रसह्यकरणे क्विप् बहुलंछन्दसीत्युत्वं सावेकाचइतिविभक्तेरुदात्तत्वम् । भुजेम भुजपालनाभ्यवहारयोः आशीर्लिङि व्यत्ययेनपरस्मैपदं लिङ्याशिष्यङित्यङ्प्रत्ययः ॥ १३ ॥

अथचतुर्दशी—

रक्षांणोअग्नेतवरक्षंणेभीरारक्षाणःसुमखप्रीणानः ।
प्रतिंष्फुरविरुंजवीड्वंहोजहिरक्षोमहिंचिद्वावृधानम् ॥ १४ ॥

रक्षं । नः । अग्ने । तवं । रक्षंणेभिः । ररक्षाणः । सुऽमख । प्रीणानः ।
प्रतिं । स्फुर । वि । रुज । वीळु । अंहः । जहि । रक्षः ।
महिं । चित् । ववृधानम् ॥ १४ ॥

सुमख सुयज्ञ सुधनेतिवा हेअग्ने ररक्षाणः भृशमस्माकंरक्षिता प्रीणानः हविर्भिःप्रीतस्त्वंतवरक्षणेभिःत्वदीयैरवनैर्नोस्मान्रक्षपालय प्रतिस्फुर आस्मान्प्रतिदीप्यस्व वीळुदृढमंहःपापं विरुज विशेषेणनाशय किञ्च महिचित् महदपि वावृधानं वर्धमानं वृद्धंवा बाधकं रक्षोजहि ॥ णः नश्चधातुस्थोरुषुभ्यइतिसंहितायांणत्वम् । ररक्षाणः रक्षेर्यङ्लुकिचानशिरूपम् । जहि हनहिंसागत्योः लोटि हन्तेर्जइतिजादेशः आभाच्छास्त्रीयासिद्धत्वादतोहेरितिलुङ्न भवति ॥ १४ ॥

अथपञ्चदशी—

एभिर्भवसुमनाअग्नेअर्कैरिमान्स्पृंशमन्मंभिःशूरवाजान् ।
उतब्रह्मांण्यङ्गिरोजुषस्वसन्तेंशस्तिर्देववांताजरेत ॥ १५ ॥

एभिः । भव । सुऽमनाः । अग्ने । अर्कैः । इमान् । स्पृश ।
मन्मंऽभिः । शूर । वाजान् । उत । ब्रह्माणि । अङ्गिरः । जुषस्व ।
सम् । ते । शस्तिः । देवऽवांता । जरेत ॥ १५ ॥

हेअग्ने एभिर्मदीयैरर्कैरर्चनीयैःशस्त्रैः सुमनाः शोभनमनस्कोभव हेशूर इमानस्मदीयान्हविर्लक्षणान्वाजान्मन्मभिःस्तोत्रैःसहस्पृश प्रतिगृहाण उतापिच अङ्गिरः अङ्गतिहवींषि प्राप्नोतीत्यङ्गिराअग्निः यद्वा येङ्गाराआसंस्तेङ्गिरसोभवन्नितिब्राह्मणम् । तेषामङ्गिरसांकारणत्वादग्नेरङ्गिरस्त्वं तत्कारणत्वेचमन्त्रः—येअङ्गिरसःसूनवस्तेअग्नेःपरिजज्ञिरेइति । तादृश हेअ-

ऐ० ब्रा० ३. ३४. । २ ऋ० सं० ८. ३. १. ।

ग्ने ब्रह्माणि मन्त्रानजुषस्व सेवस्व देववाता देवार्थंगता देवान्स्तोतुंप्राप्तेत्यर्थः तादृशी शस्तिः शंसनं तेत्वांसंजरेतसंवर्धयतु ॥ स्पृश स्पृशसंस्पर्शने तुदादिः । देववाता वागतिगन्धनयोः गत्यर्थाकर्मकेतिकर्तरिक्तः देवः पचाद्यजन्तः क्तेचेतिचतुर्थ्यन्तस्यपदस्यप्रकृतिस्वरः ॥ १९ ॥

अथषोडशी—

एताविश्वाविदुषेतुभ्यंवेधोनीथान्यग्नेनिण्यावचांसि ।
निवचनाकवयेकाव्यान्यशंसिषंमतिभिर्विप्रउक्थैः॥१६॥२२॥

एता । विश्वा । विदुषे । तुभ्यम् । वेधः । नीथानि । अग्ने । निण्या ।
वचांसि । निऽवचना । कवये । काव्यानि । अशंसिषम् । मतिऽभिः ।
विप्रः । उक्थैः ॥ १६ ॥ २२ ॥

वेधःविधातः हेअग्ने विदुषेकर्मविषयज्ञानवते कवये क्रान्तदर्शिने तुभ्यं नीथानि फलप्रापकाणि निण्या गूढानि निवचनानि नितरांवक्तव्यानिकाव्यानि कविभिर्मेधाविभिःकृतानि एता विश्वा एतानि सर्वाणि वचांसि वाक्यानि मतिभिर्मननीयैःस्तोत्रैरुक्थैःशस्त्रैश्चसहितः विप्रःप्राज्ञोऽहमशंसिषमवोचं तानिसेवस्वेत्यर्थः ॥ १६ ॥

॥ इतितृतीयस्यचतुर्थेद्वाविंशोवर्गः ॥ २२ ॥

कृणुष्वेतिपञ्चदशर्चंचतुर्थंसूक्तम् वामदेवस्यार्षं त्रैष्टुभं रक्षोहाग्निदेवताकं कृणुष्वपञ्चोनाराक्षोघ्नमित्यनुक्रमणिका । प्रातरनुवाकाश्विनशस्त्रयोःसूक्तविनियोगः प्रवर्ग्येभिष्टवेकृणुष्व पाजइत्याद्याःपञ्चर्चोविनियुक्ताः सूत्रितञ्च—कृणुष्वपाजःप्रसितिंनपृथ्वीमितिपञ्चेति ।

तत्रप्रथमा—

कृणुष्वपाजःप्रसितिंनपृथ्वींयाहिराजेवामवाँइभेन ।
तृष्वीमनुप्रसितिंद्रूणानोस्तासिविध्यरक्षसस्तपिष्ठैः ॥ १ ॥

कृणुष्व । पाजः । प्रऽसितिम् । न । पृथ्वीम् । याहि । राजाऽइव ।
अमऽवान् । इभेन । तृष्वीम् । अनु । प्रऽसितिम् । द्रूणानः । अस्ता ।
असि । विध्य । रक्षसः । तपिष्ठैः ॥ १ ॥

हेअग्ने पाजस्तेजःसङ्घंकृणुष्व कुरुष्व विस्तारय तत्रदृष्टान्तः—प्रसितिंन यथामृगयुः पृथ्वींविस्तीर्णां प्रसितिंप्रकर्षेणसीयतेबध्यतेययाइतिप्रसितिर्वागुरा तादृशींप्रसितिं पक्षिग्रहणार्थंवनगहनेषुप्रसारयति तद्वत् त्वमपिरक्षांसिहन्तुंमहद्बलमग्रतस्तनुष्व इभेनगतभयेनतेजःसङ्घेनयुक्तस्त्वंयाहि रक्षांसिहन्तुंगच्छ तत्रदृष्टान्तः—राजेव यथा अमवान् अमाराज्ञासहवर्ततइत्यमोमात्यः तद्वान् . यद्वा अमो अमनंरोगः शत्रूणांकर्तव्यैरोगैस्तद्वान् शत्रूणांरोगभूतइत्यर्थः राजा इभेनगजेनयुक्तः सन् परबलंप्रतिगच्छतितद्वत् किंच तृष्वीं तृष्वीतिक्षिप्रनाम क्षिप्रगामिनींप्रसितिं प्रकृष्टांसेनाम् अनुद्रूणानः अनुगच्छन् यद्वा तृष्वीमितितृतीयार्थेद्वितीया तृष्व्याक्षिप्रयाप्रसित्या अनुबद्धयासन्ततयागत्या द्रूणानःपरसेनांहिंसन् अस्ता शत्रूणांक्षेप्तासि तपिष्ठैस्तातृतमैस्तेजोभिःरक्षसोराक्षसान्विध्यताडय अत्रनिरुक्तं— कुरुष्वपाजःपाजः पालनात्प्रसितिमिवपृथ्वींप्रसितिःप्रसयनात्तन्तुर्वाजालंवायाहिराजेवामात्यवानभ्यमनवान्स्ववान्वेरावतागणेनगतभयेनहस्तिनेतिवातृष्व्यानुप्रसित्याद्रूणानस्तृष्वीतिक्षिप्रनामतरतेर्वात्वरतेर्वासितासिविध्यरक्षसस्तापिष्ठैस्तत्पतमैस्तृप्ततमैस्तपिष्ठतमैरितिवेति ॥ कृणुष्व कृविहिंसाकरणयोः लोटि धिन्विकृण्व्योरच्चेत्युप्रत्ययः व्यत्ययेनात्मनेपदं विकरणस्वरः सतिशिष्टोपि लसार्वधातुकस्वरंनबाधतइतिलसार्वधातुकस्वरः ॥ १ ॥

अथद्वितीया—

**तवभ्रमासआशुयापतन्त्यनुस्पृशधृषताशोशुचानः ।**
**तपूंष्यग्नेजुह्वापतङ्गानसंदितोविसृजविष्वगुल्काः ॥ २ ॥**

तव । भ्रमासः । आशुया । पतन्ति । अनु । स्पृश । धृषता ।
शोशुचानः । तपूंषि । अग्ने । जुह्वा । पतङ्गान् । असम्ऽदितः ।
वि । सृज । विष्वक् । उल्काः ॥ २ ॥

हेअग्ने तवभ्रमासः भ्राम्यन्तः आशुया शीघ्रगतयःरश्मयःपतन्ति सर्वतःप्रसरन्ति शोशुचानः भृशंदीप्यमानस्त्वं धृषता अभिभवसमर्थेनतेजःसङ्घेन शत्रूननुक्रमेणस्पृश दह दहनोपायंदर्शयति—असंदितःपरैरनिरुद्धस्त्वं तपूंषि तापकानितेजांसि पतङ्गान्पतनशीलान्विस्फुलिङ्गान् उल्काः निर्गतज्वालारूपाणि किट्टानिचेत्येतत्त्रितयंजुह्वा हूयन्तेस्यामाहुतयइतिजुहूर्ज्वाला

१ नि० ६.। १२.।

तया विष्वक् सर्वतोविसृज प्रसारय ॥ आशुया आशुशब्दाज्जसःसुपांसुलुगितियाजादेशः चित्स्वरः । धृषता धृषप्रसहने चुरादिराधृषीयः व्यत्ययेनशः शतुरनुमइतिविभक्तेरुदात्तत्वम् । जुह्वा जुहोतेर्दीर्घश्चेतिक्विप् द्विर्वचनं दीर्घत्वम् उदात्तयणोहल्पूर्वादितिविभक्तेरुदात्तत्वस्य नोङ्धात्वोरितिप्रतिषेधः उदात्तस्वरितयोर्यणइतिस्वारितत्वम् । असंदितः दोअवखण्डने कर्मणि निष्ठा द्यतिस्यतीतीत्वं नञासमासेतस्यस्वरः ॥ २ ॥

अथतृतीया—

प्रति॒स्पशो॒विसृ॑ज॒तूर्णि॑तमो॒भवा॑पा॒युर्वि॒शो अ॒स्याअद॑ब्धः ।
योनो॑दू॒रेअ॒घशं॑सो॒योअन्त्यग्ने॒माकि॑ष्टे॒व्यथि॒राद॑धर्षीत् ॥ ३ ॥

प्रति॑ । स्पशः॑ । वि । सृ॒ज॒ । तूर्णि॑ऽतमः । भव॑ । पा॒युः । वि॒शः । अ॒स्याः । अद॑ब्धः । यः । न॒ः । दू॒रे । अ॒घऽशं॑सः । यः । अन्ति॑ । अग्ने॑ । माकिः॑ । ते॒ । व्यथिः॑ । आ । द॒ध॒र्षी॒त् ॥ ३ ॥

हेअग्ने तूर्णितमः त्वरिततमस्त्वं स्पशः परबाधकान्रश्मीन्चारान्वा सत्यानृतविवेकार्थं विसृज शत्रून्प्रतिविशेषेणप्रेरय अदब्धः केनाप्यहिंसितस्त्वम् अस्याः त्वदीयायाविशः अस्मदादिकायाःप्रजायाः पायुः पालकोभव कस्मात्तद्रक्षणमित्यपेक्षायामाह—नोऽस्माकंदूरेयोघशंसः अघंपापात्मकंशंसनमभिलाषःकीर्तनंवायस्यसोघशंसः यश्चाघशंसः अन्तिअस्माकं समीपेतिष्ठति तस्मादुभयविधाच्छत्रोः पालकोभव किञ्च तेत्वत्संबन्धिनोऽस्मान्माकिः नकश्चिदपिव्यथिः बाधकोराक्षसःआदधर्षीत् आधर्षयतु आस्माकंकश्चिदपिपरिभवंमाकरोत्वित्यर्थः ॥ अन्ति अन्तिकस्यकादिलोपआद्युदात्तत्वंच । अग्ने पादादित्वात्षाष्ठिकमाद्युदात्तत्वम् । माकिष्टइतिसंहितायांयुष्मत्ततत्तक्षुःष्वन्तःपादमितिषत्वम् । दधर्षीत् धृषप्रसहने लङि बहुलंछन्दसीतिशपःश्लुः बहुलंछन्दसीतितिपईडागमः निघातः ॥ ३ ॥

अथचतुर्थी—

उद॑ग्ने॒तिष्ठ॒प्रत्यात॑नुष्व॒न्य॑मि॒त्राँओष॑तात्तिग्महेते ।
योनो॒अरा॑तिंसमिधान॒चक्रे॑नी॒चातंध॑क्ष्यत॒सं॑नशुष्क॑म् ॥ ४ ॥

उत् । अग्ने । तिष्ठ । प्रति । आ । तनुष्व । नि । अमित्रान् ।
ओषतात् । तिग्मऽहेते । यः । नः । अरातिम् । समऽइधान । चक्रे ।
नीचा । तम् । धक्षि । अतसम् । न । शुष्कम् ॥ ४ ॥

तिग्महेते तिग्मास्तीक्ष्णाहेतयोज्वालायस्यसतथोक्तः तादृश हेअग्ने उत्तिष्ठ रक्षोहननार्थमुद्यतोभव शत्रून्प्रतिआतनुष्व ज्वालासंघंविस्तारय तैस्तेजःसंघैरमित्रान् शत्रून्न्योषतात् नितरांदह हेसमिधान समिद्भिर्दीप्यमानाग्ने यःपुमान्नोऽस्माकम् अरातिं भावप्रधानोनिर्देशः अरातित्वंशात्रवंचक्रे कुरुते अरातिमदानंवाकुरुते तंपुमांसंनीचा न्यग्भूतंधक्षि दह तत्रदृष्टान्तः—अतसंन यथाशुष्कमनार्द्रमतसंकाष्ठंदहसितद्वत् ॥ ओषतात् उषदाहे लोटि हेस्तुह्योरितिातङादेशः । धक्षि दहेर्लोटि बहुलंछन्दसीतिशपोलुक् होढइतिढत्वं भष्भावः षढोःकः सीतिकत्वं निघातः ॥ ४ ॥

अथपञ्चमी—

ऊर्ध्वोभवप्रतिविध्याध्यस्मदाविष्कृणुष्वदैव्यान्यग्ने ।
अवस्थिरातनुहियातुजूनांजामिमजामिंप्रमृणीहिशत्रून्॥५॥२३॥

ऊर्ध्वः । भव । प्रति । विध्य । अधि । अस्मत् । आविः ।
कृणुष्व । दैव्यानि । अग्ने । अव । स्थिरा । तनुहि । यातुऽजूनाम् ।
जामिम् । अजामिम् । प्र । मृणीहि । शत्रून् ॥ ५ ॥ २३ ॥

हेअग्ने ऊर्ध्वोभव रक्षोहननार्थमुद्युक्तोभव अस्मदस्मत्तः अधि अधिकान्राक्षसान् प्रतिविध्य प्रत्येकंताडय दैव्यानितेजांस्याविष्कृणुष्व आविष्कुरु एतत्रयंविधाय यातुजूनांयातयितुंप्राणिनः क्लेशयितुंयेजवंकुर्वन्तितेषांयातुधानानांस्थिरा दृढानि धनूंषि अवतनुहि अवगतज्यानिकुरु किंच जामिंबन्धुमजामिमबन्धुंशत्रूप्रमृणीहि प्रजहि यद्वा जामिंयःपूर्वंप्रहृतःतमजामिंपूर्वमप्रहृतमेवंभूतान्शत्रून्जहि प्रहृतोयमित्युपेक्षांमाकृथाः ॥ आविष्कृणुष्वेत्यत्रसंहितायामिदुदुपधस्यचाप्रत्ययस्यचेतिषत्वम् । तनुहि तनोतेर्लोटि उतश्चप्रत्ययाच्छान्दसिवावचनमितिहेर्लुगभावः । यातुजूनां जुगतौ क्विब्वचीत्यादिनाक्विप्दीर्घौ आमिछान्दसोनुम् । प्रमृणीहि मृङ्प्राणत्यागे अन्तर्भावितण्यर्थस्य लोटि बहुलंछन्दसीतिविकरणःश्ना निघातः ॥ ५ ॥

॥ इतितृतीयस्यचतुर्थेत्रयोविंशोवर्गः ॥ २३ ॥

अथषष्ठी–

सतेंजानातिसुमतिंयंविष्ठयईवंतेब्रह्मणेगातुमैरंत् ।
विश्वांन्यस्मैसुदिनांनिरायोद्युम्नान्यर्योविदुरोंअभिद्यौत् ॥ ६ ॥

सः । ते । जानाति । सुऽमतिम् यविष्ठ । यः । ईवंते ।
ब्रह्मणे । गातुम् । ऐरंत् । विश्वानि । अस्मै । सुऽदिनानि । रायः ।
द्युम्नानिं । अर्यः । वि । दुरः । अभि । द्यौत् ॥ ६ ॥

यविष्ठ युवतम यद्वा देवानांहवींषिमिश्रयितृतम हेअग्ने यःपुमान् ईवते गमनवते कल्याणहेतुभूतागमनाय ब्रह्मणे परिवृढाय तुभ्यंगातुं गीयते उच्चार्यतइतिगातुःस्तोत्रं तदैरत्प्रेरयति सपुमान् ते तव सुमतिं कल्याणकरीमनुग्रहात्मिकांबुद्धिंजानाति लभतइत्यर्थः अस्मैस्तोत्रंकृण्वतेयजमानायतदर्थंविश्वानिसुदिनानिशोभनानि दिनानिरायोधनानिद्युम्नानिद्युतिमन्तिरत्नकनकादीनि दुरः गृहान् अभिअभिलक्ष्य अर्यः यज्ञानांस्वामी त्वं विद्योत् विशेषेणद्योतस्व केचिदत्रवाक्यभेदमङ्गीकुर्वते स्तोत्रंकृतवतेयजमानायविश्वानिसुदिनानि अभ्युदयकारीणि भवन्ति रायः रान्तिक्षीरादीनीनिरायोगोधनानिद्युम्नानि द्योतमानानिकनकादीनिचास्मैभवन्ति अर्यः कर्मणामनुष्ठाता सः यजमानःदुरःगृहानभिविद्योत विशेषेणद्योतते ॥ ईवते ईगतौ क्विप् तदस्यास्तीतिमतुप् छन्दसीरइतिमतुपोवत्वम् । ऐरत् ईरगतौ यद्वृत्तयोगादनिघातः । अर्यः ऋगतौ अर्यःस्वामिवैश्ययोरितियत्प्रत्ययान्तोनिपातितः स्वामिन्यन्तोदात्तत्वम् । द्यौत् द्युतदीप्तौ छान्दसे लुङ्द्युद्भ्योलुङीतिपरस्मैपदं बहुलंछन्दसीत्यडभावः ॥ ६ ॥

अथसप्तमी–

सेदंग्नेअस्तुसुभगःसुदानुर्यस्त्वानित्येनहविषायउक्थैः ।
पिप्रीषतिस्वआयुंषिदुरोणेविश्वेदस्मैसुदिनासासदिष्टिः ॥ ७ ॥

सः । इत् । अग्ने । अस्तु । सुऽभगः । सुऽदानुः । यः । त्वा । नित्येन ।
हविषा । यः । उक्थैः । पिप्रीषति । स्वे । आयुंषि । दुरोणे ।
विश्वा । इत् । अस्मै । सुऽदिना । सा । असत् । इष्टिः ॥ ७ ॥

हेअग्ने यःपुमान्नित्येन यावज्जीवंसंकल्पितेनाग्निहोत्रादिसाधनभूतेनहविषा त्वा त्वां पिप्रीषति प्रीणायितुमिच्छति यश्चोक्थैःशस्त्रैः प्रीणयितुमिच्छति सेत् सएवपुमान् सुभगःशोभनधनः सौभाग्यवान्वासुदानुः शोभनदानोपेतश्चास्तु किञ्च दुरोणेदुरवनेकृच्छ्रलभ्येस्वेस्वकीयेआयुषिशतवर्षाख्यजीवनेतिष्ठतु अस्मैयजमानायविश्वा सर्वाणि सुदिना शोभनानिदिनानि भवन्तु अस्य सेष्टिः सयज्ञः असत् फलसाधनसमर्थोभवतु ॥ पिप्रीषति प्रीङ्तर्पणे धातोःकर्मणइतिसन् । असत् अस्तेर्लेट्यडागमः । इष्टिः मन्त्रेवृषेत्यादिनाक्तिन्नुदात्तः ॥ ७ ॥

•उखासंभरणीयेष्टौअग्नेःक्षत्रभृतोर्चामितइतियाज्या सूत्रितश्च—अर्चामितेसुमतिंघोष्यर्वागितीदंप्रभृतिकर्मणामिति ।

सैषाष्टमी—

अर्चामितेसुमतिंघोष्यर्वाक्सन्तेवावाताजरतामियंगीः ।
स्वश्वास्त्वासुरथामर्जयेमास्मेक्षत्राणिधारयेरनुद्यून् ॥ ८ ॥

अर्चामि । ते । सुऽमतिम् । घोषि । अर्वाक् । सम् । ते ।
ववाता । जरताम् । इयम् । गीः । सुऽअश्वाः । त्वा । सुऽरथाः ।
मर्जयेम । अस्मे इति । क्षत्राणि । धारयेः । अनु । द्यून् ॥ ८ ॥

हेअग्ने ते तव सुमतिम् अनुग्रहकरांशोभनांबुद्धिम् अर्चामि पूजयामि वावाता पुनःपुनस्त्वामभिगच्छन्तीयमुच्यमानागीर्वाग्घोषि घोषयुक्तंयथाभवतितथार्वाक् त्वदभिमुखं ते त्वां संजरतांस्तौतु वयमपि स्वश्वाःशोभनाश्वोपेताः सुरथाश्च उपलक्षणमेतत् पुत्रपौत्रादिभिःसहिताः सन्तस्त्वांमर्जयेम अलङ्कुर्याम परिचरेमेतियावत् त्वंतुअनुद्यून् अन्वहमस्मेअस्मासुक्षत्राणिधनानिधारयेः निधेहि ॥ घोषि घुषशब्दने औणादिकइन् नित्त्वादाद्युदात्तः । वावाता वागतिगन्धनयोरित्यस्ययङ्लुगन्तस्यरूपम् । मर्जयेम मृजूशौचालङ्कारयोः ण्यन्तस्य लिङिरूपं वृद्ध्यभावश्छान्दसः ॥ ८ ॥

अथनवमी—

इहत्वाभूर्याचरेदुपत्मन्दोषावस्तर्दीदिवांसमनुद्यून् ।
क्रीळन्तस्त्वासुमनसःसपेमाभिद्युम्नातस्थिवांसोजनानाम् ॥ ९ ॥

इह । त्वा । भूरि । आ । चरेत् । उप । त्मन् । दोषाऽवस्तः ।
दीदिऽवांसम् । अनु । द्यून् । क्रीळन्तः । त्वा । सुऽमनसः । सपेम ।
अभि । द्युम्ना । तस्थिऽवांसः । जनानाम् ॥ ९ ॥

हेअग्ने इहरक्षोहननाख्येकर्मणि यद्वा अस्मिँल्लोकेपुरुषःदोषावस्तःरात्रावहनिचदीदिवांसंदीप्यमानंत्वामनुद्यूनन्वहं त्मन् आत्मना स्वयमेवउपसमीपे भूरि भूयिष्ठं यथाभवतितथा आचरेत् परिचरति तस्माद्वयमपिजनानांशत्रूणांद्युम्नानिधनानिअभितस्थिवांसःत्वत्प्रसादादात्मसात्कुर्वन्तः अतएवक्रीडन्तः स्वेस्वेगृहेपुत्रपौत्रादिभिःसहक्रीडन्तः तथा सुमनसःशोभनमनस्काःसन्तस्त्वांसपेम परिचरेम यद्वा दोषावस्तरितिसंबुद्धिः दोषायाःरात्रिकृतस्यतमसो वस्तःआच्छादयितःनिवारयितः ॥ त्मन् आत्मन्शब्दस्यतृतीयायाःसुपांसुलुगितिलुक् मन्त्रेष्वाङ्यादेरात्मनइत्याकारलोपः । दोषावस्तः द्वन्द्वपक्षेकार्तकौजपादयश्चेतिपूर्वपदप्रकृतिस्वरः संबुद्धिपक्षेआमन्त्रितस्यपादादित्वात्षाष्ठिकमाद्युदात्तत्वम् । सपेम षपसमवाये लिङिरूपं निघातः ॥ ९ ॥

अथदशमी—

यस्त्वास्वश्वःसुहिरण्योअग्नउपयातिवसुमतारथेन ।
तस्यत्राताभवसितस्यसखायस्तआतिथ्यमानुषग्जुजोषत् १०।२४

यः । त्वा । सुऽअश्वः । सुऽहिरण्यः । अग्ने । उपऽयाति ।
वसुऽमता । रथेन । तस्य । त्राता । भवसि । तस्य । सखा ।
यः । ते । आतिथ्यम् । आनुषक् । जुजोषत् ॥ १० ॥ २४ ॥

हेअग्ने यःपुमान्स्वश्वः शोभनाश्वोपेतः सुहिरण्यः यागयोग्यधनोपेतः वसुमता व्रीह्यादिधनयुक्तेनरथेनसहितःसन् त्वात्वामुपयाति परिचरणार्थंतवसमीपंगच्छति तस्यपुंसः त्राता सर्वदुरितेभ्योरक्षकोभवसि यश्चपुमान्तेतवआतिथ्यमतिथियोग्यांपूजामानुषक् अनुक्रमेणजुजोष त्प्रापयति तस्यपुंसः सखा तदुचितफलप्रदानेनोपकर्ताभवसि ॥ उपयाति सहसुपेत्यत्रसहेतियोगविभागात्समासः तिपःपित्त्वादनुदात्तत्वेधातुस्वरः तिङिचोदात्तवतीतिगतेर्निघातः । आतिथ्यम् अतिथिशब्दादतिथेर्ञ्यइतिञ्यप्रत्ययः प्रत्ययस्वरः । जुजोषत् जोषयतेर्लेङिबहुलंछन्दसीतिशपः श्लुः छन्दस्युभयथेतितिपआर्धधातुकत्वाण्णिलोपः अभ्यस्तानामादिरित्याद्युदात्तत्वम् ॥ १० ॥

॥ इतितृतीयस्यचतुर्थेचतुर्विंशोवर्गः ॥ २४ ॥

अथैकादशी—

महोरुजामिबन्धुतावचोभिस्तन्मापितुर्गोतमादन्वियाय ।
त्वंनोअस्यवचसश्चिकिद्धिहोतर्यविष्ठसुक्रतोदमूनाः ॥ ११ ॥

महः । रुजामि । बन्धुता । वचःऽभिः । तत् । मा । पितुः ।
गोतमात् । अनु । इयाय । त्वम् । नः । अस्य । वचसः ।
चिकिद्धि । होतः । यविष्ठ । सुक्रतो इति सुऽक्रतो । दमूनाः ॥ ११ ॥

हेहोतः देवानामाह्वातः यविष्ठ युवतम सुक्रतो शोभनप्रज्ञ हे अग्ने वचोभिः त्वदुद्देशेनकृतैः स्तोत्रैःसमुपजातायेयंबन्धुताबन्धुभावः तयाबन्धुतया महोमहतोराक्षसात्रुजामि भनज्मि तत्ताद्दशंस्तोत्रात्मकंवचः पितुरुत्पादयितुः गोतमादृषेःसकाशान्मावामदेवंमामन्वियाय दमूनादान्तमनादानमनावाशत्रूणामुपक्षपयितावाताद्दशस्त्वंनोस्मदीयस्यास्यवचसःस्तोत्रात्मकमेतद्वाक्यंचिकिद्धि जानीहि ॥ चिकिद्धि कितज्ञाने जौहोत्यादिकः लोटिरूपम् । होतः पादादित्वात्षाष्ठिकमाद्युदात्तत्वम् । इतरयोस्तुनामन्त्रितेसमानाधिकरणेइतिप्रथमस्याविद्यमानवद्भावनिषेधादपादादित्वेननिघातः ॥ ११ ॥

अथद्वादशी—

अस्वप्नजस्तरणयः सुशेवाअतन्द्रासोवृकाअश्रमिष्ठाः ।
तेपायवःसध्र्यञ्चोनिषद्याग्नेतवनःपान्त्वमूर ॥ १२ ॥

अस्वप्नऽजः । तरणयः । सुऽशेवाः । अतन्द्रासः । अवृकाः ।
अश्रमिष्ठाः । ते । पायवः । सध्र्यञ्चः । निऽसद्य । अग्ने ।
तव । नः । पान्तु । अमूर ॥ १२ ॥

अमूर अमूढ सर्वज्ञ यद्वा अमूर अप्रतिहतगते हेअग्ने अस्वप्नजः अस्वपन्तः जागरूकाइतियावत् तरणयः सततगमनस्वभावाः आपद्भ्यस्तारकावासुशेवाःसुसुखाःअतन्द्रासः अतन्द्राःअनलसाःसर्वदोद्युक्ताः अवृकाः अहिंसकाः अश्रमिष्ठाः अश्रान्ततमाःसध्र्यञ्चःपरस्परंसंगताः पायवोरक्षकास्ते ताद्दशास्तवरश्मयः निषद्यास्मद्यज्ञेनिषण्णाभूत्वानोऽस्मान्पान्तुरक्षन्तु ॥

अस्वप्नजः स्वपितृषोर्नजिङ्प्रत्ययः मध्येवग्रहश्छान्दसः । सध्र्यञ्चः सहपूर्वादञ्चतेःक्विप् सहस्यसध्रिरितिसध्र्यादेशः सध्र्यादेशस्यान्तोदात्तत्वनिपातनाद्यणादेशेउदात्तस्वरितयोरितिस्वरितत्वम् । अमूर मुहवैचित्ये निष्ठायांढकारस्यरेफश्छान्दसः यद्वा मूङ्बन्धने औणादिको रक्प्रत्ययः ॥ १२ ॥

अथत्रयोदशी—

येपायवोमामतेयन्तेअग्नेपश्यन्तोअन्धंदुरितादरक्षन् ।
ररक्षतान्त्सुकृतोविश्ववेदादिप्सन्तइद्रिपवोनाहदेभुः ॥ १३ ॥

ये । पायवः । मामतेयम् । ते । अग्ने । पश्यन्तः । अन्धम् ।
दुःऽइतात् । अरक्षन् । ररक्ष । तान् । सुऽकृतः । विश्वऽवेदाः ।
दिप्सन्तः । इत् । रिपवः । न । अह । देभुः ॥ १३ ॥

अत्रेयमैतिहासिकीकथा—उचथ्यस्यगर्भिणींममतानामधेयांभार्यां तदनुजोबृहस्पतिरचकमत तस्यांरेतआधित्सुंतंबृहस्पतिंगर्भस्थंरेतोऽब्रवीत् रेतोऽत्रमासैक्षीः अहमत्रवसामीति एवमुक्तोबृहस्पतिः निरुद्धरेतस्कःसन् रेतोरूपंगर्भंशशाप जात्यन्धत्वरूपंदीर्घतमःप्राप्नुहीति ततस्तस्यांदीर्घतमाअजनिष्ट सचान्ध्यपरिहारायाग्निंस्तुत्वाचक्षुरलभतेति तदिदानीमाह—हेअग्ने पायवः रक्षकाः पश्यन्तःअन्धोयमितिकृपादृष्ट्यापश्यन्तः तेतवयेरश्मयः मामतेयं ममतायाः पुत्रमन्धंचक्षुर्हीनंदीर्घतमसंदुरितात्आन्ध्यलक्षणाच्छापात्अरक्षन् चक्षुष्प्रदानेनापालयन् विश्ववेदाः विश्वप्रज्ञोभवान् सुकृतः शोभनचक्षुष्प्रदानादिकर्मकृतवतः तान्रश्मीन्ररक्ष आदरेणपरिगृह्यपालयतितेषांपरिग्रहसिद्धिरभिधीयते दिप्सन्तइत् दम्भितुंपरिभवितुमिच्छन्तएव रिपवःशत्रवः एनंदीर्घतमसंनाहदेभुः नैवपरिभवन्तिखलु ॥ मामतेयं ममतायाअपत्यमित्यर्थे स्त्रीभ्योढक् । दिप्सन्तः दम्भुदम्भे सनीवन्तर्धीत्यादिनाइडभावः दम्भइच्चेतीकारः । देभुः श्रन्थिग्रन्थिदम्भिष्वञ्जीनामुपसंख्यानमितिलिटःकित्त्वादुपधालोपः ॥ १३ ॥

अथचतुर्दशी—

त्वयावयंसधन्य१स्त्वोतास्तवप्रणीत्यश्यामवाजान् ।
उभाशंसासूदयसत्यतातेनुष्टुयाकृणुह्यह्रयाण ॥ १४ ॥

त्वया । वयम् । सऽधन्यः । त्वाऽऊताः । तव । प्रऽनीती ।
अश्याम । वाजान् । उभा । शंसा । सूदय । सत्यऽताते ।
अनुष्ठुया । कृणुहि । अह्रयाण ॥ १४ ॥

अह्रयाण अलज्जितगमन अह्रयाणोह्रीतयानइतियास्कः । तादृश हेअग्ने वयंस्तोतारः त्वयासधन्यः त्वत्प्रसादात्समानधनाः त्वोताः त्वयारक्षितावयं तवप्रणीती प्रणीत्या तवप्रेरणेनानुज्ञयावा वाजानन्नान्यश्यामप्राप्नुयाम हेसत्यताते सत्यंतनोतीतिवासत्यंतायतेयस्मिन्निति वासत्यतातिः हेसत्यताते शंसा पापानांशंसितारौ उभा उभौ आसन्नविप्रकृष्टौशत्रू सूदय जहि अनुष्ठुया अनुक्रमेणकृणुहि अस्मिन्सूक्तेप्रतिपादितमर्थंकुरु ॥ सधन्यः धनमेषामस्तीति छन्दसीवनिपाविितिईप्रत्ययः एरनेकाचइतियण् उदात्तस्वरितयोरितिस्वरितत्वम् । अनुष्ठुया अपदुःसुषुस्थइतिविधीयमानःकुप्रत्ययः बहुलवचनादनुपूर्वस्यापिभवति सुपांसुलुगितितृतीयायायाजादेशः । अह्रयाण ह्रीलज्जायां बहुलंछन्दसीतिशपःश्लुभावाभावः अनित्यमागमशासनमितिमुगभावः ॥ १४ ॥

अथपञ्चदशी—

अयातेअग्नेसमिधांविधेमप्रतिस्तोमंशस्यमानंगृभाय ।
दहाशसोरक्षसःपाह्य[1]स्मान्द्रुहोनिदोमित्रमहोअवद्यात् ॥ १५ ॥ २५

अया । ते । अग्ने । सम्ऽइधा । विधेम । प्रति । स्तोमम् ।
शस्यमानम् । गृभाय । दह । अशसः । रक्षसः । पाहि ।
अस्मान् । द्रुहः । निदः । मित्रऽमहः । अवद्यात् ॥ १५ ॥ २५ ॥

हेअग्ने अया अनया समिधा दीप्तयास्तुत्या ते त्वांविधेम परिचरेम अस्माभिःशस्यमानमिमं स्तोमंस्तोत्रंप्रतिगृभाय प्रतिगृहाण अशसः शंसन्तिस्तुवन्तीतिशसःस्तोतारः तेनभवन्तीतिअशसोनृशंसाः तान्रक्षसोदह भस्मसात्कुरु हेमित्रमहः मित्रैःपूजनीय हेअग्ने द्रुहोद्रोग्धुः निदः निन्द-

१ नि० ५. १५. ।

कान् अवद्यात्परिवादाच्चास्मान्पाहि रक्ष ॥ गृभाय ग्रहेर्लोटि छन्दसिशायजपीतिश्नःशायच् हृग्रहोर्भः । पाहि वाक्यभेदादनिघातः । निदः णिदिकुत्सायां क्विप् आगमानुशासनस्यानित्यत्वान्नुमभावः सावेकाचइतिविभक्तेरुदात्तत्वम् । अवद्यात् अवद्यपण्येतियत् यतोऽनावइत्याद्युदात्तत्वम् । मित्रमहोअवद्यादित्यत्रसंहितायाअव्यादवद्यादितिएङःप्रकृतिभावः ॥ १५ ॥

॥ इतितृतीयस्यचतुर्थेपञ्चविंशोवर्गः ॥ २५ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

॥ इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेणसायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येतृतीयाष्टकेचतुर्थोध्यायः ॥ ३ ॥ ४ ॥

## ॥ श्रीगणेशायनमः ॥

यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत् ॥ निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥ १ ॥
इत्थंतृतीयाष्टकगश्चतुर्थोध्यायआदरात् ॥ व्याख्यातःसायणाचार्येणपञ्चमोव्याकरिष्यते ॥ २ ॥

चतुर्थेमण्डलेप्रथमेनुवाकेदशसूक्तानि वैश्वानरायेतिपञ्चदशर्चंपञ्चमंसूक्तं वामदेवस्यार्षं त्रैष्टुभंवैश्वानराग्निदेवताकम् अत्रानुक्रमणिका—वैश्वानरायवैश्वानरीयमिति विनियोगोलैङ्गिकः ।

तत्रप्रथमा—

**ॐम्वैश्वानरायंमीळ्हुषेसजोषाःकथादाशेमाग्नयेबृहद्भाः ।**
**अनूनेनबृहतावक्षथेनोपस्तभायदुपमिन्नरोधः ॥ १ ॥**

वैश्वानराय । मीळ्हुषे । सऽजोषाः । कथा । दाशेम । अग्नये ।
बृहत् । भाः । अनूनेन । बृहता । वक्षथेन । उप । स्तभायत् ।
उपऽमित् । न । रोधः ॥ १ ॥

सजोषाः सजोषसःसमानप्रीतियुक्तावयमृत्विग्यजमानाः वैश्वानराय विश्वानरसंबन्धिनएतन्नामकाय मीळ्हुषे अभिमतवृष्ट्यादिसेक्त्रेबृहत् बृहते महते भाः भासमानायाग्नयेदेवाय कथा कथं केनप्रकारेणदाशेम दद्याम सामर्थ्याद्धविरितिगम्यते अथवा बृहद्भाइत्युत्तरत्रयोज्यम् कथादाशेमेत्युक्तम् किंतत्राधिक्यमितितदुच्यते—योग्निः बृहन्महान्भाः भासमानश्चसन् अनूनेन अविकलेन संपूर्णेन अतएव बृहताप्रभूतेनवक्षथेनवोढव्येनस्वशरीरेण उपस्तभायत् उपस्तभ्नाति सामर्थ्यात्द्यामितिशेषः द्युलोकंव्याप्नोतीत्यर्थः तत्रदृष्टान्तः—उपमिन्नरोधः उपसमीपेमीयतेक्षिप्यतेइत्युपमित् स्थूणा सा यथातृणाच्छादनादिनिरोधकं वंशादिकमुपस्तभ्नातितद्वत् यद्वा वक्षथेन उक्थलक्षणेनफलादिवाहकेनस्तोत्रेणसहद्युलोकमुपस्तभायत् ॥ स्तभायत् स्तन्भुःसौत्रोधातुः लङि छन्दसिशायजपीतिव्यत्ययेनाह्यावपिशायजादेशः बहुलंछन्दसीत्यडभावः किमिवउपमिन्नरोधः उपसमीपेमीयतइत्युपमिदुदकंकूलमिव ॥ १ ॥

अथद्वितीया—

मानिन्दतयइमांमह्यंरातिंदेवोददौमर्त्यायस्वधावान् ।
पाकायगृत्सोअमृतोविचेतावैश्वानरोनृतमोयह्वोअग्निः ॥ २ ॥

मा । निन्दत । यः । इमाम् । मह्यम् । रातिम् । देवः । ददौ । मर्त्याय । स्वधाऽवान् । पाकाय । गृत्सः । अमृतः । विऽचेताः । वैश्वानरः । नृऽतमः । यह्वः । अग्निः ॥ २ ॥

हेहोत्रादयः अमुंवैश्वानरमग्निंमानिन्दत निन्दांमाकुरुत स्तुतेत्यर्थः योदेवोदीप्यमानोऽग्निः स्वधावानस्मद्दत्तेनहविर्लक्षणेनान्नेनतद्वान्सन् मर्त्यायमरणधर्मायपाकायपरिपक्वप्रज्ञायमह्यं यजमानाय इमामिदानींदीयमानप्रकारांरातिंधनंददौ दत्तवान् सविशेष्यते गृत्सोमेधावी मेधाविनामैतत् अमृतः अमरणस्वभावः विचेताः विशिष्टप्रज्ञोवैश्वानरः विश्वैर्नरैराहवनीयादिरूपेणनीयमानः नृतमः नेतृतमः फलादीनां यह्वोमहान् महन्नामैतत् अग्निः अङ्गनादिगुणविशिष्टः तादृशमग्निंस्तुतेतिभावः ॥ २ ॥

अथतृतीया—

साममद्विबर्हामहितिग्मभृष्टिःसहस्ररेतावृषभस्तुविष्मान् ।
पदंनगोरपगूळ्हंविविद्वानग्निर्मह्यंप्रेदुवोचन्मनीषाम् ॥ ३ ॥

साम । द्विऽबर्हाः । महि । तिग्मऽभृष्टिः । सहस्रऽरेताः । वृषभः । तुविष्मान् । पदम् । न । गोः । अपऽगूळ्हम् । विविद्वान् । अग्निः । मह्यम् । प्र । इत् । ऊँ इति । वोचत् । मनीषाम् ॥ ३ ॥

द्विबर्हाः द्वयोर्मध्यमोत्तमयोःस्थानयोःपरिवृढः तिग्मभृष्टिः तीक्ष्णतेजाः सहस्ररेताः बहुविधहिरण्यरेतस्कः रेतःशब्दःसारवाची प्रभूतसारोवा वृषभोवर्षिताकामानां तुविष्मान्बहुधनः ईदृशोयमग्निः अत्यन्तगोपितंगोःपदंन नष्टंगोःपदमिव अपगूळ्हम्अत्यन्तरहस्यं मनीषाशब्दो ज्ञानवाचीसन्नत्रज्ञातव्येवर्तते मनीषांज्ञातव्यंमहिमहत्पूज्यंसामअस्मदभिमतंस्तोत्रंविविद्वान्विशेषेणजानन्प्रेदुवोचत् प्रैवब्रवीतु ॥ ३ ॥

अथचतुर्थी—

प्रताँअग्निर्बभसत्तिग्मजंम्भस्तपिष्ठेनशोचिषायःसुराधाः ।
प्रयेमिनन्तिवरुणस्यधामंप्रियामित्रस्यचेततोध्रुवाणि ॥ ४ ॥

प्र । तान् । अग्निः । बभसत् । तिग्मऽजंम्भः । तपिष्ठेन । शोचिषा । यः । सुऽराधाः । प्र । ये । मिनन्ति । वरुणस्य । धाम । प्रिया । मित्रस्य । चेततः । ध्रुवाणि ॥ ४ ॥

योग्निः सुराधाः शोभनधनः तिग्मजम्भः तीक्ष्णदंष्ट्रःसन् तपिष्ठेनशोचिषा अतिशयेनशत्रूणांतापकेनतेजसातान्वक्ष्यमाणाद्वेष्टॄन् प्रबभसत् प्रकर्षेणभर्त्सयतु दहत्वित्यर्थः भसभर्त्सनदीप्त्योः लेटि इतश्चलोपइतीकारलोपः लेटोडाटावित्यडागमः तानित्युक्तंकानित्याह येद्वेष्टारः चेततः जानतः एतदुभयविशेषणंमित्रस्यवरुणस्यच प्रिया प्रियाणि ध्रुवाणि स्थिराणि धाम धामानि तेजःस्थानानि कर्माणिवा प्रमिनन्ति प्रकर्षेणहिंसन्ति मीञ्हिंसायां मीनातेर्निगमेइतिह्रस्वत्वं विकरणस्वरः ॥ ४ ॥

अथपञ्चमी—

अभ्रातरोनयोषणोव्यन्तःपतिरिपोनजनयोदुरेवाः ।
पापासःसन्तोअनृताअसत्याइदंपदमंजनतागभीरम् ॥ ५ ॥१॥

अभ्रातरः । न । योषणः । व्यन्तः । पतिऽरिपः । न । जनयः । दुःऽएवाः । पापासः । सन्तः । अनृताः । असत्याः । इदम् । पदम् । अजनत । गभीरम् ॥ ५ ॥ १ ॥

अभ्रातरः भ्रात्रादिबन्धुरहिताः योषणोन गतभर्तृकायोषितइव वार्णपूर्वस्यनिगमेइति विकल्पनाद्दीर्घाभावः तायथाभर्तृगृहात्पितृगृहंप्रत्यायन्तितद्वत् व्यन्तः गच्छन्तः यज्ञादीनपहाय अमार्गेवर्तमानाइत्यर्थः तथा पतिरिपोनजनयः पतिद्वेषिण्यःस्त्रियइव दुरेवाः दुष्टगतयः दुराचाराः अतएवपापासः पापाःसन्तः अनृताः मानससत्यरहिताः असत्याःवाचिकसत्यरहिताः मनसावाचाग्निमभजमानाःइदंपापिभिरनुभूयमानतयाप्रसिद्धंगभीरमगाधंपदंनरकस्थानमजनत अजनयन्त उत्पादयन्ति लङिजनेरन्तर्भावितण्यर्थाद्व्यत्ययेनैकवचनम् ॥ ५ ॥

॥ इतितृतीयस्यपञ्चमेप्रथमोवर्गः ॥ १ ॥

इदंमेअग्नेकियंतेपावकामिनतेगुरुंभारंनमन्म ।
बृहद्दधाथधृषतागभीरंयह्वंपृष्ठंप्रयसासप्तधातु ॥ ६ ॥

इदम् । मे । अग्ने । कियते । पावक । अमिनते । गुरुम् ।
भारम् । न । मन्म । बृहत् । दधाथ । धृषता । गभीरम् ।
यह्वम् । पृष्ठम् । प्रयसा । सप्तऽधातु ॥ ६ ॥

हेपावक शोधकाग्ने कियते अत्यल्पाय गुरुंभारंन वोढुमशक्यंभारमिव तंयथा धर्तुमसहमानःपातयतितद्वत् त्वदीयंकर्मामिनते अहिंसते अत्यजतेमेमह्यमिदंज्ञातव्यत्वेनप्रसिद्धंबृहत्प्रभूतं मन्ममननीयं धनं दधाथ देहि तदेवविशेष्यते धृषताशत्रूणांधर्षकेणप्रयसा अन्नेनाअैतत् अन्नेनयुक्तंगभीरमन्यैरनवगाह्यं यह्वं महत्पृष्ठं स्प्रष्टुंयोग्यं सप्तधातु ग्राम्यारण्यभेदेनसप्तप्रकारं सप्तग्राम्याःपशवः सप्तारण्याइतिश्रुतेः । ईदृग्धनंदेहीत्यर्थः गुरुंभारंन अन्यदीयंभारं यथा अन्यस्मैददातितद्वदस्माकं दातव्यं धनं देहीतिवायोज्यम् ॥ ६ ॥

अथसप्तमी—

तमिन्न्वे३वसमनासमानमभिक्रत्वापुनतीधीतिरश्याः ।
ससस्यचर्मन्नधिचारुपृश्नेरग्रेरुपआरुपितंजबारु ॥ ७ ॥

तम् । इत् । नु । एव । समना । समानम् । अभि । क्रत्वा ।
पुनती । धीतिः । अश्याः । ससस्य । चर्मन् । अधि । चारु ।
पृश्नेः । अग्रे । रुपः । आरुपितम् । जबारु ॥ ७ ॥

अग्निविद्युदादित्यास्त्रयोपि मतभेदेन वैश्वानरशब्दाभिधेयाइतियास्केनोक्तत्वादत्रादित्यात्मनावैश्वानरःस्तूयते—तमित्तमेव वैश्वानरं द्युस्थानं समानंसर्वेषामेकरूपंसमानासदृशीतद्योग्यापुनती अस्मान्शोधयित्रीधीतिर्मतिः अस्मदीयास्तुतिः क्रत्वा तदुचितेनकर्मणान्वेव क्षिप्रमेवाश्याः अभिप्राप्नुयाद्भजेदित्यर्थः अश्नोतेर्लिङि बहुलंछन्दसीतिविकरणस्यलुक् व्यत्ययेनपरस्मैपदं मध्यमपुरुषत्वंचपूर्वत्रतच्छब्दश्रुतेर्यच्छब्दोध्याहार्यः यस्यद्युस्थानस्यवैश्वानर-

१ तै० सं० ५. २. ५. । २ नि० ७. २३. ।

स्य जबारु जवमानरोहि चारुदीप्तंमण्डलं जबारुजवमानरोहीतिवाजरमाणरोहीतिवेतियास्कः । अग्रेपुरस्तात्पूर्वस्यांदिशि रुपः आरोपयतिस्वात्मनिसस्यादीनि रुबितिभूमिरुच्यते तस्याःसकाशात् ससस्यलुप्तोपममेतत् स्वपतइव निश्चलस्यपृश्नेः द्युनामैतत् स्वःपृश्निरितिद्युलोकादित्ययोःसाधारणनामसुपाठात् ज्योतिरादिभिःस्पृश्यमानस्यद्युलोकस्याधिउपरिचर्मन् चर्मणे चरणाय चरेरौणादिकोमनिन् सुपांसुलुगितिचतुर्थ्यालुक् आरुपितम् आरोपितंदेवैस्तमश्याइतिपूर्वत्रान्वयः ॥ ७ ॥

अथाष्टमी—

प्रवाच्यंवचसःकिंमेअस्यगुहांहितमुपंनिणिग्वंदन्ति ।
यदुस्रियाणामपवारिवव्रन्पातिप्रियंरुपोअग्रंपदंवेः ॥ ८ ॥

प्रऽवाच्यम् । वचसः । किम् । मे । अस्य । गुहां । हितम् । उपं । निणिक् । वदन्ति । यत् । उस्रियाणाम् । अपं । वाःऽइव । व्रन् । पाति । प्रियम् । रुपः । अग्रम् । पदम् । वेरिति वेः ॥ ८ ॥

मेमदीयस्य अस्य वक्ष्यमाणस्यवचसोवाक्यस्य किंप्रवाच्यमस्ति तथ्यमेवोच्यतइत्यर्थः किंतद्वचइत्युच्यते उस्रियाणां गोनामैतत् क्षीराद्युत्स्राविणीनांगवांसंबन्धियत्क्षीरं वारिवदुदकमिव तद्यथासेकेनाविष्कुर्वन्ति तथा अपव्रन् अपवृण्वन्तिदोग्धारः निणिक् नितरांनेनेक्ति शोधयतीतिनिणिक् क्षीरमुच्यते तादृक्क्षीरम् अनेनवैश्वानरेण गुहागुहायाम् उपहितम् उपनिहितं वदन्तिवेत्तारः किंचायंवेः व्याप्तायाःरुपःभूम्याःप्रियं सर्वेषामाधारत्वेनप्रियभूतम् अग्रं श्रेष्ठंपदंस्थानंपातिरक्षति ॥ ८ ॥

अथनवमी—

इदमुत्यन्महिमहामनीकंयदुस्रियासचंतपूर्व्यंगौः ।
ऋतस्यपदेअधिदीद्यानंगुहारघुष्यद्रघुयद्विवेद ॥ ९ ॥

१ नि० ६. १७. ।

इदम् । ॐ इति । त्यत् । महि । महाम् । अनीकम् ।
यत् । उस्रियाः । सचंत । पूर्व्यम् । गौः । ऋतस्य । पदे ।
अधि । दीद्यानम् । गुहा । रघुऽस्यत् । रघुऽयत् । विवेद ॥ ९ ॥

इदमु इदमेव त्यत्प्रसिद्धं महि महत् पूज्यं महां महतांदेवानामनीकंसमूहरूपसूर्यमण्डलं वैश्वानरएवेतिशेषः पूर्व्यं पूर्वकालीनंपूरकंवा यन्मण्डलम्उस्रियाक्षीराद्युत्स्राविणीगौः अग्निहोत्राद्यर्थंसचते सेवते ऋतस्योदकस्यपदेस्थानेअन्तरिक्षेधि अधिकं यद्वा अधीतिसप्तम्यर्थानुवादः दीद्यानं द्योतमानं गुहा गुहायां रघुष्यत् शीघ्रंस्यन्दमानं रघुयत् शीघ्रंगच्छत्सूर्यमण्डलंविवेद वैश्वानरमेवेतिज्ञातवानस्मि ॥ ९ ॥

अथदशमी–

**अधद्युतानःपित्रोःसचासामनुतगुह्यंचारुपृश्नेः ।**
**मातुष्पदेपरमेअन्तिषद्गोर्वृष्णःशोचिषःप्रयतस्यजिह्वा ॥१०॥२॥**

अध । द्युतानः । पित्रोः । सचा । आसा । अमनुत । गुह्यम् ।
चारु । पृश्नेः । मातुः । पदे । परमे । अन्ति । सत् । गोः ।
वृष्णः । शोचिषः । प्रऽयतस्य । जिह्वा ॥ १० ॥ २ ॥

अध अथ द्युतानोदीप्यमानः पित्रोर्द्यावापृथिव्योः सचा सह मध्ये व्याप्तःसन् पृश्नेर्गोः संबन्धि चारुरमणीयं गुह्यमूधसिनिगूढंपयः आसा स्वकीयेनास्येन अमनुत पानायावुध्यत उक्तमेवार्थंविवृणोति मातुःक्षीरादिनिर्मात्र्यागोः परमेपदे उत्कृष्टेस्थाने ऊधोलक्षणे अन्तिसत् समीपेविद्यमानंक्षीरं वृष्णः फलानांवर्षितुःशोचिषोदीप्तस्यप्रयतस्याहवनीयादिरूपेणनियतस्यवैश्वानरस्यजिह्वापातुमिच्छतीतिशेषः ॥ १० ॥

॥ इतितृतीयस्यपञ्चमेद्वितीयोवर्गः ॥ २ ॥

अथैकादशी–

**ऋतंवोचेनमसापृच्छ्यमानस्तवाशसाजातवेदोयदीदम् ।**
**त्वमस्यक्षयसियद्धविश्वंदिवियद्द्रविणंयत्पृथिव्याम् ॥ ११ ॥**

ऋतम् । वाचे । नमसा । पृच्छ्यमानः । तव । आऽशसा ।
जातऽवेदः । यदि । इदम् । त्वम् । अस्य । क्षयसि । यत् । ह ।
विश्वम् । दिवि । यत् । ऊँ इति । द्रविणम् । यत् । पृथिव्याम् ॥११॥

अहंयजमानः नमसा नमस्कारेणसहपृच्छ्यमानः अन्यैरनुयुज्यमानःसन् ऋतंवोचे सत्यंब्रवीमि किंतदित्युच्यते—हेजातवेदः जातानांवेदितः जातप्रज्ञवाग्ने तवाशसा त्वत्स्तुत्यासाधनेनयदीदंधनंलब्धमस्माभिःस्यात् अस्यधनस्य त्वंक्षयसि त्वमेवेश्वरोभवसि तस्यधनस्ययज्ञादिद्वाराग्न्यर्थत्वादितिभावः अत्यल्पमिदमुक्तं यद्वा विश्वंयत्खलुकृत्स्नं धनमस्ति तस्यापीशिषे विश्वमितिसामान्येनयदुक्तं तदेवविशदयति—दिवि द्युलोके यद्द्रविणं यदेवधनं यच्चपृथिव्यां धनंतस्यसर्वस्यत्वमीश्वरोभवसि यज्ञार्थंद्रव्यमुत्पन्नमितिस्मरणात् अग्निव्यतिरेकेणयज्ञासंभवादितिभावः ॥ ११ ॥

अथद्वादशी—

किंनोअस्यद्रविणंकद्धरत्नंविनोवोचोजातवेदश्चिकित्वान् ।
गुहाध्वनःपरमंयन्नोअस्यरेकुपदंननिदानाअगन्म ॥ १२ ॥

किम् । नः । अस्य । द्रविणम् । कत् । ह । रत्नम् । वि ।
नः । वोचः । जातऽवेदः । चिकित्वान् । गुहा । अध्वनः । परमम् ।
यत् । नः । अस्य । रेकु । पदम् । न । निदानाः । अगन्म ॥१२॥

पूर्वमन्त्रेणयस्यधनस्याग्निस्त्वामित्वमुक्तम् अस्यधनस्यकिंद्रविणं किंसाधनभूतंनोस्मभ्यं दातव्यंधनमस्ति कद्धरत्नं किंचरमणीयंहितकरंधनमस्ति तद्धनं हेजातवेदः जातधनाग्ने चिकित्वान् चेतनावानभिज्ञस्त्वंनोस्मभ्यंविवोचः विब्रूहि यद्वा किंदातव्यंद्रविणमस्ति अस्यद्रविणराशेः कद्धरत्नमितियोज्यम् अस्याध्वनः धनप्राप्तिमार्गस्य यत् गुहा गुहायांनिहितंगूढंपरममुत्कृष्टंप्राप्तव्यमस्तितदपिनोस्मभ्यंविवोचः वयं रेकुरिक्तंपदं गन्तव्यंस्थानं गृहादिकं निदानाः अन्यैर्निन्द्यमानाः कर्मणिकर्तृप्रत्ययः नागन्म नप्राप्नुमः ॥ १२ ॥

अथत्रयोदशी—

कामर्यादावयुनाकद्धवाममच्छागमेमरघवोनवाजम् ।
कदानोदेवीरमृतस्यपत्नीःसूरोवर्णेनततनन्नुषासः ॥ १३ ॥

का । मर्यादा । वयुना । कत् । ह । वामम् । अच्छ । गमेम ।
रघवः । न । वाजम् । कदा । नः । देवीः । अमृतस्य । पत्नीः ।
सूरः । वर्णेन । ततनन् । उषसः ॥ १३ ॥

कामर्यादा काप्राच्यादिव्यवस्था काचवयुना प्रज्ञानंपदार्थविषयम् किंचवामं वननीयंपदार्थजातम् एतत्सर्वम् अच्छ गमेम अधिगच्छेम तत्रदृष्टान्तः—रघवोन वाजं शीघ्रगामिनोश्वादयःसंग्राममिव तद्वत् कदाकस्मिन्कालेनोस्माकंव्यवहाराय देवीः देव्यः द्योतमानाः अमृतस्यामरणधर्मस्यादित्यस्यपत्नीः पत्न्यः पालयित्र्यः सूरः प्रसवित्र्यः उषसः वर्णेनप्रकाशेनततनन् विस्तारयेयुः एवंसूर्यसंबन्धिनःउषसःस्तुत्या सर्वात्मनोवैश्वानरस्यस्तुतिरवगन्तव्या तनोतेर्लेटि बहुलंछन्दसीतिविकरणस्यश्लुः द्विर्भावहलादिशेषौ ॥ १३ ॥

अथचतुर्दशी—

अनिरेणवचसाफल्ग्वेनप्रतीत्येनकृधुनातृपासः ।
अधातेअग्नेकिमिहावदन्त्यनायुधासआसतासचन्ताम् ॥ १४ ॥

अनिरेण । वचसा । फल्ग्वेन । प्रतीत्येन । कृधुना । अतृपासः ।
अध । ते । अग्ने । किम् । इह । वदन्ति । अनायुधासः ।
असता । सचन्ताम् ॥ १४ ॥

अनिरेण इरान्नं तद्रहितेन फल्ग्वेन उक्थ्येन प्रतीत्येनप्रतिगन्तव्येन अरोह्येणेत्यर्थः कृधुनाह्रस्वेन कृध्विविह्रस्वनाम कृधुकःवभ्रकइतितन्नामसूक्तत्वात् एवंविधेनवचसा अतृपासः अतृप्ताः जनाःअध अधुनाइहास्मिन्लोके हेअग्ने ते त्वाम् किंवदन्ति निर्हविष्केणवचसानाकिंचिल्लभ्यतइत्यर्थः किंतुअनायुधासः आयुधशब्दःसाधनंलक्षयति हविरादिसाधनरहितास्तेअसतादुःखेनसचन्तां संगच्छन्ताम् ॥ १४ ॥

अथपञ्चदशी–

अस्यश्रियेसमिधानस्यवृष्णोवसोरनीकंदमआरुरोच ।
रुशद्वसानःसुदृशीकरूपःक्षितिर्नरायापुरुवारोअद्यौत् ॥ १५ ॥ ३ ॥

अस्य । श्रिये । सम्ऽइधानस्य । वृष्णः । वसोः । अनीकम् । दमे ।
आ । रुरोच । रुशत् । वसानः । सुदृशीकऽरूपः । क्षितिः ।
न । राया । पुरुऽवारः । अद्यौत् ॥ १५ ॥ ३ ॥

समिधानस्य समिध्यमानस्य कर्मणिकर्तृप्रत्ययः वृष्णोवर्षितुःफलस्य वसोर्वासयितुः अस्याग्नेरनीकंतेजःसंघः दमे यागगृहे आरुरोच सर्वतोदीप्यते किमर्थं श्रिये श्रेयसेयजमानानां सोग्निः रुशद्वर्णनामैतत् दीप्तंतेजोवसानःआच्छादयन् अतएवसुदृशीकरूपः सुष्ठु दर्शनीयरूपः पुरुवारः बहुभिर्ऋत्विग्भिर्यजमानैर्वरणीयःसन्नद्यौत् द्योतते किमिव राया अश्वादिधनेनक्षितिर्न राजादिरिव क्षितिरितिमनुष्यनाम ॥ १५ ॥

॥ इतितृतीयस्यपञ्चमेतृतीयोवर्गः ॥ ३ ॥

उर्ध्वऊषुणइत्येकादशर्चंषष्ठंसूक्तं वामदेवस्यार्षं त्रैष्टुभमाग्नेयम् ऊर्ध्वऊर्ध्वेकादशेत्यनुक्रान्तम् प्रातरनुवाकाश्विनशस्त्रयोराग्नेयेक्रतौत्रैष्टुभेछन्दसीदं सूत्रितंच–ऊर्ध्वऊषुणससस्ययद्वियुतेतिपञ्चेति ।

तत्रप्रथमा–

ऊर्ध्वऊषुणोअध्वरस्यहोतरग्नेतिष्ठदेवतातायजीयान् ।
त्वंहिविश्वमभ्यसिमन्मप्रवेधसश्चित्तिरसिमनीषाम् ॥ १ ॥

ऊर्ध्वः । ऊँ इति । सु । नः । अध्वरस्य । होतः । अग्ने । तिष्ठ ।
देवऽताता । यजीयान् । त्वम् । हि । विश्वम् । अभि । असि ।
मन्म । प्र । वेधसः । चित् । तिरसि । मनीषाम् ॥ १ ॥

हेअध्वरस्यहोतः यागसंबन्धिनांदेवानामाह्वातः यद्वा होतरित्यत्रप्रकृत्यंशोनुवादः हेहोमनिष्पादकाग्ने यजीयान्यष्टृतमस्त्वंनोस्माकमूर्ध्वमूषुतिष्ठ उन्नतएवतिष्ठ नित्यमुन्नतोभवतीत्यर्थः कुत्रेतितदुच्यते–देवताता देवतातौ देवास्तायन्तेविस्तीर्यन्तेत्रेतिदेवतातिर्यज्ञः तस्मिंस्त्वंहि

त्वंखलु विश्वंसर्वंमन्म मननीयंशत्रूणांधनमभ्यसि अभिभवसि किंच वेधसश्चित् चित्पूजायां स्तोतुर्यजमानादेर्मनीषांमतिंस्तुतिंप्रतिरसि प्रवर्धयसि प्रपूर्वस्तिरतिर्वर्धनार्थः ॥ १ ॥

अथद्वितीया—

अमूरोहोतान्यसादिविक्ष्व१ग्निर्मन्द्रोविदथेषुप्रचेताः ।
ऊर्ध्वंभानुंसवितेवाश्रेन्मेतेवधूमंस्तभायदुपद्याम् ॥ २ ॥

अमूरः । होता । नि । असादि । विक्षु । अग्निः । मन्द्रः । विदथेषु । प्रऽचेताः । ऊर्ध्वम् । भानुम् । सविताऽइव । अश्रेत् । मेताऽइव । धूमम् । स्तभायत् । उप । द्याम् ॥ २ ॥

अमूरः अमूढः प्रगल्भइत्यर्थः होता होमनिष्पादकोमन्द्रोमदनीयः मादयितावा प्रचेताः प्रकृष्टज्ञानोग्निः देवः विक्षुऋत्विग्रूपासुप्रजासुमध्येविदथेषुयागेषुनिमित्तभूतेषुन्यसादि नितरांस्थापितः अथतथाभूतोग्निः भानुंदीप्तिंसवितेव उदितःसूर्यइव उर्ध्वमश्रेत्ऊर्ध्वमुखमाश्रयति किंच मेतेव स्थूणेव सायथास्वाधिष्ठितंवंशादिकंस्तभ्नातितद्वदयमग्निर्धूमंस्वोत्थितंद्यामुपद्युलोकस्योपरिस्तभायत् स्तभ्नाति ॥ २ ॥

अथतृतीया—

यतासुजूर्णीरातिनीघृताचीप्रदक्षिणिद्देवतातिमुराणः ।
उदुस्वरुर्नवजानाक्रःपश्वोअनक्तिसुधितःसुमेकः ॥ ३ ॥

यता । सुऽजूर्णिः । रातिनी । घृताची । प्रऽदक्षिणित् । देवऽतातिम् । उराणः । उत् । ऊँ इति । स्वरुः । नवऽजाः । न । अक्रः । पश्वः । अनक्ति । सुऽधितः । सुऽमेकः ॥ ३ ॥

यता संयता सुजूर्णिः शोभनजवा सुष्ठुजीर्णापुराणीवा घृताची घृतमञ्चतीतिघृताची जुहूः रातिनी रातिर्धनं हविर्लक्षणधनवती आज्यपूर्णाभवतीत्यर्थः देवतातिंयज्ञं तथा उराणउरुकुर्वाणोध्व- र्युरग्निर्वा प्रदक्षिणमेतीतिप्रदक्षिणित् प्रदक्षिणगमनोभवति अकारलोपश्छान्दसः नवजाः नवजातः तदानीमेवोत्पादितः स्वरुर्न यूपशकलवाची स्वरुरत्रयूपंलक्षयति 'चषालवन्तः स्वरवः पृथि- व्याम्'इत्यादिषुस्वरुशब्देनयूपाभिधानाच्च नकारःसमुच्चयेयूपोपिउदुउपसर्गश्रुतेर्योग्यक्रियाध्या-

हारः उन्नतोभवति किंच अक्तः आक्रमिता सुमेकःसुदीप्तः सुधितःस्वधितिरित्यर्थः सोपिपश्वः पशूननक्तिगच्छति यद्वा सुधितः स्वरुरेवउदुरुत्कृष्टः पश्वःपशूननक्ति स्वरुणापशुमनक्तीतिश्रुतेः ॥ ३ ॥

अथचतुर्थी—

**स्तीर्णेबर्हिषिसमिधानेअग्नाऊर्ध्वोअध्वर्युर्जुजुषाणोअस्थात् । पर्यग्निःपशुपानहोतात्रिविष्ट्येतिप्रदिवउराणः ॥ ४ ॥**

स्तीर्णे । बर्हिषि । सम्ऽइधाने । अग्नौ । ऊर्ध्वः । अध्वर्युः । जुजुषाणः । अस्थात् । परि । अग्निः । पशुऽपाः । न । होता । त्रिऽविष्टि । एति । प्रऽदिवः । उराणः ॥ ४ ॥

बर्हिषि वेद्यां स्तीर्णेआस्तृतेसति अग्नावाहवनीयादिकेसमिधाने सम्यगिध्यमाने सत्यध्वर्युरध्वरस्यनेताजुजुषाणोदेवान्प्रीणयन् ऊर्ध्वोस्थात् तिष्ठति होता होमनिष्पादकः प्रदिवः पुराणनामैतत् पुरातनः उराणः स्वल्पमपिहविर्देवयोग्यत्वसंपादनेनोरुकुर्वाणः उराणउरुकुर्वाण इतिनिरुक्तम् । यद्वैदेवैर्नोध्यतेहविस्तद्धिरिमात्रंवर्वतइतिश्रुतेः । अग्नेरुरुकरणमुचितम् ईदृशोग्निः पशुपान पशूनांपालकइव पशून्त्रिविष्टि त्रिरावृत्त्यपर्येति त्रिर्हिपर्यग्निःक्रियते ॥ ४ ॥

अथपञ्चमी—

**परित्मनामितद्रुरेतिहोताग्निर्मन्द्रोमधुवचाऋतावा । द्रवन्त्यस्यवाजिनोनशोकाभयन्तेविश्वाभुवनायदभ्राट् ॥५॥४॥**

परि । त्मना । मितऽद्रुः । एति । होता । अग्निः । मन्द्रः । मधुऽवचाः । ऋतऽवा । द्रवन्ति । अस्य । वाजिनः । न । शोकाः । भयन्ते । विश्वा । भुवना । यत् । अभ्राट् ॥ ५ ॥ ॥ ४ ॥

उक्तमेवार्थस्पष्टयति—अयंहोता होमनिष्पादकोग्निः त्मना आत्मना स्वरूपेणैव मितद्रुः परिमितगतिःसन् पर्येति परितोगच्छतिपशुम् कीदृशोयं मन्द्रोमदनीयः मोदयितावा मधुवचाः मधुरवचनः ऋतावा यज्ञवान् वाजिनोहविष्मतोस्याग्नेः शोकान दीप्तयोपि नशब्दोप्यर्थे द्रवन्ति

१ नि० ६. १७. ।

गछन्तिपरितः यद्वा नकारउपमार्थीयः वाजिनोन अश्वाइव द्रवन्तीतियोज्यम् यद्यस्मादयमभ्राट् भ्राजते तस्माद्विश्वाभुवना सर्वाणिभूतजातानि भयन्ते भीतानिभवन्ति ॥ ५ ॥

॥ इतितृतीयस्यपञ्चमेचतुर्थोवर्गः ॥ ४ ॥

अथषष्ठी—

**भद्रातेअग्नेस्वनीकसंदृग्घोरस्यसतोविषुणस्यचारुः ।**
**नयत्तेशोचिस्तमसावरन्तनध्वस्मानस्तन्वीरेपआधुः ॥ ६ ॥**

भद्रा । ते । अग्ने । सुऽअनीक । सम्ऽदृक् । घोरस्य । सतः ।
विषुणस्य । चारुः । न । यत् । ते । शोचिः । तमसा । वरन्त ।
न । ध्वस्मानः । तन्वि । रेपः । आ । धुरितिं धुः ॥ ६ ॥

हेस्वनीक शोभनज्वालाग्ने घोरस्यभीतिजनकस्यापिसतः विषुणस्य विष्वक्सर्वतोव्याप्तस्य ते तव चारुः रमणीयाभद्रास्तुत्याकल्याणीवामूर्तिः सन्दृक् सन्दृष्टिः सम्यक्दृश्याभवतीत्यर्थः यद्यस्मात्तेशोचिर्दीप्तिं तमसान्धकारेण नवरन्त नवारयन्तिनिशाः यस्माच्च ध्वस्मानोध्वंसकाराक्षसादयः तेतन्वि तवशरीरे रेपः पापं ध्वंसनादिरूपं नाधुः नदधति नकुर्वन्ति अतःसन्दृगितिसंबन्धः ॥ ६ ॥

अथसप्तमी—

**नयस्यसातुर्जनितोरवारिनमातरापितरानूचिदिष्टौ ।**
**अधामित्रोनसुधितःपावकोऽग्निर्दीदायमानुषीषुविक्षु ॥ ७ ॥**

न । यस्य । सातुः । जनितोः । अवारि । न । मातरा । पितरा ।
नु । चित् । इष्टौ । अध । मित्रः । न । सुऽधितः । पावकः ।
अग्निः । दीदाय । मानुषीषु । विक्षु ॥ ७ ॥

जनितोर्जनयितुर्वृष्ट्युत्पादकस्य यस्य वैश्वानरस्य सातुः सनिः पश्वादिलक्षणं दानं दीप्तिर्वा नावारि केनापिनवार्यते किंच मातरापितरा मातापितरौ द्यावापृथिव्यौ यस्येष्टौप्रेषणेनू चित्क्षिप्रमेवनप्रभवतः अधापिच मित्रोन सखेव सुधितः सुतृप्तः पावकः शोधकोऽग्निः मानुषीषु

मनोःसंबन्धिनीषुविक्षुप्रजासुदीदाय दीप्यते दीपीदीप्तौ पकारलोपश्छांन्दसः व्यत्ययेनपरस्मैपदं लिटि अभ्यासस्यह्रस्वेकृते तुजादित्वाद्दीर्घत्वम् ॥ ७ ॥

अथाष्टमी—

द्विर्यंपञ्चजीजनन्त्संवसानाःस्वसारोअग्निंमानुषीषुविक्षु ।
उषर्बुधंमथर्योऽनदन्तंशुक्रंस्वासंपरशुंनतिग्मम् ॥ ८ ॥

द्विः । यम् । पञ्च । जीजनन् । सम्ऽवसानाः । स्वसारः ।
अग्निम् । मानुषीषु । विक्षु । उषःऽबुधम् । अथर्यः । न ।
दन्तम् । शुक्रम् । सुऽआसम् । परशुम् । न । तिग्मम् ॥ ८ ॥

मानुषीपुमनोःसंबन्धिनीपु विक्षु प्रजासु संवसानाः संगच्छमानाः द्विःपञ्च दश स्वसारः अङ्गुलयः यमग्निंजीजनन् मन्थनेनउदपादयन् जनीप्रादुर्भावे लुङि छान्दसत्वादडभावः कीदृशम् अथर्योनस्त्रियइव उषर्बुधम् उषसिबुध्यमानं दन्तंहविषांभक्षकं शुक्रं रश्मिभिर्दीप्यमानं स्वासं शोभनास्यं तिग्मं तीक्ष्णं परशुंन परशुमिव रक्षसांहन्तारमितिशेषः ॥ ८ ॥

अथनवमी—

तवत्येअग्नेहरितोघृतस्नारोहितासऋज्वंचस्वञ्चः ।
अरुषासोवृषणऋजुमुष्काआदेवतातिमह्वन्तदस्माः ॥ ९ ॥

तव । त्ये । अग्ने । हरितः । घृतऽस्नाः । रोहितासः । ऋजुऽअञ्चः ।
सुऽअञ्चः । अरुषासः । वृषणः । ऋजुऽमुष्काः । आ । देवऽतातिम् ।
अह्वन्त । दस्माः ॥ ९ ॥

हेअग्ने त्ये ते प्रसिद्धाः तवहरितः त्वत्संबन्धिनोश्वाः देवतातिमस्मदीयंयागंप्रतिआह्वन्त ऋत्विग्भिराहूयन्ते लुङिलिपिसिचिह्वश्चेत्यङादेशः कीदृशाः घृतस्नाः घृतस्नुवः बलातिशयान्नासापुटादिस्थानेभ्यउदकंक्षरन्तः रोहितासः रोहितालोहितवर्णाः ऋज्वञ्चः ऋजुअकुटिलमञ्चन्ति गच्छन्तीतिऋज्वञ्चः सुष्ठुगच्छन्तः अरुषासःआरोचमानाःवृषणःयुवानःवर्षितारोवा वाषपूर्वस्य निगमेइतिविकल्पेनदीर्घविधानादत्रदीर्घाभावः ऋजुमुष्काः साधनमुष्काः दस्माः दर्शनीयाः ॥ ९ ॥

अथदशमी–

येहत्येतेसहमानाअयासस्त्वेषासोअग्नेअर्चयश्चरन्ति ।
श्येनासोनदुवसनासोअर्थंतुविष्वणसोमारुतंनशर्धः ॥ १० ॥

ये । ह । त्ये । ते । सहमानाः । अयासः । त्वेषासः । अग्ने ।
अर्चयः । चरन्ति । श्येनासः । न । दुवसनासः । अर्थम् ।
तुविऽस्वनासः । मारुतम् । न । शर्धः ॥ १० ॥

हेअग्ने येहखलु त्येतेप्रसिद्धाः सहमानाः शत्रूनभिभवन्तः अयासोगमनशीलाः त्वेषासोदीप्ताः दुवसनासः परिचरणीयाः तेत्वदीयाअर्चयोरश्मयः श्येनासोन अश्वाइव अर्थं गन्तव्यम् चरन्ति गच्छन्ति कीदृशाः मारुतंशर्धोन मरुत्संबन्धीगणइव तुविष्वणसः तुविस्वनाः अधिकध्वनयोभवन्ति ॥ १० ॥

अथैकादशी–

अकारिब्रह्मसमिधानतुभ्यंशंसात्युक्थंयजतेव्यूधाः ।
होतारमग्निंमनुषोनिषेदुर्नमस्यन्तउशिजःशंसमायोः॥११॥५॥

अकारि । ब्रह्म । सम्ऽइधान । तुभ्यम् । शंसाति । उक्थम् ।
यजते । वि । ऊँ इति । धाः । होतारम् । अग्निम् । मनुषः ।
नि । सेदुः । नमस्यन्तः । उशिजः । शंसम् । आयोः ॥ ११ ॥ ५ ॥

हेसमिधान समिध्यमानाग्ने तुभ्यं त्वदर्थंब्रह्मस्तोत्रम् अकारि अस्माभिःकृतं होता उक्थंशस्त्ररूपंस्तोत्रंशंसाति शंसति शंसुस्तुतौ लेटोडाटावित्याडागमः त्वांयजमानोयजते अतःकारणादस्मभ्यं धनंविधाः विधेहि दधातेश्छान्दसेलुङि बहुलंछन्दसीत्यडभावः उइतिपूरणः किंच आयोर्मनुष्यस्यशंसं शंसनीयं होतारं देवानामाह्वातारम् अग्निं त्वांनमस्यन्तःपूजयन्तः उशिजः पश्वादिलक्षणंधनंकामयमानाःमनुषोमनुष्याऋत्विजःनिषेदुः उपाविशन् सेवन्तइत्यर्थः ॥ ११ ॥

॥ इतितृतीयस्यपञ्चमेपञ्चमोवर्गः ॥ ५ ॥

अयमिहेत्येकादशर्चंसप्तमंसूक्तं वामदेवस्यार्षमाग्नेयम् आद्याजगती द्वितीयाद्याःपञ्चानुष्टुभः शिष्टास्त्रिष्टुभः तथाचानुक्रान्तम्—अयमिहाद्यौजगतीपञ्चानुष्टुभइति । सूक्तविनियोगोलैङ्गिकः अग्निप्रणयनेयमिहेतिवैश्यस्यप्रतिपत् तथाचसूत्रितम्—अयमिहप्रथमोधायिधातृभिरितितुराजन्यवैश्ययोराद्येइति ।

तत्रप्रथमा—

**अयमिहप्रथमोधायिधातृभिर्होतायजिष्ठोअध्वरेष्वीड्यः ।**
**यमप्नवानोभृगवोविरुरुचुर्वनेषुचित्रंविभ्वंविशेविशे ॥ १ ॥**

अयम् । इह । प्रथमः । धायि । धातृऽभिः । होता ।
यजिष्ठः । अध्वरेषु । ईड्यः । यम् । अप्नवानः । भृगवः ।
विऽरुरुचुः । वनेषु । चित्रम् । विऽभ्वम् । विशेऽविशे ॥ १ ॥

धातृभिर्यज्ञार्थंकर्मकुर्वद्भिः अध्वर्युभिरिहास्मिन्यज्ञेहोतादेवानामाह्वातायजिष्ठः अतिशयेनयष्टा अध्वरेषुयागेषु ईड्यः ऋत्विग्भिःस्तूयमानःप्रथमः सर्वेषांदेवानांमुख्यः अयमाहवनीयादिस्थानेषुप्रत्यक्षेणोपलभ्यमानोग्निः धायि अधायि निहितः दधातेःकर्मणिलुङ् बहुलंछन्दस्यमाङ्योगेइत्यडभावः तिङ्ङतिङइतिनिघातः अयमग्निरित्युक्तं कोसावग्निरित्यतआह—अप्नवानः भृगुसंबन्धी कश्चिदृषिः सच अन्येभृगवश्चवनेष्वरण्येषुचित्रंदावाग्निरूपेणबहुधादर्शनीयंविशेविशे वीप्सयासर्वजनव्याप्तिर्गृह्यते सर्वस्यविशः प्रजायाः विभ्वं विभुमीश्वरंयंदेवानांहविर्वाहकत्वेनप्रसिद्धमग्निंविरुरुचुर्दीप्तियुक्तंकुर्वन्तिस्म । यमिति यच्छब्दस्य अयमितीदंशब्देनसंबन्धः ॥ १ ॥

अग्नेकदातइतिप्रातरनुवाकाश्विनशस्त्रयोराग्नेयेक्रतावानुष्टुभेछन्दसि अग्नेकदातइत्याद्याःपञ्चर्चः सूत्रितंच—अग्नेकदातइतिपञ्चेति ।

सूक्तेद्वितीया—

**अग्नेकदातआनुषग्भुवद्देवस्यचेतनम् ।**
**अधाहित्वाजगृभ्रिरेमर्तासोविक्ष्वीड्यम् ॥ २ ॥**

अग्ने । कदा । ते । आनुषक् । भुवत् । देवस्य । चेतनं । अध ।
हि । त्वा । जगृभ्रिरे । मर्तासः । विक्षु । ईड्यम् ॥ २ ॥

हेअग्ने अधातःकारणाद्देवस्यद्योतमानस्यतेतवसंबन्धि चेतनं तेजः कदा आनुषक् अनुषक्तंभुवत् भवेत् लेट्यडागमः बहुलंछन्दसीतिविकरणस्यलुक् भूसुवोस्तिङीतिगुणप्रतिषेधः अतःकारणादित्युक्तं कस्माद्धेतोरित्युच्यते हियस्मात्कारणात् मर्तासोमनुष्याः विक्षु विड्भिः प्रजाभिः ईड्यंस्तुत्यं त्वा त्वां जगृभ्रिरे जगृहिरे गृह्णन्ति ग्रहेर्धातोर्लिटिहग्रहोर्भइतिभत्वं बहुलंछन्दसीतिरुडागमः ॥ २ ॥

अथतृतीया—

ऋतावानंविचेतसंपश्यन्तोद्यामिवस्तृभिः ।
विश्वेषामध्वराणांहस्कर्तारंदमेदमे ॥ ३ ॥

ऋतऽवानम् । विऽचेतसम् । पश्यन्तः । द्याम्ऽइव । स्तृऽभिः ।
विश्वेषाम् । अध्वराणाम् । हस्कर्तारम् । दमेऽदमे ॥ ३ ॥

ऋतावानम् अमायिनं विचेतसं विशिष्टज्ञानं स्तृभिर्नक्षत्रैःपरिवृतं द्यामिवविस्फुलिङ्गैःसमेतंविश्वेषांसर्वेषामध्वराणांयज्ञानांहस्कर्तारं प्रभासकंवृद्धेःकर्तारंवाग्निंपश्यन्तः ऋत्विगादयः दमेदमेसर्वस्मिन्यज्ञगृहे जगृभ्रिरइतिपूर्वेणसंबन्धः ॥ ३ ॥

अथचतुर्थी—

आशुंदूतंविवस्वतोविश्वायश्चर्षणीरभि ।
आजभ्रुःकेतुमायवोभृगवाणंविशेविशे ॥ ४ ॥

आशुम् । दूतम् । विवस्वतः । विश्वाः । यः । चर्षणीः । अभि ।
आ । जभ्रुः । केतुम् । आयवः । भृगवाणम् । विशेऽविशे ॥ ४ ॥

योग्निः विश्वाश्चर्षणीः सर्वाः प्रजाः अभिभवति आयवोमनुष्याः आयवइतिमनुष्यनाम आयवोयदवइतिमनुष्यनामसुपाठात् आशुंक्षिप्रगामिनं विवस्वतोमनुष्यस्ययजमानस्य दूतं विवस्वतइतिमनुष्यनामेदं केतुंप्रज्ञापकं भृगवाणं भृगुवदाचरन्तं दीप्यमानमित्यर्थः सर्वप्राति-

पदिकेभ्यःक्विब्वक्तव्यइतिक्विप् तदन्ताल्लटोव्यत्ययेनशानच् अदुपदेशाल्लसार्वधातुकानुदात्तत्वेप्राप्ते वृषादेराकृतिगणत्वादाद्युदात्तत्वं तमग्निंविशेविशे सर्वस्यैप्रजायै आजभ्रुः आजह्रुः हृग्रहोर्भइति भत्वम् ॥ ४ ॥

अथपञ्चमी–

तमींहोतारमानुषक्चिकित्वांसंनिषेदिरे ।
रण्वंपावकशोचिषंयजिष्ठंसप्तधामभिः ॥५॥६॥

तम् । ईम् । होतारम् । आनुषक् । चिकित्वांसम् । नि । सेदिरे ।
रण्वम् । पावकऽशोचिषम् । यजिष्ठम् । सप्त । धामऽभिः ॥ ५ ॥ ६ ॥

ऋत्विगादयोमनुष्याः आनुषक् आनुपूर्व्येणहोतारं देवानामाह्वातारं चिकित्वांसं जानन्तं कितज्ञाने लिटः क्वसुः द्विर्भावहलादिशेषचुत्वदीर्घाः प्रत्ययस्वरः तमीं तमिममग्निं निषेदिरे निषादयन्तिस्म कीदृशं रण्वं रमणीयं पावकशोचिषं शोधकदीप्तिं यजिष्ठं यष्टृतमं सप्त सप्तभिर्धामभिस्तेजोभिर्युक्तम् ॥ ५ ॥

॥ इतितृतीयस्यपञ्चमेषष्ठोवर्गः ॥ ६ ॥

अथषष्ठी–

तंशश्वतीषुमातृषुवनआवीतमश्रितम् ।
चित्रंसन्तंगुहाहितंसुवेदंकूचिदर्थिनम् ॥ ६ ॥

तम् । शश्वतीषु । मातृषु । वने । आ । वीतम् । अश्रितम् । चित्रम् ।
सन्तम् । गुहा । हितम् । सुऽवेदम् । कूचित्ऽअर्थिनम् ॥ ६ ॥

शश्वतीषु बह्वीषु मातृष्वप्सुताः सस्यादिनिर्मातृकत्वान्मातरइत्युच्यन्ते वने आवृक्षसमूहेच आकारश्चार्थे सन्तं विद्यमानं वीतं कान्तम् अश्रितं प्राणिभिर्दाहभयादसेवितंदुरासदमित्यर्थः चित्रं चायनीयं गुहागुहायां हितं निहितं सुवेदं सुविज्ञानं सुधनंवाकूचिदर्थिनं क्वापि हविषिअर्थिनंसमिदाज्यपुरोडाशादिहविःस्वीकुर्वन्तं केत्यत्रवकारस्यछान्दसेसंप्रसारणेपरपूर्वत्वे चह्लइतिदीर्घत्वम् एवंभूतमग्निं निषेदिरे इतिपूर्वेणसंबन्धः ॥ ६ ॥

प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभेछन्दसिसस्ययद्वियुतेत्याद्याःपञ्चर्चः सूत्रितंच–ससस्ययद्वियुतेतिपञ्चेति ।

तत्रसप्तमी–

ससस्ययद्वियुतासस्मिन्नूधंन्नृतस्यधामन्रणयन्तदेवाः।
महाँअग्निर्नमसारातहव्योवेरध्वरायसदमिदृतावा ॥ ७ ॥

ससस्य । यत् । विऽयुता । सस्मिन् । ऊधन् । ऋतस्य । धामन् । रणयन्त । देवाः । महान् । अग्निः । नमसा । रातऽहव्यः । वेः । अध्वराय । सदम् । इत् । ऋतऽवा ॥ ७ ॥

यत् यमग्निं देवाःस्तोतारः ससस्य स्वप्नस्य वियुतावियुते वियोगेउषसीत्यर्थः ऋतस्योदकस्यधामन्धामनिस्थाने सस्मिन्सर्वस्मिन्नूधन्नूधनि यज्ञे रणयन्त रमयन्ति स्तोत्रैरितिशेषः महान्प्रभूतः नमसा नमस्कारेणरातहव्यः दत्तहविष्कः ऋतावा सत्यवान्सोग्निः सदमित्सदैवाध्वरायाध्वरंयजमानैःकृतंयज्ञं सुपांसुपोभवन्तीतिवक्तव्यमितिवचनादत्रद्वितीयार्थेचतुर्थी वेः वेत्तिजानाति यद्वा देवाइन्द्रादयः ससस्य ऋत्विग्भिःसेव्यस्य यत्यस्याग्नेः वियुता विशिष्टेसर्वस्मिन्भजनीयेऋतस्यसत्यस्यधामन्धामनियोनौ उधन्नूधनियज्ञेरणयन्त रमयन्ते महान्प्रभूतः नमसाहविषा राहतव्योदत्तहविष्कः ऋतावा सत्ववान्सोग्निः अध्वराय यज्ञार्थं सदमित् सदैववेर्गन्ताभवति अध्वराययज्ञं वेःकामयतेवा ॥ ७ ॥

अथाष्टमी–

वेरध्वरस्यदूत्यानिविद्वानुभेअन्तारोदसीसञ्चिकित्वान्।
दूतईयसेप्रदिवउराणोविदुष्टरोदिवआरोधनानि ॥ ८ ॥

वेः । अध्वरस्य । दूत्यानि । विद्वान् । उभे इति । अन्तरिति । रोदसी इति । सम्ऽचिकित्वान् । दूतः । ईयसे । प्रऽदिवः । उराणः । विदुःऽतरः । दिवः । आऽरोधनानि ॥ ८ ॥

हेअग्ने विद्वान्सर्वंजानानस्त्वम् अध्वरस्ययज्ञस्यसंबन्धीनि दूत्यानि दूतकर्माणि वेः वेत्सि कामयसेवा यद्वा वेरितियज्ञविशेषणं वेः यजमानस्याभीष्टफलजनकस्याध्वरस्ययागस्यसंबन्धीनि दूत्यानि दूतकर्माणि विद्वान् जानन् उभेरोदसी उभयोरोदस्योर्द्यावापृथिव्योरन्तर्मध्येस्थितमन्तरिक्षंसंचिकित्वान्सम्यग्जानन्प्रदिवः पुराणः पुराणनामेदम् प्रत्नंप्रदिव-

इतिपुराणनामसुपाठात् उराणः अल्पमपिहविः उरुबहुकुर्वाणः उराणउरुकुर्वाणइतियास्के-नोक्तत्वात् । विदुष्टरः विद्वत्तरः देवानांदूतस्त्वं दिवःस्वर्गस्यआरोधनानि आरोहणानि आरोहणार्हाणिस्थानानीत्यर्थः देवानांहवींष्यर्पयितुमीयसेगच्छसि ॥ ८ ॥

अथनवमी—

कृष्णंतएमरुशंतःपुरोभाश्चरिष्ण्व१र्चिर्वपुषामिदेकंम् ।
यदप्रवीतादधतेहगर्भंसद्यश्चिं१तोभवसीदुदूतः ॥ ९ ॥

कृष्णम् । ते । एम । रुशतः । पुरः । भाः । चरिष्णु । अर्चिः ।
वपुषाम् । इत् । एकम् । यत् । अप्रऽवीताः । दधते । ह ।
गर्भम् । सद्यः चित् । जातः । भवसि । इत् । ऊँ इति । दूतः ॥ ९ ॥

हेअग्ने रुशतः रोचमानस्य ते तव संबन्धि अत्रेम एम शब्देनगमनमार्गउच्यते एम-भवत्र्म कृष्णं कृष्णवर्णंभवति भाः तवसंबन्धिनीदीप्तिः पुरः पुरस्ताद्भवति चरिष्णु संचरणशीलंअर्चिः त्वदीयंतेजः वपुषांवपुष्मतांरूपवतांतेजास्विनामित्यर्थः एकमित् मुख्य-मेवभवति यत्यंत्वामप्रवीताः अनुपगतायजमानाः गर्भंत्वज्जननहेतुमरणिंदधतेह धारयन्ति खलु सत्वं सद्यश्चित् सद्यएव जातउत्पन्नःसन् दूतोभवसीदु यजमानस्यदूतोभवस्येव ॥ ९ ॥

अथदशमी—

सद्योजातस्यददृशानमोजोयदस्यवातोअनुवातिशोचिः ।
वृणक्तितिग्मामतसेषुजिह्वांस्थिराचिदन्नादयतेविजम्भैः ॥ १० ॥

सद्यः । जातस्य । ददृशानम् । ओजः । यत् । अस्य । वातः ।
अनुऽवाति । शोचिः । वृणक्ति । तिग्माम् । अतसेषु । जिह्वाम् ।
स्थिरा । चित् । अन्ना । दयते । वि । जम्भैः ॥ १० ॥

सद्योजातस्य अरणिनिर्मन्थनादनन्तरमेवउत्पन्नस्याग्नेःओजस्तेजः ददृशानम् ऋत्विगा-दिभिर्दृश्यमानंभवतीतिशेषः वातोवायुःयद्यदास्याग्नेःशोचिर्दीप्तिम् अन्वनुलक्षीकृत्यवातिगच्छति

नि० ६. १७. ।

तदासोयमग्निःअतसेषु वृक्षसंघेषु तिग्मां तीक्ष्णांजिह्वांज्वालांवृणक्तिसंयोजयति स्थिराचित् स्थिराण्यपि अन्ना अन्नरूपाणिकाष्ठादीनिजम्भैस्तेजोभिः विदयते विखण्डयति भक्षयतीत्यर्थः ॥ १० ॥

अथैकादशी—

तृषुयदन्नांतृषुणांववक्षंतृषुंदूतंकृणुतेयह्वोअग्निः ।
वातस्यमेळिंसचतेनिजूर्वन्नाशुंनवांजयतेहिन्वेअर्वा ॥११॥७॥

तृषु । यत् । अन्ना । तृषुणा । ववक्ष । तृषुम् । दूतम् । कृणुते ।
यह्वः । अग्निः । वातस्य । मेळिम् । सचते । निऽजूर्वन् । आशुम् ।
न । वाजयते । हिन्वे । अर्वा ॥ ११ ॥ ७ ॥

यद्यःअग्निः तृषु क्षिप्रमेव अन्ना अन्नानि काष्ठादीनि तृषुणा क्षिप्रेण रश्मिसमूहेन ववक्ष वहति दहतीत्यर्थः यह्वः महान्सोग्निः तृषुमात्मानंदूतंकृणुते यजमानदूतंकरोति निजूर्वन्काष्ठानिनिःशेषेणदहन्नग्निः वातस्यवायोः मेळिं बलं सचतेसेवते आशुंन अश्वसादी यथा अश्वं तथा अर्वागमनशीलोग्निः स्वरश्मिवाजयते वाजिनंबलवन्तंकरोति हिन्वे प्रेरयतिच ॥ ११ ॥

॥ इतितृतीयस्यपञ्चमेसप्तमोवर्गः ॥ ७ ॥

दूतंवइत्यष्टर्चमष्टमंसूक्तं वामदेवस्यार्षं गायत्रीछन्दस्कं अग्निदेवताकम् तथाचानुक्रम्यते—दूतंवोष्टौगायत्रंत्विति । व्यूळ्हेदशरात्रेप्रथमेछन्दोमेइदंसूक्तंजातवेदस्यनिविद्धानीयं तथाच सूत्रम्—दूतंवइत्याग्निमारुतमिति । इदमादिकेद्वेसूक्तेप्रातरनुवाकस्याग्नेयेक्रतौगायत्रेछन्दसिविनियुक्ते सूत्रितंच—अग्नेपावकंदूतंवइतिसूक्तेइति ॥

तत्रप्रथमा—

दूतंवोविश्ववेदसंहव्यवाहममर्त्यम् । यजिष्ठमृञ्जसेगिरा ॥१॥

दूतम् । वः । विश्वऽवेदसम् । हव्यऽवाहम् । अमर्त्यम् ।
यजिष्ठम् । ऋञ्जसे । गिरा ॥ १ ॥

हेअग्ने विश्ववेदसं विश्वंसमस्तंवेदोधनंयस्यासौविश्ववेदाःतं सर्वविदंवाहव्यवाहंदेवेभ्योहविषांवोढारम् अमर्त्यममरणधर्माणंयजिष्ठमतिशयेनयष्टारं दूतं देवानांवः त्वांगिरास्तुतिरूपयावाचाऋञ्जसे यजमानोहंप्रसाधयामि वर्धयामीत्यर्थः ऋञ्जतिःप्रसाधनकर्मेतियास्कः ॥ १ ॥

अथद्वितीया—

स हि वेदा वसुधितिं महाँ आरोधनं दिवः । स देवाँ एह वक्षति ॥२॥

सः । हि । वेद । वसुऽधितिम् । महान् । आऽरोधनम् ।
दिवः । सः । देवान् । आ । इह । वक्षति ॥ २ ॥

सहि प्रसिद्धएवाग्निः वसुधितिं यजमानाभीष्टफलरूपधनस्यदानं वेद वेत्ति महान्प्रभूतोग्निः दिवआरोधनमारोहणंदेवानांस्थानंवेत्ति सोग्निरिहास्मिन्यज्ञेदेवानिन्द्रादीनावक्षति आवहतु वहेर्धातोर्लिङर्थेलेडितिलेट् तस्यतिप् सिब्बहुलंलेटीतिसिप् लेटोडाटावित्यडागमश्च होढइति ढत्वं ढत्वकत्वषत्वानि तिङ्ङतिङइतिनिघातः ॥ २ ॥

अथतृतीया—

स वेद देव आनमं देवाँ ऋतायते दमे । दाति प्रियाणि चिद्वसु ॥३॥

सः । वेद । देवः । आऽनमम् । देवान् । ऋतऽयते ।
दमे । दाति । प्रियाणि । चित् । वसु ॥ ३ ॥

देवोद्योतमानः सोग्निः आनमं यजमानादीनानमयितुं नमस्कारयितुं देवानिन्द्रादीन्वेद क्रमेणवेत्ति दमेयज्ञगृहे ऋतायते ऋतंयज्ञमिच्छतेयजमानाय प्रियाणिचित् अभीष्टान्यपि वसु वसूनि पश्वादीनिधनानिदाति ददाति प्रयच्छति ॥ ३ ॥

अथचतुर्थी—

स होता सेदु दूत्यं चिकित्वाँ अन्तरीयते । विद्वाँ आरोधनं दिवः ॥४॥

सः । होता । सः । इत् । ऊँ इति । दूत्यम् । चिकित्वान् ।
अन्तः । ईयते । विद्वान् । आऽरोधनम् । दिवः ॥ ४ ॥

---

१ नि०. ६. २१. ।

सोग्निर्होतादेवानामाह्वाताभवति सेदु सएवाग्निः दूत्यं देवानां दूतकर्मचिकित्वान्जानन् दिवः स्वर्गस्यआरोधनम् आरोहणंआरोहणार्हदेवानांस्थानंच विद्वान् जानन् अन्तः द्यावापृथिव्योर्मध्येईयते गच्छति ईङ्गतौ दिवादिभ्यःश्यन् तिङ्ङतिङइतिनिघातः ॥ ४ ॥

अथपञ्चमी—

**तेस्या॑मये अ॒ग्नये॑ द॒दाशु॒र्ह॒व्यदा॑तिभिः । यईं॒ पुष्य॑न्तइ॒न्धते॑ ॥५॥**

**ते । स्या॒म॒ । ये । अ॒ग्नये॑ । द॒दाशुः॑ । ह॒व्यदा॑तिऽभिः ।**

**ये । ई॑म् । पुष्य॑न्तः । इ॒न्धते॑ ॥ ५ ॥**

ते तव यजमानाः स्याम भूयाम तेइत्युक्तं केइत्युच्यते—येयजमानाः अग्नये हव्यदातिभिर्हविर्दानैर्ददाशुः प्रीतिंकुर्वन्ति ईमेनमग्निंपुष्यन्तोवर्धयन्तोयेयजमानाःइन्धते समिद्भिर्दीप्तियुक्तंकुर्वन्ति ॥ ५ ॥

अथषष्ठी—

**तेरा॒याते सु॒वीर्यैः॑ सस॒वांसो॒ विशृ॑ण्विरे । येअ॒ग्नादधि॑रे॒दुवः॑ ॥६॥**

**ते । रा॒या । ते । सु॒ऽवीर्यैः॑ । स॒स॒ऽवांसः॑ । वि ।**

**शृ॒ण्वि॒रे॒ । ये । अ॒ग्ना । द॒धि॒रे । दुवः॑ ॥ ६ ॥**

येयजमानाः अग्नाअग्नौ सुपांसुलुगित्याकारः दुवः परिचर्यां दधिरे धारयन्ति कुर्वन्तीत्यर्थः ते ससवांसः अग्निंसंभजमानाः रायापश्वादिलक्षणेनधनेनाविशृण्विरे विश्रूयन्ते प्रख्यायन्ते ते सुवीर्यैःशोभनवीर्योपेतैःपुत्रादिभिश्चविश्रूयन्ते ॥ ६ ॥

अथसप्तमी—

**अ॒स्मे रायो॑ दि॒वेदि॑वे॒ संच॑रन्तु पुरु॒स्पृहः॑ । अ॒स्मे वाजा॑सईरताम् ॥७॥**

**अ॒स्मे इति॑ । रायः॑ । दि॒वेऽदि॑वे । सम् । च॒र॒न्तु॒ ।**

**पु॒रु॒ऽस्पृहः॑ । अ॒स्मे इति॑ । वाजा॑सः । ई॒र॒ता॒म् ॥ ७ ॥**

पुरुस्पृहः ऋत्विगादिभिरभिलष्यमाणारायः पश्वादिधनानि अस्मे अस्मासुयजमानेषु दिवेदिवे प्रतिदिनं संचरन्तु प्रचरन्तोभवन्तु दिवूशब्दादुत्तरस्याःसप्तम्याःसुपांसुलुगित्यादिनाशे-आदेशे ऊडिदमित्यादिनाचतस्याउदात्तत्वं नित्यवीप्सयोरितिद्विर्भावेसति उत्तरभागस्यानुदात्तंचेत्यनुदात्तत्वं वाजासः अन्नानिच अस्मेअस्मानीरतां प्रेरयन्तु ॥ ७ ॥

अथाष्टमी–

सविप्रश्चर्षणीनांशवसामानुषाणाम् । अतिक्षिप्रेवविध्यति ।८।८।

सः । विप्रः । चर्षणीनाम् । शवसा । मानुषाणाम् ।
अति । क्षिप्राऽइव । विध्यति ॥ ८ ॥ ८ ॥

विप्रः मेधावी विप्रइतिमेधाविनाम विप्रःधीरइतितन्नामसुपाठात् सोग्निः शवसाबलेन शवइतिबलनाम पाजःशवइतितन्नामसुपाठात् मानुषाणां मनुसंबन्धिनांचर्षणीनांप्रजानांक्षिप्रेव क्षेप्याण्येव विनाशयतु अर्हाणिदुरितानीतिशेषः अतिविध्यति अतिविध्यतु अतिशयेन नाशयतु ॥ ८ ॥

॥ इतितृतीयस्यपञ्चमेऽष्टमोवर्गः ॥ ८ ॥

अग्नेमृळेत्यष्टर्चंनवमंसूक्तं वामदेवस्यार्षं गायत्रीछन्दस्कम् अग्निदेवताकम् अत्रानुक्रान्तं च–अग्नेमृळेति । द्वितीयेछन्दोभेइदंसूक्तंजातवेदस्यानिविद्धानीयं सूत्रितञ्च–क्रीळंवःशर्धोग्नेमृळेत्याग्निमारुतमिति ।

तत्रप्रथमा–

अग्नेमृळमहाँअंसियईमादेवयुञ्जनंम् । इयेथंबर्हिरासदंम् ॥१॥

अग्ने । मृळ । महान् । असि । यः । ईम् । आ । देवऽयुम् ।
जनंम् । इयेथं । बर्हिः । आऽसदंम् ॥ १ ॥

हेअग्ने मृळ अस्मान्सुखय सत्वं महानसि प्रभूतोभवसि यस्त्वमीमिमंदेवयुं देवानां कामयितारं जनंयजमानं बर्हिर्दर्भमासदंयज्ञेआसत्तुम् आइयेथ आगच्छसि ॥ १ ॥

अथद्वितीया–

समानुषीषुदूळभोविक्षुप्रावीरमंर्त्यः । दूतोविश्वेषांभुवत् ॥ २ ॥

सः । मानुषीषु । दुःऽदभः । विक्षु । प्रऽअवीः अमर्त्यः ।
दूतः । विश्वेषाम् । भुवत् ॥ २ ॥

दूळभोदुर्दभोराक्षसादिनादुर्हिंसः मानुषीषुमनुसंबन्धिनीषु विक्षु प्रजासु प्रावीःप्रकर्षेणगन्ता अमर्त्यः अमरणधर्मासोग्निः विश्वेषांसर्वेषांदेवानां दूतोभुवत् भवतु ॥ २ ॥

अथतृतीया—

सस॒द्मप॒रिणीयते॒होता॑म॒न्द्रोदिवि॑ष्टिषु । उ॒तपोता॒निषी॑दति ॥३॥

सः । स॒द्म । परि॑ । नी॒य॒ते॒ । होता॑ । म॒न्द्रः ।
दिवि॑ष्टिषु । उ॒त । पोता॑ । नि सी॒द॒ति॒ ॥ ३ ॥

सोग्निः सद्मयज्ञगृहंपरिणीयते ऋत्विग्भिःपरितोनीयतेनीयमानःसन् दिविष्टिषु यागेषु मन्द्रः मदनीयःस्तुत्यः सोग्निर्होताचभवति उतापिच पोतासन्निषीदति यज्ञगृहेउपविशति ॥ ३ ॥

अथचतुर्थी—

उ॒तग्ना अ॒ग्निर॑ध्व॒रउ॒तोगृ॒हप॑तिर्द॒मे । उ॒तब्र॒ह्मानिषी॑दति ॥४॥

उ॒त । ग्नाः । अ॒ग्निः । अ॒ध्व॒रे । उ॒तो इति॑ । गृ॒हऽप॑तिः ।
द॒मे । उ॒त । ब्र॒ह्मा । नि । सी॒द॒ति॒ ॥ ४ ॥

उतापिचाग्निः अध्वरे यागे ग्नाः देवपत्नीर्यजति यष्टाभवतीत्यर्थः यद्वा ग्नाः गच्छन् अध्वर्युर्भवति उतोअपिच सोग्निर्दमेयज्ञगृहे गृहपतिर्यजमानश्चभवति उतापिच ब्रह्मा ब्राह्मणाच्छंसीसन्निषीदति उपविशति ॥ ४ ॥

अथपञ्चमी—

वेषि॒ह्य॑ध्वरीय॒ताम॑ुपव॒क्ताजना॑नाम् । ह॒व्याच॒मानु॑षाणाम् ॥५॥

वेषि॑ । हि । अ॒ध्व॒रि॒ऽय॒ताम् । उ॒प॒ऽव॒क्ता ।
जना॑नाम् । ह॒व्या । च॒ । मानु॑षाणाम् ॥ ५ ॥

अध्वरीयतां यज्ञमिच्छतां मानुषाणां मनुसंबन्धिनां जनानां हव्याच हव्यानिहवींषि हेअग्ने वेषिहि कामयसेखलु उपवक्ता अध्वर्युप्रभृतीनांसर्वेषांकर्मणाम् अनुज्ञार्थम् माप्रणयेत्यादिरूपस्यवाक्यस्यवक्तासन् ब्रह्माचासि ब्रह्मात्वोवदतिजातविद्यामितिश्रुतेः[1] । उपवक्ता

---

१ ऋ० सं० ८. २. २४.।

सर्वेषांकर्मणामवैकस्यार्थमुपद्रष्टावा सदस्योसि साहितसदशःकर्मणामुपद्रष्टामवतीत्यापस्तंबेनोक्तत्वात् ॥ ५ ॥

अथषष्ठी–

वेषीद्वस्यदूत्यं१ंयस्यजुजोषोअध्वरम् । हव्यंमर्तस्यवोळ्हवे ॥ ६ ॥

वेषि । इत् । ऊँ इति । अस्य । दूत्यम् । यस्य । जुजोषः ।
अध्वरम् । हव्यम् । मर्तस्य । वोळ्हवे ॥ ६ ॥

हेअग्ने त्वं मर्तस्यमनुष्यस्यअस्ययजमानस्याध्वरं यागं हव्यं हविःवोळ्हवेवोढुं वहेर्धातोस्तुमर्थेसेसेनसेइतितवेन्प्रत्ययः ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वं जुजोषः सेवेथाः जुषीप्रीतिसेवनयोः लेट् बहुलंछन्दसीतिशपःश्लुः द्विर्भावश्च लेटोडाटावित्यडागमः अस्ययजमानस्यदूत्यं दूतकर्मवेषीदु कामयसएव ॥ ६ ॥

अथसप्तमी–

अस्माकंजोष्यध्वरमस्माकंयज्ञमंङ्गिरः । अस्माकंशृणुधीहवम् ।७।

अस्माकम् । जोषि । अध्वरम् । अस्माकम् ।
यज्ञम् । अङ्गिरः । अस्माकम् । शृणुधि । हवम् ॥ ७ ॥

हेअङ्गिरोग्ने त्वम् अस्माकमध्वरम् अस्मदीयंयागं जोषि जुषस्व सेवस्व अस्माकमस्मदीयंयज्ञं यजनसाधनं हविश्चजुषस्व अस्माकमस्मदीयं हवमाह्वानरूपम् स्तोत्रंच शृणुधि शृणु शृणोतेर्लोण्मध्यमैकवचनेसिप् तस्याहिरादेशो श्रुवःशृचेतिधातोःश्नुप्रत्ययः शृभावश्च श्रुशृणुपृकृवृभ्यश्छन्दसीतिहेर्धिरादेशः ॥ ७ ॥

अथाष्टमी–

परिंतेदूळभोरथोस्माँअश्नोतुविश्वतः । येनरक्षसिदाशुषः ॥८॥१॥

परि । ते । दुःऽदभः । रथः । अस्मान् । अश्नोतु ।
विश्वतः । येन । रक्षसि । दाशुषः ॥ ८ ॥ १ ॥

हेअग्ने त्वं येनरथेनविश्वतोविश्वासुसर्वासुदिक्षुगच्छन् दाशुषोहविष्प्रदातॄन्यजमानान्रक्षसि विघ्नेभ्यःपालयसि त्वदीयोदूळभोदुर्दभोदुर्हिंसः सरथः अस्मान्यजमानान्परि परितः सर्वतःअश्नोतु व्याप्नोतु अश्नोतेर्व्यत्ययेनपरस्मैपदम् ॥ ८ ॥

॥ इतितृतीयस्यपञ्चमेनवमोवर्गः ॥ ९ ॥

अग्नेतमद्येत्यष्टर्चंदशमंसूक्तं वामदेवस्यार्षमाग्नेयं तथाचानुक्रमणिका—अग्नेतमद्यपदपाङ्क्तंपञ्चमीमहापदपङ्क्तिरन्त्योष्णिक् चतुर्थीषष्ठ्युपान्त्यावा सप्तम्याःपञ्चकौमुख्यौतृतीयःसप्तको नवकश्चाष्टम्याःपञ्चकःपादश्चतुष्कःसप्तकस्त्रैष्टुभश्चेति इदंकृत्स्नमपिसूक्तंपदपङ्क्तिच्छन्दस्कं पञ्चकाश्चत्वारःषट्कश्चैकश्चतुर्थश्चतुष्कोवापदपङ्क्तिरित्युक्तलक्षणत्वात् पञ्चमीतवस्त्वादिष्ठेत्येषामहापदपङ्क्तिः पञ्चपञ्चकाःषट्कश्चैकइतिलक्षणसद्भावात् अन्त्याशिवानः सख्येत्येषोष्णिकृछन्दस्का-चतुर्थीषष्ठीसप्तम्यःआभिष्टेअद्यघृतंनपूतंक्रतंनिद्विषमेत्येतास्तिस्रउष्णिहः पदपङ्क्त्योवा अत्रसप्तम्यष्टम्योःपदपङ्क्त्युष्णिहोः परिभाषोक्तपादविच्छेदापवादाय प्रकारान्तरेणविच्छेदःकृतः । दशमेहनीदंसूक्तमाज्यशस्त्रं सूत्रितञ्च—अग्नेतमद्याश्वंनस्तोमैरित्याज्यमिति । पिण्डापितृयज्ञेग्नेतमद्येत्यनयाग्निंप्रत्यागच्छेत् सूत्रितञ्च—अग्निंप्रत्येयादग्नेतमद्याश्वंनस्तोमैरिति । पौनराधेयिक्यांस्विष्टकृतिएषैवयाज्या सूत्रितञ्च—अग्नेतमद्याश्वंनस्तोमैरितिसंयाज्येइति ।

तत्रप्रथमा—

अग्नेतमद्याश्वंनस्तोमैःक्रतुंनभद्रंहृदिस्पृशम् । ऋध्यामातओहैः ।१।

अग्ने । तम् । अद्य । अश्वम् । न । स्तोमैः । क्रतुम् ।
न । भद्रम् । हृदिऽस्पृशम् । ऋध्याम । ते । ओहैः ॥ १ ॥

हेअग्ने अद्यास्मिन्नहनिवयमृत्विगादयओहैरिन्द्रादिप्रापकैःस्तोमैःस्तोत्रसमूहैः तं प्रसिद्धं त्वाम् ऋध्याम समर्धयामः कीदृशंत्वाम् अश्वंन वोढारमश्वमिव तथाहविषोवाहकं क्रतुंन कर्तारमिव उपकर्तारमित्यर्थः तथा भद्रं भजनीयं हृदिस्पृशं हृदयङ्गमम् अतिशयेनप्रियमित्यर्थः ॥ १ ॥

पौनराधिक्यामिष्टौप्रधानस्याधाह्यग्नइत्येपानुवाक्या एभिर्नोअर्कैरितितस्यांस्विष्टकृतोनुवाक्या आभिष्टेअद्येतिप्रधानस्ययाज्या सूत्रितञ्च—अधाह्यग्नेक्रतोर्भद्रस्याभिष्टेअद्यगीर्भिर्गृणन्तएभिर्नोअर्कैरिति ।

अथद्वितीया—

अधाह्यग्नेक्रतोर्भद्रस्यदक्षस्यसाधोः । रथीर्ऋतस्यबृहतोबभूथ ॥२॥

अध । हि । अग्ने । क्रतोः । भद्रस्य । दक्षस्य ।
साधोः । रथीः । ऋतस्य । बृहतः । बभूथ ॥ २ ॥

अधहि इदानीमेव हेअग्ने त्वं क्रतोः अस्मदीयस्ययागस्यरथीर्नेताबभूथ भवसि छन्दसिलुङ्लङ्लिटइतिभवतेर्वर्तमानेर्थेलिटिसिपस्थल् आर्धधातुकस्येड्वलादेरितीडागमेप्राप्ते बभूथाततन्थेतिनिपातनादिडभावः कीदृशस्ययागस्य भद्रस्य भजनीयस्य दक्षस्य प्रवृद्धस्य साधोः अभीष्टफलानांसाधकस्य ऋतस्य सत्यभूतस्य बृहतोमहतः ॥ २ ॥

अथतृतीया—

एभिर्नोअर्कैर्भवानोअर्वाङ्स्व१र्णज्योतिः ।
अग्नेविश्वेभिःसुमनाअनीकैः ॥ ३ ॥

एभिः । नः । अर्कैः । भव । नः । अर्वाङ् । स्वः । न ।
ज्योतिः । अग्ने । विश्वेभिः । सुऽमनाः । अनीकैः ॥ ३ ॥

हेअग्ने ज्योतिर्ज्योतिष्मान् स्वर्णसूर्यइव तथाविश्वेभिर्विश्वैःसमस्तैरनीकैस्तेजोभिःसुमनाःशोभनमनस्कस्त्वं नोस्मदीयैरेभिरेतैःअर्कैरर्चनीयैःस्तोत्रैर्नोस्माकमर्वाङभिमुखोभव ॥ ३ ॥

अथचतुर्थी—

आभिष्टेअद्यगीर्भिर्गृणन्तोग्नेदाशेम । प्रतेदिवोनस्तनयन्तिशुष्माः ४

आभिः । ते । अद्य । गीःऽभिः । गृणन्तः । अग्ने । दाशेम ।
प्र । ते । दिवः । न । स्तनयन्ति । शुष्माः ॥ ४ ॥

अद्यास्मिन्दिवसे हेअग्ने आभिर्गीर्भिःस्तुतिरूपाभिर्वाग्भिःगृणन्तस्त्वांस्तुवन्तोवयमृत्विगादयः तेतुभ्यं दाशेम हवींषिदधा(द्या)म दिवोनसूर्यस्यरश्मयइवतेत्वदीयाःशुष्माःशोषकाज्वालाः प्रस्तनयन्ति प्रकर्षेणशब्दायन्ते यद्वा दिवोन मेघाइव त्वदीयाज्वालाःशब्दायन्ते ॥ ४ ॥

अथपञ्चमी—

तवस्वादिष्ठाग्नेसंदृष्टिरिदाचिदह्नइदाचिदक्तोः ।
श्रियेरुक्मोनरोचतउपाके ॥ ५ ॥

तव । स्वादिष्ठा । अग्ने । सम्ऽदृष्टिः । इदा । चित् । अह्नः । इदा ।
चित् । अक्तोः । श्रिये । रुक्मः । न । रोचते । उपाके ॥५॥

हेअग्ने स्वादिष्ठास्वादुतमा प्रियतमा तव त्वदीयासंदृष्टिर्दीप्तिः अह्नइदाचित् दिवसस्येदानींच अक्तोरिदाचित् अक्तुरितिरात्रिनाम शर्वरीअक्तुःउर्म्येतिरात्रिनामसुपाठात् रात्रेरिदानींच अहोरात्रेइत्यर्थः अञ्जूव्यक्तिम्रक्षणकान्तिगतिष्वित्यस्माद्धातोःकिच्चेत्यौणादिकसूत्रेणतुप्रत्ययः तस्यकिद्वद्भावश्च तितुत्रेतीट्प्रतिषेधः अनिदितामित्युपधानकारलोपः चोःकुरितिकुत्वं रुक्मोन अलङ्कारइव श्रिये पदार्थमाश्रयितुमुपाके अन्तिके उपाकइत्यन्तिकनाम आकेउपाकेइतितन्नामसुपाठात् रोचते राजते ॥ ५ ॥

अथषष्ठी—

घृतंनपूतंतनूररेपाःशुचिहिरण्यम् । तत्तेरुक्मोनरोचतस्वधावः ॥६॥

घृतम् । न । पूतम् । तनूः । अरेपाः । शुचि । हिरण्यम् ।
तत् । ते । रुक्मः । न । रोचत । स्वधाऽवः ॥ ६ ॥

हेस्वधावः स्वधाशब्दोन्नवाची अन्नवन्नग्ने पूतं शोधितं घृतंन आज्यमिव तनूःत्वदीयामूर्तिः अरेपाः पापरहिताभवति शुचिःशुद्धंहिरण्यंहितरमणीयं तेत्वदीयंतत्प्रसिद्धंतेजः रुक्मोन भूषणमिवरोचत रोचते भासते ॥ ६ ॥

अथसप्तमी—

कृतंचिद्धिष्मासनेमिद्वेषोग्नइनोषिमर्तात् । इत्थायजमानादृतावः ॥७

कृतम् । चित् । हि । स्म । सनेमि । द्वेषः । अग्ने । इनोषि ।
मर्तात् । इत्था । यजमानात् । ऋतऽवः ॥ ७ ॥

हेऋतावः सत्यवन्नग्ने कृतंचित् यजमानेनकृतमपि सनेमि चिरन्तनं सनेमीतिपुराणनाम सनेमिपूर्व्यमितिपुराणनामसुपाठात् द्वेषः पापं मर्तात्मनुष्याद्यजमानात् इत्थासत्यं इत्थेतिसत्यनामैतत् अद्धाइत्थेतितन्नामसुपाठात् इनोषिस्माहि प्रेरयस्येवखलु नाशयसीत्यर्थः ॥ ७ ॥

अथाष्टमी–

शिवानःसख्यासन्तुभ्रात्राग्नेदेवेषुयुष्मे ।
सानोनाभिःसदनेसस्मिन्नूधन् ॥ ८ ॥ १० ॥

शिवा । नः । सख्या । सन्तु । भ्रात्रा । अग्ने । देवेषु ।
युष्मे इति । सा । नः । नाभिः । सदने । सस्मिन् । ऊधन् ॥८॥१०॥

हेअग्ने नोस्मदीयानिसख्या सख्यानि भ्रात्राभ्रात्राणि भ्रातृसंबन्धीनिकर्माणि देवेषुद्योतमानेषुयुष्मे युष्मासु सुपांसुलुगितिसप्तमीबहुवचनस्यशेआदेशः शिवा शिवानि सन्तु मङ्गलानिभवन्तु सा सखित्वभ्रातृकर्मसन्ततिः सदने देवानांस्थाने सस्मिन्नूधनि सर्वस्मिन्यज्ञेनोस्माकंनाभिर्बन्धनंभवति ॥ ८ ॥

॥ इतितृतीयस्यपञ्चमेदशमोवर्गः ॥ १० ॥

॥ इतिचतुर्थेमण्डलेप्रथमोनुवाकः ॥ १ ॥

द्वितीयेनुवाकेएकादशसूक्तानि तत्रभद्रंतइतिषडृचंप्रथमंसूक्तं वामदेवस्यार्षं त्रिष्टुप्छन्दस्कम् अग्निदेवताकं भद्रंषळित्यनुक्रमणिका । प्रातरनुवाकाश्विनशस्त्रयोराग्नेयेक्रतौत्रैष्टुभेछन्दसीदमादिकेद्वेसूक्तेविनियुक्ते सूत्रितञ्च–भद्रंतेअग्नइतिसूक्तेइति ।

तत्रप्रथमा–

भद्रंतेअग्नेसहसिन्ननीकमुपाकआरोचतेसूर्यस्य ।
रुशंदृशेददृशेनक्तयाचिदरूक्षितंदृशआरूपेअन्नम् ॥ १ ॥

भद्रम् । ते । अग्ने । सहसिन् । अनीकम् । उपाके । आ ।
रोचते । सूर्यस्य । रुशत् । दृशे । ददृशे । नक्तऽया । चित् ।
अरूक्षितम् । दृशे । आ । रूपे । अन्नम् ॥ १ ॥

हेसहसिन् बलवन्नग्ने ते त्वदीयं भद्रं भजनीयमनीकंतेजः सूर्यस्यउपाके समीपभूतेदिवसेइत्यर्थः आरोचते समन्ताद्दीप्यते रुशत् रोचमानं दृशेदर्शनीयंतेजः नक्तयाचिद्रात्रावपि ददृशेदृश्यते आइत्ययंशब्दोनेत्यर्थेवर्तते आर्किंच अरूक्षितं स्निग्धं दृशे दर्शनीयम् अन्नंपुरोडाशादिरूपंहविः रूपेरूपवति त्वयि ऋत्विगादिभिर्हुतंभवति ॥ १ ॥

अथद्वितीया-

विषांह्यग्नेगृणतेमंनीषांखंवेपंसातुविजातस्तवांनः ।
विश्वेंभिर्यद्वावनंःशुक्रदेवैस्तन्नोंरास्वसुमहोभूरिमन्मं ॥२॥

वि । साहि । अग्ने । गृणते । मनीषाम् । खम् । वेपंसा ।
तुविऽजात । स्तवानः । विश्वेभिः । यत् । ववनंः । शुक्र ।
देवैः । तत् । नः । रास्व । सुऽमहः । भूरिं । मन्मं ॥२॥

हेतुविजात मन्थनीयारणिद्वारा यज्ञादिकर्मसु बहुजन्मन्नग्ने स्तवानः ऋत्विगादिभिःस्तूयमानस्त्वं वेपसायज्ञादिकर्मणा वेपइतिकर्मनाम वेपःवेमःविष्टीतिकर्मनामसुपाठात् मनीषां स्तुतिंगृणतेकुर्वतेयजमानायखंयजमानप्राप्यस्यपुण्यलोकस्यद्वारं विषाहि विष्य विमुञ्चेत्यर्थः षोन्तकर्मणिइत्यस्माद्धातोःलोण्मध्यमपुरुषैकवचनं सिप् दिवादिभ्यःश्यन् तस्यबहुलंछन्दसीतिलुक् आदेचउपदेशेशितीत्यात्वं सेर्हिरादेशः तिङ्ङतिङइतिनिघातःहेशुक्र दीप्यमानाग्ने त्वं विश्वेभिर्विश्वैःसर्वैः बहुलंछन्दसीतिभिसऐस्भावः देवैरिन्द्रादिभिःसह यत्पश्वादिधनं ववनः यजमानेभ्यःप्रयच्छेः वनतेर्लेट् तस्यसिपइतश्चलोपइतीकारलोपः बहुलंछन्दसीतिविकरणस्यश्लुः श्लावितिद्विर्वचनं हलादिशेषः लेटोडाटावित्यडागमः यद्वृत्तान्नित्यमितिनिघाताभावः हेसुमहः शोभनतेजस्काग्ने भूरि प्रभूतं मन्ममननीयंतद्धनंनोस्मभ्यं रास्व देहि ॥ २ ॥

महापितृयज्ञेस्विष्टकृतोग्निःकव्यवानोयष्टव्यः तस्यद्वेअनुवाक्ये तत्र त्वदग्नेकाव्याइति द्वितीयानुवाक्या तथाचसूत्रितम्—त्वदग्नेकाव्यात्वन्मनीषाःसप्रत्नथासहसाजायमानइति ।

सूक्तेतृतीया-

त्वदंग्नेकाव्यात्वन्मंनीषास्त्वदुक्थाजांयन्तेराध्यांनि ।
त्वदेंतिद्रविंणंवीरपेंशाइत्थाधिंयेदाशुषेमर्त्याय ॥ ३ ॥

त्वत् । अग्ने । काव्या । त्वत् । मनीषाः । त्वत् । उक्था ।
जायन्ते । राध्यानि । त्वत् । एति । द्रविणम् । वीरऽपेंशाः ।
इत्थाऽधिये । दाशुषे । मर्त्याय ॥ ३ ॥

हेअग्ने काव्याकाव्यानि हविर्वहनदेवतानयनादीन्यग्निसंबन्धीनिकर्माणि आध्वर्यवाणि कर्माणि वा त्वद्भवतोजायन्ते उत्पद्यन्ते मनीषास्तुतिरूपावाचस्त्वदेवजायन्ते राध्यानि राद्धुंयो-

ग्यानि उक्था उक्थानिशास्त्राणित्वत्त्वत्तोजायन्ते इत्याधिये धीरितिकर्मनाम इत्येतिसत्यनामसुपाठात् सत्यकर्मणे दाशुषे हवींषिदत्तवतेमर्त्यायमनुष्यायययजमानायवीरपेशाः पेशइतिरूपनाम इदंविक्रान्तंरूपम् अत्रलिङ्गव्यत्ययेनवीरपेशाइतिरूपम् द्रविणंपश्वादिधनंत्वत्त्वत्तःएतिनिर्गच्छति उत्पद्यतइत्यर्थः ॥ ३ ॥

अथचतुर्थी—

त्वद्वाजीवाजम्भरोविहायाअभिष्टिकृज्जायतेसत्यशुष्मः ।
त्वद्रयिर्देवजूतोमयोभुस्त्वदाशुर्जूजुवाँअग्नेअर्वा ॥ ४ ॥

त्वत् । वाजी । वाजम्ऽभरः । विऽहायाः । अभिष्टिऽकृत् ।
जायते । सत्यऽशुष्मः । त्वत् । रयिः । देवऽजूतः । मयःऽभुः ।
त्वत् । आशुः । जूजुऽवान् । अग्ने । अर्वा ॥ ४ ॥

हेअग्ने वाजी बलवान् वाजम्भरः हविर्लक्षणान्नस्यवाहकः अग्नेर्वाजम्भरइत्येषावैदिकीसंज्ञा संज्ञायांभृतृवृजीतिवाजशब्देकर्मण्युपपदेखच्प्रत्ययः अरुर्द्विषदजन्तस्येतिमुमागमः चितइत्यन्तोदात्तत्वं विहायाः महान् अभिष्टिकृत् यज्ञकृत् अभ्येषणकृद्वा सत्यशुष्मः सत्यबलः पुत्रः त्वत्त्वत्तोजायतेउत्पद्यते देवजूतोदेवैःप्रेरितःमयोभुःसुखप्रदःमयइतिसुखनामैतत् रयिर्धनंत्वज्जायते आशुःशीघ्रगामीअप्रतिहतगमनइत्यर्थः जूजुवान्वेगेनगच्छन्नर्वाश्वःत्वद्भवतांजायते ॥ ४ ॥

अथपञ्चमी—

त्वामग्नेप्रथमंदेवयन्तोदेवंमर्ताअमृतमन्द्रजिह्वम् ।
द्वेषोयुतमाविवासन्तिधीभिर्दमूनसंगृहपतिममूरम् ॥ ५ ॥

त्वाम् । अग्ने । प्रथमम् । देवऽयन्तः । देवम् । मर्ताः । अमृत ।
मन्द्रऽजिह्वम् । द्वेषःऽयुतम् । आ । विवासन्ति । धीभिः ।
दमूनसम् । गृहऽपतिम् । अमूरम् ॥ ५ ॥

हेअमृत अमरणशीलाग्ने देवयन्तोदेवानिच्छन्तोमर्तामनुष्यायजमानाः त्वाम् धीभिः स्तुतिभिःकर्मभिर्वा आविवासन्ति समन्तात्परिचरन्ति कीदृशंत्वां प्रथमं देवानामाद्यंदेवंद्योतमानं मन्द्रजिह्वं देवानांमादयित्रीजिह्वायस्यतं द्वेषोयुतं द्वेषसांपापानां पृथक्कर्तारं दमूनसं रक्षसांदमनकरणमनसोपेतं दमूनःशब्दस्यकथमयमर्थइतिदमूनादममनावादानमनावादान्तमनावाअपिवादमङ्तिगृहनामतन्मनाःस्यादितियास्केनोक्तत्वादिति । दमुउपशमने दमेरूनसिरित्यौणादिकऊनसिप्रत्ययः गृहपतिं गृहाणांपालयितारम् अमूरम् अमूढं प्रगल्भमित्यर्थः ॥ ५ ॥

स्वस्त्ययन्याम् आरेअस्मदितिस्वस्तिमतोग्नेर्याज्या सूत्रितञ्च—आरेअस्मदमतिमारेअंहइति ।

अथषष्ठी—

आरेअस्मदमतिमारेअंहआरेविश्वांदुर्मतिंयन्निपासि ।
दोषाशिवःसहसःसूनोअग्नेयंदेवआचित्सचसेस्वस्ति ॥६॥११॥

आरे । अस्मत् । अमतिम् । आरे । अंहः । आरे । विश्वाम् ।
दुःऽमतिम् । यत् । निऽपासि । दोषा । शिवः । सहसः । सूनो इति ।
अग्ने । यम् । देवः । आ । चित् । सचसे । स्वस्ति ॥ ६ ॥ ११ ॥

हेसहसःसूनो बलस्यपुत्र मथ्यमानोग्निर्मन्थनकारिणांहिबलेनजायते इत्यग्नेर्बलपुत्रत्वं हेअग्ने दोषारात्रौ शिवः शिवकरः देवोद्योतमानस्त्वं यंयानस्मानस्वस्ति अविनाशाय आसचसे परितःसेवसे चिदितिपूरणः यद्यस्मात्कारणात् निपासि यजमानान्नितरांपालयसि तेभ्योस्मदस्मत्तः अमतिपापरूपामशनेच्छाम् आरे दूरंकुरु अशनायावैपाप्मामतिरितिब्राह्मणम् । आरेदूरेस्मदस्मत्तःअंहःपापंकुरु आरेइतिदूरनामैतत् अस्मत्तःआरेदूरंदुर्मतिंदुर्मनस्त्वंकुरु ॥ ६ ॥

॥ इतितृतीयस्यपञ्चमेएकादशोवर्गः ॥ ११ ॥

यस्त्वामग्नइतिषळृचंद्वितीयंसूक्तम् वामदेवऋषिस्त्रैष्टुभोग्निर्देवता यस्त्वामित्यनुक्रान्तं प्रातरनुवाकाश्विनशस्त्रयोःपूर्वसूक्तेनसहोक्तोविनियोगः ।

---

१ नि० ४. ४. । २ ऐ० ब्रा० २. २. ।

तत्रप्रथमा-

यस्त्वामग्नइनधतेयतस्रुक्त्रिस्तेअन्नंकृणवत्सस्मिन्नहन् ।
ससुद्युम्नैरभ्यस्तुप्रसक्षत्तवक्रत्वाजातवेदश्चिकित्वान् ॥ १ ॥

यः । त्वाम् । अग्ने । इनधते । यतऽस्रुक् । त्रिः । ते । अन्नम् । कृणवत् । सस्मिन् । अहन् । सः । सु । द्युम्नैः । अभि । अस्तु । प्रऽसक्षत् । तव । क्रत्वा । जातऽवेदः । चिकित्वान् ॥ १ ॥

हेअग्ने यतस्रुक् स्रुवासंबद्धोयोयजमानः त्वामिनधते दीप्तियुक्तंकुर्यात् यः सस्मिन्नहन्सर्वस्मिन्नहनि तेतुभ्यं त्रिः त्रिवारं सवनत्रये अन्नंहविर्लक्षणमन्नंकृणवत्कुर्यात् हेजातवेदः जातानांवेदितरग्ने तवतोषकेणक्रत्वाइन्धनादिहेतुनाकर्मणाप्रसक्षत् प्रसहमानंत्वदीयंतेजः चिकित्वान् जानन्सयजमानः द्युम्नैर्धनैर्यशोभिर्वा सु अत्यन्तमभ्यस्तु शत्रूनभिभवतु ॥ १ ॥

अथद्वितीया-

इध्मंयस्तेजभरच्छश्रमाणोमहोअग्नेअनीकमासपर्यन् ।
सइधानःप्रतिदोषामुषासंपुष्यन्रयिंसचतेघ्नन्नमित्रान् ॥ २ ॥

इध्मम् । यः । ते । जभरत् । शश्रमाणः । महः । अग्ने । अनीकम् । आ । सपर्यन् । सः । इधानः । प्रति । दोषाम् । उषसम् । पुष्यन् । रयिम् । सचते । घ्नन् । अमित्रान् ॥ २ ॥

हेअग्ने योयजमानः तेतुभ्यम् इध्मं होमसाधनं समिज्जातं जभरत् आहरेत् हृञ्हरणे लिङर्थेलेट् तस्य तिपइतश्चलोपइतीकारलोपः बहुलंछन्दसीतिशपःश्लुः द्विर्वचनादिकार्यं लेटोडाटावित्यडागमः हृग्रहोर्भइतिभत्वं शश्रमाणः इध्माद्याहरणेश्राम्यन् महोमहतस्तवानीकम् आकारश्चार्थे तेजश्चसपर्यन्परिचरन्योयजमानः दोषांप्रति रात्रिंलक्षीकृत्य उषसंप्रति उषःकालंचलक्षीकृत्य कालद्वयेपीत्यर्थः इधानः इन्धानस्त्वां दीप्तियुक्तंकरोति पुष्यन् प्रजाभिःपशुभिश्चपुष्टःसन् सयजमानः अमित्रान् शत्रून् घ्नन् हिंसन् रयिं धनंसचते सेवते सर्वदापश्वादिधन समृद्धोभवतीत्यर्थः ॥ २ ॥

उखासंभरणीयेष्टावग्नेःक्षत्रभृतोनुवाक्या तथाचसूत्रम्—अग्निरीशेबृहतःक्षत्रियस्याचामितेसुमतिंघोष्यर्वागिति ।

सूक्तेतृतीया—

अ॒ग्निरी॑शे बृह॒तः क्ष॒त्रिय॑स्या॒ग्निर्वाज॑स्य पर॒मस्य॑ रा॒यः ।
दधा॑ति॒ रत्नं॑ विध॒ते यवि॑ष्ठो॒ व्या॑नु॒षङ्मर्त्या॑य स्व॒धावा॑न् ॥ ३ ॥

अ॒ग्निः । ई॒शे॒ । बृ॒ह॒तः । क्ष॒त्रिय॑स्य । अ॒ग्निः । वाज॑स्य ।
प॒र॒मस्य॑ । रा॒यः । दधा॑ति । रत्न॑म् । वि॒ध॒ते । यवि॑ष्ठः । वि । आ॒नु॒षक् ।
मर्त्या॑य । स्व॒धाऽवा॑न् ॥ ३ ॥

अग्निः बृहतोमहतःक्षत्रियस्य वलस्य ईशे ईश्वरोभवति वर्तमानार्थेलिट् किंच अग्निःपरमस्योत्कृष्टस्यवाजस्यान्नस्यरायःपश्वादेर्धनस्यचेशे यविष्ठोयुवतमःस्वधावानन्नवान्तेजस्वीचाग्निः विधते परिचरते विधतिःपरिचरणकर्मेतियास्कः । मर्त्याय मनुष्याय यजमानाय रत्नंरमणीयंधनमानुषक् अनुषक्तं विदधाति करोति ॥ ३ ॥

अथचतुर्थी—

यच्चि॒द्धि ते॑ पुरुष॒त्रा य॑विष्ठा॒चित्ति॑भिश्चकृ॒मा कच्चि॒दागः॑ ।
कृ॒धी ष्व॑१॒॑स्माँ अदि॑ते॒रना॑गा॒न्व्येनां॑सि शिश्रथो॒ विष्व॑गग्ने ॥ ४ ॥

यत् । चि॒त् । हि । ते॒ । पु॒रु॒ष॒ऽत्रा । य॒वि॒ष्ठ॒ । अचि॑त्तिऽभिः ।
च॒कृ॒म । कत् । चि॒त् । आगः॑ । कृ॒धि । सु । अ॒स्मान् । अदि॑तेः ।
अना॑गान् । वि । एनां॑सि । शि॒श्र॒थः॒ । विष्व॑क् । अ॒ग्ने॒ ॥ ४ ॥

हेयविष्ठ युवतमाग्ने यच्चिद्धि यद्यपिखलु तेत्वदीयेषु पुरुषत्रा परिचारकेषु अचित्तिभिरज्ञानैः कच्चिदागः किंचिदपिपापंवयंचकृम तथापि हेअग्ने अस्मानदितेर्भूमेरनागानंनागसः पापरहितान्सु अत्यन्तं कृधि कुरु हेअग्ने विष्वक् सर्वतोविद्यमानान्येनांसि अस्माभिःकृतानि पापानि विशिश्रथः विश्लथय शिथिलीकुरु ॥ ४ ॥

---

१ नि० १०. २३.

अथपञ्चमी-

महश्चिदग्नएनसोअभीकऊर्वाद्देवानामुतमर्त्यानाम् ।
मातेसखायःसदमिद्रिषामयच्छातोकायतनयायशंयोः ॥ ५ ॥

महः । चित् । अग्ने । एनसः । अभीके । ऊर्वात् । देवानाम् ।
उत । मर्त्यानाम् । मा । ते । सखायः । सदम् । इत् । रिषाम ।
यच्छ । तोकाय । तनयाय । शम् । योः ॥ ५ ॥

हेअग्ने देवानामिन्द्रादीनाम् उतापिच मर्त्यानां मनुष्याणामभीके अन्तिके अभीकइत्यन्तिकनामैतत् अस्माभिर्यत्पापंकृतं महश्चिन्महतोप्यूर्वाद्धिंस्तृतादस्मादेनसःपापात् तेत्वदीयाःसखायोमित्रभूताः स्तोतारोवयंसदमित् सर्वदैवमारिषाम माहिंसिताभूम हेअग्ने त्वं तोकाय पुत्राय तनयाय पौत्राय शं पापरूपोपद्रवाणांशान्तिं योः सुकृतोत्पादितंसुखंचयच्छ देहि ॥ ५ ॥

अथषष्ठी-

यथांहत्यद्वसवोगौर्यंचित्पदिषिताममुञ्चतायजत्राः ।
एवोष्व१स्मन्मुञ्चताव्यंहः प्रतार्यग्नेप्रतरंनआयुः ॥६॥१२॥

यथा । ह । त्यत् । वसवः । गौर्यम् । चित् । पदि । सिताम् ।
अमुञ्चत । यजत्राः । एवो इति । सु । अस्मत् । मुञ्चत । वि । अंहः ।
प्र । तारि । अग्ने । प्रऽतरम् । नः । आयुः ॥ ६ ॥ १२ ॥

यजत्राः यजनीयाः पूजार्हाः हेवसवोनिवासयितारोग्नयः यूयं यथाह यथैव त्यत् त्यां तां पदि पादे सितां बद्धां गौर्यंचित् गौरींगामपि अमुञ्चतत्यक्तवन्तोभूयास्तएवो एवमेव अस्मदस्मत्तः अंहःपापं सु अत्यन्तंविमुञ्चत विमुक्तंकुरुत बहुवचनंपूजार्थं हेअग्ने त्वया प्रतरंप्रवृद्धंनोस्मदीयमायुः प्रतारि प्रवृद्धंक्रियताम् ॥ ६ ॥

॥ इतितृतीयस्यपञ्चमेद्वादशोवर्गः ॥ १२ ॥

प्रत्यग्निरितिपञ्चर्चंतृतीयंसूक्तं वामदेवस्यार्षंत्रैष्टुभमाग्नेयं तत्तन्मन्त्रावर्णाभिधेयोषःप्रभृतिदैवतंवा तथाचानुक्रान्तम्-प्रत्यग्निःपञ्चलिङ्गोक्तदैवतन्त्वेकइति लैङ्गिकोविनियोगः ।

तत्रप्रथमा—

प्रत्यग्निरुषसामग्रमख्यद्विभातीनांसुमनारत्नधेयम् ।
यातमश्विनासुकृतोदुरोणमुत्सूर्योज्योतिषादेवएति ॥ १ ॥

प्रति । अग्निः । उषसाम् । अग्रम् । अख्यत् । विऽभातीनाम् ।
सुऽमनाः । रत्नऽधेयम् । यातम् । अश्विना । सुऽकृतः ।
दुरोणम् । उत् । सूर्यः । ज्योतिषा । देवः । एति ॥ १ ॥

सुमनाः शोभनमनस्कोग्निर्विभातीनां व्युछन्तीनामुषसामुषोदेवतानां रत्नधेयं रत्नधानं धनप्रकाशकमित्यर्थः अग्रंप्रति पूर्वकालंलक्षीकृत्य अख्यत्प्रवृद्धोभवति हेअश्विना अश्विनौ युवां सुकृतोयजमानस्यदुरोणंगृहं दुरोणइतिगृहनाम दुरोणेदुर्याइतिगृहनामसुपाठात् यातं गच्छतं सूर्यऋत्विगादीनां प्रेरकोदेवःज्योतिषास्वेनतेजसा उदेति उषःकालेप्रादुर्भवतीत्यर्थः ॥१॥

अथद्वितीया—

ऊर्ध्वंभानुंसवितादेवोअश्रेद्द्रप्संदविध्वद्गविषोनसत्वा ।
अनुव्रतंवरुणोयन्तिमित्रोयत्सूर्यंदिव्यारोहयन्ति ॥ २ ॥

ऊर्ध्वम् । भानुम् । सविता । देवः । अश्रेत् । द्रप्सम् । दविध्वत् ।
गोऽइषः । न । सत्वा । अनु । व्रतम् । वरुणः । यन्ति । मित्रः ।
यत् । सूर्यम् । दिवि । आऽरोहयन्ति ॥ २ ॥

सवितप्रेरकोदेवः ऊर्ध्वम् उन्मुखंभानुमश्रेत् आश्रयति यद्यदारश्मयःसूर्यंदिविद्युलोके आरोहयन्तिआरोहणंकारयन्ति तदा वरुणोरात्र्यभिमानीदेवः मित्रोहरभिमानी अन्येदेवाश्च व्रतं तत्संबधिकर्मानुयन्ति अनुगच्छन्ति अनुगमनेदृष्टान्तउच्यते—द्रप्संपार्थिवंरजोदविध्वत् धुन्वन् विकिरन्नित्यर्थः गविषोगाइच्छन्सत्वानवृषभइव तद्वत् ॥ २ ॥

अथतृतीया—

यंसीमकृण्वन्तमसेविपृचेध्रुवक्षेमाअनवस्यन्तोअर्थम् ।
तंसूर्यंहरितःसप्तयह्वीःस्पशंविश्वस्यजगतोवहन्ति ॥ ३ ॥

यम् । सीम् । अकृण्वन् । तमसे । विऽपृचे । ध्रुवऽक्षेमाः ।
अनवस्यन्तः । अर्थम् । तम् । सूर्यम् । हरितः । सप्त । यह्वीः ।
स्पशम् । विश्वस्य । जगतः । वहन्ति ॥ ३ ॥

ध्रुवक्षेमाः स्थिरनिवासाः सृष्टिकर्तारोदेवाः सीम् सर्वतस्तमसेतमसःविपृचे पृथक्करणाय अर्थं जगल्लक्षणंकार्यम् अनवस्यन्तः अविमुञ्चन्तः कुर्वन्तएव यं सूर्यम् अकृण्वन्नसृजन्नित्यर्थः यह्वीर्महत्यःसप्त सप्तसंख्याकाः हरितोश्वाः विश्वस्यसमस्तस्यजगतःप्राणिसमूहस्य स्पशं प्रेरकत्वेनज्ञातारं तं सूर्यंवहन्ति धारयन्ति ॥ ३ ॥

अथचतुर्थी—

वहिष्ठेभिर्विहरन्यासितन्तुमवव्ययन्नसितंदेववस्मं ।
दविध्वतोरश्मयःसूर्यस्यचर्मेवावाधुस्तमोअप्स्वन्तः ॥४॥

वहिष्ठेभिः । विऽहरन् । यासि । तन्तुम् । अवऽव्ययन् ।
असितम् । देव । वस्म । दविध्वतः । रश्मयः । सूर्यस्य । चर्मऽइव ।
अव । अधुः । तमः । अप्सु । अन्तरिति ॥ ४ ॥

हेदेव द्योतमान सूर्य त्वं जगन्निर्वाहात्मकस्यरसस्यादानार्थं तन्तुं रश्मिसमूहंविहरन्विस्तारयन्नसि तं कृष्णवर्णंवस्म नक्तंचराणां निवासभूतांरात्रिमवव्ययन् अवाचीनंयथा भवतितथासंवृण्वन्तिरस्कुर्वन्नित्यर्थः वहिष्ठेभिर्वोढुमत्यन्तंशक्तैरश्वैर्यासिगमनमार्गंगच्छासि अस्यामृचिपूर्वार्धेसूर्यस्यप्रत्यक्षमर्थंप्रतिपाद्य उत्तरार्धेपरोक्षमर्थंप्रतिपादयितुमाह—दविध्वतोधुन्वानाःसूर्यस्यसंबन्धिनोरश्मयःकिरणाः अप्स्वन्तरिक्षे आपइत्यन्तरिक्षनाम आकाशम् आपः पृथिवीतितन्नामसुपाठात् अन्तर्मध्येचर्मेव चर्मवत्स्थितंतमः अन्धकारमवाधुः अवाचीनमदधुः तिरस्कुर्वन्तीत्यर्थः ॥ ४ ॥

अथपञ्चमी—

अनायतोअनिबद्धःकथायंन्यङ्ङुत्तानोवपद्यतेन ।
कयायातिस्वधयाकोददर्शदिवःस्कम्भःसमृतःपातिनाकम् ।५।

अनायतः । अनिऽबद्धः । कथा । अयम् । न्यङ् । उत्तानः । अव । पद्यते । न । कया । याति । स्वधया । कः । ददर्श । दिवः । स्कम्भः । सम्ऽऋतः । पाति । नाकम् ॥ ५ ॥ १३ ॥

आयतशब्दोदूरवाची तद्विपरीतोनायतः आसीनःसन्नयंप्रत्यक्षेणोपलभ्यमानोमण्डलाभिमानीसूर्यः अनिबद्धः केनापिबद्धोनक्रियते अपिचायंसूर्यः न्यङ् अवाङ्मुखःसन् केनाचित्कथा कथंनावपद्यते नहिंस्यते किंचायमुत्तानः ऊर्ध्वमुखत्वेनतिष्ठन्कथास्वधयाकेनबलेन यातिगच्छति स्वधाशब्दोन्नवाची अत्रतत्कार्यंबलंलक्षयति अपिचदिवोद्युलोकस्य स्कम्भः स्तम्भः सम्रृतः नाकेन समवेतः सूर्यः नाकंस्वर्गंपातिपालयति कोददर्श तत्त्वतःकःपश्यति नकोपिजानातीत्यर्थः ॥ ५ ॥

॥ इतितृतीयस्यपञ्चमेत्रयोदशोवर्गः ॥ १३ ॥

प्रत्यग्निरुषसइतिपञ्चर्चंचतुर्थंसूक्तं वामदेवस्यार्षं त्रैष्टुभमाग्नेयं मान्त्रवर्णिकदैवतंवा तथाचानुक्रान्तं प्रत्यग्निरिति । लिङ्गोक्तदैवतंत्विवितितुशब्दादस्यापिसूक्तस्यलिङ्गोक्तदैवतत्वं विनियोगोलैङ्गिकः ।

तत्रप्रथमा—

प्रत्यग्निरुषसोजातवेदाअख्यंद्देवोरोचमानामहोभिः ।
आनासत्योरुगायारथेनेमंयज्ञमुपनोयातमच्छ ॥ १ ॥

प्रति । अग्निः । उषसः । जातऽवेदाः । अख्यत् । देवः । रोचमानः । महःऽभिः । आ । नासत्या । उरुऽगाया । रथेन । इमम् । यज्ञम् । उप । नः । यातम् । अच्छ ॥ १ ॥

देवोद्योतमानः जातवेदाजातधनोग्निः महोभिस्तेजोभिः रोचमानाः दीप्यमानाः उषसःप्रतिउषसोलक्षीकृत्य अख्यत् प्रवृद्धोभवति उरुगाया प्रभूतगमनौ हेनासत्या अश्विनौ रथेननोस्मदीयमिमंयज्ञम् अच्छाभिमुखमुपयातम् उपगच्छतम् ॥ १ ॥

अथद्वितीया—

ऊर्ध्वंकेतुंसवितादेवोअश्रेज्ज्योतिर्विश्वस्मैभुवनायकृण्वन् ।
आप्राद्यावापृथिवीअन्तरिक्षंविसूर्योरश्मिभिश्चेकितानः ॥ २ ॥

ऊर्ध्वम् । केतुम् । सविता । देवः । अश्रेत् । ज्योतिः ।
विश्वस्मै । भुवनाय । कृण्वन् । आ । अप्राः । द्यावापृथिवी इति ।
अन्तरिक्षम् । वि । सूर्यः । रश्मिऽभिः । चेकितानः ॥ २ ॥

विश्वस्मैसर्वस्मैभुवनायलोकायज्योतिस्तेजःकृण्वन्कुर्वन्सवितापेरकोदेवः ऊर्ध्वमुन्मुखंकेतुं प्रकाशकंभानुमश्रेत् आश्रयति विचेकितानःसर्वविशेषेणपश्यन्सूर्यःरश्मिभिःस्वकीयैःकिरणैर्द्यावापृथिवी द्युलोकभूलोकौ अन्तरिक्षंच आअप्राः समन्तादपूरयत् ॥ २ ॥

अथतृतीया—

आवहन्त्यरुणीर्ज्योतिषागान्महीचित्रारश्मिभिश्चेकिताना ।
प्रबोधयन्तीसुवितायदेव्युषाईयतेसुयुजारथेन ॥ ३ ॥

आऽवहन्ती । अरुणीः । ज्योतिषा । आ । अगात् । मही ।
चित्रा । रश्मिऽभिः । चेकिताना । प्रऽबोधयन्ती । सुवितायं ।
देवी । उषाः । ईयते । सुऽयुजा । रथेन ॥ ३ ॥

आवहन्तीधनानिधारयन्ती अरुणीररुणवर्णाः । प्रथमैकवचनेद्वितीयाबहुवचनंछान्दसं ज्योतिषा तेजसायुक्तामहीमहतीरश्मिभिः किरणैश्चित्रादर्शनीयाचेकितानाजानती उषाआगादागच्छत् किंच प्रबोधयन्ती सुप्तान्प्रबुद्धान्कुर्वतीदेवीद्योतमानाउषाः सुयुजाशोभनयुक्तेनरथेनसुविताय सुखप्राप्तये ईयते गच्छति ॥ ३ ॥

अथचतुर्थी—

आवांवहिष्ठाइहतेवहन्तुरथाअश्वासउषसोव्युष्टौ ।
इमेहिवांमधुपेयायसोमाअस्मिन्यज्ञेवृषणामादयेथाम् ॥ ४ ॥

आ । वाम् । वहिष्ठाः । इह । ते । वहन्तु । रथाः । अश्वासः ।
उषसः । विऽउष्टौ । इमे । हि । वाम् । मधुऽपेयाय । सोमाः ।
अस्मिन् । यज्ञे । वृषणा । मादयेथाम् ॥ ४ ॥

हेअश्विनौ इहयज्ञे वहिष्ठाः वोढृतमाः तेप्रसिद्धारथाः रंहणाःगन्तारः अश्वासः अश्वाः वायुवामुषसः उषोदेवतायाव्युष्टौव्युच्छनकालेआवहन्तु समतान्नयन्तु हियस्मात्कारणात् हेवृषणा वृषणौ कामानांवर्षितारौ हेअश्विनौ इमेसोमाः वांयुवांमधुपेयायमधोःसोमस्यपानाय अस्मिन्यज्ञेमादयेथां हर्षयेथाम् ॥ ४ ॥

अथपञ्चमी–

**अनायतोअनिबद्धःकथायंन्यङ्ङुत्तानोवपद्यतेन । कयायातिस्वधयाकोददर्शदिवःस्कम्भःसमृतःपातिनाकम् ।५।१४**

अनायतः । अनिऽबद्धः । कथा । अयम् । न्यङ् । उत्तानः । अव । पद्यते । न । कया । याति । स्वधया । कः । ददर्श । दिवः । स्कम्भः । समृऽऋतः । पाति । नाकम् ॥ ५ ॥ १४ ॥

इयमृक्पूर्वंव्याख्याता ॥ ५ ॥

॥ इतितृतीयस्यपञ्चमेचतुर्दशोवर्गः ॥ १४ ॥

अग्निर्होतेतिदशर्चंपञ्चमंसूक्तंवामदेवस्यार्षंगायत्रम् अत्रेयमनुक्रमणिका–अग्निर्होतादशगायत्रमृषिर्बोधदिति:ऽभ्यांसोमकंसाहदेव्यमभ्यवदत्पराभ्यामश्विनावायुरयाचतेति बोधदितिर्द्व्यृचेनसामकराजास्तूयते एषत्रामितिद्व्यृचेनाश्विनौ शिष्टाभिःषड्भिरग्निःस्तूयते अतस्ताएवदेवताः सूक्तविनियोगोलैङ्गिकः पशोःपर्यग्निकरणे अग्निर्होतानइत्याद्यस्त्र्यृचोनुवचनीयः तथाचसूत्रितम्–अग्निर्होतानइतित्र्यृचंपर्यग्नयेन्वाहेति । प्रातरनुवाकेप्याग्नेयेक्रतौगायत्रेछन्दस्याश्विनशस्त्रेचायंत्र्यृचोविनियुक्तः तथाचसूत्रितम्–अग्निर्होतानोअध्वरइतितिस्रइति ।

तत्रप्रथमा–

**अग्निर्होतानोअध्वरेवाजीसन्परिणीयते । देवोदेवेषुयज्ञियः ॥ १ ॥**

अग्निः । होता । नः । अध्वरे । वाजी । सन् । परि । नीयते । देवः । देवेषु । यज्ञियः ॥ १ ॥

होता देवानामाह्वाता होमनिष्पादकोवा अग्निः नोस्मदीयेअध्वरे यागे वाजीत्येतल्लुप्तोपमाकं वाजीशीघ्रगामीवोढाअश्वइव तथादेवेभ्योहविर्वाहकःसन् परिणीयते परितःसमन्ता–

त्प्राप्यते तथाब्राह्मणंभवति—वाजीसन्परिणीयतइतिवाजिनमिवह्येनंसन्तंपरिणयन्तीति । कीदृशोग्निः देवेषुद्योतमानेषु इन्द्रादिषुमध्ये देवोद्योतमानःयज्ञियोयज्ञार्हः ॥ १ ॥

अथद्वितीया—

**परि॑त्रि॒वि॒ष्ट्य॑ध्व॒रं॑यात्य॒ग्नीर॒थीरि॑व । आदे॒वेषु॒प्रयो॒दध॑त् ॥ २ ॥**

परि॑ । त्रि॒ऽवि॒ष्टि । अ॒ध्व॒रम् । याति॑ । अ॒ग्निः । र॒थीःऽइ॑व । आ । दे॒वेषु॑ । प्रयः॑ । दध॑त् ॥ २ ॥

देवेषुद्योतमानेष्विन्द्रादिषु प्रयइत्यन्ननामेदं प्रयःयजमानैर्दत्तंहवीरूपमन्नमादधत् आसमन्ताद्धारयन्नग्निःअङ्गनादिगुणविशिष्टोग्निः त्रिविष्टि त्रिवारंसवनत्रयेपीत्यर्थः परि परितः समन्तादध्वरंयजमानैःकृतंयागंयातिगच्छति परिगमनेदृष्टान्तः—रथीरिव रथवान्पुरुषोयथाशीघ्रंयातितद्वत् तथाचब्राह्मणं—परित्रिविष्ट्यध्वरंयात्यग्नीरथीरिवेत्येषहिरथीरिवाध्वरंपरियातीति ॥ २ ॥

अथतृतीया—

**परि॒वाज॑प॒तिःक॒विर॒ग्निर्ह॒व्यान्य॑क्रमीत् । दध॒द्रत्ना॑नि दा॒शुषे॑ ॥ ३ ॥**

परि॑ । वाज॑ऽपतिः । क॒विः । अ॒ग्निः । ह॒व्यानि॑ । अ॒क्र॒मी॒त् । दध॑त् । रत्ना॑नि । दा॒शुषे॑ ॥ ३ ॥

वाजपतिः वाजानामन्नानांपतिः पालकः परिवाजपतिः कविरित्येषहिवाजानांपतिरिति ब्राह्मणम् । कविःक्रान्तदर्शी मेधावीवा दाशुषेहविर्दत्तवतेयजमानाय रत्नानिरमणीयानिधनानिदधत् प्रयच्छन्नग्निर्हव्यानिहवींषिपर्यक्रमीत् परितःक्रामति व्याप्नोति ॥ ३ ॥

अथचतुर्थी—

**अ॒यंयःसृञ्ज॑येपु॒रोदै॑ववा॒तेस॑मि॒ध्यते॑ । द्यु॒माँअ॑मित्र॒दम्भ॑नः ॥ ४ ॥**

अ॒यम् । यः । सृञ्ज॑ये । पु॒रः । दै॒व॒ऽवा॒ते । स॒म्ऽइ॒ध्यते॑ । द्यु॒ऽमान् । अ॒मि॒त्र॒ऽदम्भ॑नः ॥ ४ ॥

१ ऐ० ब्रा० २. ५. । २ ऐ० ब्रा० २. ५. ।

यःप्रसिद्धोयं प्रत्यक्षेणोपलभ्यमानोग्निः दैववाते देववतस्यपुत्रःसृञ्जयोनामकश्चित्सोमयाजी तस्मिन्निमित्तभूतेसति तद्यागार्थमित्यर्थः सृञ्जयस्ययष्टृत्वंतैत्तिरीयाआमनन्ति—वासिष्ठोहसात्यहव्योदेवभागंपप्रच्छत्सृञ्जयान्बहुयाजिनोयीयजइति' । पुरःपूर्वस्यांदिशि स्थितायामुत्तरवेद्यांसमिध्यते सम्यग्दीप्यते अमित्रदम्भनः शत्रूणांहिंसकःसोग्निः द्युमान्दीप्तिमान्भवतीतिशेषः ॥ ४ ॥

अथपञ्चमी—

**अस्यंघावीरईवंतोग्नेरीशीतमर्त्यः । तिग्मजंम्भस्यमीळ्हुषंः ।५।१५।**

**अस्यं । घ । वीरः । ईवंतः । अग्नेः । ईशीत । मर्त्यः ।**
**तिग्मऽजंम्भस्य । मीळ्हुषंः ॥ ५ ॥ १५ ॥**

वीरः स्तुतौविक्रान्तः मर्त्योमरणधर्मायजमानः तिग्मजम्भस्य तीक्ष्णतेजसः मीळ्हुषः अभिलषितफलानांसेक्तुः ईवतोगमनवतोस्याग्नेःईशीत ईश्वरोभवेत् घेतिपादपूरणः एतेनयजमानआत्माभीष्टफलंकारयितुंसमर्थोभवतीत्यर्थः ॥ ५ ॥

॥ इतितृतीयस्यपञ्चमेपञ्चदशोवर्गः ॥ १५ ॥

अथषष्ठी—

**तमर्वन्तंनसानसिमंरुषंनदिवःशिशुंम् । मर्मृज्यन्तेदिवेदिंवे ॥६॥**

**तम् । अर्वन्तम् । न । सानसिम् । अरुषम् । न । दिवः । शिशुंम् ।**
**मर्मृज्यन्ते । दिवेऽदिंवे ॥ ६ ॥**

यजमानाः अर्वन्तंन शीघ्रगामिनमश्वमिव सानसिं संभजनीयंदिवःशिशुंन द्युलोकस्यपुत्रभूतंसूर्यमिव अरुषम् आरोचमानंतमग्निंदिवेदिवेप्रातिदिनंमर्मृज्यन्ते मृशंपरिचरणंकुर्वन्ति ॥ ६ ॥

अथसप्तमी—

**बोधद्यन्माहरिंभ्यांकुमारःसांहदेव्यः । अच्छानहूतउदंरम् ॥ ७ ॥**

---

१ तै० सं० ६. । ६. २,

बोर्धत् । यत् । मा । हरिंऽभ्याम् । कुमारः । साहऽदेव्यः । अच्छे । न । हूतः । उत् । अरम् । ॥ ७ ॥

साहदेव्यः सहदेवनाम्नोराज्ञःपुत्रःकुमारःसोमकाभिधोराजा हरिभ्याम् अश्वाभ्यामश्वौ दातुंमा मां यद्यदाबोधत् बोधयामास इमौतवाश्वाविति तदाहम् अच्छाभिमुख्येन कुमारेणहूतः सन्नोदरंतावश्वावलब्ध्वा ननिर्गतवानस्मि ॥ ७ ॥

अथाष्टमी–

उतत्यायंजताहरींकुमारात्सांहदेव्यात् । प्रयंतासद्यआदंदे ॥८॥

उत । त्या । यजता । हरी इति । कुमारात् । साहऽदेव्यात् । प्रऽयंता । सद्यः । आ । ददे ॥ ८ ॥

उतापिच साहदेव्यात् सहदेवस्यपुत्रात्कुमारात्सोमकाद्राज्ञः यजता पूजनीयौ प्रयता प्रयतौ त्या त्यौ तौ प्रसिद्धौ हरीअश्वौ सद्यः यस्मिन्दिनेतेनाहूतः तस्मिन्नेवदिने आददे आदत्तवानस्मि मन्त्रद्रष्टाऋषिः बोधदित्यृग्द्वयेनकुमारमश्वेप्सयाभ्युपगम्याश्वावेतस्माल्लब्ध्वाप्रीतोभवदित्यर्थः ॥ ८ ॥

अथनवमी–

एषवांदेवावश्विनाकुमारःसांहदेव्यः । दीर्घायुरस्तुसोमंकः ॥ ९ ॥

एषः । वाम् । देवौ । आश्विना । कुमारः । साहऽदेव्यः । दीर्घऽआयुः । अस्तु । सोमकः ॥ ९ ॥

देवौ द्योतमानौ हेअश्विनाअश्विनौ वां युवांतर्पकःसाहदेव्यः सहदेवस्यपुत्रःकुमारः सोमकाभिधानएषराजादीर्घायुरस्तु शतायुष्कोभवतु एतमुहैवप्रोचतुःपर्वतनारदौसोमकायेत्यादिनासर्वेहैवमहाराजाआसुरित्यनेनब्राह्मणेनसोमकस्यराजत्वंस्पष्टीकृतम् ॥ ९ ॥

अथदशमी–

तंयुवंदेवावश्विनाकुमारंसांहदेव्यम् । दीर्घायुषंकृणोतन ॥१०॥१६॥

१ ऐ० ब्रा० ७. ३४.

तम् । युवम् । देवौ । अश्विना । कुमारम् । साहऽदेव्यम् ।
दीर्घऽआयुषम् । कृणोतन ॥ १० ॥ १६ ॥

हेदेवावश्विना द्योतमानावश्विनौ युवं युवां साहदेव्यं सहदेवस्यपुत्रं कुमारं सोमकाख्यंराजानंदीर्घायुषंशतायुष्कंकृणोतन कुरुतम् अनेनर्च्चेनास्यकुमारस्यदीर्घमायुरश्विनौऋषिरयाचतेत्यर्थः ॥ १० ॥

॥ इतितृतीयस्यपञ्चमेषोडशोवर्गः ॥ १६ ॥

आसत्योयात्वित्येकविंशत्यृचंषष्ठंसूक्तं त्रैष्टुभमैन्द्रंवामदेव्यम् अत्रेयमनुक्रमणिका—आसत्यःसैकेन्द्रमिति । तत्रेन्द्रमित्युक्तत्वादग्न्यधिकारोनिवृत्तइत्यवगम्यते चतुर्विंशेहनिमाध्यन्दिनसवने मैत्रावरुणशस्त्रे इदंद्वितीयमहीनसूक्तम् । तथाचसूत्रितम्—आसत्योयात्वित्यहीनसूक्तं द्वितीयं मैत्रावरुणइति समूळ्हेदशरात्रेनवमेहनिनिष्केवल्यशस्त्रेइदंसूक्तम् । सूत्रितंच—आसत्योयात्वहंभुवंतत्त इन्द्रियमितिनिष्केवल्यमिति ।

तत्रप्रथमा—

आसत्योयातुमघवाँऋजीषीद्रवन्त्वस्यहरयउपनः ।
तस्माइदन्धःसुषुमासुदक्षमिहाभिपित्वंकरतेगृणानः ॥ १ ॥

आ । सत्यः । यातु । मघऽवान् । ऋजीषी । द्रवन्तु । अस्य । हरयः ।
उप । नः । तस्मै । इत् । अन्धः । सुसुम । सुऽदक्षम् । इह ।
अभिऽपित्वम् । करते । गृणानः ॥ १ ॥

ऋजीषी ऋजीषशब्देननिष्पिष्टोविगतसारःसोमोभिधीयते तद्वान् सत्यः सत्यवान् मघवान्धनवानिन्द्रोनोस्माकमुपसमीपेआयात्वागच्छतु किंचास्येन्द्रस्यहरयोश्वाःनोस्माकमुपसमीपे द्रवन्तु आगच्छन्तु वयंयजमानाइहास्मिन्यज्ञेतस्माइन्द्रायसुदक्षंशोभनबलंसारोपेतमित्यर्थः। इदिदंप्रत्यक्षेणोपलभ्यमानमन्धः अन्नरूपंसोमंसुषुमाभिषुतंकुर्याम गृणानोस्माभिःस्तूयमानइन्द्रः अभिपित्वमस्मदभिमतप्राप्तिंकरते करोतु ॥ १ ॥

अथद्वितीया—

अवंस्यशूराध्वंनोनान्तेस्मिन्नोअद्यसवंनेमन्दध्यैं ।
शंसांत्युक्थमुशनेंववेधाश्चिंकितुषेंअसुर्यांयमन्मं ॥ २ ॥

अवं । स्य । शूर । अध्वंनः । न । अन्तें । अस्मिन् । नः ।
अद्य । सवंने । मन्दध्यैं । शंसांति । उक्थम् । उशनांऽइव ।
वेधाः । चिकितुषें । असुर्याय । मन्मं ॥ २ ॥

हेशूर शत्रूणामभिभवसमर्थेन्द्र अद्येदानीम् अस्मिनसवने माध्यन्दिनाख्येमन्दध्यै त्वांमादयितुंनोस्मानवस्यविमुञ्च तत्रदृष्टान्तः—अध्वनोगन्तव्यस्यमार्गस्यान्तेसमीपेन अश्वान्मनुष्याः यथामुञ्चन्तितद्वत् उशनेव काव्यइव वेधाःशंसितायजमानः हेइन्द्र चिकितुषेसर्वंजानते असुर्यायासुराणांहिंसकायतुभ्यंमन्म मननीयमुक्थंशस्त्ररूपंस्तोत्रंशंसाति शंसनंकरोति ॥ २ ॥

अथतृतीया—

कविर्ननिण्यंविदथांनिसाधन्वृषायत्सेकंविपिपानोअर्चांत् ।
दिवइत्थाजींजनत्सप्तकारूनह्नांचिच्चक्रुर्वयुनांगृणन्तंः ॥ ३ ॥

कविः । न । निण्यम् । विदथांनि । साधन् । वृषां । यत् । सेकंम् ।
विऽपिपानः । अर्चांत् । दिवः । इत्था । जीजनत् । सप्त ।
कारून् । अह्नां । चित् । चक्रुः । वयुनां । गृणन्तंः ॥ ३ ॥

कविर्मेधावीनिण्यंन निण्यमित्यन्तर्हितनामैतत् अन्तर्हितंगूढमर्थमिव विदथानि वेदनीयानि कार्यजातानिसाधन्साधयन् वृषाकामानांवर्षितेन्द्रः यद्यदासेकंसेचनीयंसोमंविपिपानः अत्यर्थंपिबन्नर्चात् विशेषेणार्चति सोमपानेश्रद्धांकरोतीत्यर्थः तदानीं दिवोमुष्मात्लोकादित्थासत्यमेवसप्तसप्तसंख्याकान्कारूत्रश्मीन्जीजनत्अजीजनत् जनयति गृणन्तः स्तूयमानारश्मयः वयुना वयुनानि मनुष्याणांज्ञानानि अह्नाचिद्दिवसेनापिचक्रुः कृतवन्तः ॥ ३ ॥

अथचतुर्थी—

स्व१र्यद्वेदिंसुदृशींकमर्कैर्महिज्योतीरुरुचुर्यद्धवस्तोंः ।
अन्धातमांसिदुधिंताविचक्षेनृभ्यंश्चकारनृतंमोअभिष्टौ ॥ ४ ॥

स्वः । यत् । वेदि॑ । सु॒ऽदृशी॑कम् । अ॒र्कैः । महि॑ । ज्योतिः॑ ।
रु॒रु॒चुः । यत् । ह॒ । वस्तोः॑ । अ॒न्धा । तमां॑सि । दु॒धि॑ता ।
वि॒ऽचक्षे॑ । नृ॒ऽभ्यः॑ । च॒का॒र॒ । नृऽत॑मः । अ॒भिष्टौ॑ ॥ ४ ॥

यद्ध यदाखलु महि महत्प्रभूतं ज्योतिस्तेजोरूपंयत्स्वः योद्युलोकः अर्कैः रश्मिभिः सुदृशीकं सुष्ठुदर्शनीयं वेदिअवेदि ज्ञायते तदानींदेवाः ;तस्मिन्स्वर्गेवस्तोर्निवासार्थंरुरुचुर्दीप्तियुक्ताबभूवुः नृतमोनेतृतमःसूर्यः अभिष्टौ अभ्यागमनेनृभ्योनृणांविचक्षेविशेषेणदर्शनाय अन्धा अन्धकाररूपाणि निबिडानितमांसि दुधिता दुधितानिनाशितानि चकार कृतवान् ॥ ४ ॥

अथपञ्चमी—

व॒वक्ष॒इन्द्रो॒अमि॑तमृजी॒ष्यु॑१॒भेआप॑प्रौ॒रोद॑सीमहि॒त्वा ।
अत॑श्चिदस्यमहि॒मावि॑रे॒च्य॒भियो॒विश्वा॒भुव॑नाब॒भूव॑ ॥५।१७॥

व॒वक्षे॑ । इन्द्रः॑ । अमि॑तम् । ऋ॒जी॒षी । उ॒भे इति॑ । आ । प॒प्रौ॒ ।
रोद॑सी॒ इति॑ । म॒हि॒ऽत्वा । अतः॑ । चि॒त् । अ॒स्य॒ । म॒हि॒मा ।
वि । रे॒चि॒ । अ॒भि । यः । विश्वा॑ । भुव॑ना । ब॒भूव॑ ॥ ५ ॥ १७ ॥

ऋजीषी ऋजीषशब्देननिष्पिष्टोविगतसारः सोमोभिधीयते तद्वानिन्द्रः परमेश्वर्ययुक्तः अमितमियत्तारहितं महिमानंववक्षे उवाह किंच महित्वामहत्त्वेन स्वेनमहिम्ना उभेरोदसी उभेद्यावापृथिव्यौ आपप्रौ समन्तादपूरयत् यइन्द्रः विश्वा भुवना सर्वाणिभुवनानि अभिबभूव तिरश्चकार अतश्चिदेभ्योपि विश्वेभ्योभुवनेभ्यः अस्येन्द्रस्यमहिमाविरेचि अतिरिरिचे अधिकोबभूवेत्यर्थः ॥ ५ ॥

॥ इतितृतीयस्यपञ्चमेसप्तदशोवर्गः ॥ १७ ॥

अथषष्ठी—

विश्वा॑निश॒क्रोनर्या॑णिवि॒द्वान॒पोरि॑रेच॒सखि॑भि॒र्निका॑मैः ।
अश्मा॑नंचि॒द्येबि॑भि॒दुर्वचो॑भिर्व्र॒जंगोम॑न्तमु॒शिजो॒विव॑व्रुः ॥६॥

विश्वानि । शक्रः । नर्याणि । विद्वान् । अपः । रिरेच । सखिऽभिः ।
निऽकामैः । अश्मानम् । चित् । ये । बिभिदुः । वचःऽभिः ।
व्रजम् । गोऽमन्तम् । उशिजः । वि । वव्रुरितिवव्रुः ॥ ६ ॥

विश्वानि समस्तानि नर्याणि मनुष्याणांहितानि वृष्ट्यादीनि कार्याणि विद्वान् जानन् शक्रःसमर्थइन्द्रः निकामैर्निकामयमानेभ्यःसखिभिर्मित्रभूतेभ्योमरुद्भ्यः व्यत्ययेनचतुर्थ्यर्थेतृतीया अपोवृष्टिलक्षणान्युदकानिरिरेच रिक्तीचकार इन्द्रःसस्यादिफलसिद्ध्यर्थंमेघस्थान्युदकानिमरुद्भ्योदत्तवानित्यर्थः यद्वा निकामैर्निकामयमानैःसखिभिर्मरुद्भिःसहितःसन् अपोनभसःसकाशात् अपइत्यन्तरिक्षनामैतत् अत्रविभक्तिव्यत्ययः रिरेच व्यतिरिक्तोबभूव ये मरुतः वचोभिर्वाग्रूपैर्ध्वनिभिः अश्मानंचित् पर्वतमपि मेघंवा अश्मेतिमेघनामैतत् बिभिदुरभैत्सुः उशिजःकामयमानास्तेमरुतः गोमन्तंगोभिरुपेतंव्रजमङ्गिरसांसंबन्धिगोस्थानंविवव्रुः आच्छादयामासुः ॥ ६ ॥

अथसप्तमी—

अपोवृत्रंवव्रिवांसंपराहन्प्रावत्तेवज्रंपृथिवीसचेताः ।
प्रार्णांसिसमुद्रियाण्यैनोःपतिर्भवञ्छवसाशूरधृष्णो ॥ ७ ॥

अपः । वृत्रम् । वव्रिऽवांसम् । परा । अहन् । प्र । आवत् । ते ।
वज्रम् । पृथिवी । सऽचेताः । प्र । अर्णांसि । समुद्रियाणि ।
ऐनोः । पतिः । भवन् । शवसा । शूर । धृष्णो इति ॥ ७ ॥

हेइन्द्र प्रावत् राक्षसादिभ्यःप्रकर्षेणलोकान्पालयितृ ते त्वदीयंवज्रम् अपोवृष्टिलक्षणान्युदकानि वव्रिवांसमावरकंवृत्रंमेघंपराहन् प्रकर्षेणप्रेरयातिस्म पृथिवीभूमिःसचेताश्चेतनावतीत्वयासंगताबभूव धृष्णो धर्षणशील हेशूर विक्रान्तेन्द्र त्वंशवसाबलेनपतिर्भवन्लोकानांपालकः सन् समुद्रियाणि समुद्रसंबन्धीनिअर्णांसि नभसिस्थितान्युदकानिप्रैणोः प्रेरकोबभूथ ॥ ७ ॥

अथाष्टमी—

अपोयदद्रिंपुरुहूतदर्दराविर्भुवत्सरमापूर्व्यंते ।
सनोनेतावाजमादर्षिभूरिंगोत्रारुजन्नङ्गिरोभिर्गृणानः ॥ ८ ॥

अपः । यत् । अद्रिम् । पुरुऽहूत । दर्दः । आविः । भुवत् ।
सरमा । पूर्व्यम् । ते । सः । नः । नेता । वाजम् । आ । दर्षि ।
भूरिम् । गोत्रा । रुजन् । अङ्गिरःऽभिः । गृणानः ॥ ८ ॥

हेपुरुहूत बहुभिराहूतेन्द्र यद्यदा अपःप्रति वृष्टिलक्षणान्युदकानिलक्षीकृत्य अद्रिमेघं दर्दः विदारितवानसि सरमादेवशुनी पूर्व्यं पुरा ते तुभ्यं पाणिभिरपहृतंगोधनमाविर्भुवत्‌प्रकाशयामास अङ्गिरोभिर्ऋषिभिः गृणानःस्तूयमानः सन् गोत्रागोत्राण्यभ्राणिरुजन्नोस्मान्भूरिंप्रभूतं वाजमन्नंनेताप्रापयितासत्वमादर्षि आदरंकृतवानसि ॥ ८ ॥

अथनवमी–

अच्छाकविंनृमणोगाअभिष्टौस्वर्षातामघवन्नाधमानम् ।
ऊतिभिस्तमिषणोद्युम्नहूतौनिमायावानब्रह्मादस्युरर्त ॥ ९ ॥

अच्छ । कविम् । नृऽमनः । गाः । अभिष्टौ । स्वःऽसाता ।
मघऽवन् । नाधमानम् । ऊतिऽभिः । तम् । इषणः । द्युम्नऽहूतौ ।
नि । मायाऽवान् । अब्रह्मा । दस्युः । अर्त ॥ ९ ॥

हेमघवन् धनवन्निन्द्र नृमणः नृभिर्मनुष्यैर्मन्यतइतिनृमणस्त्वं कविंमेधाविनं कुत्सम् अच्छगाः अभ्यगाः किंच स्वर्षातास्वर्धनंतस्यसातौदानेनिमित्तेअभिष्टौ कवेरभिगमेसति नाधमानंयुद्धार्थेत्वांयाचमानंकुत्सम् ऊतिभिःशत्रुकृतोपद्रवपरिहाररूपैःरक्षणैः इषणः प्रेरितवानसि मायावान्कपटवानब्रह्मा ऋत्विग्भिःक्रियमाणं सर्वकर्मजातमनुज्ञारूपेणजानन्नृत्विग्विशेषो ब्रह्मशब्देनोच्यते, सनविद्यतेयस्यसोऽब्रह्मा वेदोक्तकर्मस्वास्तिक्यरहितइत्यर्थः दस्युः कुत्सस्यशत्रुः द्युम्नहूतौ द्युम्नंधनंहूतिराह्वानंयस्यांयुधि तस्यांन्यर्त विनष्टोबभूव इन्द्रः कुत्सेनाहूतः सन् तस्यशत्रुंहतवानित्यर्थः ॥ ९ ॥

अथदशमी–

आदस्युघ्नामनसायाह्यस्तंभुवत्तेकुत्सःसख्येनिकामः ।
स्वेयोनौनिषदतंसरूपाविवांचिकित्सदृतचिद्धनारी ॥ १० ॥ १८ ॥

आ । दस्युऽघ्ना । मनसा । याहि । अस्तम् । भुवत् । ते । कुत्सः । सख्ये । निऽकामः । स्वे । योनौ । नि । सदतम् । सऽरूपा । वि । वाम् । चिकित्सत् । ऋतऽचित् । ह । नारी ॥ १० ॥ १८ ॥

अत्रकाचिदाख्यायिकाश्रूयते—कथंरुरुनामकःकश्चिद्राजर्षिस्तस्यपुत्रःकुत्साख्योराजर्षिरासीत् सचकदाचिच्छात्रुभिःसहयुयुत्सुः संग्रामेस्वयमशक्तःसन् शत्रूणांहननार्थमिन्द्रस्याह्वानं चकार- सचेन्द्रःकुत्सस्यगृहमागत्य तस्यशत्रून्जघान तदनन्तरमतिप्रीत्यातयोः सख्यमभवत् सख्यानन्तरमिन्द्रेणनमपिस्वकीयंगृहंप्रापयामास तत्रशचीइन्द्रंप्राप्तुमागतासतीतौसमानरूपौदृष्ट्वा अयमिन्द्र-अयंकुत्सइतिविवेकाभावेनसंशयंचकारेति । अनयाख्यायिकयाप्रतीयमानोर्थोत्रप्रतिपाद्यते—हेइन्द्र दस्युघ्ना दस्यूनांशत्रूणांहन्त्रा मनसायुक्तस्त्वम् अस्तंकुत्सस्यगृहम् अस्तमितिगृहनामैतत् आयाहिआगाः लुङर्थेलोट् कुत्सश्च ते तव संबन्धिनिसख्ये निकामः नितरांकामयमानोभुवदभवत् ततस्तौवांयुवांस्वेयोनौस्वकीयेस्थानेनिषदतं न्यसीदतम् उपविष्टावभूतम् ऋतचित्सत्यदर्शनीनारीइन्द्रस्यभार्याशची सरूपा सरूपौसमानरूपौवांयुवांविचिकित्सत् संशयंचकार ॥ १० ॥

॥ इतितृतीयस्यपंचमेष्टादशोवर्गः ॥ १८ ॥

अथैकादशी—

**यासिकुत्सेनसरथमवस्युस्तोदोवातस्यहर्योरीशानः ।**
**ऋज्रावाजंनगध्यंयुयूषन्कविर्यदहन्पार्याय्भूषात् ॥ ११ ॥**

यासि । कुत्सेन । सऽरथम् । अवस्युः । तोदः । वातस्य । हर्योः । ईशानः । ऋज्रा । वाजम् । न । गध्यम् । युयूषन् । कविः । यत् । अहन् । पार्याय । भूषात् ॥ ११ ॥

हेइन्द्र अवस्युः कुत्सस्यरक्षणमिच्छन् छन्दसिक्यच् परेच्छायामपिदृश्यते तोदस्तोदकः शत्रूणांहिंसकः वातस्य वायुसदृशयोर्वेगवतोर्हर्योरश्वयोरीशान ईश्वरस्त्वंकुत्सेनकुत्साख्येनराजर्षिणासरथंसमानरथंयासि गच्छसि गध्यंग्राह्यंगध्यंगृह्णातेः ऋज्रावाजंनगध्यंयुयूषन्नित्यपिनिगमोभवतीतिनिरुक्तम्[1] । वाजंन अन्नमिव ऋज्रा ऋजुगामिनावश्वौयुयूषन्स्वकीयेरथेयो-

---

१ नि० ५. १५. ।

जयन् कविःप्राज्ञःकुत्सः यद्यस्मिन्नहन्नहनिदिवसेपार्याय पारणाय आपन्निस्तरणायभूयात्प्र-भवते तस्मिन्नेवदिने कुत्सेनसरथंयासीतिपूर्वेणसंबन्धः ॥ ११ ॥

अथद्वादशी–

कुत्सा॑यशुष्ण॑मशुषं॒निब॑र्हीःप्रपि॒त्वेअह्नः॒कुय॑वंस॒हस्रा॑ ।
स॒द्योदस्यू॒न्प्रमृ॒णकु॒त्स्येन॒प्रसूर॑श्च॒क्रंवृ॑हताद॒भीके॑ ॥ १२ ॥

कुत्सा॑य । शुष्ण॑म् । अ॒शुष॑म् । नि । ब॒र्हीः । प्र॒ऽपि॒त्वे । अह्नः॑ ।
कुय॑वम् । स॒हस्रा॑ । स॒द्यः । दस्यू॑न् । प्र । मृ॒ण । कु॒त्स्येन॑ । प्र ।
सूरः॑ । च॒क्रम् । वृ॒हता॒त् । अ॒भीके॑ ॥ १२ ॥

शुष्णंपिप्रुमित्यस्यामृचिप्रतिपादितोर्थः कुत्सायेत्यनेनऋग्द्वयेनस्पष्टीक्रियते हेइन्द्र त्वं कुत्साय कुत्सार्थमशुषं शूषमितिसुखनामैतत् तद्रहितम् अत्रदीर्घाभावः शुष्णंशुष्णनामा-नमसुरंनिबर्हीः न्यबर्हीः अवधीः तथा अह्नः दिवसस्य प्रपित्वेप्रक्रमेपूर्वाह्णेकुयवं कुय-वनामकमसुरंचहतवानासि तथा सत्वं सहस्रासहस्रेणबहुभिःपरिजनैःसह सद्यःयस्मिन्का-लेकुयवमवधीः तस्मिन्कालेएव कुत्स्येन कुत्सइतिवज्रनामैतत् कुत्सएवकुत्स्यं वज्रं तेनदस्यू-न्शत्रून्प्रमृण जहि भूतार्थेलोट् हतवानसि तथा सूरः प्रेरकस्यसूर्यस्यचक्रमायुधम् अभीकेस-मीपेसंग्रामेवा प्रवृहतात् प्रकर्षेणछिन्नवानसि ॥ १२ ॥

अथत्रयोदशी–

त्वंपिप्रुं॑मृग॑यंशूशु॒वांसं॑मृ॒जिश्व॑नेवैदथि॒नाय॑रन्धीः ।
प॒ञ्चा॒शत्कृ॒ष्णानिव॑पःस॒हस्रात्कं॒नपुरो॑जरि॒माविद॑र्दः ॥ १३ ॥

त्वम् । पिप्रु॑म् । मृग॑यम् । शू॒शु॒ऽवांस॑म् । ऋ॒जिश्व॑ने । वै॒द॒थि॒नाय॑ ।
र॒न्धीः । प॒ञ्चा॒शत् । कृ॒ष्णा । नि । व॒पः । स॒हस्रा॑ । अत्क॑म् ।
न । पुरः॑ । ज॒रि॒मा । वि । द॒र्द॒रि॒ति॒दर्दः ॥ १३ ॥

हेइन्द्र त्वं पिप्रुं पिप्रुनामानमसुरं शूशुवांसं प्रवृद्धं मृगयं मृगयनामानमसुरंचहतवानसि किंच सत्वं वैदथिनाय विदथिनःपुत्रायऋजिश्वने ऋजिश्वनाम्नेराज्ञेरन्धीः वशमनयः पञ्चाशत् पञ्चाशत्संख्याकानि सहस्रा सहस्राणि कृष्णा कृष्णवर्णानि रक्षांसिनिवपः न्यवपः अवधीः तथा स त्वं जरिमा जराअर्केन वयोविशेषरूपमिव पुरःशम्बरनगराणि विदर्दः विदारितवानसि ॥ १३ ॥

अथचतुर्दशी–

सूरंउपाकेतन्वं१ंदधानोवियत्तेचेत्यमृतस्यवर्पः ।
मृगोनहस्तीतविषीमुषाणःसिंहोनभीमआयुधानिबिभ्रत् ।१४।

सूरः । उपाके । तन्वम् । दधानः । वि । यत् । ते । चेति । अमृतस्य । वर्पः । मृगः । न । हस्ती । तविषीम् । उषाणः । सिंहः । न । भीमः । आयुधानि । बिभ्रत् ॥ १४ ॥

हेइन्द्र सूरः प्रेरकस्यसूर्यस्यउपाकेसमीपे तन्वंत्वदीयंशरीरं यद्यदादधानोधारकोभवः तदा अमृतस्यमरणराहितस्य ते त्वदीयं वर्पोरूपंविचेति व्यचेति हेइन्द्र ज्ञातृभिः विशेषेणाज्ञायत सूर्यस्यसमीपेसर्वाणिरूपाणिमलिनीभवन्ति नतथेन्द्रस्यरूपं किंतु सूर्यस्यसमीपेइन्द्रस्य रूपंविशेषेणभासमानंबभूवेत्यर्थः अपिच हेइन्द्र हस्तीमृगोन गजविशेषोमृगइव तविषींपरेषां बलमुषाणः दहन् आयुधानिवज्रादीनिशस्त्राणिबिभ्रत् बिभ्राणस्त्वंसिंहोन सिंहइवभीमोभयङ्करोभूः ॥ १४ ॥

अथपञ्चदशी–

इन्द्रंकामावसूयन्तोअग्मन्त्स्वर्मीळ्हेनसवनेचकानाः ।
श्रवस्यवःशशमानासउक्थैरोकोनरण्वासुदृशीवपुष्टिः ।१५।१९॥

इन्द्रम् । कामाः । वसुऽयन्तः । अग्मन् । स्वःऽमीळ्हे । न । सवने । चकानाः । श्रवस्यवः । शशमानासः । उक्थैः । ओकः । न । रण्वा । सुदृशीऽइव । पुष्टिः ॥ १५ ॥ १९ ॥

कामाः राक्षसादिभयनिवारणार्थम् इन्द्रंकामयमानाः वसूयन्तः पश्वादिधनमिच्छन्तः स्तोतारइन्द्रंपरमैश्वर्ययुक्तम् अग्मन् अगमन्गच्छन्ति वर्तमानार्थेछान्दसोलुङ् कीदृशाःस्तोतारः स्वर्मीह्ळेन युद्धेइव सवनेयज्ञेचकानाः याचमानाःश्रवस्यवोन्नकामाः उक्थैःस्तोत्रैःशशमानाः शंसमानाः स्तुवन्तःतदासोयमिन्द्रः ओकोन स्तोतॄणामावासइवभवति रण्वा रमणीयासुदृशी-वपुष्टिःशोभनदर्शनाल्लक्ष्मीरिवभवति ॥ १९ ॥

॥ इतितृतीयस्यपञ्चमेएकोनविंशोवर्गः ॥ १९ ॥

अथषोडशी—

**तमिद्वइन्द्रंसुहवंहुवेमयस्ताचकारनर्यापुरूणि ।**
**योमावतेजरित्रेगध्यंचिन्मक्षूवाजंभरतिस्पार्हराधाः ॥ १६ ॥**

तम् । इत् । वः । इन्द्रम् । सुऽहवम् । हुवेम । यः । ता ।
चकार । नर्या । पुरूणि । यः । माऽवते । जरित्रे । गध्यम् ।
चित् । मक्षु । वाजम् । भरति । स्पार्हऽराधाः ॥ १६ ॥

यइन्द्रः नर्यानर्याणि मनुष्याहितानिपुरूणिबहूनि ता तानि प्रसिद्धानिकर्माणिचकार अकरोत् किञ्च स्पार्हराधाः स्पृहणीयधनोयइन्द्रः मावते मत्सदृशायजरित्रेस्तोत्रेगध्यंचित् ग्रा-ह्यंसंयोजनीयमपि वाजमन्नंमक्षुशीघ्रंभरति आहरति वयंस्तोतारः हेयजमानाः वोयुष्मभ्यं तमि-त्तमेवेन्द्रं सुहवं शोभनमाह्वानंयथाभवतितथाहुवेम आह्वयामः ॥ १६ ॥

अथसप्तदशी—

**तिग्मायदन्तरशनिःपतातिकस्मिञ्चिच्छूरमुहुकेजनानाम् ।**
**घोरायदर्यसमृतिर्भवात्यधस्मानस्तन्वोबोधिगोपाः ॥ १७ ॥**

तिग्मा । यत् । अन्तः । अशनिः । पताति । कस्मिन् । चित् ।
शूर । मुहुके । जनानाम् । घोरा । यत् । अर्य । सम्ऽऋतिः ।
भवाति । अध । स्म । नः । तन्वः । बोधि । गोपाः ॥ १७ ॥

हेशूर विक्रान्तेन्द्र यद्यदा कस्मिंश्चित्सर्वस्मिन्नपि जनानां मनुष्याणां मुहुके मोहके युद्धे अन्तः अस्माकंमध्ये तिग्मा तीक्ष्णा अशनिः पताति पतेत् हेअर्य स्वामिन्निन्द्र यद्यदा-

स्माकंशत्रुभिःसहघोरा भीमरूपा समृतिर्युद्धंभवाति भवेत् अध तदानींनोस्मदीयस्यतन्वःशरीरस्यगोपाःरक्षकःबोधिस्म अबोधि शत्रुभ्यःसकाशादस्मान्रक्षकत्वेनबुद्धवानसिखलु ॥ १७ ॥

अथाष्टादशी—

भुवोऽविताव़ामदेवस्यधीनांभुवःसखावृकोवाजसातौ ।
त्वामनुप्रमतिमाजगन्मोरुशंसोजरित्रेविश्वधस्याः ॥ १८ ॥

भुवः । अविता । वामऽदेवस्य । धीनाम् । भुवः । सखा ।
अवृकः । वाजऽसातौ । त्वाम् । अनु । प्रऽमतिम् । आ । जगन्म ।
उरुऽशंसः । जरित्रे । विश्वध । स्याः ॥ १८ ॥

हेइन्द्र त्वंवामदेवस्यवामदेवाख्यस्यमन्त्रद्रष्टुः ममसंबन्धिनीनांधीनांकर्मणामवितारक्षिता भुवः भव अवृकोहिंसारहितस्त्वं वाजसातौ युद्धेसखाममसुहृद्भुवःभव हेइन्द्र वयं प्रमतिंप्रकृष्टज्ञानंत्वामनुलक्ष्मीकृत्य आजगन्म आगच्छाम सत्वंविश्वध सर्वदाजरित्रेस्तोत्रे उरुशंसः महताशंसनेनयुक्तःस्याः भवेः ॥ १८ ॥

अथैकोनविंशी—

एभिर्नृभिरिन्द्रत्वायुभिष्ट्वामघवद्भिर्मघवन्विश्वआजौ ।
द्यावोनद्युम्नैरभिसन्तोअर्यःक्षपोमदेमशरदश्चपूर्वीः ॥ १९ ॥

एभिः । नृऽभिः । इन्द्र । त्वायुऽभिः । त्वा । मघवत्ऽभिः ।
मघऽवन् । विश्वे । आजौ । द्यावः । न । द्युम्नैः । अभि । सन्तः ।
अर्यः । क्षपः । मदेम । शरदः । च । पूर्वीः ॥ १९ ॥

हेमघवन्धनवन्निन्द्र विश्वे विश्वस्मिन्नाजौसंग्रामे त्वायुभिः शत्रुजयार्थंत्वां कामयमानैर्मघवद्भिस्त्वदर्थंदीयमानहविर्लक्षणैर्धनैरुपेतैरोभिः प्रत्यक्षेणोपलभ्यमानैः नृभिः पुत्रपौत्राद्यैःपरिजनैःसहितावयंयजमानाः द्युम्नैर्धनैः द्यावोन द्योतमानाःप्रकाशमानाधनिनोयथा तथा अर्यः अरीन् शत्रून्अभिसन्तोभिभवन्तः क्षपः सर्वारात्रीः पूर्वीर्बह्वीः शरदश्च संवत्सरांश्च मदेम स्तवाम यजमानाःसर्वेषुकालेषुस्तोत्रैरिन्द्रंहर्षयन्तीत्यर्थः ॥ १९ ॥

अथविंशी—

एवेदिन्द्रा॑य वृष॒भाय॒ वृष्णे॒ ब्रह्मा॑कर्म॒ भृग॑वो॒ न रथ॑म् ।
नू चि॒द्यथा॑ नः स॒ख्या वि॒योष॒दस॑न्न उ॒ग्रो॑ऽवि॒ता त॑नू॒पाः ॥ २० ॥

एव । इत् । इन्द्रा॑य । वृ॒ष॒भाय॑ । वृष्णे॑ । ब्रह्म॑ । अ॒क॒र्म॒ । भृग॑वः ।
न । रथ॑म् । नु । चि॒त् । यथा॑ । नः॒ । स॒ख्या । वि॒ऽयोष॑त् ।
अस॑त् । नः॒ । उ॒ग्रः । अ॒वि॒ता । त॒नू॒ऽपाः ॥ २० ॥

यथाइन्द्रः नोस्मदीयानिसख्यासख्यानिकर्माणिनूचित् वियोषत् नपृथक्कुर्यात् उग्रःतेजस्वी तनूपाः शरीराणांपालकइन्द्रः यथा नोस्मानविताराक्षितासत्स्यात् तथा वयंयजमानाएवेत् एवमेवोक्तप्रकारेण इन्द्रायवृषभाय कामानांवर्षित्रेवृष्णेनित्यतरुणायब्रह्मस्तोत्रमकर्म अकुर्म तत्रदृष्टान्तः—भृगवोदीप्ताः तक्षाणः रथंन रथमिव तद्वत् यजमानेभ्योयथाइन्द्रोभीप्सितफलप्रदोभवतितथेन्द्रंयजमानाःस्तुवन्तीत्यर्थः ॥ २० ॥

अथैकविंशी—

नू ष्टु॒त इ॑न्द्र॒ नू गृ॑णा॒न इषं॑ जरि॒त्रे न॒द्यो॒३॑ न पी॑पेः ।
अका॑रि ते हरिवो॒ ब्रह्म॒ नव्यं॑ धि॒या स्या॑म र॒थ्यः॑ सदा॒साः ॥ २१ ॥ २० ॥

नु । स्तु॒तः । इ॒न्द्र॒ । नु । गृ॒णा॒नः । इष॑म् । ज॒रि॒त्रे । न॒द्यः॑ ।
न । पी॒पे॒रिति॑ पीपेः । अका॑रि । ते॒ । ह॒रि॒ऽवः॒ । ब्रह्म॑ । नव्य॑म् ।
धि॒या । स्या॒म॒ । र॒थ्यः॑ । स॒दा॒ऽसाः ॥ २१ ॥ २० ॥

हेइन्द्र नुक्षिप्रं स्तुतः पूर्वैर्ऋषिभिःसंस्तुतः नु क्षिप्रं गृणानः अस्माभिःस्तूयमानश्च त्वमिषमन्नंजरित्रेस्तोत्रेमह्यंनद्योन अद्भिर्नदीरिव पीपेः प्यायय प्रवृद्धंकुरु हेइन्द्र हरिवः हरिवन् हरिसंज्ञकाश्वोपेतेन्द्र तेतुभ्यं नव्यंनवतरंब्रह्मस्तोत्रमकारि अस्माभिःक्रियते रथ्यः रथवन्तोवयंधियाप्रज्ञारूपयास्तुत्या सदासाः त्वांसर्वदाभजमानाः त्वदर्थंहवीरूपस्यान्नस्यदातारोवास्यामभूयास्म ॥ २१ ॥

॥ इतितृतीयस्यपञ्चमेविंशोवर्गः ॥ २० ॥

त्वंमहाँइन्द्रतुभ्यमित्येकविंशत्यृचंसप्तमंसूक्तम् अत्रेयमनुक्रमणिका—त्वंमहाँअसिन्नयामेकपदेति । असिन्नयांयजमानोनहोतेत्येकपदाविराट् शिष्टाविंशतिस्त्रिष्टुभः इन्द्रोदेवता समूह्ळे दशरात्रेष्टमेहनिनिष्केवल्येइदंसूक्तंविनियुक्तं तथासूत्रितं—त्वंमहाँइन्द्रतुभ्यमितिनिष्केवल्यमिति । इन्द्रस्यवृत्रघ्नःत्वंमहानितिपशुपुरोडाशस्यानुवाक्यासूत्रितंच—त्वंमहाँइन्द्रतुभ्यंहक्षाःसत्राहणमिति ।

तत्रप्रथमा—

त्वमहाँइन्द्रतुभ्यंहक्षाअनुक्षत्रंमंहनामन्यतद्यौः ।
त्वंवृत्रंशवसाजघन्वान्त्सृजःसिन्धूँरहिनाजग्रसानान् ॥ १ ॥

त्वम् । महान् । इन्द्र । तुभ्यम् । ह । क्षाः । अनु । क्षत्रम् । मंहना । मन्यत । द्यौः । त्वम् । वृत्रम् । शवसा । जघन्वान् । सृजः । सिन्धून् । अहिना । जग्रसानान् ॥ १ ॥

हेइन्द्र त्वं महान्प्रभूतोभवसि क्षाः पृथिवी क्षाइतिपृथवीनामैतत् मंहनामहत्त्वेनयुक्तासती तुभ्यंह त्वदर्थमेव क्षत्रंत्वदीयंबलम् अनुमन्यत अन्वमन्यत अनुमतीचकार द्यौश्चत्वदर्थंबलमन्वमन्यत हेइन्द्र त्वंशवसात्वदीयेनबलेन वृत्रंलोकानामावरकंवृत्रनामकमसुरंजघन्वान् हतवान् किंच अहिनावृत्रेणजग्रसानान् जग्रहाणान्ग्रस्तान् ग्रसतेर्लिटःकानजादेशः सिन्धूनसृजः असृजः सृष्टवानसि ॥ १ ॥

अथद्वितीया—

तवत्विषोजनिमन्रेजतद्यौरेजद्भूमिर्भियसास्वस्यमन्योः ।
ऋघायन्तसुभ्वःपर्वतासआर्दन्धन्वानिसरयन्तआपः ॥ २ ॥

तव । त्विषः । जनिमन् । रेजत । द्यौः । रेजत् । भूमिः । भियसा । स्वस्य । मन्योः । ऋघायन्त । सुऽभ्वः । पर्वतासः । आर्दन् । धन्वानि । सरयन्त । आपः ॥ २ ॥

हेइन्द्र त्विषोदीप्यमानस्यतव त्वदीयेजनिमन् जन्मनिसति द्यौरन्तरिक्षं स्वस्यत्वदीयात्मन्योःकोपात् पञ्चम्यर्थेषष्ठी भियसा जातभयेनरेजत् अरेजत् अकम्पत भूमिश्चरेजत् कम्पमानाबभूव सुभ्वोमहान्तःपर्वतासः पर्वताः मेघाः ऋघायन्त सस्यादीनांवृष्टिप्रदानार्थंनियामकेनत्वया

बध्यन्त तथा मेघाआर्दन् प्राणिनांपिपासारूपांपीडामहिंसन् तथा मेघाः धन्वान्युदकरहितान्देशान् आपः अपः सरयन्तेगमयन्ति ॥ २ ॥

अथतृतीया—

भिनद्गिरिंशवसावज्रमिष्णन्नाविष्कृण्वानःसहसानओजः ।
वधीद्वृत्रंवज्रेणमन्दसानःसरन्नापोजवसाहतवृष्णीः ॥ ३ ॥

भिनत् । गिरिम् । शवसा । वज्रम् । इष्णन् । आविःऽकृण्वानः ।
सहसानः । ओजः । वधीत् । वृत्रम् । वज्रेण । मन्दसानः ।
सरन् । आपः । जवसा । हतऽवृष्णीः ॥ ३ ॥

सहसानः शत्रूणामभिभवन् ओजस्तेजः आविष्कृण्वानः आविष्कुर्वन्निन्द्रः वज्रमिष्णन्वज्रंप्रेरयन् शवसाबलेन गिरिंपर्वतजातंभिनत् अभिनत् बिभेद किंच मन्दसानः सोमेनमोदमानइन्द्रः वज्रेण वृत्रं वृत्रनामानमसुरंवधीदवधीत् जघान ततःआपः वृत्रेणावृतान्युदकानिहतवृष्णीः हतोवृषावृत्रोयासांताःहतवृष्ण्यःताः वृत्रवधानन्तरंनिवारणरहिताःसत्यः जवसावेगेनसरन् असरन्नगच्छन् ॥ ३ ॥

अथचतुर्थी—

सुवीरस्तेजनितामन्यतद्यौरिन्द्रस्यकर्तास्वपस्तमोभूत् ।
यईंजजानस्वर्यंसुवज्रमनपच्युतंसदसोनभूम ॥ ४ ॥

सुऽवीरः । ते । जनिता । मन्यत । द्यौः । इन्द्रस्य । कर्ता ।
स्वपःऽतमः । भूत् । यः । ईम् । जजान । स्वर्यम् । सुऽवज्रम् ।
अनपऽच्युतम् । सदसः । न । भूम ॥ ४ ॥

हेइन्द्र यःप्रजापतिः स्वर्यमृत्विगादिभिःस्तुत्यं सुवज्रं शोभनवज्रोपेतं सदसःस्वकीयात्स्वर्गाख्यात्स्थानादनपच्युतं विनाशरहितंच नेतिसमुच्चयार्थे भूम भूम्ना महत्त्वेनयुक्तमईमेनंत्वांजजान अजीजनत् जनजननेइतिधातुः द्यौःद्योतमानःतेतवजनिता जनयिता सप्रजापतिः सुवीरःशोभनपुत्रवानअहमस्मीतिमन्यतअमन्यत किंचइन्द्रस्यकर्ताइन्द्रस्यजनयिताप्रजापतिः स्वपस्तमः अत्यन्तंशोभनकर्माभूत् ॥ ४ ॥

अथपञ्चमी—

यएकइच्च्यावयतिप्रभूमाराजाकृष्टीनांपुरुहूतइन्द्रः ।
सत्यमेनमनुविश्वेमदन्तिरातिंदेवस्यगृणतोमघोनः ॥५॥२१॥

यः । एकः । इत् । च्यवयति । प्र । भूम । राजा । कृष्टीनाम् ।
पुरुऽहूतः । इन्द्रः । सत्यम् । एनम् । अनु । विश्वे । मदन्ति ।
रातिम् । देवस्य । गृणतः । मघोनः ॥ ५ ॥ २१ ॥

कृष्टीनांसर्वासांप्रजानांराजाप्रभुः पुरुहूतः बहुभिराहूतः एकइत् देवानांमध्येमुख्यएष यइन्द्रः भूम भूतंनिष्पन्नंशत्रुभ्योभयं प्रच्यावयति प्रकर्षेणनाशयति विश्वेसर्वेयजमानाःम-घोनः मघवतः हविर्लक्षणधनवतइत्यर्थः देवस्येन्द्रसमाश्रयात् द्योतमानस्यगृणतः स्तुवतः रातिं धनमेनमिन्द्रमनुलक्ष्य सत्यमेवमदन्ति स्तुवन्ति ॥ ५ ॥

॥ इतितृतीयस्यपञ्चमेएकविंशोवर्गः ॥ २१ ॥

सत्रासोमाअभवन्नस्यविश्वेसत्रामदासोबृहतोमदिष्ठाः ।
सत्राभवोवसुपतिर्वसूनांदत्रेविश्वाअधिथाइन्द्रकृष्टीः ॥ ६ ॥

सत्रा । सोमाः । अभवन् । अस्य । विश्वे । सत्रा । मदासः ।
बृहतः । मदिष्ठाः । सत्रा । अभवः । वसुऽपतिः । वसूनाम् ।
दत्रे । विश्वाः । अधिथाः । इन्द्र । कृष्टीः ॥ ६ ॥

विश्वे सर्वे सोमाः अस्येन्द्रस्यसत्रा सत्रेतिसत्यनामैतत् सत्यमेवभूताअभवन् किंच मदासोमदाः मदकराः सोमाः बृहतोमहतोस्येन्द्रस्य मदिष्ठाः मादयितृतमाः सत्रासत्यमेवाभवन् हेइन्द्र त्वंवसुपतिर्धनपतिः नकेवलंधनपतिः किंतुवसूनांसर्वेषांपश्वादीनांधनानांपतिः सत्रास-त्यमेवाभवः भवसि हेइन्द्र त्वंदत्रेधनेनिमित्तभूतेसति विश्वाःसर्वाःकृष्टीःस्तोत्रीःप्रजाः अधिथाः धारयसि ॥ ६ ॥

अथसप्तमी—

त्वमधप्रथमंजायमानोमेविश्वाअधिथाइन्द्रकृष्टीः ।
त्वंप्रतिप्रवतआशयानमहिंवज्रेणमघवन्विवृश्चः ॥ ७ ॥

त्वम् । अध॑ । प्र॒थ॒मम् । जाय॑मानः । अमे॑ । विश्वा॑ः ।
अ॒धि॒थाः । इ॒न्द्र॒ । कृ॒ष्टीः । त्वम् । प्रति॑ । प्र॒ऽव॒तः॑ ।
आ॒ऽशया॑नम् । अहि॑म् । वज्रे॑ण । म॒घ॒ऽव॒न् । वि । वृ॒श्चः॑ ॥ ७ ॥

अध अपिच प्रथममेवजायमानस्त्वम् अमे वृत्रानिमित्तेभयेसति विश्वाःसर्वाःकृष्टीः प्रजाः अधिथाः रक्षकत्वेनधारयासि हेमघवन्धनवानिन्द्र त्वं प्रतिप्रवतः प्रतिप्रवणान् उदकवतोदेशान्लक्षीकृत्य आशयानम् अपांनिरोधकमहिंवृत्रनामानमसुरंवज्रेण विवृश्चः छिन्नवानसि ॥ ७ ॥

इन्द्रस्यवृत्रघ्नःपशौसत्राहणमितिहविषोनुवाक्या सूत्रितंच—सत्राहणंदाधृषिंतुम्रमिन्द्रंसहृदानुंपुरुहूतक्षियन्तमिति ।

सैषाष्टमी—

स॒त्रा॒ह॒णंदाधृ॑षिं॒तुम्र॒मिन्द्रं॑म॒हाम॑पा॒रंवृ॑ष॒भंसु॒वज्र॑म् ।
ह॒न्ता॒योवृ॒त्रंसनि॑तो॒तवाजं॒दाता॑म॒घानि॑म॒घवा॑सु॒राधा॑ः ॥ ८ ॥

स॒त्रा॒ऽहन॑म् । दधृ॑षिम् । तुम्र॑म् । इन्द्र॑म् । म॒हाम् । अ॒पा॒रम् ।
वृ॒ष॒भम् । सु॒ऽवज्र॑म् । हन्ता॑ । यः । वृ॒त्रम् । सनि॑ता । उ॒त ।
वाज॑म् । दाता॑ । म॒घानि॑ । म॒घऽवा॑ । सु॒ऽराधा॑ः ॥ ८ ॥

सत्राहणं बहूनांशत्रूणांहन्तारं दाधृषिमत्यन्तंधर्षकं तुम्रं तुमिःप्रेरणकर्मा शत्रूणांप्रेरकं महां महान्तम् अपारमपरिमाणंविनाशरहितमित्यर्थः वृषभं कामानांवर्षितारं सुवज्रं शोभनेन वज्रेणोपेतम् इन्द्रं वयं स्तोतारःस्तुमेतिशेषः यइन्द्रः वृत्रं वृत्रनामकमसुरं हन्ता हिंसिताभवति उतापिच यइन्द्रः वाजमन्नंसनिता दाताभवति सुराधाः शोभनधनयुक्तः योमघवेन्द्रः मघानि धनानिदाताभवति तमिन्द्रंस्तुमेतिपूर्वेणान्वयः अत्रसर्वत्रतृन्नन्तत्वान्नलोकाव्ययेतिषष्ठीप्रतिषेधे सतिद्वितीयैवभवति ॥ ८ ॥

अथनवमी—

अ॒यंवृ॒तश्चा॑तयतेस॒मीची॒र्यआ॒जिषु॑म॒घवा॑शृ॒ण्वएकः॑ ।
अ॒यंवाजं॑भरति॒यंस॒नोत्य॒स्यप्रि॒यास॑ः॒सख्ये॑स्याम ॥ ९ ॥

अयम् । वृतः । चातयते । सम्ऽईचीः । यः । आजिषु ।
मघऽवा । शृण्वे । एकः । अयम् । वाजम् । भरति । यम् ।
सनोति । अस्य । प्रियासः । सख्ये । स्याम ॥ ९ ॥

मघवाधनवान्यइन्द्रः आजिषु संग्रामेषु एकोमुख्यएवशृण्वे श्रूयते अयमिन्द्रः समीचीः संगताः वृतः वृण्वन्तिआच्छादयन्तिलोकानितिवृतःशत्रुसेनाः ताश्चातयते नाशयति अयमिन्द्रः यंवाजंयदन्नंसनोतियजमानायददाति तंवाजंभरति यजमानस्यतदन्नंदातुंबिभर्ति स्तोतारोवयम् अस्य एवम्भूतस्येन्द्रस्य सख्ये सखित्वे प्रियासः प्रियाःस्याम भवेम ॥ ९ ॥

अथदशमी—

अयंशृण्वेअधजयन्नुतघ्नन्नयमुतप्रकृणुतेयुधागाः ।
यदासत्यंकृणुतेमन्युमिन्द्रोविश्वंदृळ्हंभयतएजदस्मात् ॥१०॥२२॥

अयम् । शृण्वे । अध । जयन् । उत । घ्नन् । अयम् । उत ।
प्र । कृणुते । युधा । गाः । यदा । सत्यम् । कृणुते । मन्युम् ।
इन्द्रः । विश्वम् । दृळ्हम् । भयते । एजत् । अस्मात् ॥ १० ॥ २२ ॥

अधापिच अयमिन्द्रोजयन्शत्रून्विजयन्शृण्वेश्रूयते सर्वत्रप्रख्यातोभवति उतापिच घ्नन्शत्रून्हिंसन्सर्वत्रश्रूयते उतापिच अयमिन्द्रः युधायुद्धेनगाःपशून्प्रकृणुते शत्रुसकाशादाहरति किंच इन्द्रोयदामन्युंकोपंसत्यमेवकृणुते द्विषदर्थंकरोति तदानींदृढंस्थिरं स्थावररूपम् एजत्कम्पमानजङ्गमरूपंच विश्वंसमस्तंजगदस्मादिन्द्राद्भयतेबिभेति ॥ १० ॥

॥ इतितृतीयस्यपञ्चमेद्वाविंशोवर्गः ॥ २२ ॥

अथैकादशी—

समिन्द्रोगाअजयत्संहिरण्यासमश्वियामघवायोहपूर्वीः ।
एभिर्नृभिर्नृतमोअस्यशाकैरायोविभक्तासंभरश्चवस्वः ॥११॥

सम् । इन्द्रः । गाः । अजयत् । सम् । हिरण्या । सम् । अश्विया ।
मघऽवा । यः । ह । पूर्वीः । एभिः । नृऽभिः । नृऽतमः । अस्य ।
शाकैः । रायः । विऽभक्ता । सम्ऽभरः । च । वस्वः ॥ ११ ॥

योह यःखलु मघवाधनवानिन्द्रः गाअसुराणांसमजयत् सम्यग्जितवान्भवति किंच हिरण्या हिरण्यानिहितरमणीयानिशत्रुसंबन्धीनिधनानिसमजयत् तथा अश्विया अश्वियानि शत्रुसंबन्धिनोश्वसमूहान्सम्यग्जयातिस्म तथा पूर्वीर्बह्वीःशत्रुसेनाःसमजयत् इन्द्रःसर्वान् शत्रून् जित्वासकलमपिपश्वादिधनमपहृतवानित्यर्थः शाकैःसामर्थ्यैः नृतमोनेतृतमः पश्वादीनामति-शयेननिर्वाहकःसइन्द्रः एभिर्नृभिर्नेतृभिःस्तोतृभिःस्तुतःसन् अस्यराय: पश्वादिधनरूप-स्यविभक्ता स्तोतृभ्योविभागस्यकर्ता दाताभवतीत्यर्थः किंचवस्वोवसुनोधनस्यसंभरश्चसंभर्ता धारकश्चभवति ॥ ११ ॥

अथद्वादशी–

कियत्स्विदिन्द्रोअध्येतिमातुःकियत्पितुर्जनितुर्योजजान ।
योअस्यशुष्मंमुहुकैरियर्तिवातोनजूतःस्तनयद्भिरभ्रैः ॥ १२ ॥

कियत् । स्वित् । इन्द्रः । अधि । एति । मातुः । कियत् ।
पितुः । जनितुः । यः । जजान । यः । अस्य । शुष्मम् । मुहुकैः ।
इयर्ति । वातः । न । जूतः । स्तनयत्ऽभिः । अभ्रैः ॥ १२ ॥

यइन्द्रः मातुर्जनन्याःसकाशात्कियात्स्वित् यावद्बलमध्येति अधिगच्छति पितुःसका-शात्कियद्यावद्बलमधिगच्छाति यइन्द्रः जनितुर्जनयितुर्यस्मात्प्रजापतेःसकाशात् इदंदृश्यमानं जगज्जजान अजनयत् यइन्द्रस्तस्मात्प्रजापतेःसकाशादस्यजगतःशुष्मंयावद्बलंमुहुकैःमुहुर्मुहु-रियर्तिप्रेरयाति स्तनयद्भिर्गर्जद्भिरभ्रैर्मेघैर्जूतःप्रेरितः वातोन वायुरिव तथासइन्द्रःस्तोतृभिर्जूतः प्रेरितःहविष्प्रदानार्थमाहूतोभवति ॥ १२ ॥

अथत्रयोदशी–

क्षियन्तंत्वमक्षियन्तंकृणोतीयर्तिरेणुंमघवासमोहम् ।
विभञ्जनुरशनिमाँइवद्यौरुतस्तोतारंमघवावसौधात् ॥ १३ ॥

क्षियन्तम् । त्वम् । अक्षियन्तम् । कृणोति इयर्ति । रेणुम् ।
मघऽवा । सम्ऽओहम् । विऽभञ्जनुः । अशनिमान्ऽइव ।
द्यौः । उत । स्तोतारम् । मघऽवा । वसौ । धात् ॥ १३ ॥

मघवाधनवानिन्द्रः क्षियन्तंधनराहित्येनक्षीयमाणंत्वमेकंजनम् अक्षियन्तं धनेनाक्षीयमाणंकृणोति करोति अकिञ्चनः कश्चित्पुरुषः इन्द्रंस्तुत्वाधनसमृद्धोभवदित्यर्थः अशनिमानशनिनायुक्तःद्यौरिवान्तरिक्षमिव विभञ्जनुः शत्रूणांविशेषेणभञ्जकोमघवेन्द्रः समोहंसमूढंरेणुंपापम् इयर्ति स्तोतुःसकाशात्प्रेरयति उतापिच मघवाधनवानिन्द्रःस्तोतारंवसौधनेधात् अधाभिदधाति ॥ १३ ॥

अथचतुर्दशी—

अयंचक्रमिषणत्सूर्यस्यन्येतंशंरीरमत्ससृमाणम् ।
आकृष्णईंजुहुराणोजिघर्तित्वचोबुध्नेरजसोअस्ययोनौ ॥१४॥

अयम् । चक्रम् । इषणत् । सूर्यस्य । नि । एतंशम् । रीरमत् ।
ससृमाणम् । आ । कृष्णः । ईम् । जुहुराणः । जिघर्ति ।
त्वचः । बुध्ने । रजसः । अस्य । योनौ ॥ १४ ॥

प्रैतशंसूर्येपस्पृधानमित्यर्धर्चेपूर्वकाचिदाख्यायिकासूचिता अत्राप्ययंचक्रमितिपूर्वार्धेसासूच्यते स्वश्वनामाकश्चिद्राजा सच पुत्रार्थंसूर्यमुपास्ते सचसूर्यःपुत्ररूपेणस्वयमेवतत्रोत्पन्नःसन् एतशाख्येनमहर्षिणासार्धंयुद्धंचकार तदानींसऋषिःयुद्धेजयार्थमिन्द्रंतुष्टाव सइन्द्रःतेनस्तूयमानः सन् स्वश्वपुत्रस्यसूर्यस्यसंबन्धिनःसंग्रामादेनमपालयदिति । अयमिन्द्रःसूर्यस्यचक्रमायुधमिषणत् प्रैरयत् ससृमाणं युद्धार्थंसरन्तंगच्छन्तम् एतशनामानमृषिंनिरीरमत् न्यरीरमत् निवारितवान् जुहुराणः कुटिलंयथाभवतितथासंचरन् कृष्णः कृष्णवर्णोमेघः त्वचस्तेजसोबुध्ने मूलभूतेरजसोस्योदकस्ययोनौस्थानेन्तरिक्षेस्थितम् ईमेनमिन्द्रम् आजिघर्ति आसिञ्चति शत्रूणांप्रेरिताच्चक्रादेः त्रस्तंरक्षेत्यर्थः ॥ १४ ॥

अथपञ्चदशी—

असिक्न्यांयजमानोनहोता ॥ १५ ॥ २३ ॥

असिक्न्याम् । यजमानः । न । होता ॥ १५ ॥ २३ ॥

एकपदेयमृक् पूर्वयासहदृष्टान्तत्वेनसंबध्यते असिक्न्यांरात्रौयजमानोन यजमानइव होतारमाह्वातारमग्निं द्वितीयार्थेप्रथमा सोमेनासिञ्चति तद्वन्मेघइन्द्रमासिञ्चतीत्यर्थः ॥ १५ ॥

॥ इतितृतीयस्यपञ्चमेत्रयोविंशोवर्गः ॥ २३ ॥

अथषोडशी—

**गव्यन्तइन्द्रंसख्यायविप्राअश्वायन्तोवृषणंवाजयन्तः ।**
**जनीयन्तोजनिदामक्षितोतिमाच्यावयामोवतेनकोशम् ।१६।**

गव्यन्तः । इन्द्रम् । सख्याय । विप्राः । अश्वऽयन्तः । वृषणम् ।
वाजयन्तः । जनिऽयन्तः । जनिऽदाम् । अक्षितऽऊतिम् ।
आ । च्यवयामः । अवते । न । कोशम् ॥ १६ ॥

गव्यन्तः गाइच्छन्तः अश्वायन्तः अश्वानिच्छन्तः वाजयन्तः वाजमन्नमिच्छन्तः जनीयन्तः जायाश्चेच्छन्तः विप्रामेधाविनःस्तोतारोवयंसख्यायेन्द्रसंबन्धिनेसखित्वाय वृषणं कामानां वर्षितारं जनिदां जायाप्रदम् अक्षितोतिमक्षीणरक्षंसर्वदारक्षाकरमित्यर्थः एवम्भूतमिन्द्रमाच्यावयामः आगमयामः तत्रदृष्टान्तः—अवतेकूपे अवतइतिकूपनाम अवतःअवटःक्रिविरितिकूपनामसुपाठात् कोशंन जलोद्धरणपात्रमिव पुरुषाः जलोद्धरणपात्रंजलेनपूरयितुं कूपेयथाआच्यावयन्ति तथा वयमाच्यावयामइत्यर्थः ॥ १६ ॥

अथसप्तदशी—

**त्रातानोबोधिददृशानआपिरभिख्यातामर्डितासोम्यानाम् ।**
**सखापितापितृतमःपितृणांकर्तेमुलोकमुशतेवयोधाः ॥ १७ ॥**

त्राता । नः । बोधि । ददृशानः । आपिः । अभिऽख्याता ।
मर्डिता । सोम्यानाम् । सखा । पिता । पितृऽतमः । पितॄणाम् ।
कर्ता । ईम् । ऊँ इति । लोकम् । उशते । वयःऽधाः ॥ १७ ॥

हेइन्द्र आपिः आप्तः ददृशानः सर्वपालकत्वेनपश्यंस्त्वं नोस्माकंत्रातारक्षकोबोधि भव किंच अभिख्याता अभिद्रष्टा मर्डिता सुखयिता सोम्यानांसोमार्हाणांयजमानादीनांसखा प्रजापतिनासमानख्यातिः पिता पालकः केवलं पालकोन किंतु पितॄणांपालकानांमध्येपितृतमः अतिशयेनपालकःकर्ता ईमु पितॄणांस्रष्टाचत्वं लोकंस्वर्गादिलोकम् उशतेकामयमानायस्तोत्रे वयोधाः वयइत्यन्ननामैतत् अन्नप्रदोभव ॥ १७ ॥

अथाष्टादशी-

सखीयतामविता बोधि सखा गृणान इन्द्र स्तुवते वयो धाः ।
वयं ह्या ते चकृमा सबाध आभिः शमीभिर्महयन्त इन्द्र ॥ १८ ॥

सखिऽयताम् । अविता । बोधि । सखा । गृणानः । इन्द्र ।
स्तुवते । वयः । धाः । वयम् । हि । आ । ते । चकृम ।
सऽबाधः । आभिः । शमीभिः । महयन्तः । इन्द्र ॥ १८ ॥

हेइन्द्र त्वं सखीयतां सखित्वमिच्छतामस्माकम् अवितारक्षिताबोधि भव तथा गृणानः स्तूयमानस्त्वंसखाभव हेइन्द्र स्तुवतेस्तुतिंकुर्वतेमह्यंवयोन्नंधाः धेहि· हेइन्द्र सबाधः बाधासहितावयंहि वयंखलु ते त्वामाचकृम आह्वयामः किंकुर्वन्तः आभिः प्रत्यक्षेणोपलभ्यमानैः शमीभिःस्तुतिरूपैःकर्मभिर्महयन्तः त्वांपूजयन्तः ॥ १८ ॥

इन्द्रस्यवृत्रघ्नःपुरोडाशस्यस्तुतइन्द्रइतियाज्या सूत्रितंच—स्तुतइन्द्रोमघवायद्धवृत्रैवावस्वइन्द्रः-सत्यःसम्राळिति ।

सूक्तेएकोनविंशी-

स्तुत इन्द्रो मघवा यद्ध वृत्रा भूरीण्येको अप्रतीनि हन्ति ।
अस्य प्रियो जरिता यस्य शर्मन्नकिर्देवा वारयन्ते न मर्ताः ॥ १९ ॥

स्तुतः । इन्द्रः । मघऽवा । यत् । ह । वृत्रा । भूरीणि । एकः ।
अप्रतीनि । हन्ति । अस्य । प्रियः । जरिता । यस्य ।
शर्मन् । नकिः । देवाः । वारयन्ते । न । मर्ताः ॥ १९ ॥

यद्ध यदाखलु मघवाधनवानिन्द्रः स्तुतः अस्माभिःस्तुतोभवति तदा इन्द्रएकः असहाय एव भूरीणिबहूनि अप्रतीन्यप्रतिगमनानि अभिगमनयुक्तानीत्यर्थः वृत्रा वृत्राणि शत्रून्हन्ति हिनस्ति यस्येन्द्रस्यशर्मन् शर्मण्याश्रयेवर्तमानंस्तोतारंदेवाःनकिर्वारयन्ते निवारणंनकुर्वन्ति मर्ताश्चन निवारयन्ते निवारणंनकुर्वन्ति अस्येन्द्रस्यजरितास्तोताप्रियोभवति ॥ १९ ॥

आग्निमारुतशस्त्रएवानइन्द्रइतिपरिधानीया सूत्रितंच—एवानइन्द्रोमघवाविरप्शीतिपरिदध्या-दिति ।

सूक्तेविंशी—

एवानइन्द्रोमघवाविरप्शीकरत्सत्याचर्षणीधृदनर्वा ।
त्वंराजाजनुषांधेह्यस्मेअधिश्रवोमाहिनंयज्जरित्रे ॥ २० ॥

एव । नः । इन्द्रः । मघऽवा । विऽरप्शी । करत् । सत्या ।
चर्षणिऽधृत् । अनर्वा । त्वम् । राजा । जनुषाम् । धेहि ।
अस्मे इति । अधि । श्रवः । माहिनम् । यत् । जरित्रे ॥ २० ॥

विरप्शी बहुविधशब्दवान् चर्षणीधृत् सर्वासांप्रजानांधारयिता अनर्वा अप्रत्यृतः केनापिप्रतिकूलेनाप्राप्तइत्यर्थः मघवाधनवानिन्द्रः एवैवमस्माभिःस्तुतःसन् नोस्माकंसत्या सत्यरूपाण्यभिमतानिफलानिकरत्करोतु हेइन्द्र जनुषांजन्मवतांसर्वेषांराजाप्रभुःत्वं माहिनंमहिम्नोपेतंयच्छ्रवःयद्यशोजरित्रेस्तोत्रेदेयं तद्यशःअस्मेस्मासु अध्यधिकत्वेनधेहि एवानइन्द्रोमघवाविरप्शीत्यादिब्राह्मणम् ॥ २० ॥

अथैकविंशी—

नूष्टुतइन्द्रनूगृणानइषंजरित्रेनद्योऽनपीपेः ।
अकारितेहरिवोब्रह्मनव्यंधियास्यामरथ्यःसदासाः ।२१।२४।

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः ।
न । पीपेरितिपीपेः । अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् ।
धिया । स्याम । रथ्यः । सदाऽसाः ॥ २१ ॥ २४ ॥

व्याख्यातेयम् ॥ २१ ॥

॥ इतितृतीयस्यपञ्चमेचतुर्विंशोवर्गः ॥ २४ ॥

---

१ ऐ० ब्रा० ३. ३८.

अयंपन्थाइतित्रयोदशर्चमष्टमंसूक्तंत्रैष्टुभम् । अत्रानुक्रमणिका—अयंपन्थाःसप्तोनासंवाद-इन्द्रादितिवामदेवानामिति । यस्यवाक्यंसऋषिर्योतेनोच्यतेसादेवतेतिपरिभाषितत्वादृषिदेवतेतत्रतत्रज्ञातव्ये । अस्मिन्सूक्तेइन्द्रादितिवामदेवसंवादरूपिणीकाचिदाख्यायिकाश्लोकरूपेण सूच्यते—गर्भस्थोज्ञानसंपन्नोवामदेवोमहामुनिः ॥ मतिंचक्रेनजायेययोनिदेशात्तुमातृतः ॥ १ ॥ किंतुपार्श्वोदितश्चेतिज्ञात्वातुजननीत्विदम् ॥ दध्यौशान्त्यैशचींदेवीमदितिंत्विन्द्रमातरम् ॥ २ ॥ आदितिस्त्विन्द्रसहितागर्भिणीमभ्यगाद्वने ॥ अदितीन्द्रवामदेवाःसंवादमथचक्रिरे ॥ ३ ॥ संवाद-इतिसूत्रेणकथासैषात्रसूच्यते ॥ नोक्तोवक्तृविशेषोत्रह्युपदेशोप्यनुक्तितः ॥ ४ ॥ अर्थतस्त्ववगन्तव्योवक्तृभेदइतिस्थितिः ॥ इन्द्रोदितिर्ऋषिश्चास्मिन्मिथःसूक्तेसमूचिरे ॥ ५ ॥ गर्भेशयानं सुचिरंमातुर्गर्भादनिर्गतम् ॥ वामदेवंप्रतिब्रूतआद्ययर्चाशतक्रतुः ॥ ६ ॥ द्वितीयादिभिरर्धर्चैर्ऋषिरत्राहपञ्चभिः ॥ नहीन्वस्येतिसप्तस्युरर्धर्चाअदितेर्वचः ॥ ७ ॥ ममच्चनत्वायुवतिरित्यृचः पञ्चवैमुनेः ॥ दौर्गत्यशान्तिमत्राहवामदेवस्तथान्त्यया ॥ ८ ॥ एवमर्थाद्वक्तृभेदइतिबह्वृचशासनम् ॥ अर्थाविवेकस्पष्टत्वादुपदेशोमुनेरितः ॥ ९ ॥ ऋषिदैवतसिद्ध्यर्थंविवेकादर्थईरितः ॥

तत्रप्रथमा—

**अयंपन्थाअनुवित्तः पुराणोयतोदेवाउदजायन्तविश्वे ।**
**अतश्चिदाजनिषीष्टप्रवृद्धोमामातरममुयापत्तवेकः ॥ १ ॥**

अयम् । पन्थाः । अनुऽवित्तः । पुराणः । यतः । देवाः ।
उत्ऽअजायन्त । विश्वे । अतः । चित् । आ । जनिषीष्ट ।
प्रऽवृद्धः । मा । मातरम् । अमुया । पत्तवे । कः ॥ १ ॥

पुराणः अनादिः अयं प्रत्यक्षेणोपलभ्यमानः पन्थायोनिनिर्गमनरूपोमार्गः अनुआनुपूर्व्येण वित्तः सर्वैर्जायमानैर्लब्धः यतोयस्माद्योनिमार्गात् विश्वेसर्वेदेवाउदजायन्त उत्कर्षेणोत्पन्नाभवन्ति तस्माद्योनिमार्गान्मनुष्याउत्पन्नाभवन्तीतिकिमुवक्तव्यम् अतश्चिदस्माद्योनिमार्गादेवप्रवृद्धः गर्भेप्रकर्षेणवृद्धिंगतोवामदेवः आजनिषीष्ट मासमन्ताज्जायताम् अमुयाअमूं मातरंपत्तवेपतनायमरणायेत्यर्थः माकः माकरोतु ॥ १ ॥

अथद्वितीया–

नाहमतोनिरयादुर्गहैतत्तिरश्चतापार्श्वान्निर्गमाणि ।
बहूनिमेअकृताकर्त्वानियुध्यैत्वेनसंत्वेनपृच्छै ॥ २ ॥

न । अहम् । अतः । निः । अय । दुःऽगहा । एतत् । तिरश्चता । पार्श्वात् । निः । गमानि । बहूनि । मे । अकृता । कर्त्वानि । युध्यै । त्वेन । सम् । त्वेन । पृच्छै ॥ २ ॥

वामदेवएवमुक्तवन्तमिन्द्रंप्रत्याह–अहमतोयोनिमार्गान्ननिरय ननिरयाणि ननिर्गच्छानि एतद्योनिनिर्गमनरूपंवर्त्मदुर्गहादुर्ग्रहंदुःखेनग्राह्यं नप्राप्यंमवतीत्यर्थः किंतु तिरश्चता तिरश्ची-नात्पार्श्वान्निर्गमात्निर्गच्छानि योनिदेशादनिर्गतोहंपार्श्वभित्त्वानिर्गच्छानीत्यर्थः अन्यैरकृतामि-दमेवनकेवलंमयाक्रियते किंतु अन्यैरकृता अकृतानिबहूनिकर्माणिमेकर्त्वानिकर्तव्यानिस-न्ति त्वेन एकेनसपत्नेनविवदमानेनसहयुध्यै युद्धंकरवाणि त्वेनएकेनबुभुत्सुनासंपृच्छै सम्य-क्पृच्छानि ॥ २ ॥

अथतृतीया–

परायतींमातरमन्वचष्टननानुगान्यनुनूगमानि ।
त्वष्टुर्गृहेअपिबत्सोममिन्द्रःशतधन्यंचम्वोः सुतस्य ॥ ३ ॥

पराऽयतीम् । मातरम् । अनु । अचष्ट । न । न । अनु । गानि । अनु । नु । गमानि । त्वष्टुः । गृहे । अपिबत् । सोमम् । इन्द्रः । शतऽधन्यम् । चम्वोः । सुतस्य ॥ ३ ॥

मयिगर्भस्थेसति इन्द्रः मदीयांमातरंपरायतीं परेतांम्रियमाणामन्वचष्ट अन्वब्रवीत् एव-मपीदानींगर्भस्थितोहं पुराणं पन्थानं ननानुगानि नानुगच्छानीतिन किंतु क्षिप्रमनुगमानि अ-नुगच्छान्येव वामदेवः स्वकीयमकृत्यकारित्वंपरिहृत्य इन्द्रस्याकृत्यकारित्वमुत्तरार्धेनप्रतिपा-दयति इन्द्रः चम्वोःसोमाभिषवफलकयोः सुतस्यसोमंसुतवतोभिषुतवतस्त्वष्टुःसंबन्धिनिगृहे अ-नुपहूतःसन् शतधन्यं बहुधनेनक्रीतंसोममपिबत् बलात्कारेणसोमस्यपानंकृतवान् अयमर्थस्तै-त्तिरीयैस्त्वष्टाहतपुत्रोवीन्द्रंसोममाहरदित्यनुवाकेमहताप्रबन्धेनप्रपञ्चितः ॥ ३ ॥

तै० सं० २. ४. १२. ।

अथचतुर्थी–

**किंसऋधंकृणवद्यंसहस्रंमासोजभारशरदश्चपूर्वीः ।**
**नहीन्वस्यप्रतिमानमस्त्यन्तर्जातेषूतयेजनित्वाः ॥ ४ ॥**

किम् । सः । ऋधक् । कृणवत् । यम् । सहस्रम् । मासः ।
जभार । शरदः । च । पूर्वीः । नहि । नु । अस्य । प्रतिऽमानम् ।
अस्ति । अन्तः । जातेषु । उत । ये । जनिऽत्वाः ॥ ४ ॥

अदितिर्यमिन्द्रं सहस्रं बहून्मासोमासान्पूर्वीर्बह्वीः शरदश्चसंवत्सरांश्चजभार बभर बिभर्ते रिदंरूपं गर्भेस्थितइन्द्रः बहुषुसंवत्सरेषुअदितिंक्लेशितवानित्यर्थः एवम्भूतःसइन्द्रः किंयत्किमपि सर्वमपीत्यर्थः ऋधक् विरुद्धंकर्मकृणवदकरोत् इन्द्रस्याक्षेपमसहमानादितिरिन्द्रमाताप्येनंप्रतिब्रूते–हेवामदेव जातेषूत्पन्नेषुअन्तर्मध्ये अस्येन्द्रस्यप्रतिमानमुपमानंनह्यस्ति नविद्यतेखलु नुइतिपूरणार्थः उताऽपिच येदेवादयः जनित्वाःजनयितव्याःजनयिष्यमाणाःतेषुमध्येअस्येन्द्रस्य प्रतिमानंनास्ति ॥ ४ ॥

अथपञ्चमी–

**अवद्यमिवमन्यमानागुहाकरिन्द्रंमातावीर्येणान्यृष्टम् ।**
**अथोदस्थात्स्वयमत्कंवसानआरोदसीअपृणाज्जायमानः॥५॥२५॥**

अवद्यम्ऽइव । मन्यमाना । गुहा । अकः । इन्द्रम् । माता ।
वीर्येण । निऽऋष्टम् । अथ । उत । अस्थात् । स्वयम् । अत्कम् ।
वसानः । आ । रोदसी इति । अपृणात् । जायमानः ॥ ५ ॥ २५ ॥

गुहा गुहायां गह्वररूपेसूतिकागृहेजातामिन्द्रम् अवद्यमिव गर्हमिव मन्यमानाजानती माताइन्द्रजनन्यदितिः वीर्येणसामर्थ्येनन्यृष्टं नितरांप्राप्तमकः अकरोत् अथानन्तरंजायमानः उत्पद्यमानइन्द्रः स्वयमेवात्कंतेजोवसानःआच्छादकःसन् दधानइत्यर्थः उदस्थात् उत्कर्षेणातिष्ठत किंच रोदसीद्यावापृथिव्यौआपृणात् समन्तात्पूरयामास ॥ ५ ॥

॥ इतितृतीयस्यपञ्चमेपञ्चविंशोवर्गः ॥ २५ ॥

अथषष्ठी-

एताअर्षन्त्यलला्भवन्तीॠतावरीरिवसंक्रोशमानाः ।
एताविपृंच्छकिमिदंभनन्तिकमापोअद्रिंपरिधिंरुजन्ति ॥ ६ ॥

एताः । अर्षन्ति । अलला॒ऽभवन्तीः । ऋतवरीःऽइव ।
सम्ऽक्रोशमानाः । एताः । वि । पृच्छ । किम् । इदम् । भनन्ति ।
कम् । आपः । अद्रिम् । परिऽधिम् । रुजन्ति ॥ ६ ॥

अललाभवन्तीः अललेत्येवंरूपंशब्दंकुर्वत्यः ऋतावरीरिव उदकवत्यएवएतानद्यः संक्रोशमानाः इन्द्रमहत्त्वप्रतिपादकोद्भूतेनहर्षेणबहुविधंशब्दायमानाःसत्यः अर्षन्तिगच्छन्ति एवम्भूतानद्यः इदंकिंभनन्ति श्रोत्रग्राह्यंशब्दायमानं किंवदन्तीसमर्थं हेऋषेत्वमेताःनदीः विपृच्छ विशेषेणपृष्टवान्भव एवंसंपृच्छविचारितेसति एतच्छब्दायमानामिन्द्रमाहात्म्यस्यैववचनं भवतीत्यर्थः किंचापः उदकानि परिधिमावरकंकमद्रिं कंमेघं रुजन्ति भञ्जन्ति आपःकमपिमेघं नभञ्जन्ति किंतुइन्द्रोममपुत्रएवोदकावरकंमेघंभङ्क्त्वाअपःप्रवर्तयतीत्यर्थः ॥ ६ ॥

अथसप्तमी-

किमुंष्विदस्मैनिविदोभनन्तेन्द्रस्यावद्यंदिधिषन्तआपः ।
ममैतान्पुत्रोमहतावधेनवृत्रंजघन्वाँअसृजद्विसिन्धून् ॥ ७ ॥

किम् । ॐ इति । स्वित् । अस्मै । निऽविदः । भनन्त । इन्द्रस्य ।
अवद्यम् । दिधिषन्ते । आपः । मम । एतान् । पुत्रः । महता ।
वधेन । वृत्रम् । जघन्वान् । असृजत् । वि । सिन्धून् ॥ ७ ॥

यदाइन्द्रोवृत्रासुरंहतवान्तदाशाश्वतींब्रह्महत्यांप्राप्तवानितिवामदेवस्याभिप्रायमुक्त्वीयादितिराह-निविदः मरुत्वतीयशस्त्रेप्रयुज्यमानानिमरुत्स्तोत्रोमरुद्गणइत्यादीनिइन्द्रस्तुतिप्रतिपादकानिकानिचित्पदानिनिविच्छब्देनोच्यन्ते तानिविदः अस्मैइमंवृत्रवधनिमित्तंब्रह्महत्यारूपंपापंप्राप्नुवन्तमिन्द्रंकिमुष्विद्भनन्तभनन्ति किंवदन्तीतिचेत् तर्हि इन्द्रंपापरहितंमत्वा निविदःस्तुव-

नि कथमिन्द्रस्यपापरहितत्वम् उच्यते—आपफेनरूपेणास्येन्द्रस्यावद्यंब्रह्महत्यादिरूपंपापंदिधिषन्तेधारयन्ति ममपुत्रः मदीयःपुत्रइन्द्रः महताप्रभूतेनवधेन वधइतिवज्रनामैतत् वज्रेणवृत्रंजघन्वान् हतवान् ततः एतान्सिन्धूनुदकानिव्यसृजत् विशेषेणस्वैरत्वेन सर्तुंसृष्टवान् इन्द्रेणसृष्टाआपः तस्यपापंजगृहुरित्यर्थः ॥ ७ ॥

अथाष्टमी—

**म॒मच्च॒नत्वा॑यु॒व॒तिःप॒रास॒म॒मच्च॒नत्वा॑कु॒ष॒वाज॒गार॑ ।**
**म॒मच्चि॒दापः॒शिश॑वेममृड्यु॒र्म॒मच्चि॒दिन्द्रः॒सह॒सोद॑तिष्ठत् ॥८॥**

म॒मत् । च॒न । त्वा॒ । यु॒व॒तिः । प॒रा॒ऽआस॑ । म॒मत् । च॒न । त्वा॒ । कु॒ष॒वा । ज॒गार॑ । म॒मत् । चि॒त् । आपः॑ । शिश॑वे । म॒मृ॒ड्युः॒ । म॒मत् । चि॒त् । इन्द्रः॑ । सह॑सा । उत् । अ॒ति॒ष्ठ॒त् ॥ ८ ॥

सूक्तशेषेणऋषिरिन्द्रंस्तौति—हेइन्द्र ममच्चन माद्यन्त्येव प्रमत्तैवेत्यर्थः युवतिस्त्वदीयामाताअदितिः त्वा त्वां परास चिक्षेप किंच कुषवानाम्नीराक्षसी सा ममच्चनप्रमत्तैवत्वात्वांजगार गिरतिस्म हेइन्द्र ममच्चित् प्रमाद्यन्त्यएवापः शिशवेजातायतुभ्यंममृड्युः सुखयाञ्चक्रुः ममच्चित माद्यन्नेवेन्द्रः सहसास्वेनवीर्येणसहउदतिष्ठत् सूतिकागृहात्राक्षसींबाधमानःसन्उत्कर्षेणतस्थौ ॥ ८ ॥

अथनवमी—

**म॒मच्च॒नते॑मघव॒न्व्यंसो॒निवि॑वि॒ध्वाँअप॒हनू॑ज॒घान॑ ।**
**अधा॒निवि॑द्धउत्त॑रोबभू॒वाञ्छिरो॑दा॒सस्य॒संपि॑णग्व॒धेन॑ ॥ ९ ॥**

म॒मत् । च॒न । ते॒ । म॒घ॒ऽव॒न् । वि॒ऽअं॑सः । नि॒ऽवि॒वि॒ध्वान् । अप॑ । हनू॒ इति॑ । ज॒घान॑ । अध॑ । निऽवि॑द्धः । उ॒त्ऽत॑रः । ब॒भू॒वान् । शिरः॑ । दा॒सस्य॑ । सम् । पि॒ण॒क् । व॒धेन॑ ॥ ९ ॥

हेमघवन्धनवन्निन्द्र ममच्चन माद्यन्नेव व्यंसोनामराक्षसः निविविध्वान् प्रविध्यन् तेहनू त्वदीयेहनू मुखपार्श्वेअपजघान अपहतवान् अध अथानन्तरं हेइन्द्र निविद्धः राक्षसेनता-

डितस्त्वम् उत्तरः व्यंसादधिकबलः बभूवान्भूतःसन् दासस्यक्षीणस्य व्यंसस्य शिरोवधेनवज्रेणसंपिणक् पिष्टवानसि ॥ ९ ॥

अथदशमी—

गृष्टिःससूवस्थविरंतवागामनाधृष्यंवृषभंतुम्रमिन्द्रम् ।
अरीह्ळंवत्संचरथायमातास्वयंगातुंतन्वइच्छमानम् ॥ १० ॥

गृष्टिः । ससूव । स्थविरम् । तवागाम् । अनाधृष्यम् । वृषभम् ।
तुम्रम् । इन्द्रम् । अरीह्ळम् । वत्सम् । चरथाय । माता ।
स्वयम् । गातुम् । तन्वे । इच्छमानम् ॥ १० ॥

गृष्टिः काचिद्गौः वत्संयथाससूव सुषुवे तथा माताइन्द्रजननी अदितिः चरथाय स्वेच्छयासंचरणाय इन्द्रंससूव सुषुवे कीदृशमिन्द्रं स्थविरं वयसाप्रवृद्धं तवागां प्रवृद्धबलम् अनाधृष्यं शत्रुभिरनभिमाव्यं वृषभंसेचनसमर्थं तुम्रंप्रेरकम्अरीह्ळं शत्रुभिरनभिभूतंस्वयंगातुम् अन्यनिरपेक्ष्यगमनं तन्वे शरीराय इच्छमानमिच्छन्तम् ॥ १० ॥

अथैकादशी—

उतमातामहिषमन्ववेनदमीत्वाजहतिपुत्रदेवाः ।
अथाब्रवीद्वृत्रमिन्द्रोहनिष्यन्त्सखेविष्णोवितरंविक्रमस्व॥ ११॥

उत । माता । महिषम् । अनु । अवेनत् । अमी इति । त्वा ।
जहति । पुत्र । देवाः । अथ । अब्रवीत् । वृत्रम् । इन्द्रः । हनिष्यन् ।
सखे । विष्णो इति । विऽतरम् । वि । क्रमस्व ॥ ११ ॥

उतापिच हेमदीयपुत्रेन्द्र अमी वह्न्यादयोदेवाः त्वा त्वांजहति त्यजन्ति इत्युक्तवतीइन्द्रस्यमाताअदितिः इन्द्रंमहिषंमहान्तं महिषइतिमहन्नामैतत् अन्ववेनत् अयाचत अथानन्तरं हेविष्णो व्यापनशील हेसखे मित्रभूत हरे त्वं वृत्रंहनिष्यन् हन्तुमिच्छन् वितरं विक्रमस्व अतिपराक्रमीभव इतिइन्द्रःविष्णुमब्रवीदुवाच ॥ ११ ॥

अथद्वादशी-

**कस्तेमातरंविधवामचक्रच्छयुंकस्त्वामजिघांसच्चरन्तम् ।**
**कस्तेदेवोअधिमार्डीकआसीद्यत्प्राक्षिणाःपितरंपादगृह्य ॥१२॥**

कः । ते । मातरम् । विधवाम् । अचक्रत । शयुम् । कः । त्वाम् । अजिघांसत् । चरन्तम् । कः । ते । देवः अधि । मार्डीके । आसीत् । यत् । प्र । अक्षिणाः । पितरम् । पादऽगृह्य ॥ १२ ॥

हेइन्द्र यद्यस्मात्कारणात् पितुःसकाशाज्जनिष्यमाणाद्भीतस्त्वं त्वदीयंपितरंपादगृह्य पादेषुगृहीत्वा प्राक्षिणाः प्रकर्षेणावधीः तस्मात्कारणात्तेत्वत्तोन्यःकोदेवः मातरंस्वकीयजननीं विधवांपितृवधेनपतिरहितांअचक्रत् अकरोत् कःत्वत्तोन्यःशयुंशयानंचरन्तंजाग्रतंवात्वाम् अजिघांसत् हन्तुमैच्छत् तेत्वत्तोन्यःकोदेवःमार्डीके प्रजानांसुखकरणे अधि अधिकआसीत् अयमर्थः ऋक्सामेवैदेवेभ्यइत्यनुवाकेयज्ञोदाक्षिणामभ्यध्यायदित्यादिब्राह्मणेनतैत्तिरीयकैर्बहुधा प्रपञ्चितः ॥ १२ ॥

अथत्रयोदशी-

**अवर्त्याशुनआन्त्राणिपेचेनदेवेषुविविदेमर्डितारम् ।**
**अपश्यंजायाममहीयमानामधामेश्येनोमध्वाजभार ॥१३॥२६॥**

अवर्त्या । शुनः । आन्त्राणि । पेचे । न । देवेषु । विविदे । मर्डितारम् । अपश्यम् । जायाम् । अमहीयमानाम् । अध । मे । श्येनः । मधु । आ । जभार ॥ १३ ॥ २६ ॥

अनयावामदेवः स्वकीयंदारिद्र्यंसूचयन् इन्द्रस्योत्कर्षमाह वामदेवोहम् अवर्त्या जीवनोपायराहित्येन शुनः शुनकसबन्धीनि आन्त्राणि पुरीतन्ति पेचे अपचं देवेषुद्योतमानेषु

वह्न्यादिषुमध्ये इन्द्रादन्यंमर्डितारंसुखयितारंनविविदे नलेभे किंच जायांस्वकीयांभार्याम् अमहीयमानाम् अश्लाघनीयामपश्यमद्राक्षम् अधअथानन्तरंश्येनःश्येनवच्छीघ्रगामी इन्द्रः मे मह्यं मधु मधुरोपेतमुदकमाजभारआजहार ॥ १३ ॥

॥ इतितृतीयस्यपञ्चमेषड्विंशोवर्गः ॥ २६ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् ॥ पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेणसायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येतृतीयाष्टकेपञ्चमोध्यायः ॥ ५ ॥

## ॥ श्रीगणेशायनमः ॥

यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत् । निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥ १ ॥
व्याख्यातःपञ्चमोध्यायस्तृतीयाष्टकआदरात् । धीमतासायणाख्येनषष्ठोध्यायोथवर्ण्यते ॥ २ ॥

चतुर्थेमण्डलेद्वितीयेनुवाकेष्टसूक्तानिव्याख्यातानि एवात्वामिन्द्रेत्येकादशर्चनवमंसूक्तम् तस्यम-न्ड्लादिपरिभाषयावामदेवऋषिः अनादेशपरिभाषयात्रिष्टुप्छन्दः इन्द्रोदेवता तथाचानुक्रान्तम्-एवैकादशेति । अग्निष्टोमेमाध्यन्दिनसवनेमैत्रावरुणशस्त्रेइदंसूक्तम् । सूत्र्यतेहि—एवात्वामिन्द्रो-वज्रिन्नत्रेतिशंसेदिति । पृष्ठ्याभिप्लवषडहयोःप्रथमेहनिमैत्रावरुणशस्त्रे अहीनसूक्तम् तत्स्थानेत्रीणिसंपातसूक्तानि तत्रेदंप्रथमंसूक्तम् सूत्रितञ्च—एवात्वामिन्द्रयन्नइन्द्रइति ।

तत्रप्रथमा—

ॐम् एवात्वामिन्द्रवज्रिन्नत्रविश्वेदेवासःसुहवासऊमाः ।
महामुभेरोदसीवृद्धमृष्वंनिरेकमिद्वृणतेवृत्रहत्ये ॥ १ ॥

एव । त्वाम् । इन्द्र । वज्रिन् । अत्र । विश्वे । देवासः । सुऽहवासः ।
ऊमाः । महाम् । उभे इति । रोदसी इति । वृद्धम् । ऋष्वम् ।
निः । एकम् । इत् । वृणते । वृत्रऽहत्ये ॥ १ ॥

अत्रास्मिन्यज्ञे वज्रिन् हेवज्रवन्निन्द्र सुहवासः सुहवाःशोभनाह्वानाः ऊमाः रक्षकाः विश्वेदेवासः सर्वेदेवाः उभेरोदसीद्यावापृथिव्यौच एव एवमुक्तप्रकारेणस्तूयमानंमहांमहान्तंप्र-भूतंवृद्धंगुणैःप्रवृद्धम्ऋष्वंदर्शनीयंत्वामेकमित् एकमेववृत्रहत्येवृत्रहननार्थंनिर्वृणते निःशेषेणसं-भजन्ते ॥ १ ॥

अथद्वितीया—

अवासृजन्तजिव्रयोनदेवाभुवःसम्राळिन्द्रसत्ययोनिः ।
अहन्नहिंपरिशयानमर्णःप्रवर्तनीरररदोविश्वधेनाः ॥ २ ॥

अवं । असृजन्त । जिव्रयः । न । देवाः । भुवः । सम्ऽराट् ।
इन्द्र । सत्यऽयोनिः । अहन् । अहिम् । परिऽशयानम् ।
अर्णः । प्र । वर्तनीः । अरदः । विश्वऽधेनाः ॥ २ ॥

हेइन्द्र देवा त्वां जिव्रयोन जीर्णाःप्रवृद्धाःपितरःयूनःपुत्रानिव अवासृजन्त असुरवधार्थंप्रैरयन् ततः हेइन्द्र सत्ययोनिः सत्यनिवासस्त्वं सम्राट् सर्वेषांलोकानाम धीश्वरोभुवः अभवः अर्णःउदकंलक्षीकृत्य परिशयानम् परितःसमन्तात्शयनंकुर्वन्तम् अहिं वृत्रासुरम् अहन् अवधीः विश्वधेनाः विश्वस्यप्रीणयित्रीः वर्तनीःसर्वत्रप्रवर्तिकाःनदीः प्रारदः प्रकर्षेणविलेखनंकृतवानसि इन्द्रः वृत्रंहत्वातेनावृतान्युदकानिप्रवाहरूपेणप्रवर्तयतीत्यर्थः ॥ २ ॥

अथतृतीया—

अतृंप्णुवन्तंवियंतमबुध्यमानंसुषुपाणमिन्द्र ।
सप्तप्रतिंप्रवतंआशयानमहिंवज्रेणविरिणाअपर्वन् ॥ ३ ॥

अतृंप्णुवन्तम् । विऽयंतम् । अबुध्यम् । अबुंध्यमानम् ।
सुसुपानम् । इन्द्र । सप्त । प्रतिं । प्रऽवतः । आऽशयानम् ।
अहिम् । वज्रेण । वि । रिणाः । अपर्वन् ॥ ३ ॥

हेइन्द्र त्वम् अतृष्णुवन्तम् भोगेषु अतृप्यन्तं वियतं शिथिलाङ्गम् अबुध्यम् दुर्विज्ञानमअबुध्यमानंसुषुपाणम् सुप्तम् सप्तसर्पणस्वभावाःप्रवतः अपः प्रत्याशयानमावृत्यातिष्ठन्तम् अहिंवृत्रम् अपर्वन् अपर्वणि पौर्णमास्यां वज्रेणविरिणाः व्यरिणाःविशेषेणहतवानसि पौर्णमास्यांवृत्रवधः त्वष्टाहतपुत्रइत्यनुवाकेघ्नन्तिवाएनंपूर्णमासआमावास्यायांप्यायन्तीतितैत्तिरीयैरप्युक्तः ॥ ३ ॥

अथचतुर्थी—

अक्षोदयच्छवंसाक्षामंबुध्नंवार्णवातस्तविंषीभिरिन्द्रः ।
दृळ्हान्यौभ्नादुशमानओजोवाभिनत्ककुभःपर्वतानाम् ॥ ४ ॥

---

१ तै० सं० २. । ४. १२ ।

अक्षोदयत् । शवसा । क्षाम । बुध्नम् । वाः । न । वातः ।
तविषीभिः । इन्द्रः । दृळ्हानि । औभ्नात् । उशमानः ।
ओजः । अव । अभिनत् । ककुभः । पर्वतानाम् ॥ ४ ॥

इन्द्रः परमैश्वर्ययुक्तः शवसाबलेन बुध्नमन्तरिक्षं क्षाम क्षीणोदकम् अक्षोदयत् संपिपेष तत्रदृष्टान्तः—वातोवायुःतविषीभिःबलैर्वार्णउदकमिव तद्वत् किंच ओजोबलमुशमानःकामयमानःइन्द्रः दृळ्हानि दृढानि स्थिराण्यपिअभ्राणि औभ्नादभाङ्क्षीत् तथापर्वतानांगिरीणांककुभः पक्षान् अवाभिनत् अत्यन्तमभैत्सीत् ॥ ४ ॥

अथपञ्चमी—

अभिप्रदद्रुर्जनयोनगर्भंरथाइवप्रययुःसाकमद्रयः ।
अतर्पयोविसृतउब्जऊर्मीन्त्वंवृताँअरिणाइन्द्रसिन्धून् ॥५॥१॥

अभि । प्र । दद्रुः । जनयः । न । गर्भम् । रथाःऽइव । प्र । ययुः ।
साकम् । अद्रयः । अतर्पयः । विऽसृतः । उब्जः । ऊर्मीन् ।
त्वम् । वृतान् । अरिणाः इन्द्र । सिन्धून् ॥ ५ ॥ १ ॥

हेइन्द्र त्वाम् अद्रयोमरुतः जनयोजनन्यः गर्भंन पुत्रमिव अभिप्रदद्रुः अभिजग्मुः किंच रथाइव रंहणशीलारथायथावृत्रवधार्थंत्वयासाकंप्रययुः प्रकर्षेणायासिषुः हे इन्द्र त्वं विसृतः विसरणशीलानदीः अतर्पयः अद्भिरपूरयः तथा ऊर्मीन् मेघान् उब्जः अवधीः तथा त्वंवृतान्वृत्रेणावृतान्सिन्धूनपःअरिणाःप्रैरयः ॥ ५ ॥

॥ इतितृतीयस्यषष्ठेप्रथमोवर्गः ॥ १ ॥

अथषष्ठी—

त्वंमहीमवनिंविश्वधेनांतुर्वीतयेवय्यायक्षरन्तीम् ।
अरमयोनमसैजदर्णःसुतरणाँअकृणोरिन्द्रसिन्धून् ॥ ६ ॥

त्वम् । महीम् । अवनिम् । विश्वऽधेनाम् । तुर्वीतये । वय्याय ।
क्षरन्तीम् । अरमयः । नमसा । एजत् । अर्णः । सुऽतरणान् ।
अकृणोः । इन्द्र । सिन्धून् ॥ ६ ॥

हेइन्द्र त्वं महीं महतीं विश्वधेनां विश्वस्यप्रीणयित्रीं तुर्वीतये तुर्वीतिनाम्नेराज्ञे वय्याय वय्यनाम्नेच क्षरन्तीमभीष्टान्कामान्दुहन्तीम् अवनिं भूमिं नमसा अन्नेन एजत् ऐजत अचलत् अर्णः अर्णसाउदकेनचअरमयःरमयसि इन्द्रःपृथिवींअन्नोदकसमृद्धांकरोतीत्यर्थः किंच हेइन्द्र त्वंसिन्धून्जलानिसुतरणान्सुष्ठुतीर्णानिअकृणोरकार्षीः ॥ ६ ॥

अथसप्तमी–

प्राग्रुवोनभन्वो३नवक्राध्वस्राअपिन्वद्युवतीरृतज्ञाः ।
धन्वान्यज्राँअपृणक्तृषाणाँअधोगिन्द्रःस्तर्यो३दंसुपत्नीः ॥ ७ ॥

प्र । अग्रुवः । नभन्वः । न । वक्राः । ध्वस्राः । अपिन्वत् ।
युवतीः । ऋतऽज्ञाः । धन्वानि । अज्रान् । अपृणक् ।
तृषाणान् । अधोक् । इन्द्रः । स्तर्यः । दम्ऽसुपत्नीः ॥ ७ ॥

इन्द्रः नभन्वः शत्रूणांहिंसिकाः वक्रान सेनाइव ध्वस्राः कूलानांध्वंसिकाः युवतीरद्भिर्मिश्रिताः ऋतज्ञाः ऋतस्यान्नस्यजनयित्रीः अग्रुवः अग्रुवइतिनदीनामैतत् अग्रगामिनीर्नदीः प्रापिन्वत् प्रकर्षेणापूरयत् तथा धन्वानि निर्जलानुन्नतान्देशांश्चवृष्ट्याअपृणत् अपूरयत् तथा अज्रान् मार्गस्यगन्तॄन्तृषाणान् पिपासयायुक्तान् पुरुषान् अपृणक् अपूरयत् किंच इन्द्रः दंसुपत्नीः दमनपराअसुराः सुष्ठुपतयोयासांताः स्तर्यः स्तरीः निवृत्तप्रसवागाः अधोक् अधुक्षत् इन्द्रः राक्षसकृतनिरोधदुःखान्निरुद्धप्रसवाअपिगाविमुच्य सप्रसवाश्चकारेत्यर्थः ॥ ७ ॥

अथाष्टमी–

पूर्वीरुषसःशरदश्चगूर्तावृत्रंजघन्वाँअसृजद्विसिन्धून् ।
परिष्ठिताअतृणद्बद्बधानाःसीराइन्द्रःस्रवितवेपृथिव्या ॥ ८ ॥

पूर्वीः । उषसः । शरदः । च । गूर्ताः । वृत्रम् । जघन्वान् ।
असृजत् । वि । सिन्धून् । परिऽस्थिताः । अतृणत् ।
बद्बधानाः । सीराः । इन्द्रः । स्रवितवे । पृथिव्या ॥ ८ ॥

वृत्रं वृत्राख्यमसुरंजघन्वान्हतवानिन्द्रः गूर्ताः तमिस्रयागीर्णाःपूर्वीर्बह्वीः उषसः शरदश्च संवत्सरांश्च व्यसृजत् विशेषेणससर्ज तथा सिन्धूत्वृत्रेणावृतान्युदकानिव्यसृजत् किंच परिष्ठिताः मेघेषुपरितःस्थिताः बद्बधानाः वृत्रेणपरितोबध्यमानाः सीरानदीः सीराइतिनदीनामैतत् पृथिव्यापृथिवीरूपेणमार्गेणस्रवितवे स्रवितुंगमनार्थमतृणत् अविध्यत् ॥ ८ ॥

अथनवमी–

वम्रीभिःपुत्रमग्रुवोअदानंनिवेशनाद्धरिवआजभर्थ ।
व्य१न्धोअख्यदहिमाददानोनिर्भूदुखच्छित्समरन्तपर्व ॥ ९ ॥

वम्रीभिः । पुत्रम् । अग्रुवः । अदानम् । निऽवेशनात् । हरिऽवः ।
आ । जभर्थ । वि । अन्धः । अख्यत् । अहिम् । आऽददानः ।
निः । भूत् । उखऽछित् । सम् । अरन्त । पर्व ॥ ९ ॥

हेहरिवः हरिसंज्ञाश्वोपेतेन्द्र त्वं वम्रीभिः उपजिह्विकाभिरदानमद्यमानम् अग्रुवः अग्रूनामकाचित् तस्याः पुत्रं निवेशनाद्वल्मीकाख्यात्स्थानादाजभर्थ आहृतवानसि आददानः इन्द्रेणाह्रियमाणः अग्रुवः पुत्रः अन्धः पूर्वमन्धःसन् अहिंसर्पंव्यख्यत् विशेषेणापश्यत् ततोनिर्भूत्वल्मीकान्निर्गतोभवत् उखच्छित्वल्मीकाख्यायाउखायाश्छेदकानिपर्व पर्वाणि अस्यसर्वाणि अङ्गानां शिथिलानिपर्वाणिसमरन्त समगच्छन्त उपजिह्विकाभिः शिथिलीकृतानि अग्रुवः पुत्रस्य पर्वाणिइन्द्रेणसमधीयन्तेत्यर्थः ॥ ९ ॥

अथदशमी–

प्रतेपूर्वाणिकरणानिविप्राविद्वाँआहविदुषेकरांसि ।
यथायथावृष्ण्यानिस्वगूर्तापांसिराजन्नर्याविवेषीः ॥ १० ॥

प्र । ते । पूर्वाणि । करणानि । विप्र । आऽविद्वान् । आह । विदुषे ।
करांसि । यथाऽयथा । वृष्ण्यानि । स्वऽगूर्ता । अपांसि ।
राजन् । नर्या । अविवेषीः ॥ १० ॥

हेराजन्राजमानेन्द्र वृष्ण्यानि वर्षणयोग्यानि स्वगूर्ता स्वगूर्तानि स्वयमुद्गीर्णानि नर्या नर्याणि मनुष्यहितानि अपांसि त्वत्संबन्धीनिकर्माणि यथायथाअविवेषीः व्याप्नोः अकार्षीरिति यावत् तथातथा हेविप्र प्राज्ञेन्द्र विदुषेविदुषःसर्वंजानतस्तेत्वत्संबन्धीनिपूर्वाणिपुरातनानिकरणानिकर्माणि आविद्वान् आसमन्ताज्जानन् वामदेवः करांसि त्वदीयानिकर्माणि प्रप्रकर्षेणाह ब्रवीति ॥ १० ॥

अथैकादशी—

नूष्टुतइंन्द्रनूगृणानइषंजरित्रेनद्यो३नपींपेः ।
अकारितेहरिवोब्रह्मनव्यंधियास्यामरथ्यःसदासाः ॥११॥२॥

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः ।
न । पीपेरितिपीपेः । अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् ।
धिया । स्याम । रथ्यः । सदाऽसाः ॥ ११ ॥ २ ॥

हेइन्द्र नु क्षिप्रं स्तुतः पूर्वैर्ऋषिभिःसंस्तुतः नु क्षिप्रं गृणानः अस्माभिःस्तूयमानस्त्वम् इषमन्नं जरित्रे स्तोत्रे मह्यं नद्योन अद्भिर्नदीरिवापीपेः प्यायय प्रवृद्धंकरु हेहरिवः हरिसंज्ञकाश्वोपेतेन्द्र तेतुभ्यंनव्यं नवतरंब्रह्मस्तोत्रम् अकारि अस्माभिःक्रियते रथ्योरथवन्तोवयं धियाप्रज्ञारूपयास्तुत्यासदासाःत्वांसर्वदाभजमानाःत्वदर्थंहवीरूपस्यान्नस्यदातारोवास्याम भूयास्म ॥ ११ ॥

॥ इतितृतीयस्यषष्ठेद्वितीयोवर्गः ॥ २ ॥

आनइन्द्रेत्येकादशर्चंदशमंसूक्तंवामदेवस्यार्षंत्रैष्टुभमैन्द्रम् आनइत्यनुक्रमणिका । पृष्ठ्याभिप्लवषडहयोःप्रथमेऽहनिनिष्केवल्येएतन्निविद्धानीयम् सूत्रितञ्च—आनइन्द्रइतिनिष्केवल्यमिति । महाव्रतेप्येतत्संपातसूक्तम् तथैवपञ्चमारण्यकेसूत्रितम्—आनइन्द्रोदूरादानआसादितिसंपात इति ।

तत्रप्रथमा—

आनइन्द्रोदूरादानआसादभिष्टिकृदवसेयासदुग्रः ।
ओजिंष्ठेभिर्नृपतिर्वज्रबाहुःसंगेसमत्सुतुर्वणिःपृतन्यून् ॥ १ ॥

आ । नः । इन्द्रः । दूरात् । आ । नः । आसात् । अभिष्टिऽकृत् । अवसे । यासत् । उग्रः । ओजिष्ठेभिः । नृऽपतिः । वज्रऽबाहुः । सम्ऽगे । समत्ऽसु । तुर्वणिः । पृतन्यून् ॥ १ ॥

अभिष्टिकृद्यजमानसंबन्धिनाम् अभिष्टीनां कर्ता उग्रस्तेजस्वीन्द्रः नोस्माकमवसेरक्षणाय दूरात् आयासदायातु आगच्छतु अपिच आसादासन्नादन्तिकाच्चनोस्माकमवसेरक्षणायआयासदायातु कीदृशः समत्सु संग्रामेषु सङ्गेशत्रुभिःसंयोगेसति पृतन्यून् शत्रून् तुर्वणिः हिंसन् वज्रबाहुर्वज्रहस्तः नृपतिः वृष्टिद्वारानृणांमनुष्याणांपालकः ओजिष्ठेभिः अतिशयेनतेजस्विभिर्मरुद्भिर्युक्तइतिशेषः ॥ १ ॥

अथद्वितीया–

आन इन्द्रो हरिभिर्यात्वच्छार्वाचीनोवसेराधसेच ।
तिष्ठातिवज्रीमघवाविरप्शीमंयज्ञमनुनोवाजसातौ ॥ २ ॥

आ । नः । इन्द्रः । हरिऽभिः । यातु । अच्छ । अर्वाचीनः । अवसे । राधसे । च । तिष्ठाति । वज्री । मघऽवा । विऽरप्शी । इमम् । यज्ञम् । अनु । नः । वाजऽसातौ ॥ २ ॥

अर्वाचीनःअस्मदभिमुखइन्द्रःअवसेस्मदीयायरक्षणायराधसेच धनायच नोच्छ अस्मानभिलक्षीकृत्यहरिभिरश्वैःसहआयातुआगच्छतु किंच वज्री वज्रवान् मघवाधनवान् विरप्शी महान् विरप्शीतिमहन्नामसुपाठात् अस्मदीयस्यकर्मणोद्वेष्टृभिरसुरादिभिःसहनोस्माकम् वाजसातौ युद्धेप्राप्तेसतिइममस्मदीयंयज्ञम् अनूद्दिश्य तिष्ठाति तिष्ठतु ॥ २ ॥

अथतृतीया–

इमंयज्ञंत्वमस्माकमिन्द्रपुरोदधत्सनिष्यसिक्रतुंनः ।
श्वघ्नीववज्रिन्त्सनयेधनानांत्वयावयमर्यआजिंजयेम ॥ ३ ॥

इमम् । यज्ञम् । त्वम् । अस्माकम् । इन्द्र । पुरः । दधत् ।
सनिष्यसि । क्रतुम् । नः । श्वघ्नीऽइव । वज्रिन् । सनये ।
धनानाम् । त्वया । वयम् । अर्यः । आजिम् । जयेम ॥ ३ ॥

हेइन्द्र त्वंनोस्मान् पुरोदधत् पुरस्कृतान्कुर्वन् अस्माकंक्रतुं क्रियमाणमिमंयज्ञम् सनिष्यसि संभजिष्यसि अपिच श्वघ्नीव मृगयुः मृगानिव हेवज्रिन्वज्रवन्निन्द्र त्वया अर्यःअरयःस्तोतारो वयंधनानांपश्वादिधनानांसनयेलाभाय आजिंशत्रुसंबन्धिनंसंग्रामंजयेम जीयास्म ॥ १ ॥

अग्निष्टोमेमाध्यन्दिनसवनेमैत्रावरुणस्योशन्नुषुणइतिशस्त्रयाज्या, सूत्रितश्च—उशन्नुषुणः सुमनाउपाकइतियाज्येति ।

सैषाचतुर्थी—

उशन्नुषुणःसुमनाउपाकेसोमस्यनुसुषुतस्यस्वधावः ।
पाइन्द्रप्रतिभृतस्यमध्वःसमन्धसाममदःपृष्ठ्येन ॥ ४ ॥

उशन् । ऊँ इति । सु । नः । सुऽमनाः । उपाके । सोमस्य । नु ।
सुऽसुतस्य । स्वधाऽवः । पाः । इन्द्र । प्रतिऽभृतस्य ।
मध्वः । सम् । अन्धसा । ममदः । पृष्ठ्येन ॥ ४ ॥

हेस्वधावः अन्नवन्निन्द्र सुमनाःशोभनमनस्कः त्वम् उपाके समीपे नोस्मान्नुशन्नुषु अत्यन्तंकामयमानःसन् सुषुतस्य सुष्ठुअभिषुतंप्रतिभृतस्य संभृतं मध्वः मादकंसोमस्यसोमंनुक्षिप्रमेवपाः पिब पृष्ठ्येन पृष्ठ्यशब्देनमाध्यन्दिनसवनेउद्गातृभिरुद्गीयमानंस्तोत्रमुच्यते तत्संबन्धिना अन्धसा पीतेनसोमेन संममदः संहृष्टोभव ॥ ४ ॥

अथपञ्चमी—

वियोररप्शऋषिभिर्नवेभिर्वृक्षोनपक्कःसृण्योनजेता ।
मर्योनयोषामभिमन्यमानोच्छाविवक्मिपुरुहूतमिन्द्रम् ।५।३।

वि । यः । ररप्शे । ऋषिऽभिः । नवेभिः । वृक्षः । न । पक्कः ।
सृण्यः । न । जेता । मर्यः । न । योषाम् । अभि । मन्यमानः ।
अच्छ । विवक्मि । पुरुऽहूतम् । इन्द्रम् ॥ ५ ॥ ३ ॥

पक्कः पक्कफलः वृक्षोन वृक्षइव अत्रसृणिशब्दोङ्कुशवाची तेनायुधमात्रंलक्ष्यते सृण्यः आयुधकुशलः जेतान शत्रुविजयीवीरपुरुषइव यः नवेभिर्नवैर्नूतनैर्ऋषिभिःविररप्शो विविधंस्तूयते स्तोताहंपुरुहूतंबहुभिराहूतं तमिन्द्रमच्छाभिलक्षीकृत्य विवक्मि विशेषेणवच्मि स्तौमि तत्रदृष्टान्तः—अभिमन्यमानःमदीयेयंयोषिदित्यभिजानन्मर्योमर्त्यःयोषांन स्त्रीमिव तद्वत् ॥ ५ ॥

॥ इतितृतीयस्यषष्ठेतृतीयोवर्गः ॥ ३ ॥

अथषष्ठी—

गिरिर्नयःस्वतवाँऋष्वइन्द्रःसनादेवसहसेजातउग्रः ।
आदर्ताविज्रंस्थविरंनभीमउद्नेवकोशंवसुनान्यृष्टम् ॥ ६ ॥

गिरिः । न । यः । स्वऽतवान् । ऋष्वः । इन्द्रः । सनात् । एव ।
सहसे । जातः । उग्रः । आऽदर्ता । वज्रम् । स्थविरम् । न ।
भीमः । उद्नाऽइव । कोशम् । वसुना । निऽऋष्टम् ॥ ६ ॥

गिरिर्न पर्वतइव स्वतवानस्वयंप्रवृद्धः ऋष्वोमहान् ऋष्वइतिमहन्नाम महत् ब्रध्नः ऋष्वइतितन्नामसुपाठात् उग्रः ओजस्वी यइन्द्रः सहसेशत्रोरभिभवाय सनादेव चिरादेव जातःउत्पन्नः भीमः शत्रूणांभयङ्करः सइन्द्रः उद्नेवकोशम् उदकेनजलपात्रमिव वसुना तेजसा न्यृष्टं निर्गतं स्थविरं बृहत् वज्रंन वज्रंचनेतिचार्थे आदर्ता आदृतवानासीत् ॥ ६ ॥

अथसप्तमी—

नयस्यवर्ताजनुषान्वस्तिनराधसआमरीतामघस्य ।
उद्वावृषाणस्तविषीवउग्रास्मभ्यंदद्धिपुरुहूतरायः ॥ ७ ॥

न । यस्य । वर्ता । जनुषा । नु । अस्ति । न । राधसः ।
आऽमरीता । मघस्य । उत्ऽववृषाणः । तविषीऽवः । उग्र ।
अस्मभ्यम् । दद्धि । पुरुऽहूत । रायः ॥ ७ ॥

हेइन्द्र यस्यतव कश्चिज्जनुषाजन्मनास्वतएवनुसत्यंवर्ता वारयितानास्ति राधसः यज्ञादिकर्मणांसाधकस्यमवस्यत्वयादीयमानस्य धनस्यआमरीता कश्चिदपिनाशयितानास्ति हेतविषीवः बलवन्नुग्र तेजस्विन् हेपुरुहूत बहुभिराहूतेन्द्र उद्वावृषाणः अभीष्टान्कामान्वर्षकस्त्वं रायः पश्वादिधनानि अस्मभ्यंस्तोतृभ्यःदद्धि देहि ॥ ७ ॥

अथाष्टमी–

ईक्षेरायःक्षयस्यचर्षणीनामुतव्रजमपवर्तासिगोनाम् ।
शिक्षानरःसमिथेषुप्रहावान्वस्वोराशिमभिनेतासिभूरिम् ॥ ८ ॥

ईक्षे । रायः । क्षयस्य । चर्षणीनाम् । उत । व्रजम् । अपऽवर्ता । असि । गोनाम् । शिक्षाऽनरः । सम्ऽइथेषु । प्रहाऽवान् । वस्वः । राशिम् । अभिऽनेता । असि । भूरिम् ॥ ८ ॥

हेइन्द्र त्वं चर्षणीनां प्रजानां रायोधनस्यक्षयस्य गृहस्यच ईक्षे ईक्षसे उतापिच गोनांगवां व्रजंसमूहम् अपवर्ता अपवारकोसि निरोधकेभ्योऽसुरेभ्यःगवांमोचयिताभवसीत्यर्थः किंच हेइन्द्र शिक्षानरः शिक्षयानेताप्रजानांशासकः समिथेषु युद्धेषु प्रहावान्प्रहरणवांस्त्वंभूरिं प्रभूतं वस्वोधनस्य राशिंसमूहमभिनेतासि प्रापयिताचभवसि ॥ ८ ॥

अथनवमी–

कयातच्छृण्वेशच्याशचिष्ठोययाकृणोतिमुहुकाचिदृष्वः ।
पुरुदाशुषेविचयिष्ठोअंहोथादधातिद्रविणंजरित्रे ॥ ९ ॥

कया । तत् । शृण्वे । शच्या । शचिष्ठः । यया । कृणोति । मुहु । का । चित् । ऋष्वः । पुरु । दाशुषे । विचयिष्ठः । अंहः । अथ । दधाति । द्रविणम् । जरित्रे ॥ ९ ॥

शचिष्ठः अतिशयेनप्राज्ञः तदितिलिङ्गव्यत्ययः तत्सइन्द्रः कयाशच्या कयाप्रज्ञया शचीतिप्रज्ञानामैतत् शृण्वे श्रूयते ऋष्वोमहानिन्द्रः मुहुर्मुहुः ययाप्रज्ञयाकाचित्कानिचित् कर्माणि कृणोति करोति सइन्द्रः दाशुषेहविर्दत्तवतेयजमानायपुरुभूयिष्ठमंहः पापम् विचयिष्ठः अतिशयेननाशकोभवति अथापिच जरित्रेस्तोत्रेद्रविणंपश्वादिधनंदधातिददाति ॥ ९ ॥

अथदशमी—

**मानोमर्धीराभरादद्धितन्नःप्रदाशुषेदातवेभूरियत्ते ।**
**नव्येदेष्णेशस्तेअस्मिन्तंउक्थेप्रब्रवामवयमिन्द्रस्तुवन्तः ॥१०॥**

मा । नः । मर्धीः । आ । भर । दद्धि । तत् । नः । प्र । दाशुषे ।
दातवे । भूरि । यत् । ते । नव्ये । देष्णे । शस्ते । अस्मिन् ।
ते । उक्थे । प्र । ब्रवाम । वयम् । इन्द्र । स्तुवन्तः ॥ १० ॥

हेइन्द्र त्वंनोस्मान्मामर्धीर्माहिंसीः किंतु त्वम्आभर पोषकोभव हेइन्द्र तेत्वदीयं भूरि बह्वपि यद्धनं दाशुषेहविर्दत्तवतेयजमानायदातवे दातुंप्रभवतीतिशेषः नोस्मभ्यंतद्धनमाहृत्य दद्धि देहि हेइन्द्रत्वांस्तुवन्तोवयम् अस्मिन्नुक्थे अस्मिन्निष्केवल्याख्यशस्त्रे तेत्वदर्थे नव्ये नूतने शस्ते प्रशस्ते देष्णे दातव्येहविषिनिमित्तभूतेसति प्रब्रवाम प्रकर्षेणत्वांवदाम ॥ १० ॥

अथैकादशी—

**नूष्टुतइन्द्रनूगृणानइषंजरित्रेनद्योऽनपीपेः ।**
**अकारितेहरिवोब्रह्मनव्यंधियास्यामरथ्यःसदासाः ॥११॥४॥**

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न ।
पीपेरितिपीपेः । अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् ।
धिया । स्याम । रथ्यः । सदाऽसाः ॥ ११ ॥ ४ ॥

पूर्वंव्याख्याता ॥ ११ ॥

॥ इतितृतीयस्यषष्ठेचतुर्थोवर्गः ॥ ४ ॥

आयात्विन्द्रइत्येकादशर्चमेकादशंसूक्तंवामदेवस्यार्षंत्रैष्टुभमैन्द्रम् आयात्वित्यनुक्रान्तम् । पृष्ठ्याभिप्लवषडहयोःप्रथमेहनिएतन्निविद्धानीयं सूत्रितंच—आयात्विन्द्रोवसइतिमरुत्वतीयमिति ॥

तत्रप्रथमा—

**आयात्विन्द्रोवसउपनइहस्तुतःसधमादस्तुशूरः ।**
**वावृधानस्तविषीर्यस्यपूर्वीर्द्यौर्नक्षत्रमभिभूतिपुष्यात् ॥ १ ॥**

आ । यातु । इन्द्रः । अवसे । उप । नः । इह । स्तुतः ।
सधऽमात् । अस्तु । शूरः । ववृधानः । तविषीः । यस्य ।
पूर्वीः । द्यौः । न । क्षत्रम् । अभिऽभूति । पुष्यात् ॥ १ ॥

सइन्द्रः नोस्माकमवसेरक्षणायउपायातु उपागच्छतु यइन्द्रः इहास्मिन्यज्ञेस्तुतःशूरोविक्रान्तो ववृधानःप्रवृद्धःअयमिन्द्रःसधमादस्तु अस्माभिःसहमाद्यन्भवतु यस्येन्द्रस्यतविषीः तविष्यः बलानिपूर्वीःपूर्व्योबहूनिसन्तीतिशेषः यश्चेन्द्रः द्यौर्न द्योतमानःसूर्यइव अभिभूति परकीयंबलमभिभावुकंक्षत्रं-स्वकीयंबलं तेजोवापुष्यात् पुष्यतु सइन्द्रः उपायात्वितिपूर्वेणसंबन्धः ॥ १ ॥

अथद्वितीया–

**तस्येदिहस्तवथवृष्ण्यानितुविद्युम्नस्यतुविराधसोनॄन् ।**
**यस्यक्रतुर्विदथ्योऽनसम्राट्साह्वान्तरुत्रोअभ्यस्तिकृष्टीः ॥२॥**

तस्य । इत् । इह । स्तवथ । वृष्ण्यानि । तुविऽद्युम्नस्य ।
तुविऽराधसः । नॄन् । यस्य । क्रतुः । विदथ्यः । न । सम्ऽराट् ।
सह्वान् । तरुत्रः । अभि । अस्ति । कृष्टीः ॥ २ ॥

तुविद्युम्नस्यबहुकीर्तेः तुविराधसः बहुधनस्य तस्येत्तस्येन्द्रस्यैव वृष्ण्यानि बलभूतान्नॄन्नेतॄन्मरुतः हेस्तोतारोयूयमिहास्मिन्यज्ञेस्तवथ स्तुत साह्वान्शत्रूनभिभावुकः तरुत्रः अस्माना-पद्भ्यस्तारकः यस्येन्द्रस्यक्रतुः कर्मकृष्टीः शत्रुसंबन्धिनीःप्रजाःअभ्यस्ति अभिभवति तत्रदृ-ष्टान्तः–विदथ्योन सम्राट्विदथार्होन यज्ञार्हःसम्राट्सकललोकानामधिपतिरिव तद्वत्तस्यवृष्ण्यानीति पूर्वेणसंबन्धः ॥ २ ॥

अथतृतीया–

**आयात्विन्द्रोदिवआपृथिव्यामक्षूसमुद्रादुतवापुरीषात् ।**
**स्वर्णरादवसेनोमरुत्वान्परावतोवासदनादृतस्य ॥ ३ ॥**

आ । यातु । इन्द्रः । दिवः । आ । पृथिव्याः । मक्षु । समुद्रात् ।
उत । वा । पुरीषात् । स्वःऽनरात् । अवसे । नः । मरुत्वान् ।
पराऽवतः । वा । सदनात् । ऋतस्य ॥ ३ ॥

मरुत्वान्मरुद्भिःसहितइन्द्रः नोस्माकमवसेरक्षणायदिवः स्वर्गलोकादायातु आगच्छतु पृथिव्याः भूलोकाच्चमक्षुशीघ्रमायातु उतवा अथवा समुद्रादन्तरिक्षलोकाच्चायातु समुद्रइत्यन्तरिक्षनाम सगरः समुद्रः अध्वरइतितन्नामसुपाठात् अथवा पुरीषादुदकात् आयातु पुरीषमित्युदकनाम मधुपुरीषंपिप्पलमितितन्नामसुपाठात् स्वर्णरात् स्वरादित्यः नरोनेतायस्यतस्माल्लोकाद्वाआयातु परावतोवादूराद्वाआयातु ऋतस्योदकस्यसदनात्स्थानात्मेघलोकाद्वाआयातु ॥ ३ ॥

अथचतुर्थी—

स्थूरस्यरायोबृहतोयईशेतमुष्टवामविदथेष्विन्द्रम् ।
योवायुनाजयतिगोमतीषुप्रधृष्णुयानयतिवस्योअच्छ ॥ ४ ॥

स्थूरस्य । रायः । बृहतः । यः । ईशे । तम् । ऊँ इति ।
स्तवाम । विदथेषु । इन्द्रम् । यः । वायुना । जयति ।
गोऽमतीषु । प्र । धृष्णुऽया । नयति । वस्यः । अच्छ ॥ ४ ॥

यइन्द्रः स्थूरस्य स्थूलस्य बृहतोमहतः रायोधनस्य ईशे ईष्टे विदथेषुयज्ञेषु विदथइति यज्ञनामैतत् तमु तमिन्द्रमेववयंस्तोतारःस्तवाम यइन्द्रः वायुनाप्राणरूपेण बलेन गोमतीषु सेनासुजयतिशत्रून्विजयते धृष्णुया धृष्णुः प्रगल्भः यइन्द्रः स्तोतॄन्वस्यः वसीयः श्रेष्ठंपश्वादिधनम् अच्छाभिप्रणयति प्रापयति तमेवेन्द्रंस्तवामेतिपूर्वेणसंबन्धः ॥ ४ ॥

अथपञ्चमी—

उपयोनमोनमसिस्तभायन्नियर्तिवाचंजनयन्यजध्यै ।
ऋञ्जसानःपुरुवारउक्थैरेन्द्रंकृण्वीतसदनेषुहोता ॥ ५ ॥ ५ ॥

उप । यः । नमः । नमसि । स्तभायन् । इयर्ति । वाचम् ।
जनयन् । यजध्यै । ऋञ्जसानः । पुरुऽवारः । उक्थैः । आ ।
इन्द्रम् । कृण्वीत । सदनेषु । होता ॥ ५ ॥ ५ ॥

उपस्तमायन् लोकानुपस्तम्भयन् यजध्यै यष्टुंवाचंगर्जितलक्षणांवाचं जनयन्प्रजनयन् ऋञ्ज-सानः प्रसाध्यमानः ऋञ्जतिःप्रसाधनकर्मेतियास्कः । उक्थैःशस्त्रलक्षणैःस्तोत्रैःपुरुवारः बहुभिःसंभजनीयःयइन्द्रः नक्षसि नमइत्यन्ननामैतत् यजमानैर्दत्तेहविषिनमः यजमानेभ्योयज्ञादिसाधनमन्नम्इयर्तिप्रेरयति इन्द्रोहविषातृप्तःसन् वृष्टिद्वाराअन्नंप्रयच्छति तेनचान्नेनपुनर्यज्ञःप्रजायतइत्यर्थः अस्मदीयोहोतासदनेषुयज्ञगृहेषुतमिन्द्रमाकृण्वीत अभिमुखीकरोतु ॥ ५ ॥

॥ इतितृतीयस्यषष्ठेपञ्चमोवर्गः ॥ ५ ॥

अथषष्ठी–

**धिषायदींधिषण्यन्तःसरण्यान्त्सदन्तोअद्रिमौशिजस्यगोहे ।**
**आदुरोषाःपास्त्यस्यहोतायोनोमहान्त्संवरणेषुवह्निः ॥ ६ ॥**

धिषा । यदि । धिषण्यन्तः । सरण्यान् । सदन्तः । अद्रिम् । औशिजस्य । गोहे । आ । दुरोषाः । पास्त्यस्य । होता । यः । नः । महान् । सम्ऽवरणेषु । वह्निः ॥ ६ ॥

धिषण्यन्तः धिषणामिन्द्रविषयांस्तुतिमिच्छन्तः औशिजस्य उशिजःकामयमानाऋत्विजः तेषांसंबन्धी औशिजोयजमानः तस्य गोहे गृहेसदन्तोनिषीदन्तोजनाः अद्रिम् आदृणातिशत्रूनित्यद्रिरिन्द्रः तमिन्द्रं धिषास्तुत्या यदि यदा सरण्यात् उपागच्छेयुः तदा सइन्द्रः आयातु नोस्माकंसंवरणेषुशत्रुसंबन्धिषुनिरोधेषुवह्निर्वोढापास्त्यस्यपस्त्येगृहेवसतायजमानेनहोता आह्वातादुरोषाःदुस्तरक्रोधःयइन्द्रः महान् प्रभूतोभवति सआयात्विति ॥ ६ ॥

अथसप्तमी–

**सत्रायदींभार्वरस्यवृष्णःसिषक्तिशुष्मःस्तुवतेभराय ।**
**गुहायदीमौशिजस्यगोहेप्रयद्धियेप्रायसेमदाय ॥ ७ ॥**

सत्रा । यत् । ईम् । भार्वरस्य । वृष्णः । सिसक्ति । शुष्मः । स्तुवते । भराय । गुहा । यत् । ईम् । औशिजस्य । गोहे । प्र । यत् । धिये । प्र । अयसे । मदाय ॥ ७ ॥

१ नि० ६. २१. ।

भार्वरस्य भर्वरोजगद्भर्ताप्रजापतिस्तस्यपुत्रोभार्वरः तस्यवृष्णः कामानांवर्षितुः इन्द्रस्यसंबन्धीईमेषः शुष्मोबलंस्तुवतेस्तोत्रंकुर्वन्तंयजमानंसिषक्ति सेवतइतियत् सत्रासत्यमेवईमेतद्बलम्औशिजस्ययजमानस्यभरायभर्तुं गुहा गुहायां गुहारूपेहृदयेप्रभवतीतियत् तत् सत्यं यजमानस्य गोहेगृहेधियेकर्मणेप्रभवतीतियत्तत्सत्यम् अयसे गमनाय कामानांप्राप्तये मदाय हर्षाय तत्र यद्बलंप्रभवतितत्सत्यम् इन्द्रस्यबलंयजमानंसर्वदापालयतीत्यर्थः ॥ ७ ॥

अथाष्टमी–

विर्यद्वरांसिपर्वतस्यवृण्वेपर्योभिर्जिन्वेअपांजवांसि ।
विदद्गौरस्यंगवयस्यगोहेयदीवाजायसुध्यो३ंवहन्ति ॥ ८ ॥

वि । यत् । वरांसि । पर्वतस्य । वृण्वे । पर्यःऽभिः । जिन्वे ।
अपाम् । जवांसि । विदत् । गौरस्य । गवयस्य ।
गोहे । यदि । वाजाय । सुऽध्यः । वहन्ति ॥ ८ ॥

इन्द्रः पर्वतस्यमेघस्यवरांसिद्वाराणिविवृण्वे विवृतानिकृतवानितियत् अपामुदकानांजवांसि वेगान् पयोभिर्जलैः जिन्वे प्याययतीतियत् यदियदासुध्यःशोभनकर्माणोयजमानाः वाजायान्नायवहन्तिइन्द्रंप्राप्नुवन्ति तदा गोहेगृहे गौरस्य गौरमृगस्य गवयस्य गवयमृगस्यच विदत् तौद्वौपशूलभतइतियत् तत्सर्वंसत्रेतिपूर्वेणसंबन्धः ॥ ८ ॥

अभ्युदयेष्टाविन्द्रस्यप्रदातुःभद्रातेहस्तेतियाज्या सूत्रितंच–दीर्घस्तेअस्त्वङ्कुशोभद्रातेहस्तासुकृतोतपाणीइति ।

सूक्तेनवमी–

भद्रातेहस्तासुकृतोतपाणीप्रयन्तारास्तुवतेराधइन्द्र ।
कातेनिषत्तिःकिमुनोममत्सिकिंनोदुदुहर्षसेदातवाउ ॥ ९ ॥

भद्रा । ते । हस्ता । सुऽकृता । उत । पाणी इति । प्रऽयन्तारा । स्तुवते ।
राधः । इन्द्र । का । ते । निःऽसत्तिः । किम् । ऊँ इति । नो इति ।
ममत्सि । किम् । न । उत्ऽउत् । ऊँ इति । हर्षसे । दातवै । ऊँ इति ॥ ९ ॥

हेइन्द्र ते त्वदीयौ भद्रा भद्रौ कल्याणौ हस्ता हस्तौ सुकृता सुकृतौ शोभनकर्माणौ भवतः उतापिच पाणी त्वदीयौहस्तौ स्तुवतेस्तोत्रेयजमानायराधोधनंप्रयन्तारा प्रयन्तारौ प्रदातारौभवतः हेइन्द्र तेत्वदीयानिषत्तिर्निसदनंस्थितिः का त्वम् अस्मान्किमुकिमर्थंनोममत्सि नमादयसि किमुदुकिमर्थमेवदातवै अस्माकंधनं दातुंनहर्षसे हृष्टोनभवसि उःपूरणः ॥ ९ ॥

ऐन्द्रस्यवार्त्रघ्नस्यपशोरेवावस्वइतिहविषोयाज्या सूत्रितंच—एवावस्वइन्द्रःसत्यःसम्राड्यद्वाग्वदन्त्यविचेतनानीति ।

सैषादशमी—

एवावस्वइन्द्रःसत्यःसम्राड्हन्तावृत्रंवरिवःपूरवेकः ।
पुरुष्टुतक्रत्वानःशग्धिरायोभक्षीयतेवसोदैव्यस्य ॥ १० ॥

एव । वस्वः । इन्द्रः । सत्यः । सम्ऽराट् । हन्ता । वृत्रम् ।
वरिवः । पूरवे । करितिकः । पुरुऽस्तुत । क्रत्वा । नः । शग्धि ।
रायः । भक्षीय । ते । अवसः । दैव्यस्य ॥ १० ॥

एवैवमुक्तप्रकारेणस्तूयमानःसत्यः सत्यवान् वस्वोधनस्यसम्राट्ईश्वरः वृत्रं वृत्रनामानमसुरं हन्ता हिंसिता इन्द्रः पूरवे मनुष्याय यजमानायवरिवोधनंकः करोति ददातीत्यर्थः क्रत्वा कर्मणा स्तुतिहेतुना हेपुरुष्टुत बहुभिर्यजमानैःस्तुतेन्द्र त्वंनोस्मभ्यंरायोधनानिशग्धि देहि ते त्वयादीयमानस्यदैव्यस्यदेवसंबन्धिनः अवसोन्नस्य कर्मणिषष्ठी अन्नंभक्षीय अहंभजेयम् ॥ १० ॥

अथैकादशी—

नूष्टुतइन्द्रनूगृणानइषंजरित्रेनद्योऽनपीपेः ।
अकारितेहरिवोब्रह्मनव्यंधियास्यामरथ्यःसदासाः ॥११॥६॥

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न ।
पीपेरितिपीपेः । अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया ।
स्याम । रथ्यः । सदाऽसाः ॥ ११ ॥ ६ ॥

पूर्वंव्याख्याता ॥ ११ ॥

॥ इतितृतीयस्यषष्ठेषष्ठोवर्गः ॥ ६ ॥

॥ इतिचतुर्थेमण्डलेद्वितीयोनुवाकः ॥ २ ॥

तृतीयेनुवाकेएकादशसूक्तानि तत्रयन्नइन्द्रइत्येकादशर्चंप्रथमंसूक्तं वामदेवस्यार्षंत्रैष्टुभमैन्द्रं यन्नइत्यनुक्रमणिका पृष्ठ्याभिप्लवषडहयोःप्रथमेहनिमाध्यन्दिनसवनेमैत्रावरुणशस्त्रेद्वितीयमिदंसंपातसूक्तं सूत्रितंच–एवात्वामिन्द्रयन्नइन्द्रइति ।

तत्रप्रथमा–

यन्नइन्द्रोजुजुषेयच्चवष्टितन्नोमहान्करतिशुष्म्याचित् ।
ब्रह्मस्तोमंमघवासोमंमुक्थायोअश्मानंशवसाबिभ्रदेति ॥ १ ॥

यत् । नः । इन्द्रः । जुजुषे । यत् । च । वष्टि । तत् । नः । महान् । करति । शुष्मी । आ । चित् । ब्रह्म । स्तोमम् । मघऽवा । सोमम् । उक्था । यः । अश्मानम् । शवसा । बिभ्रत् । एति ॥ १ ॥

इन्द्रः नोस्मदीयंयद्धविर्लक्षणान्नादिकंजुजुषे सेवते यच्च हविरादिकंवष्टिकामयते महान्प्रभूतः शुष्मीबलवानिन्द्रः चिदितिचार्थे ब्रह्मचित् हविर्लक्षणपुरोडाशादिकमन्नंच स्तोमंस्तोत्रसमूहंच सोममभिषुतंसोमंच उक्था उक्थानिशस्त्राणिचेत्येवम्भूतंतद्ब्रह्मादिचतुष्टयम् आकरति आकरोतु स्वीकरोतु मघवा धनवान् अत्रअश्मशब्दोवज्रवाची अश्मानंवज्रंबिभ्रत् धारयन् शवसाबलेनयुक्तो यइन्द्रः एतिआगच्छति सइन्द्रःस्वीकरोत्वितिपूर्वेणसंबन्धः ॥ १ ॥

अथद्वितीया–

वृषावृषन्धिंचतुरश्रिमस्यन्नुग्रोबाहुभ्यांनृतमःशचीवान् ।
श्रियेपरुष्णीमुषमाणऊर्णांयस्याःपर्वाणिसख्यायविव्ये ॥ २ ॥

वृषा । वृषन्धिम् । चतुःऽअश्रिम् । अस्यन् । उग्रः । बाहुऽभ्याम् । नृऽतमः । शचीऽवान् । श्रिये । परुष्णीम् । उषमाणः । ऊर्णाम् । यस्याः । पर्वाणि । सख्याय । विव्ये ॥ २ ॥

वृषा कामानांवर्षिता वृषन्धिं मेघभेदनद्वारेणवर्षंकुर्वन्तं चतुरश्रिंचतसृभिरश्रिभिर्धाराभिरुपेतं वज्रंबाहुभ्यामस्यन् शत्रुषुप्रक्षिपन् उग्रउद्गूर्णबलः नृतमोनेतृतमः शचीवान्कर्मवानिन्द्रः ऊर्णामाच्छादिकां परुष्णीं पर्ववतींनदींश्रिये आश्रयणार्थम् उषमाणः सेवमानोभवति यस्याः नद्याः पर्वाणिभिन्नान्देशान् सख्यायसखिकर्मणेविव्ये संवृतवान् ॥ २ ॥

अथतृतीया–

योदेवोदेवतंमोजायंमानोमहोवाजेंभिर्महद्भिश्चशुष्मैः ।
दधानोवज्रंबाह्वोरुशन्तंद्यामर्मेनरेजयत्प्रभूम ॥ ३ ॥

यः । देवः । देवऽतमः । जायमानः । महः । वाजेभिः । महत्ऽभिः ।
च । शुष्मैः । दधानः । वज्रम् । बाह्वोः । उशन्तम् । द्याम् ।
अमेन । रेजयत् । प्र । भूम ॥ ३ ॥

देवोदीप्यमानः देवतमोदातृतमः जायमानः उत्पद्यमानः यइन्द्रः महोमहद्भिर्वाजेभिरन्नैर्महद्भिः शुष्मैर्बलैश्चयुक्तोभवादितिशेषः सइन्द्रः बाह्वोर्हस्तयोः उशन्तंकामयमानंवज्रंदधानोधारयन् अमेनबलेनद्यांद्युलोकंचभूम भूलोकंच प्ररेजयत् प्रकम्पयतिस्म ॥ ३ ॥

अथचतुर्थी–

विश्वारोधांसिप्रवतश्चपूर्वीर्द्यौर्ऋष्वाज्जनिमन्रेजतक्षाः ।
आमातराभरतिशुष्म्यागोर्नृवत्परिज्मन्नोनुवन्तवाताः ॥ ४ ॥

विश्वा । रोधांसि । प्रऽवतः । च । पूर्वीः । द्यौः । ऋष्वात् ।
जनिमन् । रेजत । क्षाः । आ । मातरा । भरति । शुष्मी । आ ।
गोः । नृऽवत् । परिऽज्मन् । नोनुवन्त । वाताः ॥ ४ ॥

विश्वा विश्वानि रोधांसि रोधःशब्देनउन्नतप्रदेशाउच्यन्ते उन्नतप्रदेशाः पर्वताश्च पूर्वीः पूर्व्यः बहूनि प्रवतः प्रवणानि समुद्राश्चेत्यर्थः द्यौर्द्युलोकश्च क्षाः पृथिवीच जनिमन्निन्द्रस्यजन्मनिसति ऋष्वात् महतोस्मादिन्द्रात् रेजत अरेजन्त अकन्तन्त किंच शुष्मीबलवानिन्द्रः गोर्गंतुःसूर्यस्यमातरामातरौमातापितृभूतौद्यावापृथिव्यौच आइतिचार्थे आभरति आसमन्ताद्बिभर्ति नृवन्मनुष्याइव वाताः इन्द्रेण प्रेरितावायवश्च परिज्मन्नन्तरिक्षेनोनुवन्तः शब्दायन्ते ॥ ४ ॥

अथपञ्चमी–

तातूतइन्द्रमहतोमहानिविश्वेष्वित्सवनेषुवाच्यां ।
यच्छूरधृष्णोधृषतादधृष्वानहिंवज्रेणशवसाविवेषीः ॥ ५ ॥ ७ ॥

ता । तु । ते । इन्द्र । महतः । महानि । विश्वेषु । इत् । सवनेषु ।
प्रऽवाच्या । यत् । शूर । धृष्णो इति । धृषता । दधृष्वान् ।
अहिम् । वज्रेण । शवसा । अविवेषीः ॥ ५ ॥ ७ ॥

हेइन्द्र महतःप्रभूतस्यतेत्वदीयानि ता तानि कर्माणि तु क्षिप्रं महानि महान्तिभवन्ति कीदृशानितानि विश्वेष्वित् सर्वेष्वेवसवनेषुप्रातःसवनादिकर्मसु त्वदीयानिप्रवाच्या प्रवाच्यानि स्तोतृभिःप्रकर्षेणवक्तुंयोग्यानिस्तुत्यानीतियत् हेधृष्णो प्रगल्भ हेशूर विक्रान्तेन्द्र दधृष्वान् पालकत्वेनलोकान्धारयन् शवसाबलेनयुक्तस्त्वंधृषताधर्षकेणवज्रेण अहिं वृत्रमसुरम्अविवेषीः अवधीरितियत् एतदादीनिकर्माणिमहान्तीतिपूर्वेणसंबन्धः । अत्र अविवेषीरितिवधकर्मा ॥ ५ ॥

॥ इतितृतीयस्यषष्ठेसप्तमोवर्गः ॥ ७ ॥

अथषष्ठी—

तातूतेसत्यातुविनृम्णविश्वाप्रधेनवःसिस्रतेवृष्णऊध्नः ।
अधाहत्वद्वृषमणोभियानाःप्रसिन्धवोजवसाचक्रमन्त ॥ ६ ॥

ता । तु । ते । सत्या । तुविऽनृम्ण । विश्वा । प्र । धेनवः । सिस्रते ।
वृष्णः । ऊध्नः । अध । ह । त्वत् । वृषऽमनः । भियानाः ।
प्र । सिन्धवः । जवसा । चक्रमन्त ॥ ६ ॥

हेतुविनृम्ण अधिकबलेन्द्र तेत्वदीयानि विश्वा विश्वानि ता तानि कर्माणि तु क्षिप्रं सत्या सत्यानिभवन्ति हेइन्द्र वृष्णःकामानांवर्षितुस्त्वत्तोभयात् धेनवोगावः ऊध्नः स्वकीयादापीनात्प्रसिस्रते प्रकर्षेणक्षीरंक्षरन्ति अधापिच हेवृषमनः कामानांवर्षणपरमनस्केन्द्र सिन्धवो नद्यः त्वत्त्वत्तोभियानाः बिभ्यत्यःसत्यः जवसावेगेनप्रचक्रमन्तह प्रकर्षेणगच्छन्तिखलु ॥ ६ ॥

अथसप्तमी—

अत्राहतेहरिवस्ताउदेवीरवोभिरिन्द्रस्तवन्तस्वसारः ।
यत्सीमनुप्रमुचोबद्बधानादीर्घामनुप्रसितिंस्यन्दयध्यै ॥ ७ ॥

अत्रं । अहं । ते । हुरिऽवः । ताः । ऊँ इति । देवीः । अवःऽभिः ।
इन्द्र । स्तवन्त । स्वसारः । यत् । सीम् । अनु । प्र । मुचः ।
बद्धधानाः । दीर्घाम् । अनु । प्रऽसितिम् । स्यन्दयध्यै ॥ ७ ॥

हेइन्द्र त्वं यद्यदाबद्धधानाः वृत्रेणवध्यमानाः सीमनु एनानदीरुद्दिश्य दीर्घामत्यधिकां प्रसितिं बन्धनम् अनुस्यन्दयध्यै यथाकामंस्यन्दितुंप्रमुचः प्रकर्षेणामोचयः हेहरिवः हरिवन्निन्द्र अत्राह अत्रैवमोचनवेलायां ताउ ताःप्रसिद्धाएव देवीःदेव्यः द्योतमानाः स्वसारोनद्यः अत्रस्वसृशब्दोनदीवाची अत्रोमिस्त्वत्कृतैरक्षणैः तेत्वांस्तवन्त स्तावयन्ति नदीपूराणादिभिःकर्मभिः जनाइन्द्रंस्तुवन्तीत्यर्थः ॥ ७ ॥

अथाष्टमी-

**पिपीळेअंशुर्मद्योनसिन्धुरात्वाशमींशशमानस्यंशक्तिः ।**
**अस्मद्र्यंक्शुशुचानस्ययम्याआशुर्नरश्मिंतुव्योजसंगोः ॥८॥**

पिपीळे । अंशुः । मद्यः । न । सिन्धुः । आ । त्वा । शमीं ।
शशमानस्यं । शक्तिः । अस्मद्र्यक् । शुशुचानस्यं । यम्याः ।
आशुः । न । रश्मिम् । तुविऽओजसम् । गोः ॥ ८ ॥

हेइन्द्र मद्योमादयिता अंशुः सोमः पिपीळेऽपीड्यत अभ्यसूयतइत्यर्थः नेतिसंप्रत्यर्थे नइदानींसिन्धुःस्यन्दमानः सोमः त्वा त्वाम् आयम्याः आयच्छतु शुशुचानस्यदीप्यमानस्यशशमानस्यस्तुवतः संबन्धि अस्मद्र्यक् अस्मदभिमुखं शमी शमनं शक्तिः स्तुतिकर्मच आयच्छतु तत्रदृष्टान्तः—आशुःशीघ्रगामीयन्तागोर्गन्तुःअश्वस्यतुव्योजसं बहुबलंदृढमित्यर्थः रश्मिन अश्वबन्धनरज्जुमिव तद्वत् ॥ ८ ॥

अथनवमी-

**अस्मेवर्षिष्ठाकृणुहिज्येष्ठानृम्णानिसत्रासहुरेसहांसि ।**
**अस्मभ्यंवृत्रासुहनानिरन्धिजहिवधर्वनुषोमर्त्यस्य ॥ ९ ॥**

अस्मे इतिं । वर्षिष्ठा । कृणुहि । ज्येष्ठा । नृम्णानि । सत्रा ।
सहुरे । सहांसि । अस्मभ्यम् । वृत्रा । सुऽहनानि । रन्धि । जहि ।
वधः । वनुषः । मर्त्यस्य ॥ ९ ॥

हेसहुरे सहनशीलेन्द्र त्वंसत्रा सर्वदा सहांसि शत्रूनभिभावुकानिवर्षिष्ठा वर्षिष्ठानि प्रवृद्धानि ज्येष्ठा ज्येष्ठानि प्रशस्तानिनृम्णानिबलानि अस्मे अस्मभ्यं कृणुहि कुरु हेइन्द्र त्वम् अस्मभ्यंसुहनानि शोभनवधानि वृत्रा वृत्राणि शत्रूत्रन्धि रन्धय वशंनय किंच वनुषोहिंसकस्यमर्त्यस्यमरणशीलस्यशत्रोःसंबन्धिवधःहननसाधनमायुधं जहि नाशय ॥ ९ ॥

अथदशमी–

अस्माकमित्सुशृणुहित्वमिन्द्रास्मभ्यंचित्राँउपमाहिवाजान् ।
अस्मभ्यंविश्वाइषणःपुरंधीरस्माकंसुमघवन्बोधिगोदाः ॥१०॥

अस्माकम् । इत् । सु । शृणुहि । त्वम् । इन्द्र । अस्मभ्यम् । चित्रान् । उप । माहि । वाजान् । अस्मभ्यम् । विश्वाः । इषणः । पुरम्ऽधीः । अस्माकम् । सु । मघऽवन् । बोधि । गोऽदाः ॥ १० ॥

हेइन्द्र त्वम् अस्माकमित् अस्मदीयाएवस्तुतीः सु सुष्ठु शृणुहि तथा हेइन्द्र त्वम् चित्रान् चायनीयानिवाजानन्नानि अस्मभ्यम् उपमाहि देहि किंच अस्यभ्यम् विश्वाःसर्वाःपुरन्धीर्बुद्धीः इषणः प्रेरय अपिच हेमघवन् धनवन्निन्द्र अस्माकं गोदाः गवांदाता सु सुष्ठु बोधि भव ॥ १० ॥

अथैकादशी–

नूष्टुतइन्द्रनूगृणानइषंजरित्रेनद्यो३नपीपेः ।
अकारितेहरिवोब्रह्मनव्यंधियास्यामरथ्यःसदासाः ॥११॥८॥

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरितिपीपेः । अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥ ११ ॥ ८ ॥

पूर्वव्याख्याता ॥ ११ ॥

॥ इतितृतीयस्यषष्ठेष्टमोवर्गः ॥ ८ ॥

कथामहामित्येकादशर्चंद्वितीयंसूक्तम् वामदेवस्यार्षंत्रैष्टुभमैन्द्रम् ऋतस्यहीत्याद्यास्तिस्रः पक्षेऋतदेवताकावा तथाचानुक्रान्तं–कथोपान्त्यास्तिस्रऋतदेव्योवेति । आभिप्लविकेहनिदशरात्रे

प्रथमेहनिमाध्यन्दिनसवनेमैत्रावरुणशस्त्रे अहीनसूक्तस्यस्थानेइदंतृतीयंसंपातसूक्तम् सूत्रितंचकथा-महामिन्द्रःपूर्भिद्यएकइदितिति । महाव्रतेनिष्केवल्येएतत्तथैवपञ्चमारण्यकेशौनकेनसूत्रितं—कथामहा-मवृधत्कस्यहोतुरितिसंपातइति ।

तत्रप्रथमा—

कथामहामवृधत्कस्यहोतुर्यज्ञंजुषाणोअभिसोममूधः ।
पिबन्नुशानोजुषमाणोअन्धोववक्षऋष्वःशुचतेधनाय ॥ १ ॥

कथा । महाम् । अवृधत् । कस्य । होतुः । यज्ञम् । जुषाणः ।
अभि । सोमम् । ऊधः । पिबन् । उशानः । जुषमाणः । अन्धः ।
ववक्षे । ऋष्वः । शुचते । धनाय ॥ १ ॥

महां महान्तं गुणैःप्रवृद्धमिन्द्रं कथा कथंकेनप्रकारेण अवृधत् वर्धयेत् अस्मत्प्रेरितास्तु-तिरितिशेषः तस्यमहिम्नोतिमहत्त्वादितिभावः सएवेन्द्रः होतुः होमनिष्पादकस्यकस्ययजमान-स्ययज्ञंयागंजुषाणः प्रीयमाणःसन् अभिगच्छेदितिशेषः उपसर्गश्रुतेरुचितक्रियाध्याहारः किंच ऊधः उद्धतमतिप्रवृद्धं सोममन्धः सोमलक्षणमन्नंपिबन्नास्वादयन् उशानस्तदेवान्नंकामय-मानः जुषमाणः सेवमानश्च ऋष्वोमहानिन्द्रः शुचतेप्रदीप्तायधनायहिरण्यादिलक्षणाय उक्तलक्षणंधनंकस्मैयजमानायदातुंववक्षेवहति पीतमेवान्नंजठरेधारयति अनेनवाक्यद्वयेनेन्द्रस्या-चिन्त्यचरितत्वंख्यापितंभवति ॥ १ ॥

अथद्वितीया—

कोअस्यवीरःसधमादमापसमानंशसुमतिभिःकोअस्य ।
कदस्यचित्रंचिकितेकदूतीवृधेभुवच्छशमानस्ययज्योः ॥ २ ॥

कः । अस्य । वीरः । सधऽमादम् । आप । सम् । आनंश ।
सुमतिऽभिः । कः । अस्य । कत् । अस्य । चित्रम् । चिकिते ।
कत् । ऊती । वृधे । भुवत् । शशमानस्य । यज्योः ॥ २ ॥

अस्येन्द्रस्यसंबन्धिनंसधमादम् सहमाद्यन्तेअस्मिन्नितिसधमादःसंग्रामः तं सहसोमपानं वा वीरः स्तोत्राणाममित्राणांवावारयिताकःपुमानाप प्राप्नोति कश्चेन्द्रस्यसुमतिभिः शोभनाभिरनुग्रहबुद्धिभिः समानंश संगच्छते कत्कदावास्येन्द्रस्यचित्रंचायनीयंधनंचिकिते प्रज्ञायते तत्प्रदानसमयंनकोपिजानातीत्यर्थः कत्कदावा शशमानस्यस्तुवतः यज्योर्यष्टुर्यजमानस्यवृधेवर्धनाय ऊती ऊत्यारक्षया भुवत् भवेत् ॥ २ ॥

अथतृतीया–

**कथाशृणोतिहूयमानमिन्द्रःकथाशृण्वन्नवसामस्यवेद ।**
**काअस्यपूर्वीरुपमातयोहकथैनमाहुः पपुरिंजरित्रे ॥ ३ ॥**

कथा । शृणोति । हूयमानम् । इन्द्रः । कथा । शृण्वन् ।
अवसाम् । अस्य । वेद । काः । अस्य । पूर्वीः । उपऽमातयः ।
ह । कथा । एनम् । आहुः । पपुरिम् । जरित्रे ॥ ३ ॥

इन्द्रः परमैश्वर्ययुक्तः हूयमानम् आह्वयन्तं स्तोतारं कथा कथंशृणोति स्तोत्राणिशृण्वन् अस्यस्तोतुःसंबन्धीनि अवसांरक्षणानिकथा कथंच वेद वेत्ति पूर्वीःपुरातनानिअस्येन्द्रस्यसंबन्धीनि उपमातयोदानानि काहकानि सन्तीतिशेषः तानिदानानि जरित्रे स्तोतुः संबान्धिनां कामानांपपुरिं पूरयितारमेनमिन्द्रंकथाकथंचाहुः वदन्ति ॥ ३ ॥

अथचतुर्थी–

**कथासबाधःशशमानोअस्यनशदभिद्रविणंदीध्यानः ।**
**देवोभुवन्नवेदामऋतानांनमोजगृभ्वाँअभियज्जुजोषत् ॥ ४ ॥**

कथा । सऽबाधः । शशमानः । अस्य । नशत् । अभि ।
द्रविणम् । दीध्यानः । देवः । भुवत् । नवेदाः । मे । ऋतानाम् ।
नमः । जगृभ्वान् । अभि । यत् । जुजोषत् ॥ ४ ॥

सबाधः सपत्नानांपीडासहितः शशमानः इन्द्रविषयांस्तुतिंकुर्वन् दीध्यानः कर्मभिर्दीप्यमानोयजमानः अस्येन्द्रस्यसंबन्धि द्रविणं पश्वादिधनं कथा कथमभिनशत् अभिप्राप्नोति

नमः हविर्लक्षणमन्नंजगृभ्वान्गृहीतवानिन्द्रः यद्यदाभिजुजोषत् मामभिसेवेत तदादेवोदीप्यमानइन्द्रः मेमदीयानामृतानांस्तोत्राणांनवेदाः अतिशयेनज्ञाताभुवत् भवेत् अत्रनिपातस्थोनकारोऽतिशयवाची ॥ ४ ॥

अथपञ्चमी–

कुथाकदुस्याउषसोव्युष्टौदेवोमर्तस्यसुख्यंजुजोष ।
कुथाकदस्यसुख्यंसखिभ्योयेअस्मिन्कामंसुयुजंततुस्रे ।५।१।

कुथा । कत् । अस्याः । उषसः । विऽउष्टौ । देवः । मर्तस्य ।
सुख्यम् । जुजोष । कुथा । कत् । अस्य । सुख्यम् । सखिऽभ्यः ।
ये । अस्मिन् । कामम् । सुऽयुजम् । ततुस्रे ॥ ५ ॥ १ ॥

देवोद्योतमानइन्द्रः अस्याउषसोव्युष्टौप्रभातेमर्तस्यमनुष्यस्यस्तोतुः संबन्धिसख्यंसखिकर्मकथाकथंकेनप्रकारेणकत्कदाजुजोष सेवेत येस्तोतारः अस्मिन्निन्द्रेसुयुजं सुष्ठुप्रयुज्यमानं कामंकमनीयंहविःस्तोत्रंच ततस्रे वितेनिरे अस्येन्द्रस्यसख्यं सखिकर्मसखिभ्यःस्तोतृभ्यःकथा कथं कत्कदाभवेदितिशेषः ॥ ५ ॥

॥ इतितृतीयस्यषष्ठेनवमोवर्गः ॥ ९ ॥

अथषष्ठी–

किमादमंत्रंसुख्यंसखिभ्यःकुदानुतेभ्रात्रंप्रब्रवाम ।
श्रियेसुदृशोवपुरस्यसर्गाःस्वर्णचित्रतममिषुआगोः ॥ ६ ॥

किम् । आत् । अमत्रम् । सुख्यम् । सखिऽभ्यः । कुदा । नु । ते ।
भ्रात्रम् । प्र । ब्रवाम । श्रिये । सुऽदृशः । वपुः । अस्य ।
सर्गाः । स्वः । न । चित्रऽतमम् । इषे । आ । गोः ॥ ६ ॥

हेइन्द्र वयं यजमानाः तेत्वदीयम् अमत्रं शत्रूनभिभावुकंसख्यं सखिकर्म सखिभ्यःस्तोतृभ्यः किमात् किंस्वित् प्रब्रवाम प्रकर्षेणवदेम तेत्वदीयंभ्रात्रं भ्रातृकर्मच कदानु कदाखलु प्रब्रवाम सुदृशः शोभनदर्शनस्यास्येन्द्रस्यसंबन्धिनः सर्गाः उद्योगाः श्रिये सर्वेषांस्तोतॄणांश्रेयसे भवन्तीतिशेषः स्वर्ण सूर्योयथादर्शनीयतमः तथागोर्गन्तुरिन्द्रस्यचित्रतमंदर्शनीयतमं वपुः शरीरम् एषे आसमन्तात्सर्वैरिष्यते ॥ ६ ॥

अथसप्तमी–

द्रुहंजिघांसन्ध्वरसमनिन्द्रान्तेतिक्तेतिग्मातुजसेअनीका ॥
ऋणाचिद्यत्रंऋणयानंउग्रोदूरेआज्ञाताउषसोबबाधे ॥ ७ ॥

द्रुह्म् । जिघांसन् । ध्वरसम् । अनिन्द्राम् । तेतिक्ते । तिग्मा ।
तुजसे । अनीका । ऋणा । चित् । यत्र । ऋणऽयाः । नः ।
उग्रः । दूरे । अज्ञाताः । उषसः । बबाधे ॥ ७ ॥

अयमिन्द्रः द्रुहं द्रोहंकुर्वतीं ध्वरसं हिंसिकाम् अनिन्द्रामिन्द्रमजानतींराक्षसींजिघांसन् हन्तुमिच्छन् तिग्मा तिग्मानि पूर्वमेवतीक्ष्णानि अनीका अनीकान्यायुधानि तुजसे तद्वधाय तेतिक्ते अत्यर्थंतीक्ष्णीकरोति यत्रयासूषःसु तदुपलक्षितेष्वहःसु ऋणाचित् ऋणान्यपि नोस्मान्बाधन्तइतिशेषः ताउषसश्च उग्रउद्गूर्णबलः ऋणयाः ऋणस्यहन्तेन्द्रः यातिर्वधकर्मा दूरेअज्ञाताः अननुभूताःसतीर्बबाधेअपीडयत् ॥ ७ ॥

ऋतपेयनाम्न्येकाहेमरुत्वतीयनिष्केवल्यशस्त्रयोर्निविद्धानात्पुरस्तात्ऋतस्यहीत्येतदादिकेद्वेऋचौक्रमेणशंसनीये सूत्रितंच–ऋतस्याहिशुरुधःसन्तिपूर्वीरितिसूक्तमुखीयेइति ।

सूक्तेष्टमी–

ऋतस्याहशुरुधःसन्तिपूर्वीर्ऋतस्यधीतिर्वृजिनानिहन्ति ।
ऋतस्यश्लोकोबधिराततर्दकर्णाबुधानःशुचमानआयोः ॥ ८ ॥

ऋतस्य । हि । शुरुधः । सन्ति । पूर्वीः । ऋतस्य । धीतिः ।
वृजिनानि । हन्ति । ऋतस्य । श्लोकः । बधिरा । ततर्द ।
कर्णा । बुधानः । शुचमानः । आयोः ॥ ८ ॥

अत्र ऋतशब्देनेन्द्रोवादित्योवासत्यंवायज्ञोवाउच्यते ऋतस्य ऋतदेवस्य संबन्धिन्यःपूर्वीः बह्व्यःशुरुधः आपः सन्तिहि भवन्तिखलु ऋतस्य ऋतदेवस्यसंबन्धिनीधीतिःप्रज्ञा तद्विषयास्तुतिर्वा वृजिनानिवर्जनीयानिपापानि हन्ति हिनस्ति ऋतस्य ऋतदेवस्यसंबन्धीश्लोकः स्तुतिरूपावाक् आयोर्गन्तुर्मनुष्यस्यसंबन्धिनौ बधिरा बधिरौ कर्णा कर्णौ ततर्द तृणत्ति कीदृशः श्लोकःबुधानोबुध्यमानः शुचमानोदीप्यमानः ॥ ८ ॥

अथनवमी—

ऋतस्यंदृळ्हाधरुणानिसन्तिपुरूणिचन्द्रावपुंषेवपूंषि ॥
ऋतेनदीर्घमिषणन्तपृक्षंऋतेनगावंऋतमाविवेशुः ॥ ९ ॥

ऋतस्य । दृळ्हा । धरुणानि । सन्ति । पुरूणि । चन्द्रा । वपुंषे । वपूंषि । ऋतेन । दीर्घम् । इषणन्त । पृक्षः । ऋतेन । गावः । ऋतम् । आ । विवेशुः ॥ ९ ॥

वपुषेवपुष्मतः षष्ठ्यर्थेचतुर्थी ऋतस्य ऋतदेवस्यसंबन्धीनिदृळ्हा दृढानि धरुणानि धारकाणि पुरूणि बहूनि चन्द्रा चन्द्राणिआह्लादकानि वपूंषि रूपाणि सन्ति भवन्ति ऋतेनऋतदेवेन दीर्घमत्याधिकं पृक्षः अन्नम् इषणन्त स्तोतारइच्छन्ति ऋतेनऋतदेवेनगावोधेनवःऋतंयज्ञंदक्षिणात्वेनआविवेशुः प्रविशन्ति यद्वा गावोरश्मयः ऋतमुदकमाविवेशुः ॥ ९ ॥

अथदशमी—

ऋतंयेमानऋतमिद्वनोत्यृतस्यशुष्मस्तुरयाउगव्युः ।
ऋतायपृथ्वीबहुलेगभीरेऋतायधेनूपरमेदुहाते ॥ १० ॥

ऋतम् । येमानः । ऋतम् । इत् । वनोति । ऋतस्य । शुष्मः । तुरऽयाः । ऊँ इति । गव्युः । ऋताय । पृथ्वी इति । बहुले इति । गभीरे इति । ऋताय । धेनू इति । परमे इति । दुहाते इति ॥ १० ॥

ऋतं ऋतदेवं येमानोनियच्छन्स्तुतिभिर्वशीकुर्वन्स्तोताऋतमित् ऋतदेवमेववनोति संभजते ऋतस्य ऋतदेवस्यसंबन्धिशुष्मोबलंतुरयाः तूर्णःगव्युः उइतिचार्थे जलकामश्चभवति बहुलेविस्तीर्णे गभीरे दुरवगाहे पृथ्वी द्यावापृथिव्यौ ऋताय ऋतदेवायभवतः धेनूप्रीणयित्र्यौ परमेउत्कृष्टे द्यावापृथिव्यौ ऋतायऋतदेवायैवदुहाते दोहनंकुर्वाते ॥ १० ॥

अथैकादशी—

नूष्टुतइन्द्रनूगृणानइषंजरित्रेनद्योऽनपीपेः ।
अकारितेहरिवोब्रह्मनव्यंधियास्यामरथ्यःसदासाः ॥ ११ ॥ १० ॥

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरितिपीपेः । अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥ ११ ॥ १० ॥

पूर्वव्याख्याता ॥ ११ ॥

॥ इतितृतीयस्यषष्ठेदशमोवर्गः ॥ १० ॥

कासुष्टुतिरित्येकादशर्चंतृतीयंसूक्तंवामदेवस्यार्षमैन्द्रं दशमीअनुष्टुप् शिष्टास्त्रिष्टुभः तथाचानुक्रमणिका—कासुष्टुतिरुपान्त्यानुष्टुबिति । विनियोगोलैङ्गिकः ।

तत्रप्रथमा—

कासुष्टुतिःशवसः सूनुमिन्द्रमर्वाचीनंराधसआववर्तत् ।
ददिर्हिवीरोगृणतेवसूनिसगोपतिर्निष्षिधांनोजनासः ॥ १ ॥

का । सुऽस्तुतिः । शवसः । सूनुम् । इन्द्रम् । अर्वाचीनम् । राधसे । आ । ववर्तत् । ददिः । हि । वीरः । गृणते । वसूनि । सः । गोऽपतिः । निःऽसिधाम् । नः । जनासः ॥ १ ॥

का कीदृशी सुष्टुतिः सुष्ठुस्तुतिः शवसः सूनुं बलस्यपुत्रम् अतिबलिनमित्यर्थः अर्वाचीनम् अस्मदभिमुखमिन्द्रं परमैश्वर्ययुक्तं राधसे धनाय अस्मभ्यंधनंदातुम् आववर्तत् आवर्तयेत् हेजनासोजना यजमानाः वीरोविक्रान्तः गोपतिः पश्वादिधनस्यपालकः सइन्द्रः निष्षिधांनिष्षेद्धॄणांशत्रूणांसंबन्धीनिवसूनिधनानि गृणते गृणद्भ्यः स्तोतृभ्यः नोस्मभ्यंददिर्हि दाता खलुभवति ॥ १ ॥

अथद्वितीया—

सवृत्रहत्येहव्यःसईड्यःससुष्टुतइन्द्रःसत्यराधाः ।
सयामन्नामघवामर्त्यायब्रह्मण्यतेसुष्वयेवरिवोधात् ॥ २ ॥

सः । वृत्रऽहत्ये । हव्यः । सः । ईड्यः । सः । सुऽस्तुतः । इन्द्रः । सत्यऽराधाः । सः । यामन् । आ । मघऽवा । मर्त्याय । ब्रह्मण्यते । सुस्वये । वरिवः । धात् ॥ २ ॥

सइन्द्रः वृत्रहत्ये वृत्राणांशत्रूणांहत्ये हननेनिमित्तभूतेसति यामन् युद्धे हव्यः आह्वातव्योभवति सइन्द्रईड्यःस्तुत्योभवति सइन्द्रः सुष्ठुतःसन् सत्यराधाः यजमानेभ्योदातुंसत्यधनोभवति मघवाधनवान्सइन्द्रः ब्रह्मण्यते स्तोत्रमिच्छते सुष्वये सोमंसुन्वते मर्त्याय मनुष्यायययजमानायवरिवोधनं वरिवइतिधननामैतत् आधात् आसमन्ताद्ददाति ॥ २ ॥

अथतृतीया—

तमिन्नरोविह्वयन्तेसमीकेरिरिक्वांसस्तन्वःकृण्वतत्राम् ।
मिथोयत्त्यागमुभयासोअग्मन्नरस्तोकस्यतनयस्यसातौ ॥३॥

तम् । इत् । नरः । वि । ह्वयन्ते । सम्ऽईके । रिरिक्वांसः । तन्वः । कृण्वत । त्राम् । मिथः । यत् । त्यागम् । उभयासः । अग्मन् । नरः । तोकस्य । तनयस्य । सातौ ॥ ३ ॥

नरोनेतारोमनुष्याःसमीकेयुद्धेतमित्तमेवेन्द्रंविह्वयन्ते विविधमाह्वानंकुर्वते तन्वः स्वकीयानिशरीराणि रिरिक्वांसः तपसारेचयन्तोयजमानाः तमेवेन्द्रं त्रां त्रातारंकृण्वत कृण्वते कुर्वते यद्यदामिथः परस्परंसंगताः उभयासः उभयेयजमानाः स्तोतारश्च त्यागंत्यागकर्तारं दातारमिन्द्रमग्मन्नुपगच्छन्ति तदानरः उभयविधामनुष्याः तोकस्य पुत्रस्य तनयस्य पौत्रस्यच सातौ लाभेनिमित्तभूतेसति तमेवेन्द्रंत्रातारंकुर्वन्तीतिसंबन्धः ॥ ३ ॥

अथचतुर्थी—

क्रतूयन्तिक्षितयोयोगउग्राशुषाणासोमिथोअर्णसातौ ।
संयद्विशोववृत्रन्तयुध्माआदिन्नेमइन्द्रयन्तेअभीके ॥ ४ ॥

क्रतुऽयन्ति । क्षितयः । योगे । उग्र । आशुषाणासः । मिथः । अर्णऽसातौ । सम् । यत् । विशः । अववृत्रन्त । युध्माः । आत् । इत् । नेमे । इन्द्रयन्ते । अभीके ॥ ४ ॥

हेउग्र उद्गूर्णबलेन्द्र आशुषाणासोव्याप्नुवन्तः क्षितयोमनुष्याः क्षितयइतिमनुष्यनामैतत् अर्णसातौ सस्यादिफलसिद्ध्यर्थमुदकलाभेनिमित्तेसति मिथःपरस्परंयोगेसंबन्धेसति क्रतूयन्ति

क्रतूनिकर्माणिइच्छन्ति यद्यदायुष्मा: योधयित्र्योविश:प्रजा: अभीकेयुद्धे अभीकइतिसंग्रामनामैतत् समववृत्रन्त संवर्तन्ते परस्परंसंगच्छन्ते आदित्तदानीमेव नेमे केचनभाग्यवन्तोयोधा: इन्द्रयन्ते युद्धेइन्द्रमिच्छन्ति ॥ ४ ॥

अथपञ्चमी–

आदिद्धनेमइन्द्रियंयजन्तआदित्पक्तिःपुरोळाशंरिरिच्यात् ।
आदित्सोमोविपपृच्यादसुष्वीनादिज्जुजोषवृषभंयजध्यै ॥५।११॥

आत् । इत् । ह । नेमे । इन्द्रियम् । यजन्ते । आत् । इत् । पक्तिः । पुरोळाशम् । रिरिच्यात् । आत् । इत् । सोमः । वि । पपृच्यात् । असुस्वीन् । आत् । इत् । जुजोष । वृषभम् । यजध्यै ॥ ५ ॥ ११ ॥

आदित्तदानीमेवयुद्धकालेनेमे अन्ये योधा: इन्द्रियंबलवन्तमिन्द्रंयजन्तेह पूजयन्ति खलु कश्चिदादिदनन्तरमेव पुरोळाशंपिष्टरूपंहवि: पक्ति: पचन् रिरिच्यात् इन्द्रायदद्यात् आदिदनन्तरमेवसोम:अभिषुतसोमोयजमान: असुष्वीन् अनभिषुतसोमान्यजमानान्विपपृच्यातूधनै:पृथक्कुर्यात् आदिदनन्तरमेव कश्चिद्वृषभं कामानांवर्षितारमिन्द्रंयजध्यै यष्टुंजुजोष सेवते ॥ ५ ॥

॥ इतितृतीयस्यषष्ठेएकादशोवर्ग: ॥ ११ ॥

अथषष्ठी–

कृणोत्यस्मैवरिवोयइत्थेन्द्रायसोममुशतेसुनोति ।
सध्रीचीनेनमनसाविवेनन्तमित्सखायंकृणुतेसमत्सु ॥ ६ ॥

कृणोति । अस्मै । वरिवः । यः । इत्था । इन्द्राय । सोमम् । उशते । सुनोति । सध्रीचीनेन । मनसा । अविऽवेनम् । तम् । इत् । सखायम् । कृणुते । समत्ऽसु ॥ ६ ॥

योयजमान: सोमम् उशते कामयमानाय इत्था अमुत्रस्वर्गलोकेस्थितायेन्द्राय सुनोति अभिषवंकरोति इन्द्रोप्यस्मैयजमानायवरिवोधनंकृणोति करोति सध्रीचीनेनसंगतेनमनसाप्र-

वर्णेनाचित्तेन अविवेनन् वेनतिः कान्तिकर्मा विवेनोधिगतेच्छः तदन्यः अविवेनः आत्मानंकामयमानंतमित्तमेव सुन्वन्तंयजमानंसखायमित्रं समत्सु संग्रामेषुइन्द्रः कृणुते करोति ॥ ६ ॥

अथसप्तमी–

यइन्द्रायसुनवत्सोममद्यपचात्पक्तीरुतभृज्जातिधानाः ।
प्रतिमनायोरुचथानिहर्यन्तस्मिन्दधद्वृषणंशुष्ममिन्द्रः ॥ ७ ॥

यः । इन्द्राय । सुनवत् । सोमम् । अद्य । पचात् । पक्तीः । उत ।
भृज्जाति । धानाः । प्रति । मनायोः । उचथानि । हर्यन् । तस्मिन् ।
दधत् । वृषणम् । शुष्मम् । इन्द्रः ॥ ७ ॥

अद्यास्मिन्दिवसेयोयजमानः इन्द्राय परमैश्वर्ययुक्ताय देवाय सोमं सोमलक्षणम् अन्नं सुनवत्सुनुयात् अभिषवंकुर्यात् तथा यःपक्तीः पक्तव्यांश्चरुपुरोडाशादीन्पचात्पचेत् पचनंकुर्यात् उतअपिच यः धानाः भर्जनयोगान्यवान् अत्रभृष्टयववाचीधानाशब्दः तद्योग्यंयवमात्रंलक्षयति भृज्जातिभृज्जेत् भर्जनंकुर्यात् इन्द्रःमनायोः स्तुतिमिच्छतोयजमानस्य उचथानि स्तोत्राणि प्रतिहर्यन् प्रतिकामयमानःसन् तस्मिन्यजमाने वृषणं कामानांवर्षणसमर्थं शुष्मंबलं दधद्धारयति ॥ ७ ॥

अथाष्टमी–

यदासमर्यंव्यचेदृघावादीर्घंयदाजिमभ्यख्यदर्यः ।
अचिक्रदद्वृषणंपत्न्यच्छादुरोणआनिशितंसोमसुद्भिः ॥ ८ ॥

यदा । सम्ऽमर्यम् । वि । अचेत् । ऋघावा । दीर्घम् । यत् ।
आजिम् । अभि । अख्यत् । अर्यः । अचिक्रदत् । वृषणम् ।
पत्नी । अच्छ । दुरोणे । आ । निऽशितम् । सोमसुत्ऽभिः ॥ ८ ॥

यदा ऋघावा शत्रूणांहिंसकइन्द्रः समर्यं सहमर्तव्यंशत्रुं व्यचेत् व्यज्ञासीत् विशेषेणजानीयात् यदाअर्यःस्वामी इन्द्रः दीर्घम् अत्यधिकमाजिंसंग्राममभ्यख्यत् अभिपश्येत् तदा तस्येन्द्रस्य पत्नी दुरोणे यज्ञगृहे सोमसुद्भिः सोमंसुन्वद्भिः ऋत्विग्भिर्निशितंतीक्ष्णीकृतंसोमपानेनोत्साहवन्तमित्यर्थः वृषणंकामानांवर्षितारम् इन्द्रमच्छाभिलक्ष्यआचिक्रदत् आक्रन्दत्याह्वयते ॥ ८ ॥

अथनवमी–

भूयंसावस्नमंचरत्कनीयोविंक्रीतोअकानिषंपुनर्यन् ।
सभूयंसाकनीयोनारिरेचीद्दीनादक्षाविदुंहन्तिप्रवाणम् ॥ ९ ॥

भूयंसा । वुस्नम् । अचुरत् । कनीयः । अविंऽक्रीतः । अकानिषम् ।
पुनंः । यन् । सः । भूयंसा । कनीयः । न । अरिरेचीत् । दीनाः ।
दक्षांः । वि । दुहन्ति । प्र । वाणम् ॥ ९ ॥

अत्र ऋग्द्वयेसंप्रदायविद्भिःपूर्वाचार्यैःकेचित्श्लोकाःपठ्यन्तेतएवलिख्यन्ते–अल्पंयःप्रतिगृह्णातिमूल्यंपण्येनभूयसा ॥ सक्रेतारंपुनर्गच्छन्नविक्रीतस्त्वयंमया ॥ १ ॥ इतिब्रुवन्कामयतेपुनर्मूल्यस्यपूरणम् ॥ सविक्रेतापुनर्मूल्यंभूयसानप्रपूरयेत् ॥ २ ॥ हीनंनलभतेवस्त्रंयदाविक्रीतवान्पुरा ॥ यथासमयमेवस्यात्तयोर्नपुनरन्यथा ॥ ३ ॥ अयंविक्रयएवेतिसमयश्चेत्कृतोभवेत् ॥ अथमूल्यार्थमेतस्याद्विचार्यैवतुनिर्णयः ॥ ४ ॥ इत्येवंसमयोकारितदामूल्यंप्रपूर्यते ॥ तस्मादादौमयाकार्यःसमयोत्रेतिचिन्तयन् ॥ ५ ॥ वामदेवोवशीकृत्यशक्रंस्तोत्रेणभूयसा ॥ विक्रीणन्समयंचक्रेइन्द्रंकइममित्यृचे ॥ ६ ॥ अतश्चद्व्यृचएकार्थोभूयसावस्नमित्ययमिति ॥ अयमर्थः प्रतिपाद्यते–कश्चिद्भूयसाभूम्नापण्येनद्रव्येणकनीयोल्पतरंवस्नंवसुमूल्यंधनम्अचरत्प्राप्नोति पुनर्यन् क्रेतारंपुनर्गच्छन् सविक्रेता अयमर्थोमयाऽविक्रीतइतिब्रुवन्नकानिषंमूल्यपूर्तिंकामयते व्यत्ययेनोत्तमपुरुषः सविक्रेता भूयसाधनेनकनीयोल्पतरंमूल्यंनारिरेचीत् क्रेतुःसकाशान्नारिक्तीकरोति नलभतइत्यर्थः दीनाअसमर्थाः दक्षाः समर्थाश्च वाणंवचनं विप्रदुहन्ति यथोक्तंक्रयकाले तथैवलभन्ते ॥ ९ ॥

अथदशमी–

कइमंदशभिर्ममेन्द्रंक्रीणातिधेनुभिंः ।
यदावृत्राणिजङ्घनदथैनंमेपुनर्ददत् ॥ १० ॥

कः । इमम् । दशऽभिंः । ममं । इन्द्रंम् । क्रीणाति । धेनुऽभिंः ।
यदा । वृत्राणि । जङ्घनत् । अथ । एनम् । मे । पुनंः । ददत् ॥ १० ॥

मम मदीयम् इमं स्वभूतमिन्द्रंधेनुभिःप्रीणयित्रीभिर्दशभिर्दशसंख्याकाभिः कः क्रीणाति क्रयंकरोति तदानीं हेक्रेतारोयुष्माकंमध्येएवमापिसमयःक्रियते यदायमिन्द्रः वृत्राणि त्वदीयान्शत्रून् जङ्घनत्हन्यात् अथानन्तरमेवएनमिन्द्रंमेमह्यंपुनर्ददत् पुनर्दद्यात् ॥ १० ॥

अथैकादशी–

नूष्टुतइन्द्रनूगृणानइषंजरित्रेनद्यो३नपीपेः ।
अकारितेहरिवोब्रह्मनव्यंधियास्यामरथ्यःसदासाः ॥११।१२॥

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरितिपीपेः । अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥ ११ ॥ १२ ॥

॥ पूर्वव्याख्याता ॥ ११ ॥

॥ इतितृतीयस्यषष्ठेद्वादशोवर्गः ॥ १२ ॥

कोअद्येत्यष्टर्चंचतुर्थंसूक्तंवामदेवस्यार्षंत्रैष्टुभमैन्द्रं तथाचानुक्रान्तं–कोअद्याष्टाविति । दशरात्रेचतुर्थेहनिमाध्यन्दिनेसवनेस्तोमवृद्धौमैत्रावरुणशस्त्रेआरम्भणीयायाउपरिष्टादिदंसूक्तमावपनीयं सूत्रितंच–स्तोमेवर्धमानेकोअद्यनर्यइति ।

तत्रप्रथमा–

कोअद्यनर्योदेवकामउशन्निन्द्रस्यसख्यंजुजोष ।
कोवामहेवसेपार्यायसमिद्धेअग्नौसुतसोमईट्टे ॥ १ ॥

कः । अद्य । नर्यः । देवऽकामः । उशन् । इन्द्रस्य । सख्यम् । जुजोष । कः । वा । महे । अवसे । पार्याय । सम्ऽइद्धे । अग्नौ । सुतऽसोमः । ईट्टे ॥ १ ॥

अद्यास्मिन्दिवसे कोनर्योमनुष्यहितः देवकामोदेवानिच्छन् उशन्कामयमानइन्द्रस्यसख्यं सखित्वंजुजोषसेवते किंच सुतसोमः अभिषुतसोमः कोवायजमानः अग्नौसमिद्धेप्रज्वलिते सति महे महते प्रवृद्धाय पार्याय पारमर्हतेअवसेतर्पणाय ईट्टे इन्द्रंस्तौति ॥ १ ॥

अथद्वितीया—

**कोनानामवचसासोम्यायमनायुर्वाभवतिवस्तउस्राः ।**
**कइन्द्रस्ययुज्यंकःसखित्वंकोभ्रात्रंवष्टिकवयेकऊती ॥ २ ॥**

कः । ननाम । वचसा । सोम्याय । मनायुः । वा । भवति । वस्ते । उस्राः । कः । इन्द्रस्य । युज्यम् । कः । सखिऽत्वम् । कः । भ्रात्रम् । वष्टि । कवये । कः । ऊती ॥ २ ॥

कोयजमानः वचसा वाग्रूपयास्तुत्या सोम्याय सोमार्हायेन्द्राय ननाम नमति प्रह्वीभवति कोवाइन्द्रायमनायुर्भवति स्तुतिकामोस्ति कःउस्राः इन्द्रेणदत्तागाः वस्तेआच्छादयति धारयतीत्यर्थः कइन्द्रस्ययुज्यंसाहाय्यंसखित्वंमित्रत्वं भ्रात्रं भ्रातृत्वंच वष्टिइच्छति कवयेक्रान्तदर्शिनेइन्द्राय ऊतीऊतये तर्पणायकोभवतीतिशेषः ॥ २ ॥

अथतृतीया—

**कोदेवानामवोअद्यावृणीतेकआदित्याँअदितिंज्योतिरीट्टे ।**
**कस्याश्विनाविन्द्रोअग्निःसुतस्यांशोःपिबन्तिमनसाविवेनम् ॥ ३ ॥**

कः । देवानाम् । अवः । अद्य । वृणीते । कः । आदित्यान् । अदितिम् । ज्योतिः । ईट्टे । कस्य । अश्विनौ । इन्द्रः । अग्निः । सुतस्य । अंशोः । पिबन्ति । मनसा । अविऽवेनम् ॥ ३ ॥

अद्यास्मिन्दिने कोयजमानः देवानांद्योतमानानामिन्द्रादीनाम्अवोरक्षणं वृणीते प्रार्थयते कआदित्यान्देवानदितिंदेवमातरंच ज्योतिरुदकंचईट्टे याचते अश्विनौ अश्विदेवौ इन्द्रश्चाग्निश्चमनसा स्तुत्याप्रीताःसन्तः अविवेनमविगतकामंयथाकाममित्यर्थः कस्ययजमानस्यसंबन्धिनं सुतस्याभिषुतस्यांशोःसोमस्यसोममित्यर्थः पिबन्ति पानंकुर्वन्ति ॥ ३ ॥

अथचतुर्थी—

**तस्माअग्निर्भारतःशर्मयंसज्ज्योक्पश्यात्सूर्यमुच्चरन्तम् ।**
**यइन्द्रायसुनवामेत्याहनरेनर्यायनृतमायनृणाम् ॥ ४ ॥**

तस्मै । अग्निः । भारतः । शर्म । यंसत् । ज्योक् । पश्यात् । सूर्यम् ।
उत्ऽचरन्तम् । यः । इन्द्राय । सुनवाम । इति । आह । नरे ।
नर्याय । नृऽतमाय । नृणाम् ॥ ४ ॥

भारतः हविषोभर्ताग्निः प्राणोभूत्वा प्रजाअधारयत् तस्माद्भारतइति वाजसनेयकम्—तस्मैयजमानायशर्मसुखंयंसद्यच्छेत् किंचायमग्निः ज्योक् चिरकालमुच्चरन्तम् उद्यन्तंसूर्यं पश्यात्पश्येत् योयजमानः इन्द्रायसुनवामेत्याहइन्द्रार्थंसोमाभिषवंकुर्यामितिब्रवीति कीदृशायेन्द्राय नरेनेत्रे नर्याय नराहिताय नृणांनराणांनेतॄणांमध्ये नृतमाय नेतृतमाय ॥ ४ ॥

अथपञ्चमी—

**नतंजिनन्तिबहवोनदभ्राउर्वस्माअदितिःशर्मयंसत् ।**
**प्रियःसुकृत्प्रियइन्द्रेमनायुःप्रियःसुप्रावीःप्रियोअस्यसोमी ।५।१३।**

न । तम् । जिनन्ति । बहवः । न । दभ्राः । उरु । अस्मै । अदितिः ।
शर्म । यंसत् । प्रियः । सुऽकृत् । प्रियः । इन्द्रे । मनायुः । प्रियः ।
सुप्रऽअवीः । प्रियः । अस्य । सोमी ॥ ५ ॥ १३ ॥

दभ्राअल्पाः बहवोन बहवोपिशत्रुजनाः तंयजमानंनजिनन्ति नहिंसन्तु यइन्द्रायसुनवामेत्याह तमितिपूर्वेणसंबन्धः अदितिरिन्द्रमाता अस्मै यजमानाय उरु विस्तीर्णंशर्मसुखंयंसद्यच्छतु किंच इन्द्रे इन्द्राय सुकृच्छोभनयागादीनांकर्तायजमानःप्रियोभवति मनायुः इन्द्रविषयस्तुतिकामश्च अस्येन्द्रस्यप्रियोभवति सुप्रावीःसुष्ठुप्राविता सुष्ठुप्रगच्छन् उपगच्छन्वा यजमानः अस्येन्द्रस्यप्रियोभवति सोमीसोमवान्यजमानः अस्येन्द्रस्यप्रियोभवति ॥ ५ ॥

॥ इतितृतीयस्यषष्ठेत्रयोदशोवर्गः ॥ १३ ॥

अथषष्ठी—

**सुप्राव्यःप्राशुषाळेषवीरःसुष्वेःपक्तिंकृणुतेकेवलेन्द्रः ।**
**नासुष्वेरापिर्नसखानजामिर्दुष्प्राव्योवहन्तेदवाचः ॥ ६ ॥**

सुप्रऽअव्यः । प्राशुषाट् । एषः । वीरः । सुस्वेः । पक्तिम् । कृणुते ।
केवला । इन्द्रः । न । असुस्वेः । आपिः । न । सखा । न ।
जामिः । दुःप्रऽअव्यः । अवऽहन्ता । इत् । अवाचः ॥ ६ ॥

प्राशुषाट् शत्रूणांप्रकर्षेणशीघ्रमभिभविता वीरोविक्रान्तएषइन्द्रः सुप्राव्यः सुष्ठुउपगच्छतः हविर्भिःसुष्ठुप्रतर्पयितुर्वा सुष्वेःसुन्वतोयजमानस्यसंबन्धिनींकेवलांकेवलामसाधारणांपक्तिं कृणुते आत्मनःकुरुते किंचेन्द्रः असुष्वेः असुन्वतोयजमानस्य आपिर्व्याप्तोनभवति इन्द्रः अयजमानस्य सखानभवति जामिर्बन्धुश्चनभवति अपिच दुष्प्राव्यः दुरुपगमनस्यअवाचःस्तुतिरहितस्यपुरुषस्यअवहन्तेत् हिंसितैवभवति ॥ ६ ॥

अथसप्तमी--

नरेवतापणिनासख्यमिन्द्रोसुन्वतासुतपाः संगृणीते ।
आस्यवेदःखिदतिहन्तिनग्नंविसुष्वयेपक्तयेकेवलोभूत् ॥ ७ ॥

न । रेवता । पणिना । सख्यम् । इन्द्रः । असुन्वता । सुतऽपाः । सम् । गृणीते । आ । अस्य । वेदः । खिदति । हन्ति । नग्नम् । वि । सुस्वये । पक्तये । केवलः । भूत् ॥ ७ ॥

सुतपाः अभिषुतंसोमंपिबन्निन्द्रः रेवताधनवता पणिना वणिजालुब्धेनअसुन्वता सोमाभिषवमकुर्वता अयजमानेनसहसख्यंसखित्वंनसंगृणीते नसंस्तौति नानुमन्यतइत्यर्थः किंच अस्यायजमानस्य नग्नं निरर्थकं वेदोधनंज्ञानंवा आखिदति उद्धरति हन्ति हिनस्तिच अपिच सुष्वये सोमंसुन्वते पक्तये हवींषिपचते यजमानाय केवलोऽसाधारणःसन्विभूत् विभवति ॥ ७ ॥

अथाष्टमी--

इन्द्रंपरेवरेमध्यमासइन्द्रंयान्तोवसितासइन्द्रम् ।
इन्द्रंक्षियन्तंउतयुध्यमानाइन्द्रंनरोवाजयन्तोहवन्ते ॥८॥१४॥

इन्द्रम् । परे । अवरे । मध्यमासः । इन्द्रम् । यान्तः । अवऽसितासः । इन्द्रम् । इन्द्रम् । क्षियन्तः । उत । युध्यमानाः । इन्द्रम् । नरः । वाजऽयन्तः । हवन्ते ॥ ८ ॥ १४ ॥

परे उत्कृष्टाः अवरे निकृष्टाश्चजनाः इन्द्रं हवन्ते आह्वयन्ति मध्यमासोमध्यमाश्च इन्द्रमेवहवन्ते यान्तःकार्यसिद्ध्यर्थं गच्छन्तोजनाः इन्द्रमेवाह्वयन्ति अवसितासः निविष्टाश्चइन्द्रमेवाह्वयन्ति क्षियन्तोगृहेनिवसन्तोजनाः इन्द्रमेवहवन्ते उतापिच युध्यमानाः युद्धंकुर्वाणाः जनाः जयार्थमिन्द्रमेवाह्वयन्ति वाजयन्तः वाजमन्नमिच्छन्तोनरोनेतारोमनुष्याः इन्द्रमेव हवन्ते ॥ ८ ॥

॥ इतितृतीयस्यषष्ठेचतुर्दशोवर्गः ॥ १४ ॥

अहंमनुरितिसप्तर्चंपञ्चमंसूक्तंवामदेवस्यार्षम् अत्रेयमनुक्रमणिका—अहंमनुःसप्ताद्याभिस्तिसृभिरिन्द्रमिवात्मानमृषिस्तुष्टावेन्द्रोवात्मानंपरानवाष्टौवाश्येनस्तुतिरिरिति । अत्र अहंमनुरित्याद्याभिस्तिसृभिरात्मानमिन्द्ररूपेणवामदेवःस्तुतवान् यद्वा इन्द्रएवात्मानंस्तुतवान् अतोवामदेववाक्यपक्षेवामदेवऋषिः इन्द्रोदेवता इन्द्रवाक्यपक्षेत्विन्द्रऋषिः परमात्मादेवता त्रिष्टुप्छन्दः अवशिष्टानांवामदेवऋषिः अवशिष्टाभिरुत्तरसूक्तेनचसुपर्णात्मनाब्रह्मस्तूयते अतस्तासांपरब्रह्मदेवता श्येननाम्नयेकाहेमाध्यन्दिनसवनेमरुत्वतीयशस्त्रेइदंसूक्तं सूत्रितञ्च—श्येनाजिराभ्यामभिचरन्यजेताहंमनुर्गर्भेनुसन्निति ।

तत्रप्रथमा—

अहंमनुंरभवंसूर्यश्चाहंकक्षीवाँऋषिंरस्मिविप्रः ।
अहंकुत्संमार्जुनेयन्यृंञ्जेहंकविरुशनापश्यंतामा ॥ १ ॥

अहम् । मनुः । अभवम् । सूर्यः । च । अहम् । कक्षीवान् । ऋषिः । अस्मि । विप्रः । अहम् । कुत्सम् । आर्जुनेयम् । नि । ऋञ्जे । अहम् । कविः । उशना । पश्यत । मा ॥ १ ॥

इदमादिमन्त्रत्रये अयंगर्भेवसन्वामदेवः उत्पन्नतत्त्वज्ञानःसन् सार्वात्म्यं स्वानुभवंमन्वादिरूपेणप्रदर्शयन्नाह—अहंवामदेवः मनुरभवं सर्वस्यमन्ताप्रजापतिरस्मि अहमेवसूर्यश्चसर्वस्यप्रेरकःसवितास्मि विप्रोमेधावीकक्षीवान्दीर्घतमसःपुत्रःएतत्संज्ञकऋषिरप्यहमेवास्मि आर्जुनेयम् अर्जुन्याःपुत्रंकुत्समेतन्नामकऋषिमहमेवन्यृञ्जे नितरांप्रसाधयामि कविःक्रान्तदर्शी उशनाएतदाख्यऋषिरहमेवास्मि उक्तमुपलक्षणंपरमार्थदृष्ट्याकृत्स्नमप्यहमेवास्मीत्यर्थः हेजनाः मांसर्वात्मकंपश्यत यूयमप्येवमेवस्वस्वरूपमनुभवतेत्युक्तंभवति ॥ १ ॥

अथद्वितीया–

अहंभूमिमददामार्यायाहंवृष्टिंदाशुषेमर्त्याय ।
अहमपोअनयंवावशानाममदेवासोअनुकेतमायन् ॥ २ ॥

अहम् । भूमिम् । अददाम् । आर्याय । अहम् । वृष्टिम् ।
दाशुषे । मर्त्याय । अहम् । अपः । अनयम् । वावशानाः ।
मम । देवासः । अनु । केतम् । आयन् ॥ २ ॥

अहंवामदेवइन्द्रोवा आर्यायमनवेभूमिंपृथ्वीमददांदत्तवानस्मि दाशुषेहविर्दत्तवतेमर्त्यायमनुष्यायजमानायवृष्टिंसस्याद्यभिवृद्ध्यर्थं वृष्टिलक्षणमुदकमहमेवअददां किंच अहंवावशानाः शब्दायमानाअपः उदकानि अनयं सर्वमपिप्रदेशमगमयं देवासोवह्न्यादयोदेवाः ममकेतं मदीयंसंकल्पम् अन्वायन् अनुयन्ति ॥ २ ॥

अथतृतीया–

अहंपुरोमन्दसानोव्यैरंनवसाकंनवतीःशम्बरस्य ।
शततमंवेश्यंसर्वतातादिवोदासमतिथिग्वंयदावम् ॥ ३ ॥

अहम् । पुरः । मन्दसानः । वि । ऐरम् । नव । साकम् । नवतीः ।
शम्बरस्य । शतऽतमम् । वेश्यम् । सर्वऽताता । दिवःऽदासम् ।
अतिथिऽग्वम् । यत् । आवम् ॥ ३ ॥

अहंवामदेवइन्द्रोवा मन्दसानः सोमेनमाद्यन् नव नवसंख्याकानवतीर्नवतिसंख्याकाश्चशम्बरस्यैतन्नामकस्यासुरस्यसंबन्धीनिपुरः पुराणि साकं युगपदेव व्यैरम् अध्वंसयं शततमं शतसंख्यापूरणं पुरं वेश्यं दिवोदासनाम्नेप्रवेशार्हमकरवं सर्वताता सर्वतातौ यज्ञे अतिथिग्वम् अतिथीनामभिगन्तारं दिवोदासं दिवोदासनामकंराजर्षिं यद्यदा आवम् अपालयं तदापुरोव्यैरमितिपूर्वेणसंबन्धः ॥ ३ ॥

अथचतुर्थी–

प्रसुषविभ्योमरुतोविरस्तुप्रश्येनःश्येनेभ्यआशुपत्वा ।
अचक्रयायत्स्वधयासुपर्णोहव्यंभरन्मनवेदेवजुष्टम् ॥ ४ ॥

प्र । सु । सः । विऽभ्यः । मरुतः । विः । अस्तु । प्र । श्येनः ।
श्येनेभ्यः । आशुऽपत्वा । अचक्रया । यत् । स्वधया । सुऽपर्णः ।
हव्यम् । भरत् । मनवे । देवऽजुष्टम् ॥ ४ ॥

अथैतदादिभिःश्येनःस्तूयते हेमरुतः वेगेनमरुत्सदृशाःपक्षिणः प्रसिद्धःश्येनाख्योविःपक्षी विभ्योयुष्मत्तःप्रसुबलेनप्रकृष्टोस्तुभवतु किंच श्येनेभ्यः शंसनीयगमनेभ्यः स्वसमानजातिभ्यःपक्षिभ्यःसकाशादाशुपत्वाआशुपतनःशीघ्रगामीश्येनःप्रकृष्टोभवतु सुपर्णःशोभनपतनः यद्यदाश्येनःअचक्रया चक्रवर्जितयास्वधयारथेनदेवजुष्टं देवैःसेवितंहव्यं सोमलक्षणंहविः मनवे प्रजापतयेभरदहरत् द्युलोकसकाशातुद्धृतवान् अत्रस्वधाशब्दोरथवाची अचक्रयास्वधयावर्तमानमित्यादौदर्शनात् ॥ ४ ॥

अथपञ्चमी—

भरद्यदिविरतोवेविजानःपथोरुणामनोजवाअसर्जि ।
तूयंययौमधुनासोम्येनोतश्रवोविविदेश्येनोअत्र ॥ ५ ॥

भरत् । यदि । विः । अतः । वेविजानः । पथा । उरुणा । मनःऽजवाः ।
असर्जि । तूयम् । ययौ । मधुना । सोम्येन । उत । श्रवः । विविदे ।
श्येनः । अत्र ॥ ५ ॥

यदि यदा विः पक्षी श्येनः अतोमुष्मात्द्युलोकाद्वेविजानः सोमकान्भीषयन्भरदहरत् सोममाहृतवान् तदा उरुणाविस्तीर्णेनपथा अन्तरिक्षमार्गेणमनोजवाः मनोवद्वेगयुक्तःसन् असर्जि संसृष्टआसीत् सोम्येनसोममयेनमधुनान्नेनसहतूयंक्षिप्रंययौ जगाम उतापिच अत्रास्मिँल्लोकेश्येनः सुपर्णःश्रवः सोमाहरणनिमित्तंयशः विविदे लेभे ॥ ५ ॥

ऋजीपीश्येनोददमानोअंशुंपरावतःशकुनोमन्द्रंमदम् ।
सोमंभरद्दादृहाणोदेवावान्दिवोअमुष्मादुत्तरादादाय ॥ ६ ॥

ऋजीपी । श्येनः । ददमानः । अंशुम् । पराऽवतः । शकुनः ।
मन्द्रम् । मदम् । सोमम् । भरत् । दादृहाणः । देवऽवान् । दिवः ।
अमुष्मात् । उत्ऽतरात् । आऽदाय ॥ ६ ॥

ऋजीपी ऋजुगामीपरावतीदूराद्शुंसोमंदमानोधारयन् श्येनःशंसनीयगमनः देववान्देवैःसहितः शकुनः पक्षी मन्द्रं मदनीयंस्तुत्यं मदं मदकरंसोमम् उत्तरादुद्गततरादमुष्माद्दिवोद्युलोकादादायस्वीकृत्य दहहाणोदृढीभवन् भरत् अहरत् ॥ ६ ॥

अथसप्तमी—

आदायश्येनोअभरत्सोमंसहस्रंसवाँअयुतंचसाकम् ।
अत्रापुरन्धिरजहादरातीर्मदेसोमस्यमूराअमूरः ॥ ७ ॥ १५ ॥

आऽदाय । श्येनः । अभरत् । सोमम् । सहस्रम् । सवान् । अयुतम् । च । साकम् । अत्र । पुरम्ऽधिः । अजहात् । अरातीः । मदे । सोमस्य । मूराः । अमूरः ॥ ७ ॥ १५ ॥

श्येनः शंसनीयगमनः पक्षी सवान्सवानांयज्ञानांसहस्रंसहस्रसंख्याकमयुतंच अयुतसंख्याकमपरिमितसंख्याकमित्यर्थः साकं सह सोमं सोमलक्षणमन्नमादाय आदानंकृत्वा अभरदहरत् आजहार अत्रास्मिन्सोमेआहृतेसति पुरन्धिः पुरन्धीःबहुकर्माअमूरःअमूढः प्राज्ञइन्द्रः सोमस्यसंबन्धिनिमदेहर्षेसति मूराःमूढाः अरातीः शत्रूनजहात् अत्यजज्जघानेत्यर्थः अत्रारातिशब्दः स्त्रीलिङ्गः ॥ ७ ॥

॥ इतितृतीयस्यपष्ठेपञ्चदशोवर्गः ॥ १९ ॥

गर्भेन्वितिपञ्चर्चंषष्ठंसूक्तंवामदेवस्यार्षंत्रैष्टुभम् अन्त्याशक्करीषट्पञ्चाशदक्षरा श्येनोदेवता पूर्वसूक्तेअष्टौवेत्युक्तत्वादन्त्यायइन्द्रोदेवता तथाचानुक्रान्तं—गर्भेनुपञ्चान्त्याशक्करीति । श्येनेनिष्केवल्य इदंसूक्तं सूत्रंतुपूर्वमुदाहृतम् ।

तत्रप्रथमा—

गर्भेनुसन्नन्वेषामवेदमहंदेवानांजनिमानिविश्वा ।
शतंमापुरआयसीररक्षन्नधश्येनोजवसानिरदीयम् ॥ १ ॥

गर्भे । नु । सन् । अनु । एषाम् । अवेदम् । अहम् । देवानाम् । जनिमानि । विश्वा । शतम् । मा । पुरः । आयसीः । अरक्षन् । अध । श्येनः । जवसा । निः । अदीयम् ॥ १ ॥

अत्रैषःश्लोकःपठ्यते—श्येनभावंसमास्थायगर्भाद्योगेननिःसृतः । ऋषिर्गर्भेशयानःसन् ब्रूते-गर्भेनुसन्निति ॥ १ ॥ गर्भेनु गर्भेएवसन् विद्यमानोहंवामदेवः एषामिन्द्रादीनांदेवानां विश्वा विश्वानि सर्वाणि जनिमानि जन्मानि अन्ववेदम् आनुपूर्व्येणाज्ञासिषं परमात्मनः सकाशात्सर्वेदेवाजाताइत्यवेदिषमित्यर्थः इतःपूर्वंशतंबह्वूनि आयसी अयोमयान्यभेद्यानि पुरःशरीराणि मामामरक्षन् अपालयन् यथाहंशरीराद्व्यतिरिक्तमात्मानंनजानीयां तथामामरक्षन्नित्यर्थः अध अधुना श्येनः श्येनवत्स्थितोहम् जवसावेगेननिरदीयं शरीरान्निरगमम् अनावरणमात्मानंजानन्निर्गतोस्मीत्यर्थः पुरुषेहवाअयमादितोगर्भइंतिखण्डेगर्भएवैतच्छयानोवामदेवएवमुवाचेत्यादिनाअयमर्थःसम्यक्प्रतिपादितः ॥ १ ॥

अथद्वितीया—

नघासमामपजोषंजभाराभीमासत्वक्षसावीर्येण ।
ईर्मापुरन्धिरजहादरातीरुतवाताँअतरच्छूशुवानः ॥ २ ॥

न । घ । सः । माम् । अप । जोषम् । जभार । अभि । ईम् । आस । त्वक्षसा । वीर्येण । ईर्मा । पुरम्ऽधिः । अजहात् । अरातीः । उत । वातान् । अतरत् । शूशुवानः ॥ २ ॥

सगर्भः मां वामदेवं जोषं पर्याप्तं नघ नैवापजभार अपजहार गर्भेपिवसतोमेमोहोमाभूदित्यर्थः अहंतु ईम् इदंगर्भस्थंदुःखं त्वक्षसा तीक्ष्णेनवीर्येण ज्ञानसामर्थ्येन अभ्यासअभ्यभवं ईर्मा सर्वस्यप्रेरकः पुरन्धिः पुरांधारकः परमात्मा अरातीः गर्भसंस्थितान्शत्रूनजहात् अत्यजत् जघान उतापिच शूशुवानः वर्धमानः परिपूर्णः परमात्मावा तान्गर्भक्लेशकरान्वायूनतरत् अतारीत् ॥ २ ॥

अथतृतीया—

अवयच्छ्येनोअस्वनीदधद्योर्वियद्यदिवातऊहुःपुरन्धिम् ।
सृजद्यदस्माअवहक्षिपज्ज्यांकृशानुरस्तामनसाभुरण्यन् ॥ ३ ॥

---

१ ऐतरेयोपनिषत् ।

अव । यत् । श्येनः । अस्वनीत् । अध । द्योः ॥ वि । यत् । यदि । वा । अतः । ऊहुः । पुरम्ऽधिम् । सृजत् । यत् । अस्मै । अव । ह । क्षिपत् । ज्याम् । कृशानुः । अस्ता । मनसा । भुरण्यन् ॥ ३ ॥

अध तदानीं सोमाहरणकाले यद्यदा श्येनः द्योः द्युलोकादवास्वनीत् अवाङ्मुखंशब्दमकरोत् यदिवा यदाच वेतिचार्थे यद्यंपुरन्धिसोमम् अतोस्माच्छ्येनात् व्यूहुः सोमपालाविक्षिप्तवन्तः यद्यदा अस्ता शराणांक्षेप्ता मनसा मनोवेगेन भुरण्यन् गन्तुमिच्छन् कृशानुः एतन्नामकःसोमपालः ज्यांधनुषःकोटौमौर्वीक्षिपद्ध चिक्षेपखलु अस्मैश्येनाय शरमवासृजत्त्यक्तवान् तथाचब्राह्मणम्–तस्या अनुविसृज्यकृशानुःसोमपालःसव्यस्यपदोनखमच्छिनदित्यादि[1] । यदायदासोमपालाइत्थमित्थंचक्रुःतदा श्येनःसोममाजहारेत्यृचोत्तरयासंबन्धः ॥ ३ ॥

अथचतुर्थी–

ऋजिप्यईमिन्द्रावतोनभुज्युंश्येनोजभारबृहतोअधिष्णोः ।
अन्तःपतत्पतत्र्यस्यपर्णमधयामनिप्रसितस्यतद्वेः ॥ ४ ॥

ऋजिप्यः । ईम् । इन्द्रऽवतः । न । भुज्युम् । श्येनः । जभार । बृहतः । अधि । स्नोः । अन्तरिति । पतत् । पतत्रि । अस्य । पर्णम् । अध । यामनि । प्रऽसितस्य । तत् । वेरितिवेः ॥ ४ ॥

ऋजिप्यः ऋजुगामीश्येनः इन्द्रवतः इन्द्रोरक्षकोयस्य तस्माद्बृहतोमहतोऽधि उपरि स्नोः स्थितात् द्युलोकात् ईमेनंसोमंजभार आजहार तत्रदृष्टान्तः–इन्द्रवतः इन्द्रःसमर्थः तद्वतोदेशात् भुज्युंन भुज्युनामकंराजानं यथा अश्विनौआजह्रतुःतद्वत् अध तदानींयामनियुद्धे प्रसितस्यकृशानोरस्त्रैर्बद्धस्य वेर्गंतुरस्यान्तर्मध्येस्थितं पतत्रिपतनशीलं तत्पर्णं पतदपतत् ॥ ४ ॥

अथपञ्चमी–

अधश्वेतंकलशंगोभिरक्तमापिप्यानंमघवाशुक्रमन्धः ।
अध्वर्युभिःप्रयतंमध्वोअग्रमिन्द्रोमदायप्रतिधत्पिबध्यैशूरोमदायप्रतिधत्पिबध्यै ॥ ५ ॥ १६ ॥

---

[1] ऐ० ब्रा० ३. २६. ।

अर्ध । श्वेतम् । कलशम् । गोभिः । अक्तम् । आऽपिप्यानम् । मघऽवा । शुक्रम् । अन्धः । अध्वर्युऽभिः । प्रऽयतम् । मध्वः । अग्रम् । इन्द्रः । मदाय । प्रति । धत् । पिबध्यै । शूरः । मदाय । प्रति । धत् । पिबध्यै ॥ ५ ॥ १६ ॥

अथाधुना शूरोविक्रान्तः मघवा धनवानिन्द्रः श्वेतं शुभ्रं कलशं कलशेपात्रेस्थितम् गोभिर्गव्येनपयसा अक्तं सिक्तं आपिप्यानमाप्याययन्तं शुक्रं सारोपेतमध्वर्युभिःप्रयतंदत्तम् अन्धः सोमलक्षणमन्नं मध्वोमधुरस्यसोमरसस्यअग्रमग्रेमदायमदार्थंपिबध्यै पातुंप्रतिधत् प्रतिदधातु पुनरुक्तिरादरार्था ॥ ५ ॥

॥ इतितृतीयस्यषष्ठेषोडशोवर्गः ॥ १६ ॥

त्वायुजेतिपञ्चर्चंसप्तमंसूक्तंवामदेवस्यार्षं त्रैष्टुभमैन्द्रासोमदेवताकम् अनुक्रान्तंच–त्वायुजैन्द्रासोमामिति । विनियोगोलैङ्गिकः ।

तत्रप्रथमा–

त्वायुजातवतत्सोमसख्यइन्द्रोअपोमनवेसस्रुतस्कः ।
अहन्नहिमरिणात्सप्तसिन्धूनपावृणोदपिहितेवखानि ॥ १ ॥

त्वा । युजा । तव । तत् । सोम । सख्यम् । इन्द्रः । अपः । मनवे । सऽस्रुतः । करितिकः । अहन् । अहिम् । अरिणात् । सप्त । सिन्धून् । अप । अवृणोत् । अपिहिताऽइव । खानि ॥ १ ॥

हेसोम तव त्वदीये तत्तस्मिन्सख्ये सखित्वे सति त्वा त्वया युजासहायेन इन्द्रः सस्रुतः सरणशीलाअपोवृष्टिलक्षणान्युदकानिमनवेमनुष्येभ्यः कः अकरोत् किंच अहिं वृत्रमसुरमहन् हतवान् सप्तसर्पणशीलाः सिन्धूनपः अरिणात् प्रैरयेत् अपिहितेवअपिहितानीव वृत्रेणतिरोहितानिच अत्रेवशब्दश्चार्थे खानि स्रोतसांद्वाराणिअपावृणोदुद्घाटितवान् ॥ १ ॥

अथद्वितीया–

त्वायुजानिखिदत्सूर्यस्येन्द्रश्चक्रंसहसासद्यइन्दो ।
अधिष्णुनाबृहतावर्तमानंमहोद्रुहोअपविश्वायुधायि ॥ २ ॥

त्वा । युजा । नि । स्विदत् । सूर्यस्य । इन्द्रः । चक्रम् । सहसा ।
सद्यः । इन्दो इति । अधि । स्नुना । बृहता । वर्तमानम् ।
महः । द्रुहः । अप । विश्वऽआयु । धायि ॥ २ ॥

हेइन्दो सोम इन्द्रःसद्यःसपदि त्वा त्वया युजा सहायेन सूर्यस्यप्रेरकस्यसवितुः संबन्धिनःपूर्वोद्विचक्रस्यएकंचक्रंसहसाअभिभावुकेनबलेननिखिदत् आच्छिनत् कीदृशम् अधि उपरि स्नुना स्थितेन बृहतामहतान्तरिक्षेणवर्तमानं किंच महोमहतःप्रभूतस्य द्रुहोद्रोग्धुः सूर्यस्य संबन्धिविश्वायु सर्वतोगन्तृचक्रम् अपधायि इन्द्रेणापहारि ॥ २ ॥

अथतृतीया—

अहन्निन्द्रोअदहदग्निरिन्दोपुरादस्यून्मध्यन्दिनादभीके ।
दुर्गेदुरोणेक्रत्वानयातांपुरूसहस्राशर्वानिबर्हीत् ॥ ३ ॥

अहन् । इन्द्रः । अदहत् । अग्निः । इन्दो इति । पुरा ।
दस्यून् । मध्यन्दिनात् । अभीके । दुःऽगे । दुरोणे । क्रत्वा । न ।
याताम् । पुरु । सहस्रा । शर्वा । नि । बर्हीत् ॥ ३ ॥

हेइन्दो सोम अभीके संग्रामे दस्यून् शत्रूनिन्द्रः अहन्नवधीत् अग्निः कांश्चिच्छत्रूनदहद्दाह कीदृशाविन्द्राग्नी मध्यन्दिनान्मध्याह्नात्पुरापुरस्तान्पूर्वाह्णे तवपानाल्लब्धबलाविति शेषः यातांगछतामसुराणां पुरु पुरूणि बहूनि सर्वाणि निरवशेषाणि सहस्रा सहस्राण्यपरिमितानि सैन्यानि निबर्हीत् इन्द्रःअवधीत् तत्रदृष्टान्तः—दुरोणे दुरवने रक्षितुमशक्येदुर्गेदुरवगाहेदेशेक्रत्वान कर्मणास्वकीयंकार्यमुद्दिश्यगच्छतःपथिकान्यथाधनलोलुपश्चोरोहन्तितद्वत् ॥ ३ ॥

अथचतुर्थी—

विश्वस्मात्सीमधमाँइन्द्रदस्यून्विशोदासीरकृणोरप्रशस्ताः ।
अबाधेथाममृणतंनिशत्रूनविन्देथामपचितिंवधत्रैः ॥ ४ ॥

विश्वस्मात् । सीम् । अधमात् । इन्द्र । दस्यून् । विशः । दासीः ।
अकृणोः । अप्रऽशस्ताः । आबाधथाम् । अमृणतम् । नि ।
शत्रून् । अविन्देथाम् । अपऽचितिम् । वधत्रैः ॥ ४ ॥

हेइन्द्र त्वं सीमेभ्यान्दस्यून् विश्वस्मात्सर्वस्मात् गुणादधमान्हीनान्अकृणोः अकरोः किंच दासीः कर्महीनाविशः मानुषीःप्रजाः अप्रशस्ताःगर्हिताअकृणोः हेइन्द्रासोमौ युवांशत्रूनबाधेथां न्यमृणतं नितरांहिंसितवन्तौ अपिच वधत्रैः तेषांशत्रूणांप्रहारैः अपचितिं पूजां जनेभ्यः अविन्देथाम् अलभेथाम् ॥ ४ ॥

अथपञ्चमी—

एवासत्यंमंघवानायुवंतदिन्द्रंश्चसोमोर्वमश्व्यंगोः ।
आदर्दृतमपिंहितान्यश्नारिरिचथुःक्षाश्चित्ततृदाना ॥५॥१७॥

एव । सत्यम् । मघऽवाना । युवम् । तत् । इन्द्रः । च । सोम । ऊर्वम् । अश्व्यम् । गोः । आ । अदर्दृतम् । अपिऽहितानि । अश्नां । रिरिचथुः । क्षाः । चित् । ततृदाना ॥ ५ ॥ १७ ॥

हेसोम त्वंचेन्द्रश्चेति युवामुभौ ऊर्वं महान्तमश्व्यम् अश्वसमूहं गोः गवांसमूहंच आदर्दृतम् आदरयतम् अपिहितानि पणिभिराच्छादितानिगवांवृन्दानि क्षाश्चित्पणीनांभूमीश्च अश्ना अशानपरेणबलेनरिरिचथुः रेचितवन्तौ हेमघवानौ धनवन्ताविन्द्रासोमौ ततृदाना शत्रूणांहिंसकौ युवं युवाम् एव एवम् उक्तप्रकारेणयत्कृतवन्तौ तत्सर्वंसत्यमेव ॥ ५ ॥

॥ इतितृतीयस्यषष्ठेसप्तदशोवर्गः ॥ १७ ॥

आनःस्तुतइतिपञ्चर्चमष्टमंसूक्तंवामदेवस्यार्षंत्रैष्टुभमैन्द्रम् आनस्तुतइत्यनुक्रमणिका विनियोगोलैङ्गिकः ।

तत्रप्रथमा—

आनःस्तुतउपवाजेभिरूतीइन्द्रंयाहिहरिंभिर्मन्दसानः ।
तिरश्चिदर्यःसवनापुरूण्याङ्गूषेभिर्गृणानःसत्यराधाः ॥ १ ॥

आ । नः । स्तुतः । उपं । वाजेभिः । ऊती । इन्द्र । याहि । हरिंऽभिः । मन्दसानः । तिरः । चित् । अर्यः । सवना । पुरूणि । आङ्गूषेभिः । गृणानः । सत्यऽराधाः ॥ १ ॥

हेइन्द्र स्तुतस्त्वंवाजेभिर्वाजैरन्नैःसह तिरश्चित्प्राप्तानि तिरःसत इतिप्राप्तस्येतियास्कः। पुरूणि पूर्णानि सवना सवनानि नोस्मदीयान्यज्ञान् उपप्रातिऊती ऊत्या नोस्माकंरक्षणार्थं हरिभिरश्वैरायाहि आगच्छ कीदृशः मन्दसानोमोदमानः अर्यः स्वामी आङ्गूषेभिःस्तोत्रैर्गृणानः स्तूयमानःसत्यराधाःसत्यधनः ॥ १ ॥

अथद्वितीया—

आहिष्मायातिनर्यश्चिकित्वान्हूयमानःसोतृभिरुपयज्ञम् ।
स्वश्वोयोअभीरुर्मन्यमानःसुष्वाणेभिर्मदतिसंहवीरैः ॥ २ ॥

आ । हि । स्म । याति । नर्यः । चिकित्वान् । हूयमानः ।
सोतृऽभिः । उप । यज्ञम् । सुऽअश्वः । यः । अभीरुः । मन्यमानः ।
सुस्वानेभिः । मदति । सम् । ह । वीरैः ॥ २ ॥

नर्योनृभ्योहितः चिकित्वान्सर्वंजानन् सोतृभिः सोममभिषुण्वद्भिः ऋत्विग्भिर्हूयमानआहूयमानइन्द्रः अस्मदीयंयज्ञमुपप्रातिआयाति आगच्छतु हिष्मेतिपूरणौ स्वश्वः शोभनाश्वोपेतः अभीरुर्निर्भयशीलः सुस्वानेभिः सुन्वद्भिर्यजमानैर्मन्यमानःस्तूयमानोयइन्द्रः वीरैःशूरैर्मरुद्भिःसह संमदतिह सहमाद्यत्येव सइन्द्रः आगच्छत्वितिपूर्वेणसंबन्धः ॥ २ ॥

अथतृतीया—

श्रावयेदस्यकर्णावाजयध्यैजुष्टामनुप्रदिशंमन्दयध्यै ।
उद्वावृषाणोराधसेतुविष्मान्करन्नइन्द्रःसुतीर्थाभयंच ॥ ३ ॥

श्रवय । इत् । अस्य । कर्णा । वाजयध्यै । जुष्टाम् । अनु ।
प्र । दिशम् । मन्दयध्यै । उत्ऽववृषाणः । राधसे । तुविशुष्मान् ।
करत् । नः । इन्द्रः । सुऽतीर्था । अभयम् । च ॥ ३ ॥

हेस्तोतः त्वमस्येन्द्रस्यसंबन्धिनौ कर्णा कर्णौ वाजयध्यै इन्द्रंबालिनं कर्तुंजुष्टामनुदिशंसेवितासुसर्वासुदिक्षु प्रमन्दयध्यै प्रकर्षेणेन्द्रंमादयितुंचश्रवय स्तोत्राणिश्रावय इ-

१ नि० ३. २०.

द्वितिपूरणः उद्भवृषाणः सोमेनोत्सिच्यमानः तुविशुष्मान्बलवानिन्द्रः नोस्माकंराधसेधनार्थं सुतीर्था शोभनानितीर्थानि अभयंच भयराहित्यंच करत्करोतु ॥ ३ ॥

अथचतुर्थी—

अच्छायोगन्तानाधमानमूतीइत्थाविप्रंहवमानंगृणन्तम् ।
उपत्मनिदधानोधुर्याशून्त्सहस्राणिशतानिवज्रबाहुः ॥ ४ ॥

अच्छ । यः । गन्ता । नाधमानम् । ऊती । इत्था । विप्रम् । हवमानम् । गृणन्तम् । उप । त्मनि । दधानः । धुरि । आशून् । सहस्राणि । शतानि । वज्रऽबाहुः ॥ ४ ॥

वज्रबाहुर्वज्रहस्तोयइन्द्रः त्मनि आत्मनि स्थितानात्मवश्यान् सहस्राणि सहस्रसंख्यान् शतानि शतसंख्याकान् आशून्शीघ्रगामिनोश्वान्धुरि रथवहनप्रदेशेउपदधानः संस्थापयन् ऊतीरक्षणार्थं नाधमानं याचमानं विप्रंमेधाविनं हवमानमाह्वयन्तम् इत्था इत्थमनेनप्रकारेण गृणन्तं स्तुवन्तं यजमानम् अच्छाभिमुख्येन गन्तागमनशीलोभवतीतिशेषः सइन्द्रः सुतीर्थान्यभयंच करोत्वितिपूर्वेणसंबन्धः ॥ ४ ॥

अथपञ्चमी—

त्वोतासोमघवन्निन्द्रविप्रावयन्तेस्यामसूरयोगृणन्तः ।
भेजानासोबृहद्दिवस्यरायआकाय्यस्यदावनेपुरुक्षोः ॥५॥१८॥

त्वाऽऊतासः । मघऽवन् । इन्द्र । विप्राः । वयम् । ते । स्याम । सूरयः । गृणन्तः । भेजानासः । बृहत्ऽदिवस्य । रायः । आऽकाय्यस्य । दावने । पुरुऽक्षोः ॥ ५ ॥ १८ ॥

हेमघवन्धनवन्निन्द्र त्वोतासः त्वयारक्षिताः विप्रामेधाविनः गृणन्तः त्वां स्तुवन्तः सूरयः स्तोतारोवयं बृहद्दिवस्य महादीप्तेः आकाय्यस्य आसमन्तात्स्तुत्यस्य पुरुक्षोर्बहन्नस्य बहुकीर्तेर्वा ते त्वदीयस्य रायोधनस्य दावने निदाने निमित्तेसति भेजानासः त्वांभजमानाः स्याम भवेम ॥ ५ ॥

॥ इतितृतीयस्यषष्ठेष्टादशोवर्गः ॥ १८ ॥

नकिरिन्द्रेतिचतुर्विंशत्यृचंनवमंसूक्तं वामदेवस्यार्षंगायत्रम् अष्टमीचतुर्विंशीचद्वेअनुष्टुभौ इन्द्रोदेवता दिवश्चिद्घेत्ययंत्र्यृचउषोदेवताकइन्द्रदेवताकश्च तथाचानुक्रान्तं—नकिश्चतुर्विंशतिर्दिवश्चित्त्र्यृचउषस्यश्चगायत्रंह्यष्टम्यन्त्येचानुष्टुभाविति । अतिरात्रेतृतीयेपर्यायेमैत्रावरुणशस्त्रेउत्तमावर्जमिदंसूक्तं तथाचसूत्रितम्—नकिरिन्द्रत्वदुत्तरइत्युत्तमामुद्धरेदिति ।

तत्रप्रथमा—

नकिरिन्द्रत्वदुत्तरोनज्यायाँअस्तिवृत्रहन् । नकिरेवायथात्वम् ॥१॥

नकिः । इन्द्र । त्वत् । उत्ऽतरः । न । ज्यायान् । अस्ति । वृत्रऽहन् । नकिः । एव । यथा । त्वम् ॥ १ ॥

हेवृत्रहन्निन्द्र वृत्रस्यनाशकेन्द्र लोकेएकोपीतिशेषः त्वत्त्वत्तःउत्तरःउत्कृष्टतरोनकिरस्ति नभवति त्वत्तः ज्यायान्प्रशस्यतरःएकोपिनास्ति हेइन्द्र त्वंलोकेयथाप्रसिद्धोभवसि तथाविधएकोपिनकिरेवास्ति नैवभवति कश्चिदपिलोकेइन्द्रसदृशोनास्तीत्यर्थः ॥ १ ॥

अथद्वितीया—

सत्रातेअनुकृष्टयोविश्वाचक्रेववावृतुः । सत्रामहाँअसिश्रुतः ॥ २ ॥

सत्रा । ते । अनु । कृष्टयः । विश्वाः । चक्राऽइव । ववृतुः । सत्रा । महान् । असि । श्रुतः ॥ २ ॥

हेइन्द्र कृष्टयःप्रजाःतेत्वामनुलक्ष्यीकृत्य सत्रा सत्यमेवववृतुः वर्तन्ते तत्रदृष्टान्तः—विश्वा विश्वानिव्याप्तानिचक्रेव चक्राणीव यथाचक्राणिशकटमनुवर्तन्तेतद्वत् हेइन्द्र महांस्त्वंसत्रा सत्यमेवश्रुतोविश्रुतोसि गुणैःप्रख्यातोभवसि ॥ २ ॥

अथतृतीया—

विश्वेचनेदनात्वादेवासइन्द्रयुयुधुः । यदहानक्तमातिरः ॥ ३ ॥

विश्वे । चन । इत् । अना । त्वा । देवासः । इन्द्र । युयुधुः । यत् । अहा । नक्तम् । आ । अतिरः ॥ ३ ॥

हेइन्द्र विश्वेचनेत् । सर्वएवदेवतासोसुरान्विजिगीषवोदेवाः अनाप्राणरूपेणबलेन त्वा त्वां सहायंलब्ध्वायुयुधुः असुरैःसहयुद्धंचक्रुः यद्यस्मात्कारणात् अहा अहःसु नक्तंरात्रिषुच आतिरः आसमन्ताच्छत्रूनवधीः अतःकरणात् युयुधुरितिपूर्वेणसंबन्धः ॥ ३ ॥

अथचतुर्थी–

यत्रोतबांधितेभ्यश्चक्रंकुत्सांययुध्यंते । मुषायइंन्द्रसूर्यम् ॥ ४ ॥

यत्रं । उत । बाधितेभ्यः । चक्रम् । कुत्साय । युध्यंते ।
मुषायः । इन्द्र । सूर्यम् ॥ ४ ॥

यत्रयस्मिन्युद्धे उतापिच हेइन्द्र त्वं बाधितेभ्यःकुत्ससहायेभ्यः युध्यते युद्धंकर्वते कुत्सायच सूर्यं सूर्यसंबन्धिचक्रं मुषायः अमुष्णाः अपहृतवानसीत्यर्थः तस्मिन्युद्धेप्रावःशचीभिरेतशमितिपरेणसंबन्धः ॥ ४ ॥

अथपञ्चमी–

यत्रंदेवाँऋघायतोविश्वाँअयुंध्यएकइत् । त्वमिंन्द्रवनूँरहंन् ।५।१९।

यत्रं । देवान् । ऋघायतः । विश्वान् । अयुंध्यः । एकः ।
इत् । त्वम् । इन्द्र । वनून् । अहन् ॥ ५ ॥ १९ ॥

हेइन्द्र त्वमेकइत् असहायएव यत्रयस्मिन्संग्रामेदेवानिन्द्रादीनृघायतोबाधमानान्विश्वान्सर्वान्राक्षसादीन् अयुध्यःयुद्धमकरोः तथावनून्हिंसकान् अहन्नवधीः ॥ ५ ॥

॥ इतितृतीयस्यषष्ठेएकोनविंशोवर्गः ॥ १९ ॥

अथषष्ठी–

यत्रोतमर्त्यायकमरिणाइन्द्रसूर्यम् । प्रावःशचीभिरेतशम् ।६।

यत्रं । उत । मर्त्याय । कम् । अरिणाः । इन्द्र ।
सूर्यम् । प्र । आवः । शचीभिः । एतशम् ॥ ६ ॥

यत्रयस्मिन्संग्रामे उतापिच हेइन्द्र त्वंमर्त्याय मनुष्याय एतशाख्याय ऋषये सूर्यमरिणाः अहिंसीः कमितिपूरणः तदानींशचीभिः युद्धकर्मभिःएतशमेतत्संज्ञकमृषिंप्रावः प्रकर्षेणारक्षः ॥ ६ ॥

अथसप्तमी–

किमादुतासिवृत्रहन्मघवन्मन्युमत्तमः । अत्राहदानुमातिरः ॥७॥

किम् । आत् । उत । असि । वृत्रऽहन् । मघऽवन् । मन्युमत्ऽतमः । अत्र । अह । दानुम् । आ । अतिरः ॥ ७ ॥

हेवृत्रहन् वृत्राणामावरकाणांतमसांहन्तः मघवन्धनवन्निन्द्र त्वमादनन्तरमेव उतापिच किमितिप्रश्ने मन्युमत्तमोसिकिम् अत्यन्तंक्रोधवान्भवसि अत्रास्मिन्नन्तरिक्षेअहएवंदानुं दनोःपुत्रं वृत्रमातिरःआसमन्तादहिंसीः ॥ ७ ॥

अथाष्टमी–

एतद्घेदुतवीर्य१मिन्द्रचकर्थपौंस्यम् ।
स्त्रियंयद्दुर्हणायुवंवधीर्दुहितरंदिवः ॥ ८ ॥

एतत् । घ । इत् । उत । वीर्यम् । इन्द्र । चकर्थ । पौंस्यम् । स्त्रियम् । यत् । दुःऽहनायुवम् । वधीः । दुहितरम् । दिवः ॥ ८ ॥

हेइन्द्र उतापिच यत् यस्त्वमेतदुपलक्षितंपौंस्यंबलंवीर्यंसामर्थ्योपेतंचकर्थ कृतवानसि घइदितिपूरणौ किंच दुर्हणायुवं दुष्टंहननमिच्छन्तींदिवोदुहितरंद्युलोकसकाशादुत्पन्नांस्त्रियमुषसं वधीरवधीः ॥ ८ ॥

अथनवमी–

दिवश्चिद्घादुहितरंमहान्महीयमानाम् । उषासमिन्द्रसंपिणक् ॥९॥

दिवः । चित् । घ । दुहितरम् । महान् । महीयमानाम् । उषसम् । इन्द्र । सम् । पिणक् ॥ ९ ॥

हेइन्द्र महांस्त्वं दिवोदुहितरंद्युलोकस्यपुत्रीं महीयमानांपूज्यमानाम् उषसम् उषोदेवीं संपिणक्चिद संपिष्टवानसिखलु ॥ ९ ॥

अथदशमी–

अपोषाअनसःसरत्संपिष्टादहबिभ्युषी ।
नियत्सींशिश्नथद्वृषा ॥ १० ॥ २० ॥

अपं । उषाः । अनसः । सरत् । सम्ऽपिष्टात् । अहं । बिभ्युषी ।
नि । यत् । सीम् । शिश्नथत् । वृषा ॥ १० ॥ २० ॥

वृषा कामानांवर्षितेन्द्रः यद्यदासीमेतत् उषःसंबन्धिशकटंनिशिश्नथत् न्यवधीत् तदा उषाः उषोदेवता बिभ्युषी इन्द्रसकाशाद्भीतासतीसंपिष्टात् इन्द्रेणसंचूर्णितादनसःशकटात् अपसरदपजगाम अहेतिपूरणः ॥ १० ॥

॥ इतितृतीयस्यषष्ठेविंशोवर्गः ॥ २० ॥

अथैकादशी–

एतदस्याअनःशयेसुसंपिष्टंविपाश्या । ससारसींपरावतः ॥११॥

एतत् । अस्याः । अनः । शये । सुऽसंपिष्टम् । विऽपाशि ।
आ । ससार । सीम् । पराऽवतः ॥ ११ ॥

सुसंपिष्टमिन्द्रेणसुष्ठुसंचूर्णितमस्याउषसःसंबन्धि एतदनःशकटं विपाशि विपाडाख्यानदी तस्यां तत्तीरेआशये आसमन्ताच्छेते अशेत सीमियमुषोदेवताशकटेभग्नेसति परावतोदूरदेशात् ससार अपससार ॥ ११ ॥

अथद्वादशी–

उतसिन्धुंविबाल्यंवितस्थानामधिक्षमि । परिष्ठाइन्द्रमायया ॥१२॥

उत । सिन्धुम् । विऽबाल्यम् । विऽतस्थानाम् । अधि । क्षमि ।
परि । स्थाः । इन्द्र । मायया ॥ १२ ॥

हेइन्द्र उतापिच विबाल्यं विगतबाल्यावस्थांसंपूर्णजलां वितस्थानांवितिष्ठमानांसिन्धुं नदीम् अधिक्षमि क्षमायांमाययाप्रज्ञयापरिष्ठाः पर्यस्थाः सर्वतःस्थापनंकृतवानसि ॥ १२ ॥

अथत्रयोदशी–

उतशुष्णस्यधृष्णुयाप्रमृक्षोअभिवेदनम् । पुरोयदस्यसंपिणक् ॥१३॥

उत । शुष्णस्य । धृष्णुऽया । प्र । मृक्षः । अभि वेदनम् ।
पुरः यत् । अस्य । सम्ऽपिणक् ॥ १३ ॥

उतापिच हेइन्द्र धृष्णुया धर्षकस्त्वं शुष्णस्यशुष्णनाम्नोसुरस्यसंबन्धिवेदनं वित्तम् आभि अभितःसर्वतः प्रमृश्चः प्रकर्षेणाबाधथाः यद्यदा अस्यशुष्णस्यपुरःपुराणिनगराणिसंपिणक् संपिष्टवानसि तदाप्रमृश्चइतिसंबन्धः ॥ १३ ॥

अथचतुर्दशी—

उतदासंकौलितरंबृहतःपर्वतादधि। अवाहन्निन्द्रशम्बरम् ॥ १४ ॥

उत। दासम्। कौलिऽतरम्। बृहतः। पर्वतात्। अधि। अव। अहन्। इन्द्र। शम्बरम् ॥ १४ ॥

उतापिच हेइन्द्र त्वं दासमुपक्षपयितारंकौलितरं कुलितरनाम्नोपत्यं शम्बरमसुरं बृहतोमहतःपर्वतादद्रेरधिउपरि अव अवाचीनंकृत्वा अहन् हतवानसि ॥ १४ ॥

अथपञ्चदशी—

उतदासस्यवर्चिनःसहस्राणिशतावधीः। अधिपञ्चप्रधीँरिव १५।२१

उत। दासस्य। वर्चिनः। सहस्राणि। शता। अवधीः। अधि। पञ्च। प्रधीन्ऽइव ॥ १५ ॥ २१ ॥

उतापिच हेइन्द्र त्वं प्रधीनिव चक्रस्यपरितःस्थितान्शङ्कूनिव हिंसकान् पञ्चशता पञ्चशतानि पञ्चशतसंख्याकान् सहस्राणि सहस्रसंख्याकान् दासस्यलोकानामुपक्षपयितुः वर्चिनः वर्चिनामकस्यासुरस्यसंबन्धिनोनुचरान्पुरुषानाधि अधिकम् अवधीर्हतवानसि ॥ १५ ॥

॥ इतितृतीयस्यषष्ठेएकविंशोवर्गः ॥ २१ ॥

अथषोडशी—

उतत्यंपुत्रमग्रुवःपरावृक्तंशतक्रतुः। उक्थेष्विन्द्रआभजत् ॥ १६ ॥

उत। त्यम्। पुत्रम्। अग्रुवः। पराऽवृक्तम्। शतऽक्रतुः। उक्थेषु। इन्द्रः। आ। अभजत् ॥ १६ ॥

उतापिच शतक्रतुः शतकर्मेन्द्रः त्वं तं प्रसिद्धम् अग्रुवः एतन्नाम्न्याःपुत्रं परावृक्त-मेतन्नामकम् उक्थेषु स्तोत्रेष्वाभजत् भागिनंकृतवान् अयमर्थोवम्रीभिःपुत्रमग्रुवइत्यस्यामृचि प्रतिपादितइति ॥ १६ ॥

अथसप्तदशी–

उतत्यातुर्वशायदूअस्नातारांशचीपर्तिः । इन्द्रोविद्वाँअपारयत् ॥ १७ ॥

उत । त्या । तुर्वशायदू इति । अस्नातारा । शचीऽपतिः ।
इन्द्रः । विद्वान् । अपारयत् ॥ १७ ॥

उतापिच अस्नाताराअस्नातारौययातिशापादनभिषिक्तौ त्या त्यौ तौ प्रसिद्धौ तुर्वशायदू तुर्वशनामानंयदुनामकंचराजानौ शचीपतिः कर्मणांपालकः यद्वा शचीन्द्रस्यभार्यातस्याःपतिर्भर्ताविद्वान्सकलमपिजानन्निन्द्रः अपारयदभिषेकार्हावकरोत् ॥ १७ ॥

अथाष्टादशी–

उतत्यासद्यआर्यासरयोरिन्द्रपारतः । अर्णाचित्ररथावधीः ॥ १८ ॥

उत । त्या । सद्यः । आर्या । सरयोः । इन्द्र । पारतः ।
अर्णाचित्ररथा । अवधीः ॥ १८ ॥

उतापिच सद्यः सपदि हेइन्द्र त्वं त्या त्यौ तौ आर्या आर्यौ आर्यत्वाभिमानिनौसन्तावपि इन्द्रविषयभक्तिश्रद्धारहिताविस्यर्थः सरयोः सरय्वानद्याः पारतः पारेतीरेवसन्तौ अर्णाचित्ररथा अर्णनामकंचित्ररथनामकंचराजानौ अवधीःअहिंसीः ॥ १८ ॥

अथैकोनविंशी–

अनुद्वाजहितानयोऽन्धंश्रोणंचवृत्रहन् । नतत्तेसुम्नमष्टवे ॥ १९ ॥

अनु । द्वा । जहिता । नयः । अन्धम् । श्रोणम् । च । वृत्रऽहन् ।
न । तत् । ते । सुम्नम् । अष्टवे ॥ १९ ॥

---

१ ऋ०.सं० ३. ६. २. ।

हेवृत्रहन् वृत्रस्यहिंसकेन्द्र त्वं जहिता जहितौ सर्वैर्बन्धुभिःत्यक्तौअन्धंचक्षुर्हीनमेकंश्रोणं चपङ्गुमपरंचद्वावेतौद्वौअनुनयः अन्धपङ्गुत्वपरिहारेणानुनीतवानसि हेइन्द्र ते त्वयादत्तं तत्सुम्नं सुखम् अष्टवे व्याप्तुंकोपिनप्रभवतीतिशेषः ॥ १९ ॥

अथविंशी—

शतमश्मन्मयीनांपुरामिन्द्रोव्यास्यत् । दिवोदासायदाशुषे २० । २२

शतम् । अश्मन्ऽमयीनाम् । पुराम् । इन्द्रः । वि । आस्यत् ।
दिवःऽदासाय । दाशुषे ॥ २० ॥ २२ ॥

इन्द्रः अश्मन्मयीनां पाषाणैर्निर्मितानां पुरां शम्बरस्यसंबन्धिनांनगराणां शतं शतसंख्याकं दिवोदासायैतन्नामकायदाशुषेहविर्दत्तवतेयजमानायव्यास्यत् व्यक्षिपत् ॥ २० ॥

॥ इतितृतीयस्यषष्ठेद्वाविंशोवर्गः ॥ २२ ॥

अथैकविंशी—

अस्वापयद्दभीतयेसहस्रात्रिंशतंहथैः । दासानामिन्द्रोमायया । २१ ।

अस्वापयत् । दभीतये । सहस्रा । त्रिंशतम् । हथैः । दासानाम् ।
इन्द्रः । मायया ॥ २१ ॥

इन्द्रोमायया स्वकीययाशक्त्या दासानांलोकानामुपक्षपयितृणांराक्षसादीनांत्रिंशतं त्रिंशत्संख्याकानिसहस्रासहस्राणि दभीतयेदभीतिनामकस्यार्थाय हथैर्हननसाधनैरायुधैरस्वापयदवधीत् ॥ २१ ॥

अथद्वाविंशी—

सघेदुतासिवृत्रहन्त्समानइन्द्रगोपतिः । यस्ताविश्वानिचिच्युषे । २२ ।

सः । घ । इत् । उत । असि । वृत्रऽहन् । समानः । इन्द्र ।
गोऽपतिः । यः । ता । विश्वानि । चुच्युषे ॥ २२ ॥

उतापिच हेइन्द्र यस्त्वं ता तानि विश्वानि समस्तान्शत्रून्चिच्युषे प्राच्यावयः हेवृत्रहन् वृत्राणांशत्रूणांहिंसकेन्द्र गोपतिर्गवांपालकः सत्वंसमानःसर्वेषांयजमानानांसमःसन् प्रख्यातोऽसि घेदितिपूरणौ ॥ २२ ॥

अथत्रयोविंशी—

उतनूनंयदिन्द्रियंकरिष्याइन्द्रपौंस्यम् । अद्यानकिष्टदामिनत् ।२३।

उत । नूनम् । यत् । इन्द्रियम् । करिष्याः । इन्द्र । पौंस्यम् ।
अद्य । नकिः । तत् । आ । मिनत् ॥ २३ ॥

उतापिच हेइन्द्र यत्पौंस्यंत्वदीयंबलम् इन्द्रियं सामर्थ्योपेतं नूनंकरिष्याः कृतवानसिखलु अद्य अद्यतनः कश्चित्तद्बलंनकिरामिनत् नहिंस्यात् ॥ २३ ॥

अथचतुर्विंशी—

वामंवामंतआदुरेदेवोददात्वर्यमा ।
वामंपूषावामंभगोवामंदेवःकरूळती ॥२४॥२३॥

वामम्ऽवामम् । ते । आऽदुरे । देवः । ददातु । अर्यमा । वामम् ।
पूषा । वामम् । भगः । वामम् । देवः । करूळती ॥ २४ ॥ २३ ॥

हेआदुरे शत्रूणांदारयितरिन्द्र ते तव वामंवामं यद्यद्वननीयंसंभजनीयंधनमस्ति लोकेतद्वामंवसुअर्यमाअरीणांनियमयिता एतन्नामकोदेवःददातु प्रयच्छतु तथा करूळती कृत्तदन्तः पूषापोषकोदेवः वामंधनंददातु भगोपिधनंददातु अत्रकरूळतीत्येतत्संनिहितत्वाद्भगइत्यनेनसंबन्धनीयम् अथवा अर्यमादीनांत्रयाणामपिविशेषणत्वेनमान्यं कथंपूष्णोविशेषणंस्यादिति साकाङ्क्षत्वात् न सान्निध्याकाङ्क्षयोःसद्भावेपियोग्यतामन्तरेणान्वयायोगात् तस्मात्पूषाप्रपिष्टभागोदन्तकोहीत्यादिश्रुतिषुपूष्णएवादन्तकत्वेनप्रसिद्धेर्व्यवहितस्यापितस्यैवविशेषणत्वंयुक्तं वामं वननीयंभवतीत्यादिनिरुक्तमत्रद्रष्टव्यम् ॥ २४ ॥

॥ इतितृतीयस्यषष्ठेत्रयोविंशोवर्गः ॥ २३ ॥

कयानइतिपञ्चदशर्चंदशमंसूक्तंवामदेवस्यार्षमैन्द्रं गायत्रम् अभीषुणइत्येषापादनिचृन्नामगायत्री त्रयःसप्तकाःपादनिचृदितितल्लक्षणयुक्तत्वात् तथाचानुक्रमणिका—कयापञ्चोनाभीषुपादनिचृदिति । सूक्तविनियोगोलैङ्गिकः अग्निष्टोमेचातुर्विंशिकेहनिचमाध्यन्दिनेसवनेमैत्रावरुणस्यकयानइत्याद्यस्तृचःस्तोत्रियः सूत्रितंच—होत्रकाणांकयानश्चित्रआभुवदिति । वरुणप्रघासेषुकायस्यहविषोनुवाक्याकयानइत्येषा तथाचसूत्रं—कयानश्चित्रआभुवद्धिरण्यगर्भःसमवर्ततताग्रइति ।

१ नि० ६. ३१. ।

तत्रप्रथमा—

कयांनश्चित्रआभुंवदूतीसदावृंधःसखा । कयाशचिंष्ठयावृता ॥१॥

कयां । नः । चित्रः । आ । भुवत् । ऊती । सदाऽवृंधः । सखा ।
कयां । शचिंष्ठया । वृता ॥ १ ॥

सदावृधः सदावर्धमानः चित्रश्चायनीयः पूजनीयः सखा मित्रभूतइन्द्रः कया ऊती ऊत्या तर्पणेननोस्मान् आभुवदाभिमुख्येनभवेत् शचिष्ठया प्रज्ञावत्तमया प्रज्ञासहितमनुष्ठीयमानेन कयावृताकेनवर्तनेनकर्मणाच अभिमुखोभवेत् ॥ १ ॥

अथद्वितीया—

कस्त्वांसत्योमदांनांमंहिंष्ठोमत्सदन्धंसः । दृळ्हाचिंदारुजेवसुं ॥२॥

कः । त्वा । सत्यः । मदानाम् । मंहिंष्ठः । मत्सत् । अन्धंसः ।
दृळ्हा । चित् । आऽरुजें । वसुं ॥ २ ॥

मंहिष्ठःपूजनीयः सत्यः सत्यभूतः मदानांमादयितॄणांमध्येकोमदकरः अन्धसः सोमस्य रसः दृळ्हाचिद्दृढान्यपि वसु वसूनि शत्रूणांधनानि आरुजे आसमन्ताद्भङ्क्तुं हेइन्द्र त्वा त्वां मत्सत् मादयेत् ॥ २ ॥

अथतृतीया—

अभीषुणःसखींनामविताजरितॄणाम् । शतंभंवास्यूतिभिंः ॥ ३ ॥

अभि । सु । नः । सखींनाम् । अविता । जरितॄणाम् । शतम् ।
भवासि । ऊतिऽभिंः ॥ ३ ॥

हेइन्द्र त्वं सखीनांसमानख्यातीनां जरितॄणां स्तोतॄणाम् अविताऽरक्षिता त्वं शतं शतेन बह्वीभिरूतिभीरक्षाभिःसह नोस्माकं सु सुष्ठु अभिभवासि अभिमुखोभव ॥ ३ ॥

अथचतुर्थी—

अभीनआवंवृत्स्वचक्रंनवृत्तमर्वतः । नियुद्भिश्चर्षणीनाम् ॥ ४ ॥

अभि । नः । आ । ववृत्स्व । चक्रम् । न । वृत्तम् । अर्वतः ।
निुयुत्ऽभिः । चर्षणीनाम् ॥ ४ ॥

हेइन्द्र त्वं वृत्तं चक्रंन वर्तमानंचक्रमिव अर्वतः उपगन्तॄन्नोस्मान् चर्षणीनाम् अस्मदीयानांमनुष्याणां नियुद्भिः स्तुतिभिः अभ्याववृत्स्व अभ्यावर्तस्व ॥ ४ ॥

अथपञ्चमी–

प्रवताहिक्रतूनामाहापदेवगच्छसि । अभक्षिसूर्येसचा ॥ ५ ॥ २४ ॥

प्रऽवता । हि । क्रतूनाम् । आ । ह । पदाऽइव । गच्छसि । अभक्षि ।
सूर्ये । सचा ॥ ५ ॥ २४ ॥

हेइन्द्र त्वं क्रतूनां कर्मणां यजनानांसंबन्धिनः प्रवता प्रवतः प्रवणान्देशान्पदेव पदानिस्वकीयानिस्थानानीव आगच्छसिहि आगतोभवसिखलु हेतिपूरणः हेइन्द्र त्वाम् अहम् सूर्ये सूर्येणसचासह अभक्षिभजे ॥ ५ ॥

॥ इतितृतीयस्यषष्ठेचतुर्विंशोवर्गः ॥ २४ ॥

अथषष्ठी–

संयत्तइन्द्रमन्यवःसंचक्राणिदधन्विरे । अधत्वेअधसूर्ये ॥ ६ ॥

सम् । यत् । ते । इन्द्र । मन्यवः । सम् । चक्राणि । दधन्विरे ।
अध । त्वे इति । अध । सूर्ये ॥ ६ ॥

हेइन्द्र ते त्वदर्थं मन्यवः स्तुतयः यद्यदासंदधन्विरे अस्माभिरनुमन्यन्ते चक्राणि चङ्क्रमणानिकर्माणिचसंदधन्विरे अध तदानीं ताः स्तुतयः तानिकर्माणिच त्वे त्वयि भवन्ति अध तदनन्तरंसूर्येचभवन्ति ॥ ६ ॥

अथसप्तमी–

उतस्माहित्वामाहुरिन्मघवानंशचीपते । दातारमविदीधयुम् ॥ ७ ॥

उत । स्म । हि । त्वाम् । आहुः । इत् । मघऽवानम् । शचीऽपते ।
दातारम् । अविऽदीधयुम् ॥ ७ ॥

हेशचीपते कर्मपालकेन्द्र उतापिच मघवानं धनवन्तं दातारं स्तोतृभ्योमीष्टप्रदं त्वा त्वामविदीधयुं विदीधयुरदीप्यमानः नविदीधयुरविदीधयुःतंदीप्यमानमाहुःस्म प्रवदन्तिखलु हीदिति द्वयंपूरणार्थम् ॥ ७ ॥

अथाष्टमी–

उतस्मासद्यइत्परिंशशमानायसुन्वते । पुरूचिन्मंहसेवसुं ॥ ८ ॥

उत । स्म । सद्यः । इत् । परिं । शशमानायं । सुन्वते । पुरु । चित् । मंहसे । वसुं ॥ ८ ॥

उतापिच हेइन्द्र त्वं सद्यइत् सद्यएव शशमानाय स्तुतिंकुर्वते शशमानःशंसमानइतिया-स्केनोक्तत्वात् । सुवन्ते सोमाभिषवंकुर्वतेयजमानाय पुरुचित् पुरूणिबहून्यपिवसुवसूनि धनानिपरि परितोमंहसेस्म प्रयच्छसिखलु ॥ ८ ॥

अथनवमी–

नहिष्मातेशतंचनराधोवरंन्तआमुरंः । नच्यौत्नानिंकरिष्यतः ॥ ९ ॥

नहि । स्म । ते । शतम् । चन । राधंः । वरंन्ते । आऽमुरंः । न । च्यौत्नानिं । करिष्यतः ॥ ९ ॥

हेइन्द्र आमुरः बाधकाराक्षसादयः ते त्वदीयं शतंचन शतपरिमितमपि राधोधनं नहिवरन्तेस्म नवारयन्तिखलु किंच शत्रूणांहिंसनंकरिष्यतः तव च्यौत्नानि बलानि नवारयन्ति ॥ ९ ॥

अथदशमी–

अस्माँअंवन्तुतेशतमस्मान्त्सहस्रमूतयंः ।
अस्मान्विश्वाअभिष्टंयः ॥ १० ॥ २५ ॥

अस्मान् । अवन्तु । ते । शतम् । अस्मान् । सहस्रम् । ऊतयंः । अस्मान् । विश्वाः । अभिष्टंयः ॥ १० ॥ २५ ॥

---

१ नि० ६. ८.

हेइन्द्र ते त्वदीयाः शतं शतसंख्याकाः ऊतयोरक्षाः अस्मानवन्तु रक्षन्तु सहस्रं सहस्रसंख्याकास्त्वदीयारक्षाः अस्मानवन्तु विश्वासर्वाण्यभीष्टयस्त्वदीयान्यभिगमनानिअस्मानवन्तु ॥ १० ॥

॥ इतितृतीयस्यषष्ठेपञ्चविंशोवर्गः ॥ २५ ॥

अथैकादशी–

अस्माँइहावृणीष्वसख्यायस्वस्तये। महोरायेदिवित्मते ॥ ११ ॥

अस्मान्। इह। वृणीष्व। सख्याय। स्वस्तये। महः। राये। दिवित्मते ॥ ११ ॥

हेइन्द्र त्वम् इहास्मिन्यज्ञे अस्मान्यजमानान्सख्याय सखिभावाय स्वस्तये अविनाशायच महोमहतेदिवित्मते दीप्तिमते राये धनायच वृणीष्व संभजस्व ॥ ११ ॥

अथद्वादशी–

अस्माँअविड्ढिविश्वहेन्द्रराया परीणसा।
अस्मान्विश्वाभिरूतिभिः ॥ १२ ॥

अस्मान्। अविड्ढि। विश्वहा। इन्द्र। राया। परीणसा। अस्मान्। विश्वाभिः। ऊतिऽभिः ॥ १२ ॥

हेइन्द्र त्वं विश्वहा सर्वेष्वहःसुपरीणसा महतारायाधनेन अस्मान्यजमानानविड्ढि रक्ष किंच विश्वाभिःसर्वाभिरूतिभीरक्षाभिः अस्मानविड्ढि ॥ १२ ॥

अथत्रयोदशी–

अस्मभ्यंताँअपावृधिव्रजाँअस्तेवगोमतः।
नवाभिरिन्द्रोतिभिः ॥ १३ ॥

अस्मभ्यम्। तान्। अप। वृधि। व्रजान्। अस्ताऽइव। गोऽमतः। नवाभिः। इन्द्र। ऊतिऽभिः ॥ १३ ॥

हेइन्द्र त्वं नवाभिर्नूतनाभिः ऊतिभीरक्षाभिः अस्तेव क्षेप्ताशूरइव गोमतोगोभिर्युक्तान्तान् प्रसिद्धान्व्रजान्गोनिवासानस्मभ्यमपावृधि उद्घाटय ॥ १३ ॥

अथचतुर्दशी—

अस्माकंधृष्णुयारथोद्युमाँइन्द्रानपच्युतः । गव्युरश्वयुरीयते ॥१४॥

अस्माकम् । धृष्णुऽया । रथः । द्युऽमान् । इन्द्र । अनपऽच्युतः । गव्युः । अश्वऽयुः । ईयते ॥ १४ ॥

हेइन्द्र धृष्णुया धृष्णुःशत्रूणांधर्षकः द्युमान्दीप्तिमाननपच्युतः विनाशरहितः गव्युर्गोमान् , अश्वयुरश्ववान् अस्माकमस्मत्संबन्धीरथईयते सर्वत्रगच्छतु तेनरथेनास्मात्रक्षेत्यर्थः ॥ १४ ॥

अस्माकमुत्तमंकृधीत्यनयाआदित्यंदृष्ट्वारथादवरोहेत् तथाचसूत्रितम्—अस्माकमुत्तमंकृधीत्यादित्यमीक्षमाणोजपित्वावरोहेदिति ।

सैषापञ्चदशी—

अस्माकमुत्तमंकृधिश्रवोदेवेषुसूर्य । वर्षिष्ठन्द्यामिवोपरि ।१५।२६।

अस्माकम् । उत्ऽतमम् । कृधि । श्रवः । देवेषु । सूर्य । वर्षिष्ठम् । द्याम्ऽइव । उपरि ॥ १५ ॥ २६ ॥

हेसूर्य सर्वस्यप्रेरकेन्द्र हेआदित्यवा त्वंदेवेषुद्योतमानेषुत्वहचादिषुमध्ये अस्माकमस्मत्संबन्धिश्रवोयशःउत्तममुत्कृष्टंकृधि कुरु तत्रदृष्टान्तः—वर्षिष्ठमतिशयेनप्रवृद्धंसेचनसमर्थंवाद्यामिव द्युलोकं यथासर्वेषांलोकानामुपरिस्थितमुत्कृष्टमकरोस्तद्वत् ॥ १५ ॥

॥ इतितृतीयस्यषष्ठेषड्विंशोवर्गः ॥ २६ ॥

आतूनइन्द्रेतिचतुर्विंशत्यृचमेकादशंसूक्तं वामदेवस्यार्षंगायत्रमैन्द्रम् अन्त्येकनीनकेवेत्यादिकेद्वे इन्द्रस्याश्वदेवताके तथाचानुक्रान्तम्—आतूनश्चतुर्विंशतिरन्त्याभ्यामैन्द्राश्वौस्तुताविति । गतोविनियोगः ।

तत्रप्रथमा—

आतूनइन्द्रवृत्रहन्नस्माकमर्धमागहि । महान्महीभिरूतिभिः ॥१॥

आ । तु । नः । इन्द्र । वृत्रऽहन् । अस्माकम् । अर्धम् । आ । गहि । महान् । महीभिः । ऊतिऽभिः ॥ १ ॥

हेवृत्रहन् वृत्राणां शत्रूणांहिंसकेन्द्र त्वंनोस्मान्प्रति तु क्षिप्रमागच्छ हेइन्द्र महान्प्रभूतस्त्वं महीभिर्महतीभिरूतिभीरक्षाभिःसह अस्माकमर्धं समीपे आगहि आगच्छ ॥ १ ॥

अथद्वितीया—

भृमिश्चिद्घासितूतुजिराचित्रचित्रिणीष्वा। चित्रंकृणोष्यूतये ॥ २ ॥

भृमिः। चित्। घ। असि। तूतुजिः। आ। चित्र। चित्रिणीषु। आ। चित्रम्। कृणोषि। ऊतये ॥ २ ॥

हेचित्र चायनीय पूजनीयेन्द्र त्वं भृमिश्चित् भ्रमणशीलोपि तूतुजिः घासि अस्मदभीष्टप्रदाताचभवसि आकारश्चार्थे चित्रिणीषुचित्रकर्मयुक्तासु अस्मद्रूपासु प्रजासु चित्रंचायनीयंधनम् ऊतये रक्षणाय आकृणोषि आसमन्तात्करोषि ॥ २ ॥

अथतृतीया—

दभ्रेभिश्चिच्छशीयांसंहंसिव्राधन्तमोजसा। सखिभिर्येत्वेसचा ॥ ३ ॥

दभ्रेभिः। चित्। शशीयांसम्। हंसि। व्राधन्तम्। ओजसा। सखिऽभिः। ये। त्वे इति। सचा ॥ ३ ॥

हेइन्द्र त्वं दभ्रेभिश्चित् अल्पैरपिसखिभिर्यजमानैःसह शशीयांसं शशप्लुतगतौ उत्प्लवमानं व्राधन्तं महान्तमपि शत्रुमोजसाबलेनहंसि नाशयसि येयजमानाः त्वेत्वयिसचा संगताः तैरिति पूर्वेणसंबन्धः ॥ ३ ॥

अथचतुर्थी—

वयमिन्द्रत्वेसचावयन्त्वाभिनोनुमः। अस्माँअस्माँइदुदव ॥ ४ ॥

वयम्। इन्द्र। त्वे इति। सचा। वयम्। त्वा। अभि। नोनुमः। अस्मान्ऽअस्मान्। इत्। उत्। अव ॥ ४ ॥

हेइन्द्र वयंयजमानास्त्वे त्वयि सचासंगताः स्मः वयं त्वा त्वाम् अभिनोनुमः अतिशयेनाभिष्टुमः हेइन्द्र त्वमपि अस्मानस्मानित् सर्वानस्मानेव उदव उत्कर्षेणरक्ष ॥ ४ ॥

अथपञ्चमी–

सनंश्चित्राभिरद्रिवोनवद्याभिरूतिभिः। अनाधृष्टाभिरागहि॥५॥२७॥

सः। नः। चित्राभिः। अद्रिऽवः। अनवद्याभिः। ऊतिऽभिः।
अनाधृष्टाभिः। आ। गहि॥ ५॥ २७॥

हेअद्रिवः वज्रवन्निन्द्र सत्वं चित्राभिश्चायनीयाभिरनवद्याभिरनिन्दिताभिः अनाधृष्टाभिः शत्रुभिरप्रहर्षितैः ऊतिभिःरक्षणैःसहितःसन् नोस्मानागहि आगच्छ॥ ५॥

॥ इतितृतीयस्यषष्ठेसप्तविंशोवर्गः॥ २७॥

अथषष्ठी–

भूयामोषुत्वावतःसखायइन्द्रगोमतः। युजोवाजायघृष्वये॥ ६॥

भूयामो इति। सु। त्वाऽवतः। सखायः। इन्द्र। गोऽमतः।
युजः। वाजाय। घृष्वये॥ ६॥

हेइन्द्र त्वावतः त्वत्सदृशस्यगोमतोगोभिर्युक्तस्यदेवस्यसंबन्धिनःसखायः स्तोतारोवयं घृष्वये महते वाजायान्नाययुजः संयुक्ताः सु सुष्ठु भूयामोभवामैव॥ ६॥

अथसप्तमी–

त्वंह्येकईशिषइन्द्रवाजस्यगोमतः। सनोयन्धिमहीमिषम्॥७॥

त्वम्। हि। एकः। ईशिषे। इन्द्र। वाजस्य। गोऽमतः। सः।
नः। यन्धि। महीम्। इषम्॥ ७॥

हेइन्द्र हियस्मात्कारणात् त्वम् एकएव गोमतोगोभिर्युक्तस्यवाजस्यान्नस्य ईशिषे प्रभवसि अतःकारणात्सत्वंनोस्मभ्यंमहींमहतीमिषमन्नं यन्धि प्रयच्छ॥ ७॥

अथाष्टमी–

नत्वावरन्तेअन्यथायद्दित्ससिस्तुतोमघम्। स्तोतृभ्यइन्द्रगिर्वणः॥८॥

न। त्वा। वरन्ते। अन्यथा। यत्। दित्ससि। स्तुतः। मघम्।
स्तोतृऽभ्यः। इन्द्र। गिर्वणः॥ ८॥

हेइन्द्र गिर्वणः गिरांसंभक्तः स्तुतोस्माभिःसंस्तुतः यद्यदा स्तोतृभ्योस्मभ्यंमघंधनंदित्ससि दातुमिच्छसि तदा त्वा त्वामन्यथा प्रकारान्तरेणनवरन्ते ननिवारयन्ति किन्तुसर्वेप्यनुकूलाएव भवन्ति ॥ ८ ॥

अथनवमी–

अभित्वागोतमागिरानूषतप्रदावने । इन्द्रवाजायघृष्वये ॥ ९ ॥

अभि । त्वा । गोतमाः । गिरा । अनूषत । प्र । दावने । युजः । वाजाय । घृष्वये ॥ ९ ॥

हेइन्द्र त्वा त्वामभिलक्षीकृत्य गोतमाएतन्नामकाःऋषयः गिरा स्तुतिरूपयावाचा दावने धनदानार्थंप्रानूषत प्रकर्षेणस्तुवन्ति घृष्वयेमहतेवाजायान्नायप्रस्तुवन्ति ॥ ९ ॥

अथदशमी–

प्रतेवोचामवीर्या३ यामन्दसानआरुजः । पुरोदासीरभीत्य ॥ १० ॥ २८ ॥

प्र । ते । वोचाम । वीर्या । याः । मन्दसानः । आ । अरुजः । पुरः । दासीः । अभिऽइत्य ॥ १० ॥ २८ ॥

हेइन्द्र मन्दसानः सोमेनमोदमानस्त्वं दासीःक्षेप्तुरसुरस्यस्वभूताःयाःपुरःयानिपुराणि नगराणि अभीत्याभिगम्य आरुजः आसमन्तादभाङ्क्षीः हेइन्द्र तेत्वदीयानितत्रत्यानिवीर्यावीर्याणि वयंस्तोतारःप्रवोचाम प्रकर्षेणवदाम ॥ १० ॥

॥ इतितृतीयस्यषष्ठेष्टाविंशोवर्गः ॥ २८ ॥

अथैकादशी–

तातेगृणन्तिवेधसोयानिचकर्थपौंस्या । सुतेष्विन्द्रगिर्वणः ॥ ११ ॥

ता । ते । गृणन्ति । वेधसः । यानि । चकर्थ । पौंस्या । सुतेषु । इन्द्र । गिर्वणः ॥ ११ ॥

हेइन्द्र गिर्वणः गिरांस्तुतिरूपाणांवाचांसंभक्ता त्वं यानि पौंस्या पौंस्यानि बलानि चकर्थ कृतवानसि हेइन्द्र वेधसः प्राज्ञाः सुतेष्वभिषुतेषुसोमेषु तेत्वदीयानिता तानि बलानि गृणन्तिकीर्तयन्ति ॥ ११ ॥

अथद्वादशी—

अवीवृधन्तगोतमाइन्द्रत्वेस्तोमवाहसः।ऐषुधावीरवद्यशः ॥१२॥

अवीवृधन्त। गोतमाः। इन्द्र। त्वे इति। स्तोमऽवाहसः। आ। एषु। धाः। वीरऽवत्। यशः॥ १२॥

स्तोमवाहसः स्तोमानांस्तोत्राणांवोढारः गोतमाऋषयः हेइन्द्र त्वे त्वामवीवृधन्त स्तोत्रैर्वर्धयन्ति त्वमेषुगोतमेषु वीरवत्पुत्रपौत्रादियुक्तंयशोन्नमाधाः निधेहि॥ १२॥

अथत्रयोदशी—

यच्चिद्धिशश्वतामसीन्द्रसाधारणस्त्वम्।तंत्वावयंहवामहे॥१३॥

यत्। चित्। हि। शश्वताम्। असि। इन्द्र। साधारणः। त्वम्। तम्। त्वा। वयम्। हवामहे॥ १३॥

हेइन्द्र त्वं यच्चिद्धि यद्यपिखलु शश्वतां बहूनां सर्वेषांयजमानानांसाधारणोसि सामान्योभवसि तथापि तमेव त्वा त्वांवयंस्तोतारः हवामहे आह्वयामः॥ १३॥

अथचतुर्दशी—

अर्वाचीनोवसोभवास्मेसुमत्स्वान्धसः।सोमानामिन्द्रसोमपाः॥१४॥

अर्वाचीनः। वसो इति। भव। अस्मे इति। सु। मत्स्व। अन्धसः। सोमानाम्। इन्द्र। सोमऽपाः॥ १४॥

हेवसोयज्ञेनिवासकेन्द्र त्वमस्मे अस्मासुयजमानेषु अर्वाचीनोभिमुखोभव तथा हेसोमपाः सोमानांपातरिन्द्र सोमानामन्धसोऽन्नेन सु सुष्ठु मत्स्व माद्य॥ १४॥

अथपञ्चदशी—

अस्माकंत्वामतीनामास्तोमइन्द्रयच्छतु।अर्वागावर्तयाहरी॥१५॥

अस्माकम्। त्वा। मतीनाम्। आ। स्तोमः। इन्द्र। यच्छतु। अर्वाक्। आ। वर्तय। हरी इति॥ १५॥

मतीनांस्तोतॄणां मन्यतेःकर्तरिक्तिच् अस्माकंसंबन्धिस्तोमः स्तोत्रं हेइन्द्र त्वा त्वामायच्छतु अस्मासुनियच्छतु त्वमपिहरी त्वदीयावश्वौ अर्वागस्मदभिमुखंयथाभवतितथा वर्तय परिवर्तनं कुरु ॥ १५ ॥

अथषोडशी—

पुरोळाशंचनोघसोजोषयासेगिरंश्चनः। वधूयुरिवयोषणाम् १६।२९

पुरोळाशम् । च । नः । घसः । जोषयासे । गिरः । च । नः । वधूयुःइव । योषणाम् ॥ १६ ॥ २९ ॥

हेइन्द्र त्वंनोस्मदीयंपुरोळाशंचपुरोडाशरूपमन्नंच घसः अद्धि तथानोस्मदीयागिरश्च स्तुतिरूपाः वाचश्च जोषयासे सेवस्व तत्रदृष्टान्तः—वधूयुरिव स्त्रीकामोयथायोषणांस्त्रीणांगिरःसेवतेतद्वत् ॥ १६ ॥

॥ इतितृतीयस्यषष्ठेएकोनविंशोवर्गः ॥ २९ ॥

अथसप्तदशी—

सहस्रंव्यतीनांयुक्तानामिन्द्रमीमहे। शतंसोमस्यखार्यः ॥ १७ ॥

सहस्रम् । व्यतीनाम् । युक्तानाम् । इन्द्रम् । ईमहे । शतम् । सोमस्य । खार्यः ॥ १७ ॥

वयं स्तोतारः इन्द्रं परमैश्वर्ययुक्तंयुक्तानांशिक्षितानां व्यतीनां गमनवतामश्वानांसहस्रंसहस्र- संख्याकम् ईमहे याचामहे तथा सोमस्याभिषुतसोमस्य शतं शतसंख्याकाः खार्यः खारीरीमहे अत्र- मानविशेषवाचिनाखारीशब्देनद्रोणकलशउपलक्ष्यते अपरिमितद्रोणकलशान्बहून्यज्ञान्याचामहइ- त्यर्थः ॥१७ ॥

अथाष्टादशी—

सहस्रातेशतावयंगवामाच्यावयामसि । अस्मत्राराधएतुते ॥१८॥

सहस्रा । ते । शता । वयम् । गवाम् । आ । च्यवयामसि । अस्मत्रा । राधः । एतु । ते ॥ १८ ॥

हेइन्द्र ते त्वदीयानि गवां सहस्रा सहस्रसंख्याकानि शता शतसंख्याकानिच च्यावयामसि आच्यावयामः अस्मदभिमुखंकुर्मः तथा अस्मत्रा अस्मदीयंराधोधनं ते त्वत्तः एतु आगच्छतु ॥१८॥

अथैकोनविंशी—

दशतेकलशानांहिरण्यानामधीमहि। भूरिदाअसिवृत्रहन् ॥ १९ ॥

दर्श । ते । कलशानाम् । हिरण्यानाम् । अधीमहि । भूरिऽदाः ।
असि । वृत्रऽहन् ॥ १९ ॥

हेइन्द्र ते त्वत्तः कलशानांकुम्भानां कुम्भपरिमितानामितियावत् हिरण्यानां हितरमणीयानांधनानां दशसंख्याकानि अधीमहि धारयामः हेवृत्रहन् वृत्राणांशत्रूणांहिंसकेन्द्र त्वं भूरिदाअसि बहुप्रदोभवसि ॥ १९ ॥

अथविंशी–

भूरिदाभूरिदेहिनोमादभ्रंभूर्याभर । भूरिघेदिन्द्रदित्ससि ॥ २० ॥
भूरिऽदाः । भूरि । देहि । नः । मा । दभ्रम् । भूरि । आ । भर ।
भूरि । घ । इत् । इन्द्र । दित्ससि ॥ २० ॥

हेइन्द्र भूरिदाः बहुप्रदस्त्वं भूरि बहुधनं नोस्मभ्यंदेहि प्रयच्छ किन्तु दभ्रमल्पधनंमाप्रयच्छ भूरिबहुलंधनमस्मभ्यमाभरआहर किंच भूरिइत् अदभ्रमेवधनंदित्ससिघ अस्मभ्यंदातुमिच्छसिखलु ॥ २० ॥

अथैकविंशी–

भूरिदाह्यसिश्रुतःपुरुत्राशूरवृत्रहन् । आनोभजस्वराधसि ॥२१॥
भूरिऽदाः । हि । असि । श्रुतः । पुरुऽत्रा । शूर । वृत्रऽहन् ।
आ । नः । भजस्व । राधसि ॥ २१ ॥

हेवृत्रहन् वृत्रस्यहिंसक शूर विक्रान्तेन्द्र भूरिदाः बहुप्रदस्त्वं पुरुत्रा पुरुषुबहुषुयजमानेषुश्रुतोसिहि विख्यातोभवासिखलु राधसि धनेनोस्मानाभजस्व आसमन्ताद्भागिनःकुरु ॥ २१ ॥

अथद्वाविंशी–

प्रतेबभ्रूविचक्षणशंसामिगोषणोनपात् । माभ्यांगाअनुशिश्रथः २२
प्र । ते । बभ्रू इति । विऽचक्षण । शंसामि । गोऽसनः ।
नपात् । मा । आभ्याम् । गाः । अनु । शिश्रथः ॥ २२ ॥

हेविचक्षण प्राज्ञेन्द्र ते त्वदीयौ बभ्रू बभ्रुवर्णावश्वौ प्रशंसामि प्रकर्षेणस्तौमि हेगोषणः गवांसनितः हेनपात् नपातयितः स्तोतॄनविनाशयितः किंतुपालयितरित्यर्थः हेइन्द्र त्वम् आभ्यां त्वदीयाभ्यामश्वाभ्यांगाः अनु अस्मदीयागाःलक्ष्यीकृत्य माशिश्रथः विनष्टामाकार्षीः गावोश्वदर्शनाद्विश्लिष्यन्ते तन्माभूदित्यर्थः ॥ २२ ॥

अथत्रयोविंशी–

कनीनकेवविद्रधेनवेद्रुपदेअर्भके । बभ्रूयामेषुशोभेते ॥ २३ ॥

कनीनका इव । विद्रधे । नवे । द्रुऽपदे । अर्भके । बभ्रू इति ।
यामेषु । शोभेते इति ॥ २३ ॥

विद्रधे विदृढे व्यूढे नवे नवजाते अर्भके अल्पके द्रुपदे द्रुमाख्यस्थानेस्थिते कनीनकेइव कमनीयेशालभञ्जिकेइव हेइन्द्र बभ्रू बभ्रुवर्णौ त्वदीयावश्वौ यामेषु यज्ञेषु शोभेते कान्तियुक्तौभवतः कनीनकेकन्यकेकन्याकमनीयाभवतिक्वेयंनेतव्येतिवाकमनेनानीयतइतिवाकनतेर्वास्यात्कान्तिकर्मणइत्यादिनिरुक्तम्[1] ॥ २३ ॥

अथचतुर्विंशी–

अरंमउस्रयाम्णेरमनुस्रयाम्णे । बभ्रूयामेष्वस्रिधा ॥ २४ ॥ ३० ॥

अरम् । मे । उस्रऽयाम्ने । अरम् । अनुस्रऽयाम्ने ।
बभ्रू इति । यामेषु । अस्रिधा ॥ २४ ॥ ३० ॥

हेइन्द्र अस्रिधा अस्रिधौ अहिंसकौ बभ्रूबभ्रुवर्णौ त्वदीयावश्वौ यामेषु यज्ञेषु गमनेषु प्राप्तेषुसत्सु उस्रयाम्णे उस्राभ्यामनडुद्भ्यांयुक्तेनरथेनयातीत्युस्रयामा तस्मै मे मह्यम् अरमलं पर्याप्तकारिणौभवताम् अनुस्रयाम्णे पद्भ्यामेवगच्छते मह्यम् अरंपर्याप्तकारिणौभवताम् ॥ २४ ॥

॥ इतितृतीयस्यषष्ठेत्रिंशोवर्गः ॥ ३० ॥

॥ इतिचतुर्थेमण्डलेतृतीयोनुवाकः ॥ ३ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् ॥ पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

॥ इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेणसायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेतृतीयाष्टकेषष्ठोध्यायः ॥ ६ ॥

---

1 नि० ४. १५.

## ॥ श्रीगणेशायनमः ॥

यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत् ॥ निर्ममेतमहंवंदेविद्यातीर्थमहेश्वरम् ॥ १ ॥

चतुर्थेनुवाकेत्रयोदशसूक्तानि तत्रप्रऋभुभ्यइत्येकादशर्चंप्रथमंसूक्तं वामदेवस्यार्षंत्रैष्टुभं तुह्यादिपरिभाषया इदमादिसूक्तंपञ्चकमृभुदेवताकम् अत्रानुक्रमणिका—प्रऋभुभ्यएकादशार्भवंवाइति । व्यूढेद्वादशाहेचतुर्थेहनिवैश्वदेवशस्त्रेआर्भवनिविद्धानीयमिदं तथाचसूत्रितं—प्रऋभुभ्यःप्रशुक्रैत्वितिवैश्वदेवमिति ।

तत्रप्रथमा—

**ॐम् प्रऋभुभ्योदूतमिंववाचमिष्यउपस्तिरेश्वैतरींधेनुमीळे ।**
**येवातजूतास्तरणिंभिरेवैःपरिद्यांसद्योअपसोबभूवुः ॥ १ ॥**

प्र । ऋभुऽभ्यः । दूतम्ऽइव । वाचम् । इष्ये । उपऽस्तिरे । श्वैतरीम् । धेनुम् । ईळे । ये । वातऽजूताः । तरणिऽभिः । एवैः । परि । द्याम् । सद्यः । अपसः । बभूवुः ॥ १ ॥

तत्र ऋभूणांपूर्वंमनुष्याणामेवसतां तपसादेवत्वप्राप्तिः आर्भवंशंसत्यृभवोवैदेवेषुइत्यत्र ब्राह्मणे[1]स्पष्टमाम्नाता । केचनऋभवोनामसूर्यरश्मयइत्याचक्षते । अहंयजमानः ऋभुभ्यउरुभासमानेभ्यएतन्नामकेभ्योदेवेभ्योवाचंस्तुतिरूपांप्रेष्ये प्रेरयामि किमिव दूतमिव यथादूतंस्वकार्ये प्रतिप्रेषयान्तितद्वत् किञ्च उपस्तिरे सोमोपस्तरणायश्वैतरींपयोयुक्तांश्वेततरांवाधेनुम् ईळे याचामि ऋभून् येऋभवोवातजूताः वातसमानगतयः अपसः जगदुपकारिकर्माणःसन्तः तरणिभिस्तारकैः एवैर्गमनशीलैरश्वैः द्याम् अन्तरिक्षं सद्यः तदानीमेव परिबभूवुः परिभवन्ति सर्वतोव्याप्नुवन्ति अथ रश्मयएव ऋभवइत्युक्तत्वादादित्यंवारश्मयःपरितोव्याप्नुवन्ति ॥ १ ॥

अथद्वितीया—

**यदारमक्रन्नृभवःपितृभ्यांपरिविष्टीवेषणादंसनाभिः ।**
**आदिद्देवानामुपंसख्यमायन्धीरासःपुष्टिमवहन्मनायै ॥ २ ॥**

---

१ ऐ० ब्रा० ३. ३०. ।

यदा । अरम् । अक्रन् । ऋभवः पितृऽभ्याम् । परिऽविष्टी ।
वेषणा । दंसनाभिः । आत् । इत् । देवानाम् । उप । सख्यम् ।
आयन् । धीरासः । पुष्टिम् । अवहन् । मनायै ॥ २ ॥

यदा यस्मिन्काले ऋभवः पितृभ्यां मातापितृभ्यां परिविष्टी परिवेषणेन परिचर्यया वेषणा वेषणेन व्याप्त्या यद्वा वेषणजरद्रूपयोर्युवत्करणेन दंसनाभिरन्यैश्चमसनिर्माणादिकर्मभिः अरम् अत्यर्थमक्रन् आदिदनन्तरमेव देवानामिन्द्रादीनां सख्यं सखित्वं समानख्यानत्वं देवतात्वमुपायन् आगमन् युवशाकर्त्वेतिदेवत्वप्राप्तेरेकान्तत्वेनदेवैरुक्तत्वादितिभावः किंच धीरासोधीराबुद्धिमन्तस्तेषांपुष्टिं गवादिविषयांमनायै ऋतेन यजमानायावहन् वहन्ति धारयन्ति यद्वा सविषयांपुष्टिं मनायै मनसे प्रकृष्टमनस्कत्वायावहन् ॥ २ ॥

अथतृतीया–

पुनर्येचक्रुःपितरायुवानासनायूपेवजरणाशयाना ।
तेवाजोविभ्वाँऋभुरिन्द्रवन्तोमधुप्सरसोनोवन्तुयज्ञम् ॥ ३ ॥

पुनः । ये । चक्रुः । पितरा । युवाना । सना । यूपाऽइव ।
जरणा । शयाना । ते । वाजः । विऽभ्वा । ऋभुः । इन्द्रऽवन्तः ।
मधुऽप्सरसः । नः । अवन्तु । यज्ञम् ॥ ३ ॥

येऋभवः पितरा मातापितरौ यूपेव छिन्नस्थाणूइव जरणा जीर्णौ शयाना शयानौ पुनः सना सदायुवाना युवानौ चक्रुः नित्यतरुणावकुर्वन् ते वाजोविभ्वाऋभुश्चएतन्नामकास्त्रयः सुधन्वनः आङ्गिरसस्यपुत्राऋषयः इन्द्रवन्तः अनुग्राहकेणेन्द्रेणतद्वन्तः मधुप्सरसः मधुरस्यसोमरसस्यभक्षयितारोमनोहररूपावानोस्मदीयंयज्ञम् अवन्तु रक्षन्तु गच्छन्तुवा ॥ ३ ॥

अथचतुर्थी–

यत्संवत्समृभवोगामरक्षन्यत्संवत्समृभवोमाअपिंशन् ।
यत्संवत्समभरन्भासोअस्यास्ताभिःशमीभिरमृतत्वमाशुः॥४॥

---

१ ऋ० सं० २. ३. ४.।

यत्। सम्ऽवत्सम्। ऋभवः। गाम्। अरक्षन्। यत्। सम्ऽवत्सम्। ऋभवः। माः। अपिंशन्। यत्। सम्ऽवत्सम्। अभरन्। भासः। अस्याः। ताभिः। शमीभिः। अमृतऽत्वम्। आशुः ॥ ४ ॥

संवत्सं संवसन्तिभूतान्यस्मिन्नितिसंवत्सः संवत्सरः संवत्सरपर्यन्तम् ऋभवोगांमृतामरक्षन् अपालयन् स्वसामर्थ्यादितियत् यदेतत्कर्मास्ति तथा संवत्सं संवत्सरम् ऋभवोमास्तस्याएवगोर्मांसमपिंशन् अवयवानकुर्वन्नितियत् किंच मृतायागोः त्वचापुच्छाद्यङ्गंतस्यामांसं समयोजयन्नित्यर्थः किंच संवत्सं संवत्सरपर्यन्तमस्याःभासः अभरन् दीप्तीरवयवशोभाअकुर्वन् इतियत् ताभिःशमीभिः मृतायागोर्नवीकरणविषयैःकर्मभिरमृतत्वमाशुः देवत्वंप्राप्ताः धेनुंःकर्त्वेतिदेवत्वप्राप्तिसाधनत्वेनदेवैःप्रतिश्रुतत्वात् यद्वात्रसंवत्समित्येतद्वत्सेनसहेतिव्याख्येयम् ॥ ४ ॥

अथपञ्चमी—

ज्येष्ठआंहचमसाद्वाकरेतिकनीयान्त्रीन्कृणवामेत्याह । कनिष्ठआहचतुरस्करेतित्वष्टऋभवस्तत्पनयद्वचोवः ॥५॥१॥

ज्येष्ठः। आह। चमसा। द्वा। कर। इति। कनीयान्। त्रीन्। कृणवाम। इति। आह। कनिष्ठः। आह। चतुरः। कर। इति। त्वष्टा। ऋभवः। तत्। पनयत्। वचः। वः ॥ ५ ॥ १ ॥

एकंचमसंचतुरःकृणोतनेतियदादेवदूतोग्निः ऋभूनाह देवत्वप्राप्त्युपायत्वेन तदा तेषुमध्ये देवत्वप्राप्त्यैउक्तएकोज्येष्ठऋभुरितरावाह किमिति उच्यते—चमसाद्वाकरेति । एकंचमसंसन्तंद्वौकृणवामेतिकनीयान्तदनन्तरोविभ्वा त्रीन्कृणवामकरवामेत्याह तत्कनिष्ठस्ततोपिकनीयान्वाजः चतुरस्कर चतुर्धाकरवामेत्याह तदेवचतुःकरणरूपं हेऋभवः त्वष्टा युष्मद्गुरुः वः वचः युष्मद्वचनं पनयदस्तौत् अङ्गीचकारेत्यर्थः ॥ ५ ॥

॥ इतितृतीयस्यसप्तमेप्रथमोवर्गः ॥ १ ॥

---

१ ऋ. सं. २. ३. ४. । २ ऋ. सं. २. ३. ४. ।

सत्यमूचुर्नर एवा हि चक्रुरनु स्वधामृभवो जग्मुरेताम् ।
विभ्राजमानाँश्चमसाँ अहेवावेनत्त्वष्टा चतुरो ददृश्वान् ॥ ६ ॥

सत्यम् । ऊचुः । नरः । एव । हि । चक्रुः । अनु । स्वधाम् । ऋभवः । जग्मुः । एताम् । विऽभ्राजमानान् । चमसान् । अहाऽइव । अवेनत् । त्वष्टा । चतुरः । ददृश्वान् ॥ ६ ॥

नरो मनुष्यरूपा ऋभवः सत्यमूचुः सत्यमेवाब्रुवन् हि यस्मादेते एवैवं चक्रुः चतुरोऽकुर्वन् यथोक्तं तथैव कृतत्वादित्यभिप्रायः अनु चतुर्धाकरणानन्तरमेतां तृतीयसवनगतां स्वधां सोमाख्यममृतमृभवो जग्मुः एकं चमसं चतुरः कृणोतन साकं देवैर्यज्ञियासो भविष्यथेति श्रुतत्वात् । अथ त्वष्टा देवो विभ्राजमानानहेव अहानीव दीप्यमानांश्चमसांश्चतुरो ददृश्वान् दृष्टवान् सन् अवेनदमन्यत अङ्गीचकारेत्यर्थः ॥ ६ ॥

अथ सप्तमी—

द्वादश द्यून्यदगोह्यस्यातिथ्ये रणन्नृभवः ससन्तः ।
सुक्षेत्राकृण्वन्ननयन्त सिन्धून्धन्वातिष्ठन्नोषधीर्निम्नमापः ॥ ७ ॥

द्वादश । द्यून् । यत् । अगोह्यस्य । आतिथ्ये । रणन् । ऋभवः । ससन्तः । सुऽक्षेत्रा । अकृण्वन् । अनयन्त । सिन्धून् । धन्व । आ । अतिष्ठन् । ओषधीः । निम्नम् । आपः ॥ ७ ॥

तत्र रश्मय एव ऋभव इत्युक्तत्वात्तद्रूपेण स्तूयन्ते—यद्यदा द्वादश द्यून्दिवसान् आर्द्रादिद्वादशवृष्टिनक्षत्राणीत्यर्थः अगोह्यस्यागोप्यस्यादित्यस्य गृहे आतिथ्ये कस्मादागतोऽतिथिः तदुचितं सत्काररूपं कर्मातिथ्यं तदर्थं ससन्तः स्वपन्तः सुखेन निवसन्त ऋभवः रणन् रमन्ते अगोह्यस्य यदसस्तनागृहे इत्युक्तम् तदानीं सुक्षेत्राकृण्वन् अकृष्टानि शून्यानि क्षेत्राणि वृष्ट्या सस्यादिसमृद्धानि अकुर्वन् सिन्धून्नदीरनयन्त प्रैरयन् तस्मिन्काले ओषधीरोषधयो धन्व निरुदकस्थानमाश्रित्यातिष्ठन् निम्नं नीचस्थानमापोऽतिष्ठन् उद्वत्स्वस्मा अकृणोतना तृणं निवत्स्वपः इत्युक्तम् ॥ ७ ॥

---

१ ऋ० सं० २. ३. ४. । २ ऋ० सं० २. ३. ४. ।
३ ऋ० सं० २. ३. ६. । ४ ऋ० सं० २. ३. ६. ।

अथाष्टमी-

रथंयेचक्रुःसुवृतंनरेष्ठांयेधेनुंविश्वजुवंविश्वरूपाम् ।
तआतक्षन्त्वृभवोरयिंनःस्ववसःस्वपसःसुहस्ताः ॥ ८ ॥

रथम् । ये । चक्रुः । सुऽवृतम् । नरेऽस्थाम् । ये । धेनुम् ।
विश्वऽजुवम् । विश्वऽरूपाम् । ते । आ । तक्षन्तु । ऋभवः । रयिम् ।
नः । सुऽअवसः । सुऽअपसः । सुऽहस्ताः ॥ ८ ॥

हेऋभवः सुवृतंसुचक्रं सुष्ठुवर्तमानंवा नरेष्ठां नेतरिचक्रेवर्तमानंरथंचक्रुः येच विश्वजुवं विश्वस्य प्रेरयित्रीं विश्वरूपां बहुरूपाम् एतन्नामिकांवाधेनुं गां चक्रुरकुर्वन् बृहस्पतिर्विश्वरूपामुपाजतेतिह्युक्तम् । तेमहान्तऋभवोनोस्माकंरयिंधनमातक्षन्तु सर्वतोनिष्पादयन्तु कीदृशास्तेऋभवः स्वपसः सुकर्माणः स्ववसः शोभनान्नोपेताः सुहस्ताः शोभनहस्ताः ॥ ८ ॥

अथनवमी-

अपोह्येषामजुषन्तदेवाअभिक्रत्वामनसादीध्यानाः ।
वाजोदेवानामभवत्सुकर्मेन्द्रस्यऋभुक्षावरुणस्यविभ्वा ॥ ९ ॥

अपः । हि । एषाम् । अजुषन्त । देवाः । अभि । क्रत्वा । मनसा ।
दीध्यानाः । वाजः । देवानाम् । अभवत् । सुऽकर्मा । इन्द्रस्य ।
ऋभुक्षाः । वरुणस्य । विऽभ्वा ॥ ९ ॥

एषामृभूणामपोश्वरथनिर्माणादिरूपंकर्मदेवाइन्द्रादयोजुषन्तासेवन्त इन्द्रोहरीयुयुजेअश्विनारथमित्यादिमंत्रोक्तप्रकारेणस्वीकृतवन्तइत्यर्थः । कीदृशास्ते क्रत्वा वरप्रदानरूपेणकर्मणामनसाशोभनेनचित्तेनानुग्रहयुक्तेनाभिदीध्यानाः दीप्यमानाः देवानामनुग्रहेणकिंलब्धमित्याह—सुकर्माशोमनव्यापारोवाजःकनीयान्देवानांसर्वेषांसंबन्ध्यभवत् तथेन्द्रस्यसंबन्धी ऋभुक्षाः ऋभुज्येष्ठःविभ्वामध्यमोवरुणस्यसंबन्ध्यभवत् हिपूरणः ॥ ९ ॥

---

१ ऋ० सं० २. ३. ५. ।    २ ऋ० सं० २. ३. ५. ।

अथदशमी–

**येहरींमेधयोक्थामदन्तइन्द्रायचक्रुःसुयुजायेअश्वा। तेरायस्पोषंद्रविणान्यस्मेधत्तऋभवःक्षेमयन्तोनमित्रम् ॥१०॥**

ये। हरी इति। मेधया। उक्था। मदन्तः। इन्द्राय। चक्रुः। सुऽयुजा। ये। अश्वा। ते। रायः। पोषम्। द्रविणानि। अस्मे इति। धत्त। ऋभवः। क्षेमऽयन्तः। न। मित्रम् ॥ १० ॥

येऋभवः हरी अश्वौ मेधयाप्रज्ञया उक्था उक्थैःस्तुतिभिःमदन्तोहर्षयन्तश्चक्रुः येच तौ सुयुजा सुयुजौ सुयोजमानौ अश्वा अश्वौ इन्द्रायेन्द्रार्थंचक्रुरकुर्वन् हेऋभवस्तेयूयंरायस्पोषं धनपुष्टिं द्रविणानिगवादिधनानिचसुखानिवाअस्मेअस्मासुधत्त धारयत किमिव क्षेमयन्तः क्षेममिच्छन्तोमित्रंन मित्रमिव अत्र यद्यप्येकएवऋभुनामातत्संबन्धादितरेप्यृभवउच्यन्ते प्राणभृन्न्यायेन ॥ १० ॥

अथैकादशी–

**इदाह्नःपीतिमुतवोमदंधुर्नऋतेश्रान्तस्यसख्यायदेवाः। तेनूनमस्मेऋभवोवसूनितृतीयेअस्मिन्त्सवनेदधात।११।२।**

इदा। अह्नः। पीतिम्। उत। वः। मदम्। धुः। न। ऋते। श्रान्तस्य। सख्याय। देवाः। ते। नूनम्। अस्मे इति। ऋभवः। वसूनि। तृतीये। अस्मिन्। सवने। दधात ॥ ११ ॥ २ ॥

इदा इदानीं चमसादिनिर्माणानन्तरम् अह्नः सुत्यासंबन्धिनस्तृतीयेसवनेपीतिं सोमपानम् उतापिच मदंतज्जनितं वोयुष्माकं धुः ददुः देवाःश्रान्तस्यश्रान्तात्तपोयुक्तादृतेसख्याय सखित्वाय नभवन्ति देवाः यतएतेश्रान्ताः अतोददुरित्यर्थः हेऋभवः तेमहान्तो यूयं नूनं निश्चयमस्मे अस्मासु अस्मिन्तृतीयसवने वसूनि धनानि दधात धारयत ॥ ११ ॥

॥ इतितृतीयस्यसप्तमेद्वितीयोवर्गः ॥ २ ॥

ऋभुर्विभ्वेत्येकादशर्चंद्वितीयंसूक्तं वामदेवस्यार्षंत्रैष्टुभमार्भवम् ऋभुर्विभ्वेत्यनुक्रमणिका। व्यूळ्हेदशरात्रेपञ्चमेहनिवैश्वदेवशस्त्रे आर्भवानिविद्धानीयमिदम् ऋभुर्विभ्वास्तुपेजनामितिसूत्रितत्वात्।

तत्रप्रथमा–

ऋभुर्विभ्वावाजइन्द्रोनोअच्छेमंयज्ञंरत्नधेयोपयात ।
इदाहिवोधिषणादेव्यह्नामधात्पीतिंसंमदाअग्मतावः ॥ १ ॥

ऋभुः । विऽभ्वा । वाजः । इन्द्रः । नः । अच्छ । इमम् । यज्ञम् । रत्नऽधेया । उप । यात । इदा । हि । वः । धिषणा । देवी । अह्नाम् । अधात् । पीतिम् । सम् । मदाः । अग्मत । वः ॥ १ ॥

ऋभुर्विभ्वावाजइन्द्रश्चेत्येतेदेवा: नोस्मदीयमिमंयज्ञमच्छाभिमुखंरत्नधेयाऽस्मभ्यंरत्नधानाय उपयातोपगच्छत ननु इन्द्रःसोमस्वामित्वादागच्छतु कथमेतेषांयज्ञप्राप्तिरितिचेदुच्यते–इदाहि इदानींखलु वोयुष्माकंधिषणा वाक् देवी प्रजापतेःसम्बन्धिनी अह्नां सोमाभिषवसम्बन्धिनां पीतिं सोमपानमधात् सप्रजापतिरब्रवीत्सवितारंतववाइमेन्तेवासास्त्वमेवैभिःसम्पिबस्वेतिब्राह्मणम्[1] । यस्मादेवंतस्मान्मदाश्चवोयुष्मान्समग्मत सङ्गताः यद्वावोमदादेवैः सङ्गताः ॥ १ ॥

अथद्वितीया–

विदानासोजन्मनोवाजरत्नाउतऋतुभिर्ऋभवोमादयध्वम् ।
संवोमदाअग्मतसंपुरंधिःसुवीरामस्मेरयिमेरयध्वम् ॥ २ ॥

विदानासः । जन्मनः । वाजऽरत्नाः । उत । ऋतुऽभिः । ऋभवः । मादयध्वम् । सम् । वः । मदाः । अग्मत । सम् । पुरम्ऽधिः । सुऽवीराम् । अस्मे इति । रयिम् । आ । ईरयध्वम् ॥ २ ॥

हेवाजरत्नाः सोमलक्षणेनान्नेनराजमानाः ऋभवोयूयं जन्मनोजननस्य देवत्वलक्षणस्य देवत्वप्राप्तिंविदानासोजानन्तः यद्वा विदानासः सोमप्राप्तिंजानन्तः जन्मनःपूर्वंमनुष्यजन्मवन्तश्चसन्तः उतशब्दश्चार्थे ऋतुभिर्देवैःसहमादयध्वं वोयुष्मान्मदाःसोमपानजनिताःसमग्मत सङ्गताः पुरन्धिः स्तुतिरपि समग्मत तेयूयम् अस्मे अस्माकं सुवीरां शोभनैर्वीरैरुपेतांरयिमेरयध्वं प्रेरयत ॥ २ ॥

---

1 ऐ० ब्रा० ३. ३०.

अथतृतीया–

अयंवोयज्ञऋभवोकारियमामनुष्वत्प्रदिवोदधिध्वे ।
प्रवोच्छाजुजुषाणासोअस्थुरभूतविश्वेअग्रियोतवाजाः ॥ ३ ॥

अयम् । वः । यज्ञम् । ऋभवः । अकारि । यम् । आ । मनुष्वत् ।
प्रऽदिवः । दधिध्वे । प्र । वः । अच्छ । जुजुषाणासः । अस्थुः ।
अभूत । विश्वे । अग्रिया । उत । वाजाः ॥ ३ ॥

हेऋभवोवोयुष्मदर्थम् अयंयज्ञोकारि यंयज्ञंमनुष्वत् मनुष्यवत्प्रदिवःप्रकर्षेणद्योतमानाः सन्तः आदधिध्वे धारयतजठरे तदर्थंवोयुष्मान् अच्छाभिमुख्येनजुजुषाणासः सेवमानाःसोमाः प्रास्थुः प्रतिष्ठन्ते उतापिच धारयित्वाच हेवाजाऋभवोविश्वेयूयमाग्रियाअग्राहाःअग्रत्वसम्पादिनोवा अभूत भवथ ॥ ३ ॥

अथचतुर्थी–

अभूदुवोविधतेरत्नधेयमिदानरोदाशुषेमर्त्याय ।
पिबतवाजाऋभवोददेवोमहितृतीयंसवनंमदाय ॥ ४ ॥

अभूत् । ऊँ इति । वः । विधते । रत्नऽधेयम् । इदा । नरः ।
दाशुषे । मर्त्याय । पिबत । वाजाः । ऋभवः । ददे । वः । महि ।
तृतीयम् । सवनम् । मदाय ॥ ४ ॥

हेनरोनेतारऋभवः वोयुष्माकमनुग्रहात् इदाइदानीं तृतीयेसवने रत्नधेयंदातव्यंरत्नंविधते विधतिःपरिचरणकर्मा स्तुत्यापरिचरते दाशुषेहविर्दत्तवतेमर्त्याययजमानायमह्यमभूद्भवतु उइतिपूरणः तदर्थं हेवाजाः हेऋभवः एतद्द्वयंविभ्वनामकस्याप्युपलक्षणं इतरापेक्षयाप्रत्येकं बहुवचनं यूयंपिबत तदर्थंवोददे किंमहिमहत्प्रभूतंतृतीयंसवनंतत्सम्बन्धिनंसोममित्यर्थः किमर्थं मदाय हर्षाय तृप्तयेवा ॥ ४ ॥

अथपञ्चमी—

आवोजायातोपनऋभुक्षामहोनरोद्रविणसोगृणानाः ।
आवःपीतयोभिपित्वेअह्नामिमाअस्तंनवस्वइवग्मन् ॥५ ॥ ३॥

आ । वाजाः । यात । उप । नः । ऋभुक्षाः । महः । नरः । द्रविणसः । गृणानाः । आ । वः । पीतयः । अभिऽपित्वे । अह्नाम् । इमाः । अस्तम् । नवस्वःऽइव । ग्मन् ॥ ५ ॥ ३ ॥

हेवाजाः ऋभुक्षाः नरोनेतारोयूयं नः उपयात किंकुर्वन्तः महोमहतः द्रविणसोधनस्य कर्मणिषष्ठ्यौ महद्द्रविणंगृणानाःस्तुवन्तः किंच अह्नामभिपित्वेऽभिपतनेसमाप्तौ तृतीयसवनेइत्यर्थः वोयुष्मानिमाःपीतयः पानान्याग्मन् आगच्छन्ति तत्रदृष्टान्तः—अस्तं गृहनामैतत् गृहंन वस्वइव नवप्रसवागावइव ॥ ५ ॥

॥ इतितृतीयस्यसप्तमेतृतीयोवर्गः ॥ ३ ॥

अथषष्ठी—

आनपातःशवसोयातनोपेमंयज्ञंनमसाहूयमानाः ।
सजोषसःसूरयोयस्यचस्थमध्वःपातरत्नधाइन्द्रवन्तः ॥ ६ ॥

आ । नपातः । शवसः । यातन । उप । इमम् । यज्ञम् । नमसा । हूयमानाः सऽजोषसः । सूरयः । यस्य । च । स्थ । मध्वः । पात । रत्नऽधाः । इन्द्रऽवन्तः ॥ ६ ॥

हेशवसोनपातः बलस्यनपातयितारः तस्यपुत्रावा बलवन्तइत्यर्थः यूयं नमसास्तोत्रेण हूयमानाआकारिताःसन्तः इमंयज्ञमुपायातन उपागच्छत कीदृशायूयं सजोषसः इन्द्रेणसहप्रीताः सूरयोमेधाविनः इन्द्रस्यचैषांचकःप्रसङ्गइत्युच्यते यस्यचस्थ चेतिप्रसिद्धौ यस्येन्द्रस्य सम्बन्धिनोयूयंभवथ तदुचिताश्वनिर्माणादित्यभिप्रायः यस्मादेवंतस्मादिन्द्रवन्तः पीतेनेन्द्रेण तद्वन्तोरत्नधाः रमणीयधनानांदातारोयूयं मध्वः मधुरंसोमंपात पिबत ॥ ६ ॥

अथसप्तमी–

सजोषाइन्द्रवरुणेनसोमंसजोषाःपाहिगिर्वणोमरुद्भिः ।
अग्रेपाभिर्ऋतुपाभिःसजोषाग्नास्पत्नीभीरत्नधाभिःसजोषाः ॥ ७॥

सऽजोषाः । इन्द्र । वरुणेन । सोमम् । सऽजोषाः । पाहि । गिर्वणः ।
मरुत्ऽभिः । अग्रेऽपाभिः । ऋतुऽपाभिः । सऽजोषाः । ग्नाः‍पत्नीभिः ।
रत्नऽधाभिः । सऽजोषाः ॥ ७ ॥

हेइन्द्र त्वंवरुणेन रात्र्यभिमानिदेवेन सजोषाः समानप्रीतिःसन् सोमंपाहि पिब हेगिर्वणः गीर्भिर्वननीय संभजनीयेन्द्र त्वंमरुद्भिः सजोषाः सङ्गतःसन् सोमंपाहि पिब किञ्च अग्रेपाभिः प्रथमपातृभिः ऋतुपाभिः ऋतुयाजदेवैश्च ग्नाः पत्नीभिः स्त्रीणांपालयित्र्योग्नाःपत्न्यः ताभिः मेनाग्नाइतिस्त्रीणामितिनिरुक्तम् । रत्नधाभिःरमणीयधनदातृभिःऋतुभिःसहपिब यद्वैतत् ग्नाःपत्नीभिरित्यस्यविशेषणं ताभिर्वासजोषाःसोमंपिब ॥ ७ ॥

अथाष्टमी–

सजोषसआदित्यैर्मादयध्वंसजोषसऋभवःपर्वतेभिः ।
सजोषसोदैव्येनासवित्रासजोषसःसिन्धुभीरत्नधेभिः ॥ ८ ॥

सऽजोषसः । आदित्यैः । मादयध्वम् । सऽजोषसः । ऋभवः ।
पर्वतेभिः । सऽजोषसः । दैव्येन । सवित्रा । सऽजोषसः ।
सिन्धुऽभिः । रत्नऽधेभिः ॥ ८ ॥

हेऋभवः आदित्यैः सजोषसःसङ्गताः यूयं मादयध्वं तथा पर्वतेभिः पर्ववद्भिः पर्वण्यर्च्यमानैर्देवविशेषैः सजोषसोमादयध्वं तथाच दैव्येन देवेभ्योहितेनसवित्रासजोषसःरत्नधेभिः रत्नानांदातृभिः सिन्धुभिः स्यन्दनस्वभावैः नद्यभिमानिदेवैश्चसजोषसोमादयध्वम् ॥ ८ ॥

अथनवमी–

येअश्विनायेपितरायऊतीधेनुंततक्षुर्ऋभवोयेअश्वा ।
येअंसत्रायऋधग्रोदसीयेविभ्वोनरःस्वपत्यानिचक्रुः ॥ ९ ॥

---

१ नि० ३. २१.

ये । अश्विना । ये । पितरा । ये । ऊती । धेनुम् । ततक्षुः । ऋभवः ।
ये । अश्वा । ये । अंसत्रा । ये । ऋधक् । रोदसी इति । ये । विऽभ्वः ।
नरः । सुऽअपत्यानि । चक्रुः ॥ ९ ॥

येऋभवः अश्विना अश्विनौ ऊती ऊत्या क्रियया रथनिर्माणरूपया अप्रीणयन् येच पितरा पितरौ ततक्षुः तक्षणेनसमपादयन् जीर्णौसन्तौ ऊती ऊत्या युवानौचक्रुः येचधेनुंततक्षुः मृतायाःपुनर्नवीकरणे येचाश्वाश्वौततक्षुः निश्चर्मणोगामरिणीतधीतिभिर्याजरन्तायुवशाताकृणोतनेत्याद्युक्तम् । येचांसत्रा अंसत्राणि कवचानिदेवेभ्यश्चक्रुः येच रोदसी द्यावापृथिव्यौ ऋधक् पृथक्चक्रुः एवमुक्तप्रकारेण येविभ्वोव्याप्ताः ऋभवोनरोनेतारः स्वपत्यानि स्वपत्यसाधनानि तत्प्राप्तिसाधनानिवा कर्माणि चक्रुः ते अग्रेपाइत्युत्तरत्रसंबन्धः ॥ ९ ॥

अथदशमी—

येगोमन्तंवाजवन्तंसुवीरंरयिंधत्थवसुमन्तंपुरुक्षुम् ।
तेअग्रेपाऋभवोमन्दसानाअस्मेधत्तयेचरातिंगृणन्ति ॥ १० ॥

ये । गोऽमन्तम् । वाजऽवन्तम् । सुऽवीरम् । रयिम् । धत्थ ।
वसुऽमन्तम् । पुरुऽक्षुम् । ते । अग्रेऽपाः । ऋभवः । मन्दसानाः ।
अस्मे इति । धत्त । ये । च । रातिम् । गृणन्ति ॥ १० ॥

हेऋभवः येयूयं गोमन्तं गोसहितं वाजवन्तम् अन्नवन्तं सुवीरं शोभनपुत्रोपेतं वसुमन्तं निवासयोग्यगृहादिधनोपेतं पुरुक्षुंबहन्नं रयिं धनं धत्थ धारयथ महांदातुं हेऋभवः तेयूयम् अग्रेपाः प्रथमंपातारःमन्दसानाः माद्यन्तःसन्तः अस्मे अस्मभ्यंधत्त दत्त रयिम् येच यूयं रातिंदानं दत्तंसोमंवा गृणन्तिस्तुवन्तितेधत्त यद्वा येच रातिंगृणन्ति यजमानास्तेभ्योपिधत्त ॥ १० ॥

अथैकादशी—

नापाभूतनवोतीतृषामानिःशस्ताऋभवोयज्ञेअस्मिन् ।
समिन्द्रेणमदथसंमरुद्भिःसंराजभीरत्नधेयायदेवाः ॥ ११ ॥४ ॥

१ ऋ० सं. २. ३. ५. ।

न । अप॑ । अ॒भू॒त॒ । न । वः॒ । अ॒ती॒तृ॒षा॒म॒ । अनिः॑ऽशस्ताः । ऋ॒ऽभ॒वः॒ । य॒ज्ञे । अ॒स्मिन् । सम् । इन्द्रे॑ण । मद॑थ । सम् । म॒रुत्ऽभिः॑ । सम् । राज॑ऽभिः । र॒त्न॒ऽधेया॑य । दे॒वाः॒ ॥ ११ ॥ ४ ॥

हेऋभवः यूयं नापाभूत नापगच्छत अपरक्तानभवत वयंचवोयुष्मान् नातीतृषाम अत्यन्तंतृषितान्माकरवाम अतोहेऋभवोदेवाः अनिःशस्ताः अनिन्दिताःसन्तोस्मिन्यज्ञे इन्द्रेणसंमदथ मरुद्भिःसंमदथ राजभिः राजमानैरन्यैर्देवैःसंमदथ तृप्ताभवथ किमर्थं रत्नधेयाय रमणीयधनदानाय ॥ ११ ॥

॥ इतितृतीयस्यसप्तमेचतुर्थोवर्गः ॥ ४ ॥

इहोपयातेतितृतीयंनवर्चंसूक्तं वामदेवस्यार्षंत्रैष्टुभमार्भवम् इहोपनवेत्यनुक्रमणिका । तृतीयसवनेमैत्रावरुणस्येदमुन्नीयमानसूक्तम् सूत्रितंच—आत्वावहन्त्वसाविदेवाभिहोपयातेत्यनुसवनमिति ॥

तत्रप्रथमा-

इ॒होप॑यातशवसोनपातः॒सौध॑न्वनाऋभवो॒माप॑भूत ।
अ॒स्मिन्हिवः॒सव॑नेरत्न॒धेयं॒गम॒न्त्विन्द्रमनु॒वो॒मदा॑सः ॥ १ ॥

इ॒ह । उप॑ । या॒त॒ । श॒व॒सः॒ । न॒पा॒तः॒ । सौध॑न्वनाः । ऋ॒ऽभ॒वः॒ । मा । अप॑ । भू॒त॒ । अ॒स्मिन् । हि । वः॒ । सव॑ने । र॒त्न॒ऽधेय॑म् । गम॑न्तु । इन्द्र॑म् । अनु॑ । वः॒ । मदा॑सः ॥ १ ॥

हेशवसोनपातोबलस्यपुत्राः णस्यनपातयितारोवा हेसौधन्वनाः सुधन्वनःपुत्राः हेऋभवः वोयूयं इहोपयात अस्मिन्तृतीयसवनेउपगच्छत मापभूत अपगतानभवत अस्मिन्सवनेरत्नधेयंरमणीयधनस्यदातारमिन्द्रम् अनुअनुसृत्य वोयुष्मान्मदासोमदकराःसोमाः गमन्तु गच्छन्तु अन्वितिक्रिययावासंबध्यते इन्द्रंयुष्मांश्चान्वागच्छन्त्वित्यर्थः हिपूरणः ॥ १ ॥

अथद्वितीया—

आग॑न्नृभूणामि॒हर॑त्न॒धेय॒मभू॒त्सोम॑स्यसुषु॑तस्यपी॒तिः ।
सु॒कृ॒त्यया॒यत्स्व॑प॒स्यया॑चँए॒कंवि॑च॒क्रच॑म॒संच॑तु॒र्धा ॥ २ ॥

आ। अगन्। ऋभूणाम्। इह। रत्नऽधेयम्। अभूत्। सोमस्य। सुऽसुतस्य। पीतिः। सुऽकृत्यया। यत्। सुऽअपस्यया। च। एकम्। विऽचक्र। चमसम्। चतुःऽधा ॥ २ ॥

ऋभूणां युष्माकमिहतृतीयसवनेरत्नधेयं रत्नदानमागन्नागच्छतुमह्यं यद्वा युष्माकमेव सोमाख्यंरत्नमागन् यस्मात्सोमस्यसुसुतस्यपीतिःपानमभूत् प्रजापतिनालब्धमित्यर्थः तदपिकुतइतिचेदुच्यते—यद्यस्मात्सुकृत्ययाशोभनहस्तव्यापारेण स्वपस्यया शोभनरथनिर्माणादिकर्मेच्छयाच एकंसन्तं चमसं चतुर्धाविचक्र कृतवन्तः ॥ २ ॥

अथतृतीया—

**व्यंकृणोतचमसंचतुर्धासखेविशिक्षेत्यंब्रवीत। अथैतवाजाअमृतस्यपन्थांगणंदेवानांमृभवःसुहस्ताः ॥ ३ ॥**

वि। अकृणोत। चमसम्। चतुःऽधा। सखे। वि। शिक्ष। इति। अब्रवीत। अथ। ऐत। वाजाः। अमृतस्य। पन्थाम्। गणम्। देवानाम्। ऋभवः। सुऽहस्ताः ॥ ३ ॥

हेऋभवः यूयंचमसंचतुर्धाव्यकृणोत व्यकुरुत कृत्वाच हेसखे सखिभूताग्ने विशिक्ष अनुगृहाण सोमपानमित्यब्रवीत अवदतयूयम् अथसोग्निर्युष्मान् अवादीत्खलु किमिति हेवाजाः ऋभवः सुहस्ताः शोभनहस्तोपेतायूयममृतस्यामरणधर्मकस्य स्वर्गस्य पन्थां पन्थानमैत गच्छत कितदमृतमितिदेवानामिन्द्रादीनांगणंसंघातमैत ॥ ३ ॥

अथचतुर्थी—

**किंमयःस्विच्चमसएषआसयंकाव्येनचतुरोविचक्र। अथासुनुध्वंसवनंमदायपातऋभवोमधुनःसोम्यस्य ॥ ४ ॥**

किम्ऽमयः। स्वित्। चमसः। एषः। आस। यम्। काव्येन। चतुरः। विऽचक्र। अथ। सुनुध्वम्। सवनम्। मदाय। पात। ऋभवः। मधुनः। सोम्यस्य ॥ ४ ॥

किंमयःस्वित् किमात्मकएषचमसः आस स्वित्प्रश्ने यंचमसमेकंसन्तं काव्येन कवीनां सम्बन्धिनाकर्मणा कौशलेन चतुरोविचक्र कृतवन्तः अथाधुनासवनं सूयतइतिसवनःसोमः तं मदायहर्षायसुनुध्वं हेऋत्विजः हेऋभवोयूयंच सोम्यस्यसोमसम्बन्धिनंमधुनोमधुरंरसं पातपिबत ॥ ४ ॥

अथपञ्चमी–

शच्याकर्तपितरायुवानाशच्याकर्तचमसंदेवपानम् ।
शच्याहरीधनुतरावतष्टेन्द्रवाहावृभवोवाजरत्नाः ॥ ५ ॥ ५ ॥

शच्या । अकर्त । पितरा । युवाना । शच्या । अकर्त । चमसम् । देवऽपानम् । शच्या । हरी इति । धनुःऽतरौ । अतष्ट । इन्द्रऽवाहौ । ऋभवः । वाजऽरत्नाः ॥ ५ ॥ ५ ॥

हेवाजरत्नाः रमणीयसोमान्नाः हेऋभवः यूयं शच्याकर्मणा पितरा मातापितरौ युवाना युवानौ अकर्त अकुरुत तथा शच्याचमसं देवपानंदेवपानार्हमकर्त चतुर्धाकुरुतेत्यर्थः शच्या हरीअतष्ट तक्षणेनसम्पादितवन्तः कीदृशौहरी धनुतरौ शीघ्रंगन्तृतरौ इन्द्रवाहौ इन्द्रवोढारौ ॥ ५ ॥

॥ इतितृतीयस्यसप्तमेपञ्चमोवर्गः ॥ ५ ॥

अथषष्ठी–

योवःसुनोत्यभिपित्वेअह्नांतीव्रंवाजासःसवनंमदाय ।
तस्मैरयिमृभवःसर्ववीरमातक्षतवृषणोमन्दसानाः ॥ ६ ॥

यः । वः । सुनोति । अभिऽपित्वे । अह्नाम् । तीव्रम् । वाजासः । सवनम् । मदाय । तस्मै । रयिम् । ऋभवः । सर्वऽवीरम् । आ । तक्षत । वृषणः । मन्दसानाः ॥ ६ ॥

हेऋभवोवाजासोऽन्नवन्तोवोयुष्मभ्यं योयजमानःअह्नामभिपित्वेअभिपतनेतृतीयसवनेइत्यर्थः तस्मिन् तीव्रंरसवत्तरंसवनं सूयतइतिसवनःसोमस्तं मदाय सुनोति तस्मै सर्ववीरंबहुपुत्रोपेतंरयिंधनं हेवृषणः फलवर्षितारः मन्दसानाः मोदमानाः सन्तःआतक्षत सम्पादयतेत्यर्थः ॥ ६ ॥

अथसप्तमी–

प्रातःसुतमपिबोहर्यश्वमाध्यंन्दिनंसवनंकेवलंते ।
समृभुभिःपिबस्वरत्नधेभिःसखींर्यांइंन्द्रचकृषेसुकृत्या ॥ ७ ॥

प्रातरिति । सुतम् । अपिबः । हरिऽअश्व । माध्यंन्दिनम् । सवनम् ।
केवलम् । ते । सम् । ऋभुऽभिः । पिबस्व । रत्नऽधेभिः । सखीन् ।
यान् । इन्द्र । चकृषे । सुऽकृत्या ॥ ७ ॥

हेहर्यश्व हरितवर्णाश्वोपेत इन्द्र प्रातः प्रातःसवने सुतमभिषुतंसोममपिबः पिबस्व माध्यन्दिनंसवनंकेवलंते परंतवैव नान्येषां सवनद्वयस्यपृथगभिधानात्तृतीयसवनंपरिशिष्यते तृतीयसवनेरत्नधेभिः रमणीयदानैः ऋभुभिः संपिबस्व हेइन्द्र यानृभून्सुकृत्याशोभनकर्मणासखीन् चकृषे अकरोः ॥ ७ ॥

अथाष्टमी–

येदेवासोअभवतासुकृत्याश्येनाइवेदधिदिविनिषेद ।
तेरत्नंधातशवसोनपातःसौधंन्वनाअभवतामृतासः ॥ ८ ॥

ये । देवासः । अभवत । सुऽकृत्या । श्येनाःऽइव । इत् । अधि ।
दिवि । निऽसेद । ते । रत्नम् । धात । शवसः । नपातः ।
सौधन्वनाः । अभवत । अमृतासः ॥ ८ ॥

हेऋभवः येयूयं सुकृत्या शोभनकर्मणा देवासोदेवाः अभवत अभूत श्येनाइवेत् शंसनीयगतयोगृध्रविशेषाइव दिविद्युलोकेधिनिषेद अधिनिषण्णाः हेशवसोनपातः बलवन्तस्तेयूयंरत्नंधनंधात प्रयच्छत हेसौधन्वनाः अमृतासोऽमृतादेवाअभवत ॥ ८ ॥

अथनवमी–

यत्तृतीयंसवनंरत्नधेयमकृणुध्वंस्वपस्यासुहस्ताः ।
तदृंभवःपरिषिक्तंवएतत्संमदेभिरिन्द्रियेभिःपिबध्वम् ॥ ९ ॥ ६ ॥

यत् । तृतीयम् । सवनम् । रत्नऽधेयम् । अकृणुध्वम् । सुऽअपस्या ।
सुऽहस्ताः । तत् । ऋभवः । परिऽसिक्तम् । वः । एतत् । सम् ।
मदेभिः । इन्द्रियेभिः । पिबध्वम् ॥ ९ ॥ ६ ॥

हेसुहस्ताः शोभनहस्ताः ऋभवः रत्नधेयं रमणीयसोमदानवत् यत्तृतीयंसवनमकृणुध्वं प्रसाधितवन्तः स्वपस्या शोभनकर्मेच्छया तदेतत्सवनं सवनगतं सोमद्रव्यं परिषिक्तं परिषेचनवत् वोयुष्माकंसम्बन्धिभिर्मदेभिर्माद्यद्भिरिन्द्रियेभिरिन्द्रियैःसंपिबध्वं यद्यपि वदनमेवपानसाधनं तथापि चक्षुःश्रोत्रादीनामपिदर्शनश्रवणादिनातृप्तिसद्भावात्पातृत्वमुपचर्यते ॥ ९ ॥

॥ इतितृतीयस्यसप्तमेषष्ठोवर्गः ॥ ६ ॥

अनश्वोजातइतिनवर्चंचतुर्थसूक्तम् आर्भवम् ऋषिर्वामदेवः अन्त्यात्रिष्टुप् शिष्टास्त्रिष्टुबन्तपरिभाषयाजगत्यः अनश्वोन्त्यात्रिष्टुबित्यनुक्रमणिका । आभिप्लविकेतृतीयेहनिवैश्वदेवशस्त्रे आर्भवनिविद्धानीयमिदं तथाचसूत्रितम्—अनश्वोजातःपरावतोयइतिवैश्वदेवमिति ।

तत्रप्रथमा—

अनश्वोजातोअनभीशुरुक्थ्यो३ रथस्त्रिचक्रःपरिवर्ततेरजः ।
महत्तद्वोदेव्यस्यप्रवाचनंद्यामृभवःपृथिवींयच्चपुष्यथ ॥ १ ॥

अनश्वः । जातः । अनभीशुः । उक्थ्यः । रथः । त्रिऽचक्रः ।
परि । वर्तते । रजः । महत् । तत् । वः । देव्यस्य । प्रऽवाचनम् ।
द्याम् । ऋभवः । पृथिवीम् । यत् । च । पुष्यथ ॥ १ ॥

हेऋभवः अश्विनोःसम्बन्धी युष्मद्दत्तोरथः अनश्वोजातः वाहनाश्वनिरपेक्षःसम्पन्नः तथा अनभीशुः प्रग्रहरहितः उक्थ्यः स्तुत्यः त्रिचक्रःचक्रत्रययुक्तःसन् रजोन्तरिक्षंपरिवर्ततेपरिभ्रमति महत्प्रभूतंतद्रथनिर्माणाख्यंकर्म वोयुष्माकं देव्यस्यदेवत्वस्यप्रवाचनंप्रवक्तृप्रख्यापकं यच्च येनकर्मणा द्यां पृथिवींच पुष्यथ पुष्टांकुरुथ ॥ १ ॥

अथद्वितीया—

रथंयेचक्रुःसुवृतंसुचेतसोविह्वरन्तंमनसस्परिध्यया ।
ताँऊन्व१स्यसवनस्यपीतयआवोवाजाऋभवोवेदयामसि ॥ २ ॥

रथम् । ये । चक्रुः । सुऽवृतम् । सुऽचेतसः । अविऽह्वरन्तम् ।
मनसः । परि । ध्यया । तान् । ऊँ इति । नु । अस्य । सवनस्य ।
पीतये । आ । वः । वाजाः । ऋभवः । वेदयामसि ॥ २ ॥

सुचेतसः शोभनचित्तायेऋभवःसुवृतं सुवर्तनचक्रं अविह्वरन्तम्अकुटिलंरथंमनसःपरिध्यया मनसोध्यानेनाप्रयत्नेननुक्षिप्रंचक्रुः ताँउ उशब्दएवार्थे तानेवास्यसवनस्यपीतयेएतंसोमंपातुं हेवाजाः हेऋभवः वोयुष्मानावेदयामसि आवेदयामः ॥ २ ॥

अथतृतीया-

तद्वोवाजाऋभवःसुप्रवाचनंदेवेषुविभ्वोअभवन्महित्वनम् ।
जिव्रीयत्सन्तापितरासनाजुरापुनर्युवानाचरथायतक्षथ ॥ ३ ॥

तत् । वः । वाजाः । ऋभवः । सुऽप्रवाचनम् । देवेषु । विऽभ्वः ।
अभवत् । महिऽत्वनम् । जिव्री इति । यत् । सन्ता । पितरा ।
सनाऽजुरा । पुनः । युवाना । चरथाय । तक्षथ ॥ ३ ॥

हेवाजाः ऋभवः हेविभ्वः विभवः इतरापेक्षयापरस्परंबहुवचनमित्युक्तं वोयुष्माकं तन्महित्वनंमहत्त्वं माहात्म्यं देवेषुमध्ये सुप्रवाचनं प्रवाच्यमभवत् तदित्युक्तं यदित्याह—जिव्रीवृद्धौसन्ता सन्तौ सनाजुरा सदाजीर्णौसन्तौ पितरा पितरौ पुनर्युवानानित्यतरुणौ चरथाय यथेच्छंसञ्चरणाय तक्षथ सम्पादितवन्तः ॥ ३ ॥

अथचतुर्थी-

एकंविचक्रचमसंचतुर्वयंनिश्चर्मणोगामरिणीतधीतिभिः ।
अथादेवेष्वमृतत्वमानशश्रुष्टीवाजाऋभवस्तद्वउक्थ्यम् ॥ ४ ॥

एकम् । वि । चक्र । चमसम् । चतुःऽवयम् । निः । चर्मणः ।
गाम् । अरिणीत । धीतिऽभिः । अथ । देवेषु । अमृतऽत्वम् ।
आनश । श्रुष्टी । वाजाः । ऋभवः । तत् । वः । उक्थ्यम् ॥ ४ ॥

हेऋभवः एकंचमसम् एकमेवसन्तंपानसाधनंचमसंचतुर्वयं वयाः शाखाश्चतुःशाखं चतुरवयवंविचक्र व्यकुरुत तथा धीतिभिः कर्मभिः चर्मणः नूतनांगांनिरिरिणीत संस्कुरुत निरित्येषसमित्येतस्यस्थाने अथातःकारणाद्देवेषुमध्ये अमृतत्वमानश प्राप्नुत हेवाजाः ऋभवः तत्तादृशं वोयुष्माकं कर्म श्रुष्टीतिक्षिप्रनामैतत् क्षिप्रमुक्थ्यंस्तुत्यंभवति ॥ ४ ॥

अथपञ्चमी—

ऋभुतोरयिःप्रथमश्रवस्तमोवाजश्रुतासोयमजीजनन्नरः ।
विभ्वतष्टोविदथेषुप्रवाच्योयंदेवासोवथासविचर्षणिः ॥ ५ ॥ ७ ॥

ऋभुतः । रयिः । प्रथमश्रवःऽतमः । वाजऽश्रुतासः । यम् । अजीजनन् । नरः । विभ्वऽतष्टः । विदथेषु । प्रऽवाच्यः । यम् । देवासः । अवथ । सः । विऽचर्षणिः ॥ ५ ॥ ७ ॥

ऋभुतः ऋभूणांसकाशात्प्रथमश्रवस्तमः प्रथमंमुख्यमतिशयितंश्रवोन्नंयशोवायस्यधनस्यतद्रयिर्धनमस्माकंभवत्वितिशेषः वाजश्रुतासः वाजैःसहविख्याताः नरोनेतारोऋभवः यंरयिमजीजनन्नुत्पादितवन्तः विभ्वतष्टः विभ्वभिर्ऋभुभिस्तष्टस्तक्षणसम्पन्नः चमसोश्विनोरथोवा विदथेषुयज्ञेषुप्रवाच्यः प्रकर्षेणस्तुत्यः हेदेवासोद्योतमानायूयंरथं चमसंवा अवथ रक्षथ सविचर्षणिः विविधंद्रष्टाभवति द्रष्टव्योभवतीत्यर्थः ॥ ५ ॥

॥ इतितृतीयस्यसप्तमेसप्तमोवर्गः ॥ ७ ॥

अथषष्ठी—

सवाज्यर्वासऋषिर्वचस्ययासशूरोअस्तापृतनासुदुष्टरः ।
सरायस्पोषंससुवीर्यंदधेयंवाजोविभ्वाँऋभवोयमाविषुः ॥ ६ ॥

सः । वाजी । अर्वा । सः । ऋषिः । वचस्यया । सः । शूरः । अस्ता । पृतनासु । दुस्तरः । सः । रायः । पोषम् । सः । सुऽवीर्यम् । दधे । यम् । वाजः । विऽभ्वा । ऋभवः । यम् । आविषुः ॥ ६ ॥

सवाजी वेजनवान्बलवान्सन्नर्वा अरणकुशलोभवति सऋषिरतीन्द्रियज्ञानीसन्वचस्यया स्तुत्यायुक्तोभवति सशूरोविक्रान्तःसन्नस्ताक्षेप्ताशत्रूणांभवति स्वयंचपृतनासुसंग्रामे-

षु दुष्टोनाभिभाव्योभवाति सएवरायस्पोषंधनपुष्टिं दधे धत्ते सप्तुवीर्यैसुवीरत्वं दधे धत्ते यं मनुष्यं वाजोयंच विभ्वा ऋभवश्चाविषुररक्षन् सएवमेवंभवतीति अन्त्यस्यबहुवन्निर्देशस्त्रयाणामृभुत्वव्यवहारप्राचुर्याभिप्रायः ॥ ६ ॥

अथसप्तमी–

श्रेष्ठंवः पेशोअधिंधायिदर्शतंस्तोमोंवाजाऋभवस्तंजुंजुष्टन ।
धीरांसोहिष्ठाकवयोंविपश्चितस्तान्वंएनाब्रह्मणावेंदयामसि ॥ ७ ॥

श्रेष्ठम् । वः । पेशः । अधि । धायि । दर्शतम् । स्तोमः । वाजाः ।
ऋभवः । तम् । जुजुष्टन । धीरासः । हि । स्थ । कवयः ।
विपःऽचितः । तान् । वः । एना । ब्रह्मणा । आ । वेदयामसि ॥ ७ ॥

श्रेष्ठम् अत्युत्कृष्टमतएव दर्शतं दर्शनीयं वोयुष्माकं पेशोरूपम् अधिधायि अधिनिहितम् अतस्तदुचितोयःस्तोमः स्तोत्रमस्मत्कृतमस्ति हेवाजाऋभवः तंस्तोमंस्तोत्रंजुजुष्टन सेवध्वं ये यूयंधीरासोहि धीमन्तःप्रसिद्धाःकवयोमेधाविनोविपश्चितोज्ञानवन्तःस्थभवथ तान्वोयुष्मानेना एतेन ब्रह्मणामन्त्रेणशस्त्रात्मकेनावेदयामसि अथवोक्तलक्षणाविपश्चितःस्तोतारोयान्स्तुवन्तीतिशेषः तान्ब्रह्मणावेदयामः प्रज्ञापयामः ॥ ७ ॥

अथाष्टमी–

यूयमस्मभ्यंधिषणाभ्यस्परिविद्वांसोविश्वानर्याणिभोजंना ।
द्युमन्तंवाजंवृषंशुष्ममुत्तममानोरयिमृभवस्तक्षतावयः ॥ ८ ॥

यूयम् । अस्मभ्यम् । धिषणाभ्यः । परि । विद्वांसः । विश्वा ।
नर्याणि । भोजना । द्युऽमन्तम् । वाजम् । वृषऽशुष्मम् ।
उतऽतमम् । आ । नः । रयिम् । ऋभवः । तक्षत । आ । वयः ॥ ८ ॥

हेऋभवः यूयमस्मभ्यं धिषणाभ्यस्परि स्तुतिभ्योनिमित्तभूताभ्यः परीतिपञ्चम्यर्थानुवादी यद्वा अस्मन्मतिभ्योधिकानिनर्याणि नृभ्योहितानि विश्वा सर्वाणि भोजना-

भोग्यानि विद्वांसोजानन्तःसन्तः आतक्षत सम्पादयत किञ्च द्युमन्तं दीप्तिमन्तं हिरण्यादिरूपंवाजंबलवन्तं वृषशुष्मं सेक्तॄणाबलवतां शोषकमुत्तमंरयिं नोस्माकंवयोन्नंच आतक्षत हेऋभवः ॥ ८ ॥

अथनवमी–

इहप्रजामिहरयिंरराणाइहश्रवोवीरवत्तक्षतानः ।
येनवयंचितयेमात्यन्यान्तंवाजंचित्रमृभवोददानः ॥ ९ ॥ ८ ॥

इह । प्रऽजाम् । इह । रयिम् । रराणाः । इह । श्रवः । वीरऽवत् ।
तक्षत । नः । येन । वयम् । चितयेम । अति । अन्यान् । तम् ।
वाजम् । चित्रम् । ऋभवः । दद । नः ॥ ९ ॥ ८ ॥

नोस्माकमिहयज्ञे रराणाः रममाणाः प्रजां पुत्रपौत्रादिरूपां तक्षत सम्पादयत इहैवरराणाः रयिंचतक्षत इहैवयज्ञेश्रवोयशः वीरवद्वीरैः भृत्यादिभिरुपेतंतक्षत किञ्च वयं येनवाजेनान्यानस्मत्समानतिचितयेम अतिक्रम्यज्ञायेमाहि तंचित्रंचायनीयंवाजमन्नं हेऋभवः नोददास्मभ्यंदत्त ॥ ९ ॥

॥ इतितृतीयस्यसप्तमेष्टमोवर्गः ॥ ८ ॥

उपनोवाजाइत्यष्टर्चंपञ्चमंसूक्तं वामदेवस्यार्षमार्भवंत्रैष्टुभं पञ्चम्याद्याश्चतस्रोनुष्टुभः तथाचानुक्रान्तम्–उपनोष्टौचतुरनुष्टुबन्तामिति । व्यूढेद्वशरात्रेषष्ठेहनिवैश्वदेवशस्त्रेआद्याश्चितस्रः शस्याः । उपनोवाजाइतित्रयोदशार्भवंचतस्रश्चेतिहिसूत्रितम् ।

तत्रप्रथमा–

उपनोवाजाअध्वरमृभुक्षादेवायातपथिभिर्देवयानैः ।
यथायज्ञंमनुषोविक्ष्वा३सुदधिध्वेरण्वाःसुदिनेष्वह्नाम् ॥ १ ॥

उप । नः । वाजाः । अध्वरम् । ऋभुक्षाः । देवाः । यात ।
पथिऽभिः । देवऽयानैः । यथा । यज्ञम् । मनुषः । विक्षु ।
आसु । दधिध्वे । रण्वाः । सुऽदिनेषु । अह्नाम् ॥ १ ॥

हेवाजाः हेऋभुक्षाः ऋभवःहेदेवाः नोध्वरंयागमुपयात उपगच्छत देवयानैःदेवैर्गन्तव्यैः पथिभिर्मार्गैः यथायेनप्रकारेण मनुषोमनोःसम्बन्धिनीष्वासुविक्षुप्रजासु यजमानेषुमध्ये हेरण्वाः रमणीयाऋभवः अह्नांसुदिनेषु सुदिनत्वनिमित्तेषुयज्ञमस्मदीयंदधिध्वे धारयथ यथा येनप्रकारेण यज्ञमागत्यसुदिनत्वंकुरुथ तथा यज्ञमायातेति ॥ १ ॥

अथद्वितीया–

तेवोहृदेमनसेसन्तुयज्ञाजुष्टासोअद्यघृतनिर्णिजोगुः
प्रवःसुतासोहरयन्तपूर्णाःक्रत्वेदक्षायहर्षयन्तपीताः ॥ २ ॥

ते । वः । हृदे । मनसे । सन्तु । यज्ञाः । जुष्टासः । अद्य । घृतऽनिर्निजः । गुः । प्र । वः । सुतासः । हरयन्त । पूर्णाः । क्रत्वे । दक्षाय । हर्षयन्त । पीताः ॥ २ ॥

अद्यास्मिन्यागदिने ते एते यज्ञाः यागसाधनाः सोमाः वोहृदेहृदयाय मनसे तत्प्रीतये सन्तु भवन्तु अद्यास्मिन्दिनेजुष्टासः पर्याप्ताः सोमाः घृतनिर्णिजः मिश्रणद्रव्येणदीप्तरूपाः गुः गच्छन्तु युष्मद्धृदयं सुतासोभिषुताःसोमाश्चमसेषुपूर्णाः वोयुष्मदर्थंप्रहरयन्त प्रह्रियन्ते यद्वा हर्यतेःकान्तिकर्मणइदंरूपं प्रकर्षेणवोयुष्मान्कामयन्ते क्रत्वे क्रतवे कर्मणे दक्षायोत्साहाय पीताः हर्षयन्त हर्षयन्तु ॥ २ ॥

अथतृतीया–

त्र्युदायंदेवहितंयथावःस्तोमोवाजाऋभुक्षणोददे वः ।
जुह्वेमनुष्वदुपरासुविक्षुयुष्मेसचाबृहद्दिवेषुसोमम् ॥ ३ ॥

त्रिऽउदायम् । देवऽहितम् । यथा । वः । स्तोमः । वाजाः । ऋभुक्षणः । ददे । वः । जुह्वे । मनुष्वत् । उपरासु । विक्षु । युष्मे इति । सचा । बृहत्ऽदिवेषु । सोमम् ॥ ३ ॥

त्र्युदायं त्र्युदयं सवनत्रयगमनोपेतं देवहितं सोमाख्यमन्नं देवेभ्योहितं देवैर्वाविहितं तृतीयसवनस्थमित्यर्थः तद्यथावोयुष्मान्ददे धारयति हेवाजाः हेऋभुक्षणऋभवः यथास्तोमः

स्तोत्रंवोददे धारयति उपरासु उपदेवयजनसमीपेरमन्तइत्युपरास्तासु विक्षु प्रजासु बृहद्दिवेषु प्रभूतदीप्तेषु देवेषुमध्ये मनुष्वत् मनुरिवयुष्मे युष्मदर्थं सचा सहानेकग्रहेषु प्रस्थितं जुह्वे जुहोमिसोमम् ॥ ३ ॥

अथचतुर्थी—

पीवोअश्वाःशुचद्रथाहिभूतायःशिप्रावाजिनःसुनिष्काः ।
इन्द्रस्यसूनोशवसोनपातोनुवश्चेत्यग्रियंमदाय ॥ ४ ॥

पीवःऽअश्वाः । शुचत्ऽरथाः । हि । भूत । अयःऽशिप्राः । वाजिनः ।
सुऽनिष्काः । इन्द्रस्य । सूनो इति । शवसः नपातः । अनु । वः ।
चेति । अग्रियम् । मदाय ॥ ४ ॥

हेवाजिनऋभवः पीवोअश्वाः पीवानोश्वायेषांतेतादृशाः तथा शुचद्रथाः दीप्तरथाः अयःशिप्राः शिप्रेहनूनासिकेवा अयोवत्सारभूतशिप्राः सुनिष्काः शोभनधनाश्च भूत भवत हे इन्द्रस्यसूनो सूनवः पुत्रवद्रक्षणीयाः हेशवसोनपातः बलस्यपुत्राः बलिनः वोयुष्मभ्यंमदायानुचेति अन्वज्ञायि देवेष्वग्रेयमग्रिमभवंतृतीयसवनं हिपूरणः ॥ ४ ॥

अथपञ्चमी—

ऋभुमृभुक्षणोरयिंवाजेवाजिन्तमंयुजम् ।
इन्द्रस्वन्तंहवामहेसदासातममश्विनम् ॥ ५ ॥ ९ ॥

ऋभुम् । ऋभुक्षणः । रयिम् । वाजे । वाजिन्ऽतमम् ।
युजम् । इन्द्रस्वन्तम् । हवामहे । सदाऽसातमम् । अश्विनम् ॥ ५ ॥ ९ ॥

हे ऋभुक्षणः ऋभवः ऋभुम् उरुभासमानं रयिं धनरूपं तद्धेतुभूतत्वात्ताच्छब्द्यं वाजेसंग्रामेवाजिन्तममत्यन्तबलवन्तं युजं परस्परयोगोपेतम् इन्द्रस्वन्तमिन्द्रवन्तमिन्द्रियवन्तं सदासातमं सर्वदादातृतममश्विनमश्ववन्तं भवतांगणं हवामहे आह्वयामि ॥ ५ ॥

॥ इतितृतीयस्यसप्तमेनवमोवर्गः ॥ ९ ॥

अथषष्ठी—

सेदृभवोयमवथयूयमिन्द्रश्चमर्त्यम् ।
सधीभिरस्तुसनितामेधसातासोअर्वता ॥ ६ ॥

सः । इत् । ऋभवः । यम् । अवथ । यूयम् । इन्द्रः । च । मर्त्यम् ।
सः । धीभिः । अस्तु । सनिता । मेधऽसाता । सः । अर्वता ॥ ६ ॥

हेऋभवः यूयम् इन्द्रश्च यंमर्त्यमवथ रक्षथ सेत् सएवास्तु भवतु नान्यःश्रेष्ठोभवतीत्यर्थः सएव धीभिः कर्मभिः सनिता संभक्ताभवतु मेधसाता मेधसातौ यज्ञे सएवार्वता रणसाश्वेनयुक्तोभवतु ॥ ६ ॥

अथसप्तमी—

विनोवाजाऋभुक्षणःपथश्चितनयष्टवे ।
अस्मभ्यंसूरयस्तुताविश्वाआशास्तरीषणि ॥ ७ ॥

वि । नः । वाजाः । ऋभुक्षणः । पथः । चितन । यष्टवे ।
अस्मभ्यम् । सूरयः । स्तुताः । विश्वाः । आशाः । तरीषणि ॥ ७ ॥

हेवाजाः हेऋभुक्षणः हेऋभवोनोस्माकंपथोमार्गान्यष्टवे यष्टुं यज्ञमार्गान्विचितन विचेतयत प्रज्ञापयतेत्यर्थः अस्मभ्यं हेसूरयोमेधाविनः यूयंस्तुताःसन्तः विश्वाआशाः सर्वादिशः तरीषणि तरीतुंसामर्थ्यंवितरतेतिशेषः ॥ ७ ॥

अथाष्टमी—

तंनोवाजाऋभुक्षणइन्द्रनासत्यारयिम् ।
समश्वंचर्षणिभ्यआपुरुशस्तमघत्तये ॥ ८ ॥ १० ॥

तम् । नः । वाजाः । ऋभुक्षणः । इन्द्र । नासत्या । रयिम् ।
सम् । अश्वम् । चर्षणिऽभ्यः । आ । पुरु । शस्त । मघत्तये ॥ ८ ॥ १० ॥

अनयास्तुतिमुपसंहृत्याभिमतमाशास्ते हेवाजाः हेऋभुक्षणः ऋभवः हेइन्द्र हेनासत्याश्विनौ ते यूयं नोस्मभ्यं चर्षणिभ्योमनुष्येभ्यःस्तोतृभ्यः तंपुरुप्रभूतं रयिं धनमश्वंच पुरुप्रभूतं मघत्तयेधनदानाय समाशास्त सम्यगाशासनंकुरुत ॥ ८ ॥

॥ इतितृतीयस्यसप्तमेदशमोवर्गः ॥ १० ॥

उतोहिवामितिदशर्चंषष्ठंसूक्तं वामदेवऋषिः त्रिष्टुप्छन्दः दधिक्रादेवता आद्याद्यावापृथिव्या । अत्रानुक्रमणिका—उतोहिदशदाधिक्रंहिद्यावापृथिव्याद्येति । विनियोगोलैङ्गिकः ।

तत्रप्रथमा-

उतोहिवांदात्रासन्तिपूर्वायापूरुभ्यस्त्रसदस्युर्नितोशे ।
क्षेत्रासांददथुरुर्वरासांघनंदस्युभ्योअभिभूतिमुग्रम् ॥ १ ॥

उतो इति । हि । वाम् । दात्रा । सन्ति । पूर्वा । या । पूरुऽभ्यः । त्रसदस्युः । निऽतोशे । क्षेत्रऽसाम् । ददथुः । उर्वराऽसाम् । घनम् । दस्युऽभ्यः । अभिऽभूतिम् । उग्रम् ॥ १ ॥

उतोइतिपूरणः अस्याद्यावापृथिव्यत्वादत्रतद्वाचकशब्दाभावेपितेएवसंबोद्धव्ये हेद्यावापृथिव्यौ वां युवाभ्यां सकाशाद्दात्रा दानकर्त्रा पौरुकुत्स्येन त्रसदस्युनालब्धानिपूर्वा पूर्वाणि पुरातनानि पूरकाणिवाधनानिसन्ति या यानिधनानि पूरुभ्योर्थिभ्योमनुष्येभ्यः त्रसदस्युः राजा नितोशे न्यतोशत दत्तवान् क्षेत्रसां क्षेत्राणि सर्वाभूमीः सनोतीतिक्षेत्रसाःअश्वःतंददथुः तथा उर्वरासाम् उर्वरासर्वसस्याढ्याभूः तांसनोतीति उर्वरासाः पुत्रःतंददथुः घनं हननार्हमायुधं दस्युभ्योदस्यूनांवधार्थंच ददथुः कीदृशमायुधमभिभूतिमभिभवितारमुग्रमुद्गूर्णबलं यद्वा उत्तरार्धमेकंवाक्यं दातव्यानिधनानि उक्तलक्षणंपुत्रंचददथुः दत्तवत्यौस्थः तानिमह्यमपिददाथामित्यर्थः हिपूरणः ॥ १ ॥

अथद्वितीया-

उतवाजिनंपुरुनिष्षिध्वानंदधिक्रामुददथुर्विश्वकृष्टिम् ।
ऋजिप्यंश्येनंप्रुषितप्सुमाशुंचर्कृत्यमर्योनृपतिंनशूरम् ॥ २ ॥

उत । वाजिनम् । पुरुनिःऽसिध्वानम् । दधिऽक्राम् । ऊँ इति । ददथुः । विश्वऽकृष्टिम् । ऋजिप्यम् । श्येनम् । प्रुषितऽप्सुम् । आशुम् । चर्कृत्यम् । अर्यः । नृऽपतिम् । न । शूरम् ॥ २ ॥

उतापिच वाजिनंगमनवन्तमश्वरूपंवादेवम् अग्नेरश्वरूपस्यैवंदधिक्राख्यत्वादग्नेस्तद्रूपत्वंब्राह्मणेसमाम्नातम्—तोनग्निरश्वोभूत्वाभ्यत्यद्रवदिति । पुरुनिष्षिध्वानं पुरूणांबहूनांशत्रूणांनिषेद्धारं दधिक्रांदधदन्यंधारयन्क्रामतीतिदधिक्राः तमेतन्नामकंदेवम् उःपूरणः विश्वकृष्टिं विश्वाःकृष्टयोरक्षणीयाःसेवकावामनुष्यायस्यतम् ऋजिप्यं ऋजुआप्नोतिगच्छतीतिऋजिप्यस्तं श्येनं शंसनीयगमनं प्रुषितप्सुं दीप्तरूपमाशुं व्याप्तं शीघ्रगमनंवा अर्यः अरेश्चर्कृत्यं कर्तनशीलं शूरं नृपतिंन राजानमिव स्थितंदेवंद्यावापृथिव्यौददथुः धारयतः ॥ २ ॥

अथतृतीया—

यंसीमनुंप्रवतेवद्रवंन्तंविश्वःपूरुर्मदंतिहर्षमाणः ।
पड्भिर्गृध्यंन्तंमेधयुंनशूरंरथतुरंवातमिवध्रजंन्तम् ॥ ३ ॥

यम् । सीम् । अनु । प्रवताऽइव । द्रवन्तम् । विश्वः । पूरुः । मदति । हर्षमाणः । पट्ऽभिः । गृध्यन्तम् । मेधऽयुम् । न । शूरम् । रथऽतुरम् । वातम्ऽइव । ध्रजन्तम् ॥ ३ ॥

यं दधिक्रां विश्वःपूरुःसर्वोपिमनुष्योहर्षमाणःहृष्यन्हर्षयन्वामदतिस्तौति तं देवं द्यावापृथिव्यौददथुरितिसंबन्धः सदेवोविशेष्यते सींसर्वतःप्रवताप्रवणंवतानिम्नेनमार्गेणोदकमिव अनुक्रमेण द्रवन्तंगच्छन्तं पड्भिः पादैः गृध्यन्तमभिकाङ्क्षन्तंदिशोलङ्घितुं तत्रदृष्टान्तः— मेधयुंनशूरं संग्रामेच्छुंशूरमिव यद्वा यज्ञक्रमणेच्छुमध्वर्य्वादिकमिव रथतुरं रथेनगच्छन्तंवातमिव ध्रजन्तंशीघ्रगंवायुमिव उक्तविशेषणविशिष्टानुदकशूरवायून्यथासर्वोजनःस्तौति तथा यंदेवंस्तौतितंददथुरित्यर्थः ॥ ३ ॥

---

१ ऐ० ब्रा० ३. ४९.

अथचतुर्थी–

यःस्मारुन्धानोगध्यासमत्सुसनुतरश्चरतिगोषुगच्छन् ।
आविर्ऋजीकोविदथानिचिक्यत्तिरोअरतिंपर्यापआयोः ॥४॥

यः । स्म । आऽरुन्धानः । गध्यां । समत्ऽसु । सनुऽतरः । चरति । गोषु । गच्छन् । आविःऽऋजीकः । विदथा । निऽचिक्यत् । तिरः । अरतिम् । परि । आपः । आयोः ॥ ४ ॥

यःस्म यःखलु देवोगध्यागध्यानि गध्यतिर्मिश्रीभावकर्मेतिनिरुक्तम् । मिश्रायितव्यानिफलानिसमत्सुसंग्रामेषुआरुन्धानःसर्वतोनिरोधयन्सनुतरः संभक्तृतरोगोषुसर्वासुदिक्षु गोषुवानिमित्तभूतेषुगच्छन्नाविर्ऋजीकः आविर्भूतसाधनः आविर्भूतमुष्कोवा विदथानि ज्ञातव्यानि निचिक्यत् पश्यतिकर्मैतत् जानन् अरतिमरमणंदुःखमभिगन्तारम् अरिंवापरिसर्वतस्तिरश्चाति तिरस्करोति कस्यारातिमिति आपोआप्तस्यस्तोतुरायोर्मनुष्यस्ययजमानस्य ॥ ४ ॥

अथपञ्चमी–

उतस्मैनंवस्त्रमथिंनतायुमनुक्रोशन्तिक्षितयोभरेषु ।
नीचायमानंजसुरिंनश्येनंश्रवश्चाच्छापशुमच्चयूथम् ॥५॥११॥

उत । स्म । एनम् । वस्त्रऽमथिम् । न । तायुम् । अनु । क्रोशन्ति । क्षितयः । भरेषु । नीचा । अयमानम् । जसुरिम् । न । श्येनम् । श्रवः । च । अच्छ । पशुऽमत् । च । यूथम् ॥ ५ ॥ ११ ॥

उतस्म अपिखलु एनंदधिक्रांभरेषुसंग्रामेषु वस्त्रमथितायुंन वस्त्रमाथिनंतस्करमिव तंदृष्ट्वाक्षितयोमनुष्यायथाक्रोशन्तितद्वद्वैरिणोनुक्रोशन्ति किञ्च नीचा नीचैरयमानंगच्छन्तंजसुरिंन श्येनंक्षुधितंश्येनपक्षिणमिव तंयथादृष्ट्वापक्षिणःपलायन्तेतद्वत् श्रवोन्नंकीर्तिंवापशुमद्यूथंच अच्छाभिलक्ष्यगच्छन्तमेनमनुक्रोशन्तीतिसंबन्धः चपूरणः अपिस्मैनंवस्त्रमाथिमिववस्त्रमाथिनमित्यादिनिरुक्तमत्रानुसन्धेयम् ॥ ५ ॥

॥ इतितृतीयस्यसप्तमेएकादशोवर्गः ॥ ११ ॥

---

१ नि० ५. १५. । २ नि० ४. २४. ।

अथषष्ठी–

उतस्मासुप्रथमःसरिष्यन्निवेवेतिश्रेणिभीरथानाम् ।
स्रजंकृण्वानोजन्योनशुभ्वारेणुंरेरिहत्किरणंददश्वान् ॥ ६ ॥

उत । स्म । आसु । प्रथमः । सरिष्यन् । नि । वेवेति । श्रेणिऽभिः ।
रथानाम् । स्रजम् । कृण्वानः । जन्यः । न । शुभ्वा ।
रेणुम् । रेरिहत् । किरणम् । ददश्वान् ॥ ६ ॥

उतस्म अपिचखलु आस्वसुरसेनासुसरिष्यन्सर्तुमिच्छन् प्रथमः प्रतमः उत्कृष्टतमोमुख्यः सन् रथानांश्रेणिभीराजिभिर्युक्तःसन्निववेवेति नितरांगच्छति इतस्ततोधावति कइवेत्युच्यते स्रजंसृज्यते उत्पाद्यतेरूपमनयेतिस्रगलङ्कृतिस्तां कृण्वानः जन्योन जनेभ्योहितोश्वइव शुभ्वा सुष्ठुभवतीतिशुभ्वाशोभमानः किरणम् आस्यगतंखलीनंददश्वान्दशन् रेणुं स्वपादघातजनितं रेरिहद्भृशंलेढि ॥ ६ ॥

अथसप्तमी–

उतस्यवाजीसहुरिर्ऋतावाशुश्रूषमाणस्तन्वासमर्ये ।
तुरंयतीषुतुरयन्नृजिप्योधिभ्रुवोःकिरतेरेणुमृञ्जन् ॥ ७ ॥

उत । स्यः । वाजी । सहुरिः । ऋतऽवा । शुश्रूषमाणः । तन्वा ।
सऽमर्ये । तुरम् । यतीषु । तुरयन् । ऋजिप्यः । अधि ।
भ्रुवोः । किरते । रेणुम् । ऋञ्जन् ॥ ७ ॥

उतापिच स्यः सउक्तलक्षणोवाजी वेजनवान् गमनवान् समर्येसमरणेसहुरिःसहनशीलः शत्रूणाम् ऋतावाअन्नवान् तन्वास्वस्यावयवेनखुरादिनास्वतनुंशुश्रूषमाणः तुरंयतीषु त्वरगामिनीष्वसुरसेनासु तुरयन् त्वरयन् ऋजिप्यः ऋजुगामी रेणुं धूलिमृञ्जन् प्रसाधयन्तमेवरेणुंभ्रुवोरधि उपरि किरते विक्षिपति ॥ ७ ॥

अथाष्टमी–

उतस्मास्यतन्यतोरिवद्योर्ऋघायतोअभियुजोभयन्ते ।
यदासहस्रमभिषीमयोधीद्दुर्वर्तुःस्माभवतिभीमऋञ्जन् ॥ ८ ॥

उत। स्म। अस्य। तन्यतोःऽइव। द्योः। ऋघायतः। अभिऽयुजः।
भयन्ते। यदा। सहस्रम्। अभि। सीम्। अयोधीत्।
दुःऽवर्तुः। स्म। भवति। भीमः। ऋञ्जन्॥ ८॥

उतस्म अपिचखलु द्योर्दीप्यमानात्तन्यतोःशब्दयितुरशनेरिव ऋघायतोर्हिंसतोऽस्य अस्माद्दधिक्रावाख्याद्देवादभियुजोऽभियोक्तारोऽसुराःभयन्तेबिभ्यति किंचास्य यदा सींसर्वतः सहस्रमभ्ययोधीत्संप्रहरेत् तदा ऋञ्जन्प्रसाधयन्नात्मानंभीभोभयहेतुर्दुर्वर्तुर्दुर्वारश्चभवति॥ ८॥

अथनवमी—

उतस्मास्यपनयन्तिजनाजूतिंकृष्टिप्रोअभिभूतिमाशोः
उतैनमाहुःसमिथेवियन्तःपरादधिक्राअसरत्सहस्रैः॥ ९॥

उत। स्म। अस्य। पनयन्ति। जनाः। जूतिम्। कृष्टिऽप्रः।
अभिऽभूतिम्। आशोः। उत। एनम्। आहुः। सम्ऽइथे।
विऽयन्तः। परा। दधिऽक्राः। असरत्। सहस्रैः॥ ९॥

उतस्मापिचखलु अस्यदधिक्राव्णोभिभूतिमभिभवित्रीं जूतिं पराभिभूतिमित्युभयं वाजनाः पनयन्ति स्तुवन्ति कीदृशस्यास्यकृष्टिप्रः कृष्टयोमनुष्यास्तेषांपूरकस्याशोर्व्याप्तस्य वेगवतोवा उतापिचैनं समिथे संग्रामेवियन्तोविविधंगच्छन्तोजनाः अयंदधिक्रादेवः सहस्रैरनुचरैः परिवृतः परासरदितिअस्मान्विहायान्यान्हन्तुंगतइत्याहुः यद्वा एनमेवाहुः वियन्तःशत्रवः पराभवन्तीतिशेषः दधिक्रासहस्रैरसरत्गच्छन्तीति॥ ९॥

पवित्रेष्टौआदधिक्राइतिदधिक्राव्णोयाज्या तथाचसूत्रितम्—दधिक्राव्णोअकारिषमादधिक्राःशवसापञ्चकृष्टीरिति।

सैषादशमी—

आदधिक्राःशवसापञ्चकृष्टीःसूर्यइवज्योतिषापस्ततान।
सहस्रसाःशतसावाज्यर्वापृणक्तुमध्वासमिमावचांसि॥१०॥१२॥

आ । दधिऽक्राः । शवसा । पञ्च । कृष्टीः । सूर्यःऽइव ।
ज्योतिषा । अपः । ततान । सहस्रऽसाः । शतऽसाः । वाजी ।
अर्वा । पृणक्तु । मध्वा । सम् । इमा । वचांसि ॥ १० ॥ १२ ॥

योदधिक्रादेवः शवसाबलेन पञ्चकृष्टीः पञ्चजनान्देवमनुष्यासुररक्षःपितृसंज्ञकान्निषादपञ्चमांश्चतुरोवर्णान्वासूर्योज्योतिषातेजसायथाजगदावृणोतितद्वदपः उदकानि आततान आतनोति सहस्रसाःशतसाःशतानांसहस्राणांचदाता वाजी वेजनवानर्वाऽरणकुशलः सदेवोमध्वा मधुनामधुरेणफलेनइमेमान्युक्तानिस्तुतिवचांसिसंपृणक्तु संयोजयतु ॥ १० ॥

॥ इतितृतीयस्यसप्तमेद्वादशोवर्गः ॥ १२ ॥

आशुंदधिक्रामितिषळृचंसप्तमंसूक्तम् आदितःपञ्चत्रिष्टुभः षष्ठीअनुष्टुप् ऋषिर्वामदेवः पूर्वसूक्तेहीत्युक्तत्वादेतदपिदाधिक्रम् तथाचानुक्रान्तम्—आशुंषळंत्यानुष्टुबिति । सूक्तविनियोगोलैङ्गिकः

तत्रप्रथमा—

आशुंदधिक्रांतमुनुस्तवामदिवस्पृथिव्याउतचर्किराम ।
उच्छन्तीर्मामुषसःसूदयन्त्वतिविश्वानिदुरितानिपर्षन् ॥ १ ॥

आशुम् । दधिऽक्राम् । तम् । ऊँ इति । नु । स्तवाम । दिवः ।
पृथिव्याः । उत । चर्किराम । उच्छन्तीः । माम् । उषसः । सूदयन्तु ।
अति । विश्वानि । दुःऽइतानि । पर्षन् ॥ १ ॥

आशुं शीघ्रगामिनं तमु तमेव दधिक्रां देवं नु क्षिप्रं स्तवाम उतापिच दिवःपृथिव्याश्चसकाशादस्यवासंचर्किराम विक्षिपाम उच्छन्तीस्तमोविवासयन्तीः उषसोमांप्रति सूदयन्तु रक्षन्तु विश्वानिदुरितानि अतिपर्षन्नतिपारयन्तुच अन्यदेवताकेषुमन्त्रेष्वन्यदेवतास्तुतिस्तासांनिपातभाक्त्वान्नविरुध्यते ॥ १ ॥

अथद्वितीया—

महश्चर्कर्म्यर्वतःक्रतुप्रादधिक्राव्णःपुरुवारस्यवृष्णः ।
यंपूरुभ्योदीदिवांसंनाग्निंददथुर्मित्रावरुणाततुरिम् ॥ २ ॥

महः । चर्कर्मि । अर्वतः । क्रतुऽप्राः । दधिऽक्राव्णः । पुरुऽवारस्य । वृष्णः । यम् । पूरुऽभ्यः । दीदिऽवांसम् । न । अग्निम् । ददथुः । मित्रावरुणा । ततुरिम् ॥ २ ॥

क्रतुप्राः कर्मणांपूरकोहं महोमहतोर्वतःअरणवतः पुरुवारस्यबहुभिर्वरणीयस्यवृष्णोवर्षकस्यदधिक्राव्णःस्तुतिंचर्कर्मि अत्यर्थंकरोमि हेमित्रावरुणा मित्रावरुणौ युवांततुरिं तारकं यं दीदिवांसं नाग्निं दीप्यमानमग्निमिव स्थितं पूरुभ्योमनुष्येभ्यस्तेषामुपकारायददथुः धारयथः ॥ २ ॥

अथतृतीया–

योअश्वस्यदधिक्राव्णोअकारीत्समिद्धेअग्नाउषसोव्युष्टौ ।
अनागसन्तमदितिःकृणोतुसमित्रेणवरुणेनासजोषाः ॥ ३ ॥

यः । अश्वस्य । दधिऽक्राव्णः । अकारीत् । सम्ऽइद्धे । अग्नौ । उषसः । विऽउष्टौ । अनागसम् । तम् । अदितिः । कृणोतु । सः । मित्रेण । वरुणेन । सऽजोषाः ॥ ३ ॥

योयजमानोस्याश्वरूपस्याश्वव्यापस्यवा दधिक्राव्णःस्तुतिमुषसोव्युष्टौ प्रभातेसति अग्नौ समिद्धेसति अकारीदकार्षीत् मित्रेणवरुणेनचाहोरात्राभिमानिदेवाभ्यांसजोषाःसमानप्रीतिरदितिरखण्डनीयोदधिक्रास्तंयजमानमनागसंपापरहितंकृणोतुकरोतु ॥ ३ ॥

अथचतुर्थी–

दधिक्राव्णइषऊर्जोमहोयदमन्महिमरुतांनामभद्रम् ।
स्वस्तयेवरुणंमित्रमग्निंहवामहइन्द्रंवज्रबाहुम् ॥ ४ ॥

दधिऽक्राव्णः । इषः । ऊर्जः । महः । यत् । अमन्महि । मरुताम् । नाम । भद्रम् । स्वस्तये । वरुणम् । मित्रम् । अग्निम् । हवामहे । इन्द्रम् । वज्रऽबाहुम् ॥ ४ ॥

इषोन्नसाधकस्योर्जोबलसाधकस्यमहोमहतोदधिक्राव्णोदेवस्यमरुतांस्तोतृणांस्वभूतंभद्रं कल्याणंनामनामरूपमस्ति यत्तदमन्महिस्तुमः किञ्चात्रनिपातभीजोवरुणादींश्चस्वस्तयेक्षेमायहवामहे ॥ ४ ॥

अथपञ्चमी–

इन्द्रमिवेदुभयेविह्वयन्तउदीराणायज्ञमुपप्रयन्तः ।
दधिक्रामुसूदनंमर्त्यायददथुर्मित्रावरुणानोअश्वम् ॥ ५ ॥

इन्द्रम्ऽइव । इत् । उभये । वि । ह्वयन्ते । उत्ऽईराणाः । यज्ञम् ।
उपऽप्रयन्तः । दधिऽक्राम् । ऊँ इति । सूदनम् । मर्त्याय । ददथुः ।
मित्रावरुणा । नः । अश्वम् ॥ ५ ॥

इन्द्रमिवैनंदधिक्रामुदीराणाःयुद्धायोद्योगंकुर्वन्तोयज्ञमुपप्रयन्तः यज्ञमुपक्रम्यवर्तमानाश्चोभयेविह्वयन्ते आह्वयन्ति यंमर्त्यायमर्त्यस्यसूदनंप्रेरकमश्वमश्वरूपंदधिक्रांदेवं हेमित्रावरुणा नोस्माकमर्थायददथुः धारयथः तंविह्वयन्ते उभयइत्यत्रस्तोतृशंसितृभेदेनवोभयविधत्वमवगन्तव्यम् उदुपूरणौ ॥ ५ ॥

दधिक्राव्णोअकारिषमितिषष्ठीपवित्रेष्ट्याअनुवाक्या सूत्रितञ्च–दधिक्राव्णोअकारिषमादधिक्राःशवसापञ्चकृष्टीरिति । दधिद्रप्सभक्षणेप्येषादधिक्राव्णोअकारिषमित्याग्नीध्रीयेदधिद्रप्सान्भक्षयन्तीतिसूत्रितत्वात् ।

अथषष्ठी–

दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः ॥
सुरभिनोमुखाकरत्प्रणआयूंषितारिषत् ॥ ६ ॥ १३ ॥

दधिऽक्राव्णः । अकारिषम् । जिष्णोः । अश्वस्य । वाजिनः ।
सुरभि । नः । मुखा । करत् । प्र । नः । आयूंषि । तारिषत् ॥ ६ ॥ १३ ॥

दधिक्राव्णोदेवस्यस्तुतिमकारिषंकरवाणि जिष्णोर्जयशीलस्याश्वस्यव्यापकस्यवाजिनोवेगवतः सदेवोस्माकंमुखामुखानिचक्षुरादीन्द्रियाणि सुरभि सुरभीणि करत्करोतु नोस्मभ्यमायूंषिप्रतारिषत् प्रवर्धयतु प्रपूर्वस्तिरतिर्वर्धनार्थः ॥ ६ ॥

॥ इतितृतीयस्यसप्तमेत्रयोदशोवर्गः ॥ १३ ॥

दधिक्राव्णइदितिपञ्चर्चमष्टमंसूक्तं वामदेवस्यार्षं दाधिक्रम् आद्यात्रिष्टुप् शिष्टाजगत्यः हंसः शुचिषदित्येकासूर्यदेवत्या तथाचानुक्रमणिका—दधिक्राव्णःपञ्चचतस्रोन्त्याजगत्योन्त्यासौरीति । सूक्तविनियोगोलैङ्गिकः ।

तत्रप्रथमा—

दधिक्राव्णइदुनुचर्किरामविश्वाइन्मामुषसःसूदयन्तु ।
अपामग्नेरुषसःसूर्यस्यबृहस्पतेराङ्गिरसस्यजिष्णोः ॥ १ ॥

दधिऽक्राव्णः । इत् । ऊँ इति । नु । चर्किराम । विश्वाः । इत् । माम् । उषसः । सूदयन्तु । अपाम् । अग्नेः । उषसः । सूर्यस्य । बृहस्पतेः । आङ्गिरसस्य । जिष्णोः ॥ १ ॥

दधिक्राव्णइदुएतन्नामकस्यदेवस्यैवस्तुतिं नु क्षिप्रं चर्किराम भृशंकरवाम मां विश्वा इदुषसःसर्वाअपि ताः सूदयन्तु कर्मसुप्रेरयन्तु अपामग्नेरुषसःसूर्यस्यबृहस्पतेराङ्गिरसस्यजिष्णोरेतेषामहमप्यवादि देवतानांस्तुतिंकरवाणीतिशेषः तासामपिनिपातभाक्त्वात्स्तुतिरविरुद्धा ॥ १ ॥

अथद्वितीया—

सत्वाभरिषोगविषोदुवन्यसच्छ्रवस्यादिषउषसस्तुरण्यसत् ।
सत्योद्रवोद्रवरःपतङ्गरोदधिक्रावेषमूर्जंस्वर्जनत् ॥ २ ॥

सत्वा । भरिषः । गोऽइषः । दुवन्यऽसत् । श्रवस्यात् । इषः । उषसः । तुरण्यऽसत् । सत्यः । द्रवः । द्रवरः । पतङ्गरः । दधिऽक्रावा । इषम् । ऊर्जम् । स्वः । जनत् ॥ २ ॥

सत्वागन्ताभरिषोभरणकुशलः गविषोगवांप्रेरकः एष्टावा दुवन्यसत् दुवःपरिचरणमिच्छन्तोदुवन्याः तेषुसीदतीतिदुवन्यसत् इषःइष्यमाणायाउषसःसम्बन्धिनिकालेइत्यर्थः यद्वा इषएष्टाएषणीयोवाश्रवस्यात् श्रवस्येदन्नमिच्छेत् किञ्च तुरण्यसत् त्वरयासीदतीतितुरण्यसत् सत्यः सत्सुतायमानः द्रवोगन्ताद्रवरः प्रकृष्टवेगवान् पतङ्गरः पतनेनोत्प्लवनेनपतनंपतङ्गस्तद्वान्पतङ्गरः उक्तलक्षणोदधिक्रावादेवः इषमन्नमूर्जंबलं स्वः स्वर्गंच जमत्जनयेत् उत्पादयेत् ॥ २ ॥

अथतृतीया–

उतस्मास्यद्रवतस्तुरण्यतःपर्णंनवेरनुवातिप्रगर्धिनः ।
श्येनस्येवध्रजतोअङ्कसंपरिदधिक्राव्णःसहोर्जातरित्रतः ॥ ३ ॥

उत । स्म । अस्य । द्रवतः । तुरण्यतः । पर्णम् । न । वेः । अनु ।
वाति । प्रऽगर्धिनः । श्येनस्यऽइव । ध्रजतः । अङ्कसम् । परि ।
दधिऽक्राव्णः । सह । ऊर्जा । तरित्रतः ॥ ३ ॥

उतस्मापिचखलु द्रवतोगच्छतस्तुरण्यतस्त्वरमाणस्यप्रगर्धिनःप्रकर्षेणाभिकाङ्क्षतोस्यदेवस्यगतिं वेर्गन्तुःपक्षिणःपर्णंन गमनंपत्रंवानुसृत्ययथावान्त्यन्येपक्षिणस्तद्वदनुवातिसर्वोवेगवान्जनः सर्वेषामपिशीघ्रगामीत्यर्थः किञ्च ध्रजतोगच्छतः तरित्रतस्तारयतोन्यान् अन्तर्भावितण्यर्थोयं श्येनस्येवाङ्कसंपादाधारमुरःप्रदेशंवापरि परितःऊर्जाबलेननिमित्तेनअन्नार्थंवा सह एकीभूय सङ्गेनगच्छन्तीतिशेषः ॥ ३ ॥

अथचतुर्थी–

उतस्यवाजीक्षिपणिंतुरण्यतिग्रीवायांबद्धोअपिकक्षआसनि ।
क्रतुंदधिक्राअनुसन्तवीत्वत्पथामङ्कांस्यन्वापनीफणत् ॥ ४ ॥

उत । स्यः । वाजी । क्षिपणिम् । तुरण्यति । ग्रीवायाम् । बद्धः ।
अपिऽकक्षे । आसनि । क्रतुम् । दधिऽक्राः । अनु । सम्ऽतवीत्वत् ।
पथाम् । अङ्कांसि । अनु । आऽपनीफणत् ॥ ४ ॥

उतापिच स्यः सवाजी वेजनवान् अश्वरूपोदेवोग्रीवायांगरणसाधनायांकण्ठेबद्धो- पिकक्षे कक्षप्रदेशे आसनि आस्येचबद्धः बद्धपल्यङ्कस्योक्तेषुस्थानेषुपाशबन्धाःसम्भवन्ति एवंबद्धःसन् क्षिपणि क्षेपणमनुतुरण्यतित्वरयतिगन्तुं किञ्चायंदधिक्रादेवः क्रतुं कर्मप्रज्ञांवा अनु अनुसृत्य सन्तवीत्वत् प्रवृद्धबलवान्सन्पथांमार्गाणामङ्कांसिकुटिलानिअनुसृत्य आपनीफणत् सर्वतोभृशंगच्छति फणतेर्गत्यर्थस्ययङ्लुकीदंरूपम् अपिसवाजीवेजनवानित्यादिनि- रुक्तमनुसंन्धेयम् ॥ ४ ॥

दशरात्रेषष्ठेहनितृतीयसवनेमैत्रावरुणशस्त्रेहंसःशुचिषदित्येषाआहूयदूरोहणंरोहेद्धंसःशुचिषदि- तिपच्छोर्धर्चशइतिसूत्रितम् । स्मार्तविनियोगमाहशौनकः—हंसःशुचिषदित्यृचाशुचिरीक्षेद्दिवाकरम् । अन्तकालेजपन्नेतिब्रह्मणःसद्मशाश्वतमिति ॥

सैषापञ्चमी—

हंसःशुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋतम् ॥५॥१४॥

हंसः । शुचिऽसत् । वसुः । अन्तरिक्षऽसत् । होता । वेदिऽसत् ।
अतिथिः । दुरोणऽसत् । नृऽसत् । वरऽसत् । ऋतऽसत् । व्योमऽसत् ।
अप्ऽजाः । गोऽजाः । ऋतऽजाः । अद्रिऽजाः । ऋतम् ॥ ५ ॥ १४ ॥

अनयासौर्यर्चा यएषोन्तरादित्येहिरण्मयःपुरुषोदृश्यते हिरण्यश्मश्रुरित्यादिश्रुत्यो- क्तोमण्डलाभिमानीदेवोस्ति यश्चसर्वप्राणिहृदिचिद्रूपःस्थितःपरमात्मा यच्चनिरस्तसमस्तोपा- धिकंपरंब्रह्म तत्सर्वमेकमेवेतिप्रतिपाद्यते हंसः हन्तिर्गत्यर्थः सर्वत्रसर्वदागन्तायोहंसोसावि- त्यादिश्रुत्युक्तप्रकारेणैकीकृत्योपास्यः परमात्ममन्त्रप्रतिपाद्यआदित्यःसचशुचौदीप्तेद्युलोकेसीद- तीतिशुचिषत् अथयदतःपरोदिवोज्योतिर्दीप्यतइत्यादिश्रुतेः । अनेनद्युस्थानआदित्यःप्रतिपा- दितः सएवमध्यस्थानोवायुरित्याह वसुःसर्वस्यवासयितावायुः सचान्तरिक्षसत् अन्तरिक्ष- संचारी अथ तस्यैवक्षितिस्थानवैदिकाग्निरूपतामाह होता देवानामाह्वाता होमनिष्पाद- कोवा वेदिषत् वेद्यांगार्हपत्यादिरूपेणस्थितः अतिथिरतिथिवत्सर्वदापूज्योग्निः दुरोणसत्

१ नि० २. २८. ।

दुरोणंगृहनाम तत्र पाकादिसाधनत्वेनस्थितः अनेनलौकिकाग्न्यात्मकत्वमुक्तं नृषत् नृषुमनुष्येषुचैतन्यरूपेणसीदतीतिनृषत् अनेनपरमात्मरूपत्वमुक्तं पुनरप्यादित्यात्मतामाह—वरसत् वरे वरणीयेमण्डलेसीदतीतिवरसत् आदित्यः वरंवाएतत्सद्मनांयास्मिन्नेषआसन्नस्तपतीतिहिश्रूयते ऋतंसत्यंब्रह्मयज्ञोवातत्रसीदतीत्यृतसत् अग्निः व्योमान्तरिक्षं तत्रसीदतीतिव्योमसद्वायुः इदानीमादित्यतोच्यते अब्जाः उदकेषुजातः उदकमध्येखल्वयंजायते गोजाः गोषु रश्मिषुजातः ऋतंसत्यंसर्वैर्द्रश्यत्वेनसत्याज्जातः नह्यसाविन्द्रादिवत्परोक्षोभवति यद्वोदकेषुवैद्युतरूपेणवा वाडवरूपेणवाजातः अद्रिजाः अद्रावुदयाचलेजातः एवंमहानुभावआदित्यः ऋतं सत्यमबाध्यंसर्वाधिष्ठानंब्रह्मतत्त्वं तद्रूपोह्यसावेवादित्यस्योक्तरूपत्वं हंसः शुचिषदित्येषवैहंसः शुचिषदित्यादिनाब्राह्मणेसमाम्नातम् ॥ ५ ॥

॥ इतितृतीयस्यसप्तमेचतुर्दशोवर्गः ॥ १४ ॥

इन्द्राकोवामित्येकादशर्चंनवमंसूक्तं वामदेवस्यार्षं त्रैष्टुभमैन्द्रावरुणम् अत्रानुक्रमणिका—इन्द्राकोवामेकादशैन्द्रावरुणंत्विति । आभिप्लविकेषूक्थ्येषुतृतीयसवनेमैत्रावरुणशस्त्रेषुस्तोमवृद्धावावापार्थमेतदादिसूक्तद्वयम् इन्द्राकोवामितिसूक्तेइतिसूत्रितत्वात् ।

तत्रप्रथमा—

इन्द्रा॒को वां॑ वरुणा सु॒म्नमा॑प॒ स्तोमो॑ ह॒विष्माँ॑ अ॒मृतो॒ न होता॑ ।
यो वां॑ हृ॒दि क्रतु॑माँ अ॒स्मदु॒क्तः प॒स्पर्श॑दिन्द्रावरुणा॒ नम॑स्वान् ॥१॥

इन्द्रा॑ । कः । वा॒म् । व॒रु॒णा॒ । सु॒म्नम् । आ॒प॒ । स्तोमः॑ । ह॒विष्मा॑न् । अ॒मृतः॑ । न । होता॑ । यः । वा॒म् । हृ॒दि । क्रतु॑ऽमान् । अ॒स्मत् । उ॒क्तः । प॒स्पर्श॑त् । इ॒न्द्रा॒व॒रु॒णा॒ । नम॑स्वान् ॥ १ ॥

हेइन्द्रा हेवरुणा हेइन्द्रावरुणौ परस्परापेक्षयाद्विवचनं वां युवयोः सुम्नं सुखं कः स्तोमोहविष्मान्हविर्भिरुपेतःसोमाज्यादिप्रदेयद्रव्योपेतं कतमत्स्तोत्रंसुम्नमाप फलत्वेनप्राप्नुयादित्यर्थः यद्वा हविष्मानित्येतदुत्तरत्रयोज्यं हविष्मान् हविर्युक्तोऽमृतोऽमरणलक्षणः स्वर्गसाधनोहोताग्निरिव सयथा तथा यःस्तोमोहेइन्द्रावरुणौ वां युवयोर्हृदि हृदये क्रतुमान्प्रज्ञोपेतोस्मदस्मत्सकाशादुक्तोभिहितः नमस्वान्हविष्मान् नमस्कारोपेतोवापस्पर्शत् स्पृशेत् हृदयङ्गमोभवेत् सकइतिस्तोमप्रशंसा ॥ १ ॥

१ ऐ० ब्रा० ४. २०. । २ ऐ० ब्रा० ४. २०. ।

अथद्वितीया—

इन्द्रा॑ह॒यो व॑रु॒णा च॒क्र आ॒पी दे॒वौ मर्तः॑ स॒ख्याय॒ प्रय॑स्वान् ।
स ह॑न्ति वृ॒त्रा स॑मि॒थेषु॒ शत्रू॒नवो॑भि॒र्वा म॒हद्भिः॒ स प्र शृ॑ण्वे ॥ २ ॥

इन्द्रा॑ । ह॒ । यः । वरु॑णा । च॒क्रे । आ॒पी इति॑ । दे॒वौ । मर्तः॑ ।
स॒ख्याय॑ । प्रय॑स्वान् । सः । ह॒न्ति॒ । वृ॒त्रा । स॒म्ऽइ॒थेषु॑ । शत्रू॑न् ।
अव॑ःऽभिः । वा॒ । म॒हत्ऽभिः॑ । सः । प्र । शृ॒ण्वे॒ ॥ २ ॥

हेइन्द्रावरुणा इन्द्रावरुणौदेवौ हशब्दःपूरणः प्रसिद्धौवा योमर्तोमरणधर्माप्रयस्वान्ह-विर्लक्षणान्नवान्सन् सख्याय सखित्वाय आपी बन्धूचक्रे करोति समर्तोवृत्रा आवरका-णिपापानिहन्ति तथा समिथेषुसंग्रामेषुशत्रून्हन्ति वाशब्दश्चार्थे महद्भिरवोभीरक्षणैःसनरः प्रशृण्वे प्रकृष्टंश्रूयते विख्यातोभवति ॥ २ ॥

अथतृतीया—

इन्द्रा॑ह॒ रत्नं॒ वरु॑णा॒ धेष्ठे॒त्था नृभ्यः॑ शशमा॒नेभ्य॒स्ता ।
यदी॒ सखा॑या स॒ख्याय॒ सोमैः॑ सु॒तेभिः॑ सु॒प्रय॑सा मा॒दयै॑ते ॥ ३ ॥

इन्द्रा॑ । ह॒ । रत्न॑म् । वरु॑णा । धेष्ठा॑ । इ॒त्था । नृऽभ्यः॑ ।
श॒श॒मा॒नेभ्यः॑ । ता । यदि॑ । सखा॑या । स॒ख्याय॑ । सोमैः॑ ।
सु॒तेभिः॑ । सु॒ऽप्र॒यसा॑ । मा॒दयै॑ते॒ इति॑ ॥ ३ ॥

हेइन्द्रावरुणौ ता हेतिप्रसिद्धौ तौखलु देवौ इत्था इत्थं नृभ्योमनुष्येभ्यः शशमानेभ्यः शंसमनेभ्यः स्तोतृभ्योस्मभ्यंरत्नंरमणीयंधनंधेष्ठा दातृतमौभवतइतिशेषः यदि सखायापर-स्परंयजमानस्यवासखिभूतौसख्यायसखिकर्मणेसखित्वायसुतेभिरभिषुतैःसोमैःसुप्रयसा शोभनसोमान्न-वन्तौमादयैते माद्येताम् तर्हिरत्नानांदातारौभवतः ॥ ३ ॥

अथचतुर्थी—

इन्द्रा॑ युवं व॑रुणा दि॒द्युम॑स्मि॒न्नोजि॑ष्ठमु॒ग्रा नि व॑धिष्टं॒ वज्र॑म् ।
यो नो॑ दु॒रेवो॑ वृ॒कति॑र्द॒भीति॒स्तस्मि॑न्मिमाथाम॒भिभू॒त्योजः॑ ॥ ४ ॥

इन्द्रा । युवम् । वरुणा । दिद्युम् । अस्मिन् । ओजिष्ठम् । उग्रा । नि । वधिष्टम् । वज्रम् । यः । नः । दुःऽएवः । वृकतिः । दभीतिः । तस्मिन् । मिमाथाम् । अभिऽभूति । ओजः ॥ ४ ॥

इन्द्रा इन्द्रौ वरुणा वरुणौ हेउग्रा उग्रौ अत्रसर्वत्रपरस्परापेक्षयाद्विवचनं प्रमित्रयोर्वरुणयोरितिवत् यद्वा छान्दसत्वाद्व्यवहितस्याप्यानङ् अस्मिनशत्रौ दिद्युं दीप्तमोजिष्ठमतिशयेनतेजोवत् वज्रमायुधंनिवधिष्टं वधार्थंप्रेरयतमित्यर्थः यःशत्रुर्नोस्माकंदुरेवोदुष्प्रापः वृकतिरतिशयेनादातादभीतिर्हिंसकःशत्रूणां तस्मिनशत्रावभिभूत्यभिभावुकमोजोबलं युवं युवां मिमाथां कुरुतमित्यर्थः ॥ ४ ॥

अथपञ्चमी–

इन्द्रायुवंवरुणाभूतमस्याधियःप्रेतारावृषभेवधेनोः ।
सानोदुहीयद्यवसेवगत्वीसहस्रधारापयसामहीगौः ॥५॥१५॥

इन्द्रा । युवम् । वरुणा । भूतम् । अस्याः । धियः । प्रेतारा । वृषभाऽइव । धेनोः । सा । नः । दुहीयत् । यवसाऽइव । गत्वी । सहस्रऽधारा । पयसा । मही । गौः ॥ ५ ॥ १५ ॥

हेइन्द्रावरुणा इन्द्रावरुणौ युवं युवामस्याधियःस्तुत्याः प्रेतारा प्रीणयितारौभूतंभवतं काविव वृषभासेक्तारौ वृषभोधेनोरिव सास्तुतिरूपाधेनुः नोस्माकंदुहीयत् दुह्येत् कामान्पूरयेत् यवसातृणादिवासेननिमित्तेन गत्वी गत्वा पयसासहस्रधारामही महतीगौरिव ॥ ५ ॥

॥ इतितृतीयस्यसप्तमेपञ्चदशोवर्गः ॥ १५ ॥

अथषष्ठी–

तोकेहितेतनयउर्वरासुसूरोदृशीकेवृषणश्चपौंस्ये ।
इन्द्रानोअत्रवरुणास्यातामवोभिर्दस्मापरितक्म्यायाम् ॥ ६ ॥

---

१ ऋ० सं० ५. ५. ८. ।

तोके । हिते । तनये । उर्वरासु । सूरः । दृशीके । वृषणः ।
च । पौंस्ये । इन्द्रा । नः । अत्र । वरुणा । स्याताम् ।
अवःऽभिः । दस्मा । परिऽतक्म्यायाम् ॥ ६ ॥

इन्द्रावरुणौदेवौ नोहिते तोके पुत्रे तनये तत्पुत्रेच उर्वरासु सस्याढ्यासुभूमिषुनिमित्तभूतासुसूरःप्रेरकस्यसूर्यस्यदृशीकेचिरकालदर्शनाय चिरजीवनायेत्यर्थः तथा वृषणः सेक्तुर्ममपौंस्येच पुंस्त्वायच पुनरपि प्रजननसामर्थ्यायच दस्मा शत्रूणांहिंसकौसन्तौ नोस्माकमवोभीरक्षणैः सह परितक्म्यायां परितकनेनिमित्तभूतेसति यद्वा रात्रिनामैतत् रात्रौहिंसकानांवधायस्यातां भवेताम् ॥ ६ ॥

अथसप्तमी–

युवामिद्ध्यवसेपूर्व्यायपरिप्रभूतीगविषःस्वापी ।
वृणीमहेसख्यायप्रियायशूरामंहिष्ठापितरेवशम्भू ॥ ७ ॥

युवाम् । इत् । हि । अवसे । पूर्व्याय । परि । प्रभूती इति प्रऽभूती ।
गोऽइषः । स्वापी इति सुऽआपी । वृणीमहे । सख्याय ।
प्रियाय । शूरा । मंहिष्ठा । पितराऽइव । शम्भू इति शम्ऽभू ॥ ७ ॥

हेइन्द्रावरुणौ गविषोगाइच्छन्तोवयं युवामिद्धि हीतिपूरणः युवामेवपूर्व्यायपुरातनाययुवाभ्याकृतायावसेरक्षणायवृणीमहेइतिसम्बन्धः प्रभूती प्रभवन्तौ स्वापी शोभनबन्धुभूतौआपिरितिबन्धुनाम यद्वा सुष्ठुव्यापनशीलौशूरातिक्रान्तौमंहिष्ठातिशयेनपूज्यौयुवांसख्यायसमानख्यानायप्रियायच परिवृणीमहे परितःप्रार्थयामहे शम्भूसुखस्यभावयितारौ पितरेव पितरौ पुत्राय तद्वत् ॥ ७ ॥

अथाष्टमी–

तावांधियोवसेवाजयन्तीराजिंनजग्मुर्युवयूः सुदानू ।
श्रियेनगावउपसोमंमस्थुरिन्द्रंगिरोवरुणंमेमनीषाः ॥ ८ ॥

ताः । वाम् । धियः । अवसे । वाजऽयन्तीः । आजिम् । न । जग्मुः ।
युवऽयूः । सुदानू इति सुऽदानू । श्रिये । न । गावः । उप । सोमम् ।
अस्थुः । इन्द्रम् । गिरः । वरुणम् । मे । मनीषाः ॥ ८ ॥

सुदानू शोभनफलदातारौ हेदेवौ वां युवां वाजयन्तीरत्नामिच्छन्त्योधियः स्तुतयो जग्मुर्गच्छन्ति युवयूर्युवांकामयमानाःपत्तयः अवसेरक्षणाय आर्जिन संग्राममिव किञ्च श्रियेदध्यादिश्रयणायगावःसोमंन सोममिवेन्द्रंवरुणंचमेमदीयामनीषामंनसईषागिरःस्तुतयः उपास्थुस्तिष्ठन्ति प्रीणयन्तीत्यर्थः ॥ ८ ॥

अथनवमी–

इमाइन्द्रंवरुणंमेमनीषाअग्मन्नुपद्रविणमिच्छमानाः ।
उपेमस्थुर्जोष्टारइववस्वोरघ्वीरिवश्रवसोभिक्षमाणाः ॥ ९ ॥

इमाः । इन्द्रम् । वरुणम् । मे । मनीषाः । अग्मन् । उप । द्रविणम् ।
इच्छमानाः । उप । ईम् । अस्थुः । जोष्टारःऽइव । वस्वः ।
रघ्वीःऽइव । श्रवसः । भिक्षमाणाः ॥ ९ ॥

इन्द्रंवरुणंच मे मम मनीषाः स्तुतयोद्रविणमिच्छमानाःसत्यः उपाग्मन्नुपगच्छन्ति जोष्टारःसेवकाः वस्वइव धनस्यलाभायधनिकंस्वामिनमिव रघ्वीरिव लघ्व्यइव शीघ्रगामिन्यइव श्रवसोन्नस्यान्नंभिक्षमाणाः एनमिन्द्रंवरुणंचोपास्थुःउपतिष्ठन्ते ॥ ९ ॥

अथदशमी–

अश्व्यस्यत्मनारथ्यस्यपुष्टेर्नित्यस्यरायःपतयःस्याम ।
ताचक्राणाऊतिभिर्नव्यसीभिरस्मत्रारायोनियुतःसचन्ताम् ॥१०॥

अश्व्यस्य । त्मना । रथ्यस्य । पुष्टेः । नित्यस्य । रायः । पतयः
स्याम । ता । चक्राणौ । ऊतिऽभिः । नव्यसीभिः । अस्मऽत्रा ।
रायः । निऽयुतः । सचन्ताम् ॥ १० ॥

अश्व्यस्याश्वसमूहस्य रथ्यस्यरथसमूहरूपस्य रथार्हस्य वा पुष्टेःपोषस्य नित्यस्याविचलितस्यरायोधनस्य त्मना आत्मना स्वयमेवाप्रयत्नेनपतयःस्याम ता तौ देवौ चक्राणा चङ्क्रममाणौगन्तारौभवतामितिशेषः नव्यसीभिर्नूतनाभिरूतिभीरक्षाभिरस्मत्राऽस्मासुनियुतोश्वाः रायोधनानिचसचन्तां सेवन्ताम् ॥ १० ॥

अथैकादशी–

आनोबृहन्ताबृहतीभिरूतीइन्द्रयातंवरुणवाजसातौ ।
यद्दियवःपृतनासुप्रक्रीळान्तस्यवांस्यामसनितारआजेः ॥११॥१६॥

आ । नः । बृहन्ता । बृहतीभिः । ऊती । इन्द्र । यातम् । वरुण । वाजऽसातौ । यत् । दिद्यवः । पृतनासु । प्रऽक्रीळान् । तस्य । वाम् । स्याम । सनितारः । आजेः ॥ ११ ॥ १६ ॥

हेबृहन्ता महान्तौ हेइन्द्र हेवरुण बृहतीभिर्महतीभिरूतीऊतिभीरक्षाभिःसहायातमागच्छतं वाजसातौ संग्रामेन्नलाभनिमित्तभूतेवा यद्यस्मिन्नाजौसंग्रामेपृतनासुसेनासुदिद्यवः आयुधनामैतत् आयुधानिशत्रुसम्बन्धीनिप्रक्रीळान्प्रक्रीडन्ति तस्यतादृशस्याजेः सनितारः संभक्तारः स्याम भवेम वांयुवयोरनुग्रहात् ॥ ११ ॥

॥ इतितृतीयस्यसप्तमेषोडशोवर्गः ॥ १६ ॥

ममद्वितेतिदशर्चंदशमंसूक्तं पुरुकुत्सस्यपुत्रस्त्रसदस्यूराजाऋषिः आद्यासुषट्स्वात्मनःस्तुत्यत्वादात्मादेवता अवशिष्टानांचतसृणामिन्द्रावरुणौदेवते छन्दस्त्रिष्टुप् अत्रानुक्रमणिका–मम द्वितादशत्रसदस्युःपौरुकुत्स्यःषळाद्याआत्मस्तवइति । उक्तोविनियोगःपूर्वसूक्ते ।

तत्रप्रथमा–

ममद्विताराष्ट्रंक्षत्रियस्यविश्वायोर्विश्वेअमृतायथानः ।
क्रतुंसचन्तेवरुणस्यदेवाराजामिकृष्टेरुपमस्यवव्रेः ॥ १ ॥

मम । द्विता । राष्ट्रम् । क्षत्रियस्य । विश्वऽआयोः । विश्वे । अमृताः । यथा । नः । क्रतुम् । सचन्ते । वरुणस्य । देवाः । राजामि । कृष्टेः । उपऽमस्य । वव्रेः ॥ १ ॥

क्षत्रियस्य क्षत्रियजात्युत्पन्नस्यविश्वायोः कृत्स्नमनुष्याधीशस्य ममेत्यात्मनोनिर्देशः द्विताक्षितिस्वर्गभेदेनद्वित्वापन्नंराष्ट्रंमम त्रसदस्योर्विश्वेसर्वेऽमृतादेवायथानोस्माकंभवन्ति तथा राष्ट्रंप्रजाश्चेत्यर्थः वरुणस्यवारकस्यवरुणात्मनोवाकृष्टेर्मनुष्यस्यतद्धतोवा उपमस्यान्तिकनामैतत्

सर्वेषामन्तिकतमस्यवव्रेः रूपनामैतत् रूपवतोममक्रतुंकर्मसचन्ते सेवन्ते देवाः सर्वेपिअहंच राजामि राजतिरैश्वर्यकर्मा सर्वस्येश्वरोमवामि यद्वोपमस्यवव्रेःकृष्टेराजामीतियोज्यम् ॥ १ ॥

अथद्वितीया–

अहंराजावरुणोमह्यंतान्यसुर्याणिप्रथमाधारयन्त ।
क्रतुंसचन्तेवरुणस्यदेवाराजामिकृष्टेरुपमस्यवव्रेः ॥ २ ॥

अहम् । राजा । वरुणः । मह्यम् । तानि । असुर्याणि । प्रथमा ।
धारयन्त । क्रतुम् । सचन्ते । वरुणस्य । देवाः । राजामि । कृष्टेः ।
उपऽमस्य । वव्रेः ॥ २ ॥

अहमेवचवरुणोराजाभवामि मह्यंमदर्थमेवप्रथमा मुख्यानि तानि प्रसिद्धानिअसुर्याण्यसुरविघातकानिबलानिधारयन्त अधारयन्देवाः शिष्टंगतम् ॥ २ ॥

अथतृतीया–

अहमिन्द्रोवरुणस्तेमहित्वोर्वीगभीरेरजसीसुमेके ।
त्वष्टेवविश्वाभुवनानिविद्वान्त्समैरयंरोदसीधारयंच ॥ ३ ॥

अहम् । इन्द्रः । वरुणः । ते इति । महिऽत्वा । उर्वी इति ।
गभीरे इति । रजसी इति । सुमेके इति सुऽमेके । त्वष्टाऽइव । विश्वा ।
भुवनानि । विद्वान् । सम् । ऐरयम् । रोदसी इति । धारयम् । च ॥ ३ ॥

अहंत्रसदस्युरिन्द्रः इन्द्रोप्यस्मि अहं वरुणश्च तेमहित्वा महत्त्वेनोर्वीविस्तीर्णेगभीरेदुरवगाहेअवकाशवत्यौवा सुमेकेसुरूपे रजसीद्यावापृथिव्यौ तेअप्यहमेव विद्वान् जानन्नहं त्वष्टेव प्रजापतिरिव विश्वा भुवनानि सर्वाणि भूता समैरयं सम्प्रैरयं रोदसीद्यावापृथिव्यौ धारयंच धृतवानस्मि ॥ ३ ॥

अथचतुर्थी–

अहमपोअपिन्वमुक्षमाणाधारयंदिवंसदनऋतस्य ।
ऋतेनपुत्रोअदितेर्ऋतावोतत्रिधातुप्रथयद्विभूम ॥ ४ ॥

अहम् । अपः । अपिन्वम् । उक्षमाणाः । धारयम् । दिवम् । सदने । ऋतस्य । ऋतेन । पुत्रः । अदितेः । ऋतऽवा । उत । त्रिऽधातु । प्रथयत् । वि । भूम ॥ ४ ॥

अहमेवोक्षमाणाः सिञ्चन्तीरपोपिन्वमसेचयम् तथा ऋतस्योदकस्यादित्यस्यवासदनेस्थानेनिमित्तभूतेसति दिवं द्युलोकंधारयं यद्वोदकाधारेस्थानेदिवमादित्यंधारयम् अहमेव ऋतेनोदकेननिमित्तेनादितेःपुत्रऋतावायज्ञवानभूवम् उतापिच भूमव्याप्तमाकाशंत्रिधातु त्रिःप्रकारं वि विशेषेणप्रथयत् मदर्थमेवाक्षित्यादिलोकत्रयमकार्षीत्परमेश्वरः ॥ ४ ॥

अथपञ्चमी—

मांनरःस्वश्वावाजयंन्तोमांवृताःसमरणेहवन्ते ।
कृणोम्याजिंमघवाहमिन्द्रइयर्मिरेणुमभिभूत्योजाः ॥५॥१७॥

माम् । नरः । सुऽअश्वाः । वाजयन्तः । माम् । वृताः । सम्ऽअरणे । हवन्ते । कृणोमि । आजिम् । मघऽवा । अहम् । इन्द्रः । इयर्मि । रेणुम् । अभिभूतिऽओजाः ॥ ५ ॥ १७ ॥

मां मामेव स्वश्वाः शोभनाश्वाः वाजयन्तः संग्राममिच्छन्तोनरोनेतारोभटाः अनुगच्छन्तीतिशेषः मामेववृताःसन्तः समरणेसंग्रामेहवन्ते आह्वयन्तियुद्धार्थं मघवाधनवानहमिन्द्रःसन्नाजिंकृणोमि करोमि अभिभूत्योजाः परेषामभिभाविबलोहंरेणुमियर्मि प्रेरयामि ॥ ५ ॥

॥ इतितृतीयस्यसप्तमेसप्तदशोवर्गः ॥ १७ ॥

अथषष्ठी—

अहंताविश्वाचकरंनकिर्मादैव्यंसहोवरतेअप्रतीतम् ।
यन्मासोमासोममदन्यदुक्थोभेभयेतेरजसीअपारे ॥ ६ ॥

अहम् । ता । विश्वा । चकरम् । नकिः । मा । दैव्यम् । सहः । वरते । अप्रतिऽइतम् । यत् । मा । सोमासः । ममदन् । यत् । उक्था । उभे इति । भयेते इति । रजसी इति । अपारे इति ॥ ६ ॥

अहं त्रसदस्युः ता तानि प्रसिद्धानि विश्वा सर्वाणिकर्माणि चकरमकार्षम् अप्रतीतमप्रातिगतंमामांदैव्यंदेवसम्बन्धिसहोबलंचनकिर्वरते नैववारयति यद्यस्मात्सोमासःसोमामामांममदन् अमादयन् यच्चोक्था शस्त्राण्यपि ममदन् तस्मान्मत्तःअपारेदूरपारेउभेरजसी द्यावापृथिव्यौ भयेते चलतः ॥ ६ ॥

अथसप्तमी–

विदुष्टेविश्वाभुवनानितस्यताप्रब्रवीषिवरुणायवेधः ।
त्वंवृत्राणिशृण्विषेजघन्वान्त्वंवृताँअरिणाइन्द्रसिन्धून् ॥ ७ ॥

विदुः । ते । विश्वा । भुवनानि । तस्य । ता । प्र । ब्रवीषि । वरुणाय । वेधः । त्वम् । वृत्राणि । शृण्विषे । जघन्वान् । त्वम् । वृतान् । अरिणाः । इन्द्र । सिन्धून् ॥ ७ ॥

इतःपरमिन्द्रावरुणयोःस्तुतिः हेवरुण तस्य ते कर्मणिषष्ठी तंत्वांविश्वासर्वाणि ता तानि भुवनानि भूतजातानि विदुर्जानन्ति हेवेधः स्तोतृनामैतत् हेस्तोतः वरुणायप्रब्रवीषि वरुणंस्तौषि हेइन्द्र त्वं वृत्राणिवैरिणोजघन्वान् हतवानितिशृण्विषे श्रूयसे किंच हेइन्द्र त्वं वृतानाच्छन्नान् सिन्धून्स्यन्दनस्वभावानप्सङ्घानारिणाः अगमयः ॥ ७ ॥

अथाष्टमी–

अस्माकमत्रपितरस्तआसन्त्सप्तऋषयोदौर्गहेबध्यमाने ।
तआयजन्तत्रसदस्युमस्याइन्द्रंनवृत्रतुरमर्धदेवम् ॥ ८ ॥

अस्माकम् । अत्र । पितरः । ते । आसन् । सप्त । ऋषयः । दौःऽगहे । बध्यमाने । ते । आ । अयजन्त । त्रसदस्युम् । अस्याः । इन्द्रम् । न । वृत्रऽतुरम् । अर्धऽदेवम् ॥ ८ ॥

पुरुकुत्सस्यमहिषीदौर्गहेबन्धनेस्थिते ॥ पत्यावराजकंदृष्ट्वाराष्ट्रंपुत्रस्यलिप्सया ॥ १ ॥
यदृच्छयासमायातान्सप्तर्षीन्पर्यपूजयत् ॥ तेचप्रीताःपुनःप्रोचुर्यजेन्द्रावरुणौभृशम् ॥ २ ॥

साचेन्द्राविरुणाविष्टात्रसदस्युमजीजनत् ॥ इतिहासमिमंजाननृषिर्ब्रूतेह्यृचाविह ॥ ३ ॥ अथास्माकमत्रास्मिन्नराजकेदेशेऽस्यांपृथिव्यांवा पितरःपालयितारःउत्पादकास्तेआसन्नभवन् एतेसप्तर्षयःप्रसिद्धाः दौर्गहे दुर्गहस्यपुत्रे पुरुकुत्से बध्यमाने दृढंपाशैः यस्मादस्याअस्यैपुरुकुत्सान्यै त्रसदस्युंमामाअयजन्त प्रादुरिन्द्रावरुणयोरनुग्रहात् कीदृशंतं वृत्रतुरं वृत्रस्यशत्रोर्हन्तारमर्धदेवं देवानामर्धसमीपेवर्तमानं यद्वा देवानामर्धभूतमिन्द्रंन इन्द्रमिव स्थितंपुत्रंदत्तवन्तः यत्सर्वेषामर्धमिन्द्रःप्रतितस्मादिन्द्रोदेवतानांभूयिष्ठभाक्तमइतिहितैत्तिरीयकम् ॥ ८ ॥

अथनवमी–

पुरुकुत्सानीहिवामदाशद्धव्येभिरिन्द्रावरुणानमोभिः ।
अथाराजानंत्रसदस्युमस्यावृत्रहणंददथुरर्धदेवम् ॥ ९ ॥

पुरुऽकुत्सानी । हि । वाम् । अदाशत् । हव्येभिः । इन्द्रावरुणा । नमःऽभिः । अथ । राजानम् । त्रसदस्युम् । अस्याः । वृत्रऽहनम् । ददथुः । अर्धऽदेवम् ॥ ९ ॥

हेइन्द्रावरुणौ पुरुकुत्सानीपुरुकुत्सस्यपत्नी ऋषिप्रेरिता वांयुवाम् अदाशद्धि अप्रीणयत्खलु हव्येभिर्हविर्भिर्नमोभिःस्तुतिभिश्च अथ त्रसदस्युंराजानं वृत्रहणमर्धदेवमुक्तलक्षणंपुत्रमस्यामस्यै पुरुकुत्सान्यैददथुर्दत्तवन्ताविति ॥ ९ ॥

अथदशमी–

रायावयंससवांसोमदेमहव्येनदेवायवसेनगावः ।
तांधेनुमिन्द्रावरुणायुवन्नोविश्वाहाधत्तमनपस्फुरन्तीम् ॥१०॥१८॥

राया । वयम् । ससऽवांसः । मदेम । हव्येन । देवाः । यवसेन । गावः । ताम् । धेनुम् । इन्द्रावरुणा । युवम् । नः । विश्वाहा । धत्तम् । अनपऽस्फुरन्तीम् ॥ १० ॥ १८ ॥

---

१ तै० सं० ५. ४. ८. ।

रायाधनेन मदेम ससवांसोयुवांसंभक्तारोवयंहव्येनदेवामोदन्तुयवसेनगावः तांधेनुं प्रीणयित्रीरयिं हेइन्द्रावरुणौ विश्वाहा विश्वस्यहन्तारौ युवं युवां नोस्माकंधत्तंदत्तं कीदृशीमनपस्फुरन्तीमनवहिंसितां यद्वा विश्वाहेत्यव्ययं सर्वदेत्यर्थः ॥ १० ॥

॥ इतितृतीयस्यसप्तमेष्टादशोवर्गः ॥ १८ ॥

कउश्रवदितिसप्तर्चमेकादशंसूक्तं सुहोत्रपुत्रौपुरुमीह्ळाजमीह्ळौऋषी त्रिष्टुप्छन्दः अश्विनौदेवता । अत्रानुक्रमणिका—कउश्रवत्सप्तपुरुमीह्ळाजमीह्ळौसौहोत्रौत्वाश्विनंहीति । प्रातरनुवाकाश्विनशस्त्रयोराश्विनेक्रतौत्रैष्टुभेछन्दसिइदमादिकेद्वेसूक्ते धेनुःप्रत्नस्यकउश्रवदितिसूक्ते इतिसूत्रितत्वात् ।

तत्रप्रथमा—

**कउंश्रवत्कतमोयज्ञियानांवन्दारुदेवःकंतमोजुंषाते ।**
**कस्येमांदेवीममृतेषुप्रेष्ठांहृदिश्रेषामसुष्टुतिंसुहव्याम् ॥ १ ॥**

कः । ऊँ इति । श्रवत् । कतमः । यज्ञियानाम् । वन्दारु । देवः । कतमः । जुषाते । कस्य । इमाम् । देवीम् । अमृतेषु । प्रेष्ठाम् । हृदि । श्रेषाम । सुऽस्तुतिम् । सुऽहव्याम् ॥ १ ॥

यज्ञियानां यज्ञार्हाणां देवानांमध्ये कउदेवःश्रवत् शृणुयात्स्तुतिं कतमोदेवोवन्दारु वन्दनशीलंस्तोत्रंकतमोदेवोजुषाते सेवते अमृतेषुदेवेषुमध्येकस्यहृदि इमांप्रेष्ठांप्रियतरांदेवींद्योतमानांसुहव्यांशोभनान्नोपेतां शोभनैर्हविर्भिर्युक्तांवा सुष्टुतिं शोभनांस्तुतिं श्रेषामश्लेषयेम श्राययेमवा अश्विनावन्तरेणस्तुतेःकोदेवःस्वामीभवेदिति ॥ १ ॥

अथद्वितीया—

**कोमृळातिकतमआगमिष्ठोदेवानामुकतमः शम्भंविष्ठः ।**
**रथंकमाहुर्द्रवदश्वमाशुंयंसूर्यस्यदुहितावृणीत ॥ २ ॥**

कः । मृळाति । कृतमः । आऽगमिष्ठः । देवानाम् । ऊँ इति ।
कृतमः । शम्ऽभविष्ठः । रथम् । कम् । आहुः । द्रवत्ऽअश्वम् ।
आशुम् । यम् । सूर्यस्य । दुहिता । अवृणीत ॥ २ ॥

कोमृळाति कोदेवोमृळाति सुखयेदस्मान् कतमोदेवआगमिष्ठः आगन्तृतमोस्मद्यज्ञंप्रति देवानामु देवानांमध्येकतमोदेवः शम्भविष्ठः सुखस्यभावयितृतमः एवमुक्तगुणविशिष्टः कोभवेत् अश्विनावन्तरेणेतिभावः कंरथंद्रवदश्वमाशुमाहुर्ब्रुवते यंरथंसूर्यस्यदुहितासूर्यस्यपुत्री अवृणीत समभजत् तंकंरथंवेगवन्तमाहुः ॥ २ ॥

अथतृतीया–

मक्षूहिष्मागच्छथईवतोद्यूनिन्द्रोनशक्तिंपरितक्म्यायाम् ।
दिवआजातादिव्यासुपर्णाकयाशचीनांभवथःशचिष्ठा ॥ ३ ॥

मक्षु । हि । स्म । गच्छथः । ईवतः । द्यून् । इन्द्रः । न ।
शक्तिम् । परिऽतक्म्यायाम् । दिवः । आऽजाता । दिव्या ।
सुऽपर्णा । कया । शचीनाम् । भवथः । शचिष्ठा ॥ ३ ॥

मक्षु शीघ्रं हिस्मेतिपूरणौ ईवतोगमनवतः आगामिनोद्यून्दिवसान्सुत्यासंबन्धिनःप्रतिगच्छथः इन्द्रःशक्तिंन स्वकीयांशक्तिंयथापरितक्म्यायां रात्रावतीतायां प्रदर्शयतीति शेषः सुत्याहेउषःकालेइन्द्रोयथागच्छातितद्वत् युवामपिगच्छतमित्यर्थः दिवोद्युलोकादाजाता आगतौ दिव्या दिविभवौ सुपर्णा शोभनगमनौ युवां शचीनां युष्मत्सम्बन्धिनां कर्मणां शक्तीनांवामध्येकयाशच्या शचिष्ठाशक्तिमत्तरौशोभनकर्मवन्तौवाभवथः ॥ ३ ॥

अथचतुर्थी–

कावांभूदुपमातिःकयानआश्विनागमथोहूयमाना ।
कोवांमहश्चित्त्यजसोअभीकउरुष्यतंमाध्वीदस्रानऊती ॥ ४ ॥

का । वाम् । भूत् । उपऽमातिः । कया । नः । आ । अश्विना ।
गमथः । हूयमाना । कः । वाम् । महः । चित् । त्यजसः । अभीके ।
उरुष्यतम् । माध्वी इति । दस्रा । नः । ऊती ॥ ४ ॥

वांयुवयोःकाउपमातिः उपसमीपेमातिर्मानंगुणानांपरिच्छित्तिर्यस्यांसास्तुतिःकाभूद्भवेत् कयास्तुत्याहूयमाना आहूयमानौसन्तौ नोस्मानागमथः आगच्छथः वांयुवयोरमीकेआसन्नप्रदेशे महश्चित् महतस्त्यजसः त्यज्यतेपरित्यज्यतेसर्वैरितित्यजःक्रोधस्तस्यसोढाकोभवेत् हेमाध्वी मधुररसस्योदकस्यस्रष्टारौ हेदस्रा शत्रूणामुपक्षपयितारावश्विनौ नोस्मानूतीऊत्या रक्षणयाउरुष्यतं रक्षाकर्मैतत् रक्षतम् ॥ ४ ॥

अथपञ्चमी–

उरुवांरथःपरिनक्षतिद्यामायत्संमुद्रादभिवर्ततेवाम् ।
मध्वामाध्वीमधुवांप्रुषायन्यत्सींवांपृक्षोभुरजन्तपक्काः ॥ ५ ॥

उरु । वाम् । रथः । परि । नक्षति । द्याम् । आ । यत् ।
समुद्रात् । अभि । वर्तते । वाम् । मध्वा । माध्वी इति । मधु ।
वाम् । प्रुषायन् । यत् । सीम् । वाम् । पृक्षः । भुरजन्त । पक्काः ॥५॥

हेअश्विनौ वांरथोद्यांपरि द्युलोकस्यपरितः उरु प्रभूतं नक्षति गच्छति यद्यस्मादा अर्वाक्समुद्रात्समुद्रवणसाधनादन्तरिक्षाद्वांप्रत्यभिवर्तते आभिमुख्येनगच्छति हेमाध्वी उक्तलक्षणौ मध्वा मधुरेणपयसा मधुमधुरंसोमरसंप्रुषायन् सिञ्चन्त्यध्वर्यवः यद्यस्मात्सींसर्वतोवांपृक्षः युवयोःसोमंपक्काः पक्कायवा भुरजन्त प्राप्नुवन्ति स्थिताभवन्ति तस्मादभिवर्ततेवामिति ॥ ५ ॥

अथषष्ठी–

सिन्धुर्हवांरसयासिञ्चदश्वान्घृणावयोरुषासःपरिग्मन् ।
तदूषुवामजिरंचेतियानंयेनपतीभवंथःसूर्यायाः ॥ ६ ॥

सिन्धुः । ह । वाम् । रसया । सिञ्चत् । अश्वान् । घृणा । वयः ।
अरुषासः । परि । ग्मन् । तत् । ऊँ इति । सु । वाम् । अजिरम् ।
चेति । यानम् । येन । पती इति । भवथः । सूर्यायाः ॥ ६ ॥

वांयुवयोरश्वान्सिन्धुः स्यन्दमानोमेघउदकंवा रसेनसिञ्चद्सेचयत् घृणादीस्यावयः पक्षिसदृशावेतारोवाअश्वाअरुणासः आरोचमानाःसन्तः परि परितोग्मन् गच्छन्ति वांया-नंगमनसाधनंप्रसिद्धोरथः अजिरं क्षिप्रनामैतत् क्षिप्रं सुसुष्ठुचेतिज्ञायते येनरथेनसूर्यायाः पती पालयितारौ वोढारौभवथः सरथश्चेतीति ॥ ६ ॥

अथसप्तमी—

इहेहयद्वांसमनापपृक्षेसेयमस्मेसुमतिर्वाजरत्ना ।
उरुष्यतंजरितारंयुवंहश्रितःकामोनासत्यायुवद्रिक् ॥ ७॥१९ ॥

इहऽइह । वाम् । समना । पपृक्षे । सा । इयम् । अस्मे इति ।
सुऽमतिः । वाजऽरत्ना । उरुष्यतम् । जरितारम् । युवम् ।
ह । श्रितः । कामः । नासत्या । युवद्रिक् ॥ ७ ॥ १९ ॥

हेअश्विनौ यद्यस्मात् ययावासुमत्या इहेह अस्मिन्नेवयज्ञेसमना समानमनस्कौसदृशावित्यर्थः तौ वां युवां सुमत्या पपृक्षे स्तुत्यासंयोजयामि सेयमिदानींक्रियमाणा सुमतिः शोभनस्तुतिः अस्मे अस्माकमेव फलवतीभवत्विितिशेषः हेवाजरत्ना रमणीयान्नौ अन्नंवैवाजइतिश्रुतेः । युवं युवां जरितारं गरितारं स्तोतारं माम् उरुष्यतं रक्षतं हेनासत्याश्विनौ कामोस्मदीयः युवद्रिक्ह युवामेवगच्छन्श्रितःप्राप्तः ॥ ७ ॥

॥ इतितृतीयस्यसप्तमेएकोनविंशोवर्गः ॥ १९ ॥

तंवांरथमितिसप्तर्चैद्वादशंसूक्तं पुरुमीह्ळाजमीह्ळावेवऋषी त्रिष्टुप्छन्दः अश्विनौदेवता तंवामित्यनुक्रान्तं प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः ॥

तत्रप्रथमा—

तंवांरथंवयमद्याहुवेमपृथुज्रयमश्विनासङ्गतिंगोः ।
नःसूर्यांवहतिवन्धुरायुर्गिर्वाहसंपुरुतमं वसूयुम् ॥ १ ॥

---

१ ऐ० ब्रा० १. ३. ६.

तम् । वाम् । रथम् । वयम् । अद्य । हुवेम । पृथुऽज्रयम् ।
अश्विना । सम्ऽगतिम् । गोः । यः । सूर्याम् । वहति । वन्धुरऽयुः ।
गिर्वाहसम् । पुरुऽतमम् । वसुऽयुम् ॥ १ ॥

हेअश्विनौ वां युवयोरथं वयंस्तोतारोऽद्यसुत्याहेहुवेम आह्वयामः कीदृशंतं पृथुज्रयं प्रथितवेगं गोःगवांसङ्गतिं सङ्गमयितारं योरथः सूर्यावहतिधारयति वन्धुरायुः रथेनिवासाधारभूतः काष्ठोवन्धुरं तद्वान् गिर्वाहसं गिरांस्तुतीनांवोढारं पुरुतमं प्रभूततमं वसूयुं वसुमन्तम् ॥ १ ॥

अथद्वितीया—

युवंश्रियमश्विनादेवतातांदिवोनपातावनथःशचीभिः ।
युवोर्वपुरभिपृक्षःसचन्तेवहन्तियत्ककुहासोरथेवाम् ॥ २ ॥

युवम् । श्रियम् । अश्विना । देवता । ताम् । दिवः । नपाता ।
वनथः । शचीभिः । युवोः । वपुः । अभि । पृक्षः । सचन्ते ।
वहन्ति । यत् । ककुहासः । रथे । वाम् ॥ २ ॥

हेदिवोनपाता आदित्यस्यपुत्रस्थानीयौ द्युलोकस्यवानपातयितारौ हेअश्विना अश्विनौ युवं युवां देवता देवते विभक्तिव्यत्ययः तांप्रसिद्धां श्रियं शचीभिःकर्मभिःशक्तिभिर्वा वनथः संभजेथे यद्वा वनतिर्दानार्थः युवोः युवयोर्वपुःशरीरं पृक्षोन्नानि सोमलक्षणानि अभिसचन्ते प्राप्नुवन्ति यद्यदा रथेवांवहन्ति ककुहासोमहान्तोश्वाः यद्वा स्तुतयोवां युवांरथे वहन्ति ॥ २ ॥

अथतृतीया—

कोवामद्याकरतेरातहव्यऊतयेवासुतपेयायवार्कैः ।
ऋतस्यवावनुषेपूर्व्यायनमोयेमानोअश्विनाववर्तत् ॥ ३ ॥

कः । वाम् । अद्य । करते । रातऽहव्यः । ऊतये । वा ।
सुतऽपेयाय । वा । अर्कैः । ऋतस्य । वा । वनुषे । पूर्व्याय ।
नमः । येमानः । अश्विना । आ । ववर्तत् ॥ ३ ॥

कोयजमानोद्य वां युवयोःकरते कुर्यात्स्तुतिम् अर्कैर्मन्त्रैःरातहव्योदत्तसोमः ऊतयेवा रक्षणायवा सुतपेयायसोमपानायवा ऋतस्योदकस्ययज्ञस्यवा पूर्व्याय पुराणाय वनुषेसंभजनाय हेअश्विना नमोयेमानः नमस्कारंकुर्वाणः कआववर्तत् आवर्तयेद्यज्ञंप्रति ॥ ३ ॥

अथचतुर्थी–

हि॒र॒ण्यये॑नपुरुभू॒रथे॑ने॒मंय॒ज्ञंना॑स॒त्योप॑यातम् ।
पिबा॑थ॒इन्मधु॑नःसो॒म्यस्य॒दध॑थो॒र॒त्नंवि॑ध॒तेजना॑य ॥ ४ ॥

हि॒र॒ण्यये॑न । पु॒रु॒भू॒ इति॑ पुरुऽभू । रथे॑न । इ॒मम् । य॒ज्ञम् । ना॒स॒त्या॒ । उप॑ । या॒त॒म् । पिबा॑थः । इ॒त् । मधु॑नः । सो॒म्यस्य॑ । दध॑थः । रत्न॑म् । वि॒ध॒ते । जना॑य ॥ ४ ॥

हेपुरुभू बहुभवन्तौ नासत्यौ इमंयज्ञंहिरण्ययेनरथेनोपयातं सोम्यस्य सोमसम्बन्धिनोमधुनोमधुररसस्य कर्मणिषष्ठ्यौ सोमरसंपिबाथः पिबथः विधतेपरिचरते जनाय मह्यं रत्नं रमणीयंधनंदधथोधारयथः दधतेर्दानार्थस्यलेटिरूपम् ॥ ४ ॥

अथपञ्चमी–

आनो॑यातंदि॒वोअ॒च्छापृ॑थि॒व्याहि॑र॒ण्यये॑नसु॒वृता॒रथे॑न ।
मावा॑म॒न्येनिय॑मंदेव॒यन्तः॒संयद्द॒देनाभिः॑पू॒र्व्यावा॑म् ॥ ५ ॥

आ । नः॒ । या॒त॒म् । दि॒वः । अच्छ॑ । पृ॒थि॒व्याः । हि॒र॒ण्यये॑न । सु॒ऽवृता॑ । रथे॑न । मा । वा॒म् । अ॒न्ये । नि । य॒म॒न् । दे॒व॒ऽयन्तः॑ । सम् । यत् । द॒दे । नाभिः॑ । पू॒र्व्या । वा॒म् ॥ ५ ॥

नोस्मानच्छाभिप्राप्तुं दिवोद्युलोकात्पृथिव्याःसकाशाद्वा आयातं केनसाधनेन हिरण्ययेनहितरमणीयेन सुवृता शोभनावर्तनेनरथेन वां युवाम् अन्येदेवयन्तोदेवौयुवामिच्छन्तोयजमानाः मानियमन्नियमनंमाकुर्वन् यद्यस्मात्पूर्व्या पूर्वार्हा इतरयष्टृभ्यःपूर्वभाविनीनाभिः बन्धिका स्तुतिः सन्ददे संबध्नाति तस्मादायातम् ॥ ५ ॥

अथषष्ठी—

नूनोरयिंपुरुवीरंबृहन्तंदस्रामिमाथामुभयेष्वस्मे ।
नरोयद्वांमश्विनास्तोममावन्त्सधस्तुतिमाजमीह्ळासोअग्मन् ॥६॥

नु । नः । रयिम् । पुरुऽवीरम् । बृहन्तम् । दस्रा । मिमाथाम् । उभयेषु । अस्मे इति । नरः । यत् । वाम् । अश्विना । स्तोमम् । आवन् । सधऽस्तुतिम् । आजऽमीह्ळासः । अग्मन् ॥ ६ ॥

नु क्षिप्रंनोस्माकं रयिं धनं पुरुवीरं बहुपुत्रोपेतंबृहन्तं महान्तं धनं हेदस्राश्विनौ मिमाथां कुरुतम् उभयेषु पुरुमीह्ळाजमीह्ळेषुअस्मेऽस्मासु यद्यदा नरोनेतारः ऋत्विजः पुरुमीह्ळसम्बन्धिनोवांयुवयोःस्तोमंस्तोत्रम् आवन्नगमनप्राप्ताः तथा सधस्तुतिं सहस्तुतिमाजमीह्ळासोजमीह्ळसम्बन्धिनोपेतैःसहाग्मन्नगमन् ॥ ६ ॥

अथसप्तमी—

इहेहयद्वांसमनापपृक्षेसेयमस्मेसुमतिर्वाजरत्ना ।
उरुष्यतंजरितारंयुवंहश्रितःकामोनासत्यायुवद्रिक् ॥७॥२०॥

इहऽइह । यत् । वाम् । समना । पपृक्षे । सा । इयम् । अस्मे इति । सुऽमतिः । वाजऽरत्ना । उरुष्यतम् । जरितारम् । युवम् । ह । श्रितः । कामः । नासत्या । युवऽद्रिक् ॥ ७ ॥ २० ॥

व्याख्यातेयम् ॥ ७ ॥

॥ इतितृतीयस्यसप्तमेविंशोवर्गः ॥ २० ॥

एषस्यभानुरितिसप्तर्चंत्रयोदशंसूक्तम् आदितःषट्जगत्यः सप्तमीत्रिष्टुप् मण्डलद्रष्टावामदेवऋषिः अश्विनौदेवता एषस्यत्रिष्टुबन्तमितिह्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोर्जागते छन्दसीदंशस्यं तथाचसूत्रितम्—अबोध्यग्निर्जम्एषस्यभानुरिति ।

तत्रप्रथमा—

एषस्यभानुरुदियर्तियुज्यतेरथःपरिज्मादिवोअस्यसानवि ।
पृक्षासोअस्मिन्मिथुनाअधित्रयोदृतिस्तुरीयोमधुनोविरप्शते ॥१॥

एषः । स्यः । भानुः । उत् । इयर्ति । युज्यते । रथः । परिंऽज्मा ।
दिवः । अस्य । सानवि । पृक्षासः । अस्मिन् । मिथुनाः । अधि ।
त्रयः । दृतिः । तुरीयः । मधुनः । वि । रप्शते ॥ १ ॥

एषःपुरतोदृश्यमानःस्यः सभानुर्दीप्तिमानादित्यः उदियर्ति ऊर्ध्वंगच्छति पुरस्ताद्रथश्च युवयोःसंबन्धीपरिज्मा परितोगन्ता अस्यदिवोद्योतमानस्यादित्यस्यसानवि सानौ समुच्छ्रितप्रदेशे उदियर्तीतिवा रप्शतेइतिवासंबन्धनीयम् अस्मिन्रथे अध्युपरिभागे मिथुना मिथुनीभूतास्त्रयस्त्रिविधाः पृक्षासोन्नानित्रेधाविहितंचान्नम् इदमन्नमशनंपानंखादश्चेतिहिश्रुतम् । त्रिष्वपिपदार्थेषुमिथुनशब्दस्तैत्तिरीयेदृश्यते मातापितापुत्रस्तदेवतान्मिथुनंमिति । दृतिस्तुरीयः रसद्रव्याधारःपदार्थश्चर्ममयोदृतिरित्युच्यते मधुनःसोमरसस्यसंबन्धीमधुपूर्णश्चतुर्थोविरप्शते विविधंराजते ॥ १ ॥

अथद्वितीया—

उद्वांपृक्षासोमधुमन्तईरतेरथाअश्वासउषसोव्युष्टिषु ।
अपोर्णुवन्तस्तमआपरीवृतंस्व१र्णशुक्रंतन्वन्तआरजः ॥ २ ॥

उत् । वाम् । पृक्षासः । मधुंऽमन्तः । ईरते । रथाः । अश्वासः ।
उषसः । विऽउष्टिषु । अपऽऊर्णुवन्तः । तमः । आ । परिंऽवृतम् ।
स्वः । न । शुक्रम् । तन्वन्तः । आ । रजः ॥ २ ॥

पृक्षासः प्रक्षास्त्रिविधान्नवन्तोमधुमन्तः सोमरसोपेताअश्वासोश्वयुक्ताः वां युवयोरथाः यद्वा मधुमन्तः पृक्षारथाअश्वासोश्वाः उषसोव्युष्टिषुव्युच्छनेषुसत्सूदीरते उन्मुखंगच्छन्ति किंकुर्वन्तः परीवृतं परितोव्याप्तंतमः आसर्वतः अपोर्णुवन्तः अपाकुर्वन्तः स्वर्णआदित्यइव शुक्रंदीप्तंरजस्तेजश्चतन्वन्तः आकारश्चार्थे यद्वा रजोन्तरिक्षंशुक्रंदीप्तंतन्वन्तः ॥ २ ॥

अथतृतीया—

मध्वंःपिबतंमधुपेभिरासभिरुतप्रियंमधुनेयुञ्जाथांरथम् ।
आवर्तनिंमधुनाजिन्वथस्पथोदृतिंवहेथेमधुमन्तमश्विना ॥ ३ ॥

१ तै० ब्रा० १. ६. ३. ।

मध्वः । पिबतम् । मधुऽपेभिः । आसऽभिः । उत । प्रियम् । मधुने । युञ्जाथाम् । रथम् । आ । वर्तनिम् । मधुना । जिन्वथः । पथः । दृतिम् । वहेथे इति । मधुऽमन्तम् । अश्विना ॥ ३ ॥

मध्वोमधुरंसोमरसं मधुपेभिः सोमपानार्हैरासभिरास्यैःपिबतम् उतापिच प्रियंरथं मधुने मधुलाभाय युञ्जाथाम् अश्वैर्युक्तंकुरुतं वर्तनिं यजमानगृहम् आगच्छतमितिशेषः पथोगमन मार्गात् मधुनाजिन्वथः प्रीणयतं यद्वैकंवाक्यं पथोवर्तनिमाकाशंजिन्वथः दृतिंमधुमन्तं हेअश्विनाश्विनौ वहेथे धारयथ ॥ ३ ॥

अथचतुर्थी–

हंसासोयेवांमधुमन्तोअस्रिधोहिरण्यपर्णाउहुवउषर्बुधः ।
उदप्रुतोमन्दिनोमन्दिनिस्पृशोमध्वोनमक्षःसवनानिगच्छथः ॥४॥

हंसासः । ये । वाम् । मधुऽमन्तः । अस्रिधः । हिरण्यऽपर्णाः । उहुवः । उषःऽबुधः । उदऽप्रुतः । मन्दिनः । मन्दिनिऽस्पृशः । मध्वः । न । मक्षः । मक्षः । सवनानि । गच्छथः ॥ ४ ॥

हंसासोध्वनिशीघ्रंगन्तारः मधुमन्तोमाधुर्योपेताअस्रिधः अद्रोग्धारः हिरण्यपर्णाः हित रमणीयपर्णाः उहुवःओढारःउषर्बुधः उषसिबुध्यमानाः उदप्रुतः उदकस्यप्लावयितारः मन्दिनोहर्षयितारः मन्दिनिस्पृशः मन्दिनंसोमंस्पृशन्तः उक्तलक्षणायेश्वाःसन्ति तैरश्वैर्मध्वोन मधुमिव मक्षोमक्षिकाः सवनान्यस्मदीयानिगच्छथः ॥ ४ ॥

अथपञ्चमी–

स्वध्वरासोमधुमन्तोअग्नयउस्राजरन्तेप्रतिवस्तोरश्विना ।
यन्निक्तहस्तस्तरणिर्विचक्षणःसोमंसुषावमधुमन्तमद्रिभिः ॥५॥

सुऽअध्वरासः । मधुऽमन्तः । अग्नयः । उस्रा । जरन्ते । प्रति । वस्तोः । अश्विना । यत् । निक्तऽहस्तः । तरणिः । विऽचक्षणः । सोमम् । सुसाव । मधुऽमन्तम् । अद्रिऽभिः ॥ ५ ॥

स्वध्वरासः शोभनयागसाधनाः मधुमन्तोहोतव्यसोमवन्तः अग्नयोगार्हपत्यादयः उस्त्रासहनिवसन्तौ अश्विनौ प्रतिवस्तोः अन्वहमुषःकालेजरन्ते स्तुवन्ति यद्यदानिक्तहस्तः समक्षेणोदकेनशोधितहस्तः तरणिः कर्मणस्तारयिता विचक्षणोविविधंद्रष्टाध्वर्युः सोमंमधुमन्तमद्रिभिर्ग्रावभिःसुषावाभिषुतवान् तदातेग्नयःस्तुवन्ति तस्मादागच्छतमित्यर्थः ॥ ५ ॥

अथषष्ठी—

आकेनिपासोअहंभिर्दविध्वतःस्व१र्णशुक्रंतन्वन्तआरजः ।
सूरश्चिदश्वान्युयुजानईयतेविश्वाँअनुस्वधयांचेतथस्पथः ॥ ६ ॥

आकेऽनिपासः । अहंऽभिः । दविध्वतः । स्वः । न । शुक्रम् ।
तन्वन्तः । आ । रजः । सूरः । चित् । अश्वान् । युयुजानः ।
ईयते । विश्वान् । अनु । स्वधया । चेतथः । पथः ॥ ६ ॥

आकेनिपासः अन्तिकेनिपतन्तीत्याकेनिपारश्मयः तेचाहभिरहोभिर्दविध्वतः कम्पयन्तोध्वंसयन्तोवातमांसिस्वर्णआदित्यइव शुक्रंदीप्तंरजः आतन्वन्तोभवन्त्यःअश्विनोरश्वाःसूरश्चित्सूर्यश्चाश्वान्युयुजानोयोजयन्नीयतेगच्छाति हेअश्विनौ युवांविश्वान्पथः आगमनमार्गाननुक्रमेणस्वधयान्नेनसोमलक्षणेनचेतथः चेतयथः प्रज्ञापयथः ॥ ६ ॥

अथसप्तमी—

प्रवामवोचमश्विनाधियन्धारथःस्वश्वोअजरोयोअस्ति ।
येनसद्यःपरिरजांसियाथोहविष्मन्तंतरणिंभोजमच्छ ॥ ७ ॥२१ ॥

प्र । वाम् । अवोचम् । अश्विना । धियम्ऽधाः । रथः । सुऽअश्वः ।
अजरः । यः । अस्ति । येन । सद्यः । परि । रजांसि । याथः ।
हविष्मन्तम् । तरणिम् । भोजम् । अच्छ ॥ ७ ॥ २१ ॥

धियंधाः कर्मणांधारकोहं हेअश्विनाश्विनौ वां प्रवोचं प्रब्रवीमि स्तौमि स्वश्वः सुष्ठुअश्वः अजरः अजीर्णोनित्यनूतनोजरयितावारथोयोस्ति येनरथेन सद्यस्तदानीमेवरजांसि लोकान्परियाथस्तेनरथेन हविष्मन्तंसोमादिहविर्युक्तं तरणिं तारकं शीघ्रगामिनं भोजं भोजयितारमस्मद्यागम् अच्छ प्राप्तुमागच्छतमितिशेषः ॥ ७ ॥

॥ इतितृतीयस्यसप्तमेएकविंशोवर्गः ॥ २१ ॥

॥ इतिचतुर्थेमण्डलेचतुर्थोनुवाकः ॥ ४ ॥

पञ्चमेनुवाकेत्रयोदशसूक्तानि तत्राग्रंपिबेतिसप्तर्चंप्रथमंसूक्तं वामदेवस्यार्षंगायत्रं कृत्स्नं सूक्तमिन्द्रवायुदेवताकम् आद्याकेवलावायव्या तथाचानुक्रान्तम्—अग्रंवायव्याद्यैन्द्रवाय-वन्तुगायत्रमिति । सूक्तविनियोगोलैङ्गिकः आद्येद्वेऐन्द्रवायवग्रहस्ययाज्ये तथाचसूत्रम्—अग्रं-पिबामधूनामितियाज्येअनवानमिति ।

तत्रप्रथमा—

अग्रंपिबामधूनांसुतंवायोदिविष्टिषु । त्वंहिपूर्वपाअसि ॥ १ ॥
अग्रम् । पिब । मधूनाम् । सुतम् । वायो इति । दिविष्टिषु ।
त्वम् । हि । पूर्वऽपाः । असि ॥ १ ॥

हेवायो त्वमग्रम् इन्द्रादिभ्यःपूर्वं मधूनां मधुररसानांसोमानांसंबन्धिनंसुतमभिषुतंरसं पिब कुत्रेतितदुच्यते—दिविष्टिषु दिवःस्वर्गस्यप्रापकेषुयज्ञेषु यद्वास्माकंदिवःस्वर्गस्यैषणेषु निमित्तेषु त्वंहि त्वंखलु पूर्वपाअसि हिशब्दोदेवदधिषेपूर्वपेयमित्यादिमन्त्रान्तरप्रसिद्धिद्योत-नार्थः वायोरग्रपानंदेवावैसोमस्यराज्ञोग्रपेयेनसमपादयन्नहंप्रथमःपिबेयमित्यादिब्राह्मणेस्पष्टमाम्ना-तम्-तत्रहिवायुराजिंप्रथमंधावित्वाग्रपानंलब्धवान् ॥ १ ॥

अथद्वितीया—

शतेनानोअभिष्टिभिर्नियुत्वाँइन्द्रसारथिः । वायोसुतस्यतृम्पतम् ॥ २ ॥
शतेन । नः । अभिष्टिऽभिः । नियुत्वान् । इन्द्रऽसारथिः ।
वायो इति । सुतस्य । तृम्पतम् ॥ २ ॥

हेवायो नियुत्वान् नियुद्भिस्तद्वानिन्द्रसारथिरिन्द्रसहायःसन् त्वंशतेनापरिमितैर-भिष्टिभिरभितएषणीयैःकामैर्निमित्तभूतैरागच्छेतिशेषः आगत्यच सुतस्यसुतमभिषुतंनोस्मदी-यंसोमंतृम्पतं पिबतं त्वमिन्द्रश्च इन्द्रस्यसाहित्यंब्राह्मणएवोक्तम्—तत्तुरीयभागिन्द्रोभवत्त्रिभा-ग्वायुरितितुरीयेहैवसंग्रहीतारोवदन्तेमुनैवानूकाशेनयदद्इन्द्रःसारथिरिवभूत्वोदजयदितिच ॥ २ ॥

अथतृतीया—

आवांसहस्रंहरयइन्द्रवायूअभिप्रयः । वहन्तुसोमपीतये ॥ ३ ॥

---

१ ऐ० ब्रा० २. २५. । २ ऐ० ब्रा० २. २५. ।

आ । वाम् । सहस्रम् । हरयः । इन्द्रवायू इति । अभि । प्रयः ।
वहन्तु । सोमऽपीतये ॥ ३ ॥

हेइन्द्रवायू वां युवां सहस्रंहरयः सहस्रसंख्याकाअश्वाः प्रयोन्नंप्रतित्वरयन्तःसन्ति अत्रहरिशब्दोश्वसामान्यवचनः तेसोमपीतयेआवहन्तु ॥ ३ ॥

अथचतुर्थी—

रथंहिरण्यवन्धुरमिन्द्रवायूस्वध्वरम् । आहिस्थाथोदिविस्पृशम् ।४।
रथम् । हिरण्यऽवन्धुरम् । इन्द्रवायू इति । सुऽअध्वरम् । आ ।
हि । स्थाथः । दिविऽस्पृशम् ॥ ४ ॥

हेइन्द्रवायू हिरण्यवन्धुरं हिरण्मयनिवासाधारकाष्ठोपेतंदिविस्पृशं द्युलोकस्पर्शिनंस्वध्वरं शोभनाध्वरवन्तंरथमास्थाथोहि आस्थितौखलु यस्मादेवंतस्मादागच्छतमित्यर्थः स्वध्वरं प्रत्यास्थाथइतिवाव्याख्येयम् ॥ ४ ॥

रथेनपृथ्वित्यादिकत्र्यृचोदशरात्रेपञ्चमेहनिप्रउगशस्त्रेऐन्द्रवायवोद्वितीयः सूत्रितंच—रथेनपृथुपाजसाबहवःसूरचक्षसइति ।

त्र्यृचेप्रथमा सूक्तेपञ्चमी—

रथेनपृथुपाजसादाश्वांसमुपगच्छतम् । इन्द्रवायूइहागतम् ॥ ५ ॥
रथेन । पृथुऽपाजसा । दाश्वांसम् । उप । गच्छतम् ।
इन्द्रवायू इति । इह । आ । गतम् ॥ ५ ॥

हेइन्द्रवायू पृथुपाजसा प्रभूतबलेनरथेन दाश्वांसं दातारं यजमानमुपगच्छतं तदर्थमिहास्मिन्यज्ञेआगतमागच्छतम् ॥ ५ ॥

अथषष्ठी—

इन्द्रवायूअयंसुतस्तंदेवेभिःसजोषसा । पिबतंदाशुषोगृहे ॥ ६ ॥
इन्द्रवायू इति । अयम् । सुतः । तम् । देवेभिः । सऽजोषसा ।
पिबतम् । दाशुषः । गृहे ॥ ६ ॥

हे इन्द्रवायू अयंसोमः सुतोभिषुतः तंसोमंदेवेभिःदेवैःसजोषसा समानप्रीतौसन्तौ दाशुषो हविर्दातुर्गृहे यागशालायांपिबतम् ॥ ६ ॥

अथसप्तमी–

इहप्रयाणंमस्तुवामिन्द्रंवायूविमोचनम् । इहवांसोमंपीतये ।७।२२।

इह । प्रऽयानम् । अस्तु । वाम् । इन्द्रवायू इति । विऽमोचनम् ।
इह । वाम् । सोमऽपीतये ॥ ७ ॥ २२ ॥

हेइन्द्रवायू वांयुवयोः इहास्मिन्यज्ञेप्रयाणंगमनमस्तु इहास्मिन्नेवयज्ञे वां सोमपीतये विमोचनमश्वानामस्तु इहशब्दस्यपर्यवसानएकार्थत्वेपिआदरार्थत्वादविरोधः ॥ ७ ॥

॥ इतितृतीयस्यसप्तमेद्वाविंशोवर्गः ॥ २२ ॥

वायोशुक्रइतिचतुर्ऋचंद्वितीयंसूक्तं वामदेवस्यार्षमानुष्टुभमैन्द्रवायवम् आद्याकेवलवायव्या अत्रानुक्रमणिका–वायोचतुष्कमानुष्टुभमाद्यावायव्येति । सूक्तविनियोगोलैङ्गिकः । आद्यादशरात्रे चतुर्थेहनिप्रउगशस्त्रेवायव्येतृचेप्रथमा वायोशुक्रोअयामितेविहिहोत्राअवीताइति सूत्रितम् ।

तत्रप्रथमा–

वायोशुक्रोअयामितेमध्वोअग्रंदिविष्टिषु ।
आयाहिसोमंपीतयेस्पार्होदेवनियुत्वता ॥ १ ॥

वायो इति । शुक्रः । अयामि । ते । मध्वः । अग्रम् । दिविष्टिषु ।
आ । याहि । सोमऽपीतये । स्पार्हः । देव । नियुत्वता ॥ १ ॥

हेवायो ते तुभ्यं शुक्रोव्रतचर्यादिनादीप्तोहं मध्वः मधुरंसोमरसं कर्मणिषष्ठी अग्रमितरेभ्यःपूर्वमयामि प्रापयामि अयतिरन्तर्भावितण्यर्थः किमर्थं दिविष्टिषु दिवोद्युलोक-स्यैषणेषुसत्सु हेदेव वायो स्पार्हःस्पृहणीयस्त्वंनियुत्वतानियुत्वत् वायोःप्रतिनियुतोश्वस्तेनसा-धनेनायाहि सोमपीतये सोमपानाय ॥ १ ॥

इन्द्रश्चेत्यादितृचोदशरात्रेचतुर्थेहन्यैन्द्रवायवोद्वितीयः सूत्रंच–इन्द्रश्चवायवेषांसोमानामा-माचिकितानसुक्रतूइति ।

सूक्तेद्वितीया—

इन्द्रश्चवायवेषांसोमानांपीतिमर्हथः ।
युवांहियन्तीन्दवोनिम्नमापोनसध्र्यक् ॥ २ ॥

इन्द्रः । च । वायो इति । एषाम् । सोमानाम् । पीतिम् । अर्हथः ।
युवाम् । हि । यन्ति । इन्दवः । निम्नम् । आपः । न । सध्र्यक् ॥ २ ॥

हेवायो त्वमिन्द्रश्चैषांगृहीतानांसोमानांपीतिंपानमर्हथः युवांहिखलु इन्दवः सोमाः यन्तिप्राप्नुवन्ति निम्नंखातप्रदेशम् आपोनसध्र्यक् उदकानियथासहैवगच्छन्तितद्वत्सर्वेसोमायुवांहियन्ति ॥२॥

अथतृतीया—

वायविन्द्रश्चशुष्मिणासरथंशवसस्पती ।
नियुत्वन्तानऊतयआयातंसोमपीतये ॥ ३ ॥

वायो इति । इन्द्रः । च । शुष्मिणा । सऽरथम् । शवसः । पती इति ।
नियुत्वन्ता । नः । ऊतये । आ । यातम् । सोमऽपीतये ॥ ३ ॥

हेवायो त्वमिन्द्रश्च हेशवसस्पती बलस्यपती शुष्मिणाबलवन्तौ नियुत्वन्ता नियुत्संज्ञाश्ववन्तौ युवां सरथं समानमेवरथमारुह्येतिशेषः नः ऊतयेरक्षणाय सोमपीतये सोमपानायाआयातमागच्छतं यद्वा सरथमधितिष्ठतमारुह्यचायातमितिचवाक्यद्वयम् ॥ ३ ॥

अथचतुर्थी—

यावांसन्तिपुरुस्पृहोनियुतोदाशुषेनरा ।
अस्मेतायज्ञवाहसेन्द्रवायूनियच्छतम् ॥ ४ ॥ २३ ॥

याः । वाम् । सन्ति । पुरुऽस्पृहः । निऽयुतः । दाशुषे । नरा । अस्मे इति ।
ताः । यज्ञऽवाहसा । इन्द्रवायू इति । नि । यच्छतम् ॥ ४ ॥ २३ ॥

हेनरा नेतारौ हेयज्ञवाहसा यज्ञवाहकाविन्द्रवायू याः पुरुस्पृहोबहुभिःस्पृहणीयाः नियुतःसन्ति ताअस्मेअस्मभ्यंदाशुषेहविर्दत्तवतेयजमानायमदर्थंतानियुतोनियच्छतम् ॥ ४ ॥

॥ इतितृतीयस्यसप्तमेत्रयोविंशोवर्गः ॥ २३ ॥

विहिहोत्राइतिपञ्चर्चंतृतीयंसूक्तं वामदेव्यंवायव्यम् अत्रानुक्रमणिका—विहिपञ्चवायव्यमिति । सूक्तविनियोगोलैङ्गिकः आद्यादशरात्रेचतुर्थेहनिप्रउगशस्त्रेवायव्यस्तृचस्यद्वितीया तथाचसूत्रितं—विहिहोत्राअवीतावायोशतंहरीणामिति

सैषाप्रथमा—

विहिहोत्राअवीताविपोनरायोअर्यः ।
वायवाचन्द्रेणरथेनयाहिसुतस्यपीतये ॥ १ ॥

विहि । होत्राः । अवीताः । विपः । न । रायः । अर्यः ।
वायो इति । आ । चन्द्रेण । रथेन । याहि । सुतस्य । पीतये ॥ १ ॥

हेवायो विहि वीहि भक्षय होत्राः होमसाधिकाःसोमाहुतीरवीताअन्यैःपूर्वमभक्षिताः विपोन शत्रूणांवेपयिताराजेव किंचार्यःस्तोतुर्ममरायोधनानिसंपादयेतिशेषः हेवायो चन्द्रेणाह्लादकेनरथेनायाहि सुतस्यसोमस्यपीतयेपानाय ॥ १ ॥

अथद्वितीया—

निर्युवाणोअशस्तीर्नियुत्वाँइन्द्रसारथिः ।
वायवाचन्द्रेणरथेनयाहिसुतस्यपीतये ॥ २ ॥

निःऽयुवानः । अशस्तीः । नियुत्वान् । इन्द्रऽसारथिः । वायो इति ।
आ । चन्द्रेण । रथेन । याहि । सुतस्य । पीतये ॥ २ ॥

हेवायो त्वमशस्तीरभिशस्तीःनिर्युवाणःनिःशेषेणनियोजयन् नियुत्वान्नियुत्संज्ञकाश्वानिन्द्रसारथिरिन्द्रसहायःसन्नायाहि ॥ २ ॥

अथतृतीया—

अनुकृष्णेवसुधितीयेमातेविश्वपेशसा ।
वायवाचन्द्रेणरथेनयाहिसुतस्यपीतये ॥ ३ ॥

अनु । कृष्णे इति । वसुधिती इति वसुऽधिती । येमाते इति ।
विश्वऽपेशसा । वायो इति । आ । चन्द्रेण । रथेन । याहि । सुतस्य ।
पीतये ॥ ३ ॥

कृष्णे कृष्णवर्णे वसुधिती वसूनांधात्र्यौ विश्वपेशसा बहुरूपेद्यावापृथिव्यौ त्वाम-नुयेमाते अनुगच्छतः ॥ ३ ॥

अथचतुर्थी–

वहन्तुत्वामनोयुजोयुक्तासोनवतिर्नव ।
वायवाचन्द्रेणरथेनयाहिसुतस्यपीतये ॥ ४ ॥

वहन्तु । त्वा । मनःऽयुजः । युक्तासः । नवतिः । नव । वायो इति ।
आ । चन्द्रेण । रथेन । याहि । सुतस्य । पीतये ॥ ४ ॥

हेवायो त्वात्वांमनोयुजोमनःसमानगतयोयुक्तासः परस्परंसंयुक्ताः नवतिर्नवनवोत्तर-नवतिसंख्याकाः अश्वावहन्तु धारयन्तु ॥ ४ ॥

वायोशतमितिपञ्चमीपूर्वोक्तएवत्र्यृचेतृतीया सूत्रंतुपूर्वमेवोक्तम् ।

अथपञ्चमी–

वायोशतंहरीणांयुवस्वपोष्याणाम् ।
उतवातेसहस्रिणोरथआयातुपाजसा ॥ ५ ॥ २४ ॥

वायोइति । शतम् । हरीणाम् । युवस्व । पोष्याणाम् ।
उत । वा । ते । सहस्रिणः । रथः । आ । यातु । पाजसा ॥ ५॥२४॥

हेवायो त्वं पोष्याणां पोषणीयानां हरीणां शतं युवस्व योजय रथे उतवाथवा ते सहस्रिणः सहस्रसंख्यापूरकाअश्वाःतैर्युक्तोरथः पाजसाबलेनायात्वागच्छतु ॥ ५ ॥

॥ इतितृतीयस्यसप्तमेचतुर्विंशोवर्गः ॥ २४ ॥

इदंवामास्यइतिषळृचंचतुर्थंसूक्तं वामदेवस्यार्षंगायत्रमैन्द्राबार्हस्पत्यम् अत्रानुक्रमणिका–इदं-वाषळैन्द्राबार्हस्पत्यंगायत्रमिति । सूक्तविनियोगोलैङ्गिकः ।

तत्रप्रथमा–

इदंवामास्येहविःप्रियमिन्द्राबृहस्पती । उक्थंमदश्चशस्यते ॥१॥

इदम् । वाम् । आस्ये । हविः । प्रियम् । इन्द्राबृहस्पती इति ।
उक्थम् । मदः । च । शस्यते ॥ १ ॥

हेइन्द्राबृहस्पती वामास्ये इदंप्रियंहविःसोमरूपं प्रक्षिपामीतिशेषः उक्थंशस्त्रंच मदो-मदजनकंशस्यते ॥ १ ॥

अथद्वितीया–

अयंवांपरिषिच्यतेसोमइन्द्राबृहस्पती । चारुर्मदायपीतये ॥२॥

अयम् । वाम् । परि । सिच्यते । सोमः । इन्द्राबृहस्पती इति । चारुः । मदाय । पीतये ॥ २ ॥

हेइन्द्राबृहस्पती वांमास्ये चारुः शोभनः अयंसोमः परिषिच्यते परितोदीयते मदायहर्षाय पीतयेपानायच ॥ २ ॥

ऐन्द्राबार्हस्पत्यायामिष्टौप्रधानस्यानइन्द्रेतितृतीयानुवाक्या उत्तरायाज्या सूत्रितंच–आनइन्द्राबृहस्पतीअस्मेइन्द्राबृहस्पतीइति ।

सैषातृतीया–

आनइन्द्राबृहस्पतीगृहमिन्द्रश्चगच्छतम् । सोमपासोमपीतये ॥३॥

आ । नः । इन्द्राबृहस्पती इति । गृहम् । इन्द्रः । च । गच्छतम् । सोमऽपा । सोमऽपीतये ॥ ३ ॥

हेइन्द्राबृहस्पती अथ विविच्योच्यते हेबृहस्पते त्वंचेन्द्रश्चसोमपा सोमपौ युवांसोमपीतये सोमपानाय नोगृहम्अस्मद्यागसंबन्धि आगच्छतम् ॥ ३ ॥

अथचतुर्थी–

अस्मेइन्द्राबृहस्पतीरयिंधत्तंशतग्विनम् । अश्वावन्तंसहस्रिणम् ।४।

अस्मे इति । इन्द्राबृहस्पती इति । रयिम् । धत्तम् । शतऽग्विनम् । अश्वऽवन्तम् । सहस्रिणम् ॥ ४ ॥

अस्याविनियोगःपूर्वमन्त्रेणसहोक्तः हेइन्द्राबृहस्पती अस्मेस्मभ्यंरयिंधनंधत्तं कीदृशं शतग्विनं शतसंख्याकाभिर्गोभिर्युक्तम् अश्वावन्तमश्ववन्तं सहस्रिणं सहस्रसंख्यायुक्तम् ॥ ४ ॥

अथपञ्चमी–

इन्द्राबृहस्पतीवयंसुतेगीर्भिर्हवामहे । अस्यसोमस्यपीतये ॥५॥

इन्द्राबृहस्पती इति । वयम् । सुते । गीःऽभिः । हवामहे । अस्य । सोमस्य । पीतये ॥ ५ ॥

सुतेअभिषुतेसोमेगीर्भिःस्तुतिभिः । शिष्टंस्पष्टम् ॥ ५ ॥

अथषष्ठी–

सोममिन्द्राबृहस्पतीपिबतंदाशुषोगृहे ।
मादयेथांतदोकसा ॥ ६ ॥ २५ ॥

सोमम् । इन्द्राबृहस्पती इति । पिबतम् । दाशुषः । गृहे । मादयेथाम् । तत्ऽओकसा ॥ ६ ॥ २५ ॥

हेइन्द्राबृहस्पती युवां दाशुषोहविर्दातुर्यजमानस्यगृहे तदोकसा तदेवयजमानगृहम् ओको-निवासस्थानंययोस्तौ तादृशौसन्तौ सोमंपिबतं पीत्वाचमादयेथामिति ॥ ६ ॥

॥ इतितृतीयस्यसप्तमेपञ्चविंशोवर्गः ॥ २५ ॥

यस्तस्तम्भेत्येकादशर्चंपञ्चमंसूक्तं वामदेवस्यार्षंत्रैष्टुभं दशमीजगती दशम्येकादश्यावि-न्द्राबृहस्पतिदेवताके शिष्टानवबार्हस्पत्याः अत्रानुक्रमणिका–यस्तस्तम्भैकादशबार्हस्पत्यम-न्त्येऐन्द्र्यौचोपान्त्याजगतीति । आभिप्लविकेषूक्थ्येषुतृतीयसवनेब्राह्मणाच्छंसिनःस्तोमवृद्धाविदं सूक्तमावापार्थं तथाचसूत्रं–यस्तस्तम्भयोअद्रिभिदिति । आद्येबृहस्पतिसवेमरुत्वतीयनिष्केव-ल्ययोःसूक्तमुखीये सूत्रितंच–यस्तस्तम्भधुनेतयइतिसूक्तमुखीयेइति ।

तत्रप्रथमा–

यस्तस्तम्भसहसाविज्मोअन्तान्बृहस्पतिस्त्रिषधस्थोरवेण ।
तंप्रत्नासऋषयोदीध्यानाःपुरोविप्रादधिरेमन्द्रजिह्वम् ॥ १ ॥

यः । तस्तम्भ । सहसा । वि । ज्मः । अन्तान् । बृहस्पतिः ।
त्रिऽसधस्थः । रवेण । तम् । प्रत्नासः । ऋषयः । दीध्यानाः ।
पुरः । विप्राः । दधिरे । मन्द्रऽजिह्वम् ॥ १ ॥

योबृहस्पतिः बृहतोवेदस्ययज्ञस्यवापालयितादेवः सहसाबलेनज्मः पृथिव्याः अन्तान्दशदिशइत्यर्थः तान्वितस्तम्भ विविधंस्तम्भितवान् नियमितवान् कीदृशःसः त्रिषधस्थः त्रिषु स्थानेषुवर्तमानः केनसाधनेन रवेण एवंतिष्ठतेत्यनेनशब्देन तंदेवंप्रत्नासःपुराणाऋषयोतीन्द्रियद्रष्टारोदीध्यानादीप्यमानाविप्रामेधाविनोयजमानादयःपुरोदधिरे पुरस्तात्स्थापितवन्तः कीदृशेनस्तुत्यादिना मन्द्रजिह्वंमन्द्राजिह्वायस्यासौमन्द्रजिह्वः तंमन्दनजिह्वंमोदनजिह्वंतम् ॥ १ ॥

अथद्वितीया–

धुनेतयःसुप्रकेतंमदन्तोबृहस्पतेअभियेनस्ततस्रे ।
पृषन्तंसृप्रमदब्धमूर्वंबृहस्पतेरक्षतादस्ययोनिम् ॥ २ ॥

धुनऽइतयः । सुऽप्रकेतम् । मदन्तः । बृहस्पते । अभि । ये । नः ।
ततस्रे । पृषन्तम् । सृप्रम् । अदब्धम् । ऊर्वम् । बृहस्पते ।
रक्षतात् । अस्य । योनिम् ॥ २ ॥

हेबृहस्पते धुनेतयः धुनाशत्रूणांकम्पयित्रीइतिर्गतिर्येषांतेतादृशाः सुप्रकेतं शोभनप्रज्ञं त्वां मदन्तोमादयन्तोनोस्मत्संबन्धिनोयेऋत्विजोभिततस्रे आत्मानमुपक्षिपन्ति स्तुवन्तिवा अस्यएषांयोनिंकारणंयज्ञंयजमानंवा मां रक्षताद्रक्ष योनिर्विशेष्यते पृषन्तंफलानिसिञ्चन्तं सृप्रं सर्पणस्वभावम् अदब्धमहिंसितमूर्वमुरुम् ॥ २ ॥

बृहस्पतेयेत्यादिकेद्वेबार्हस्पत्येपशौवपापुरोडाशयोरनुवाक्ये बृहस्पतेयापरमापरावदितिद्वे इतिहिसूत्रितम् ।

सैषातृतीया–

बृहस्पतेयापरमापरावदतआतऋतस्पृशोनिषेदुः ।
तुभ्यंखाताअवताअद्रिदुग्धामध्वश्चोतन्त्यभितोविरप्शम् ॥३॥

बृहस्पते । या । परमा । पराऽवत् । अतः । आ । ते । ऋतऽस्पृशः । नि । सेदुः । तुभ्यम् । खाताः । अवताः । अद्रिऽदुग्धाः । मध्वः । श्चोतन्ति । अभितः । विऽरप्शम् ॥ ३ ॥

हेबृहस्पते या प्रसिद्धा परमोत्कृष्टा परावदत्यन्तंदूरभूतावसतिः स्वर्गाख्यास्ति यद्वा लिङ्गव्यत्ययः परमंस्थानमस्ति अतःअस्माद्देशादा आइत्यर्वागर्थे अधस्तात्तेतवसंबन्धिनः ऋतस्पृशः यज्ञंस्पृशन्तोश्वाः निषेदुर्निषण्णाभवन्ति तुभ्यंखाताअवताअवटाः लुप्तोपमैषा यथाखाताःकूपा अभितः श्चोतन्तितद्वत् अद्रिदुग्धाः ग्रावभिरभिषुताःसोमाः विरप्शं विशेषेणशब्देन स्तोत्रंयथाभवतितथामध्वोमधुररसाश्चोतन्तिस्रवन्ति ॥ ३ ॥

अथचतुर्थी—

बृहस्पतिःप्रथमंजायमानोमहोज्योतिषःपरमेव्योमन् ।
सप्तास्यस्तुविजातोरवेणविसप्तरश्मिरधमत्तमांसि ॥ ४ ॥

बृहस्पतिः । प्रथमम् । जायमानः । महः । ज्योतिषः । परमे । विऽओमन् । सप्तऽआस्यः । तुविऽजातः । रवेण । वि । सप्तऽरश्मिः । अधमत् । तमांसि ॥ ४ ॥

अयंबृहस्पतिर्मन्त्राभिमानीदेवः महोमहतोज्योतिषोदीप्तस्यादित्यस्यपरमेनिरातिशयेव्योमन्व्योमनि प्रथमंजायमानः प्रादुर्भवन् सप्तास्यः सप्तच्छन्दोमयमुखः तुविजातः बहुप्रकारंसंभूतोरवेणशब्देनसप्तरश्मिःसर्पणस्वभावतेजोयुक्तस्तमांसिव्यधमत् धमतिर्गतिकर्मेतिनिरुक्तम्[1] । विविधंगच्छतिनाशयतीत्यर्थः ॥ ४ ॥

अथपञ्चमी—

ससुष्टुभासऋक्वतागणेनवलंरुरोजफलिगंरवेण ।
बृहस्पतिरुस्रियाहव्यसूदःकनिक्रदद्वावशतीरुदाजत् ॥५।२६॥

---

१ नि० ६. २. ।

सः । सुऽस्तुभा । सः । ऋक्वता । गणेन । वलम् । रुरोज । फलिऽगम् । रवेण । बृहस्पतिः । उस्रियाः । हव्यऽसूदः । कनिक्रदत् । वावशतीः । उत् । आजत् ॥ ५ ॥ २६ ॥

सबृहस्पतिः सुष्टुभा शोभनस्तुतिमता ऋक्वता दीप्तिमतागणेनाङ्गिरसांस्वेनशब्देनचसह फलिगं ञिफलाविशरणेफलिर्भेदस्तेनगच्छतीतिफलिगं वलं वलनामानमसुरंरुरोजबभञ्ज द्वितीयःसशब्दःपूरणः सएवदेवः उस्रियाः भोगानामुत्स्राविणीर्हव्यसूदः क्षीरादिहविःप्रेरिकाः वावशतीर्वश्यमानागाः कनिक्रदच्छब्दंकुर्वन् उदाजदुद्घाटयतिस्म ॥ ५ ॥

॥ इतितृतीयस्यसप्तमेषड्विंशोवर्गः ॥ २६ ॥

एवापित्रइतिबार्हस्पत्येपशौहविषोयाज्या एवापित्रेविश्वदेवायवृष्णेविश्वेअद्यमरुतोविश्वऊतीइतिसूत्रितत्वात् । अग्निष्टोमेवैश्वदेवशस्त्रेएषैवधाय्या तथाचसूत्रम्—एवापित्रेविश्वदेवायवृष्णेआनोभद्राःक्रतवोयन्तुविश्वतइतिवैश्वदेवमिति ॥

एवापित्रेविश्वदेवायवृष्णेयज्ञैर्विधेमनमसाहविर्भिः ।
बृहस्पतेसुप्रजावीरवन्तोवयंस्यामपतयोरयीणाम् ॥ ६ ॥

एव । पित्रे । विश्वऽदेवाय । वृष्णे । यज्ञैः । विधेम । नमसा । हविःऽभिः । बृहस्पते । सुऽप्रजाः । वीरऽवन्तः । वयम् । स्याम । पतयः । रयीणाम् ॥ ६ ॥

पित्रेपालकायविश्वदेवाय सर्वदेवतारूपाय देवानांमन्त्रप्रतिपाद्यत्वादस्यचमन्त्राभिमानित्वाद्वैश्वदेवत्वं यद्वा अत्रदेवशब्दःस्तुत्यर्थः सर्वैःस्तुत्यायवृष्णेवर्षकायबृहस्पतयेदेवाय एव एवमुक्तप्रकारेण यज्ञैस्तत्साधनैर्हविर्भिराज्यचर्वादिलक्षणैर्नमसास्तुत्याचविधेम परिचरेम हेबृहस्पते सुप्रजाः शोभनप्रजाः वीरवन्तोवीर्योपेतावयं रयीणांधनानांपतयःस्याम ॥ ६ ॥

अथसप्तमी—

सइद्राजाप्रतिजन्यानिविश्वाशुष्मेणतस्थावभिवीर्येण ।
बृहस्पतिंयःसुभृतंबिभर्तिवल्गूयतिवन्दतेपूर्वभाजम् ॥ ७ ॥

सः । इत् । राजा । प्रतिऽजन्यानि । विश्वा । शुष्मेण । तस्थौ । अभि । वीर्येण । बृहस्पतिम् । यः । सुऽभृतम् । बिभर्ति । वल्गुऽयति । वन्दते । पूर्वऽभाजम् ॥ ७ ॥

इदमाद्यृक्त्रयंपुरोहितप्रशंसेतिब्राह्मणम् अथवासूक्तस्यऋग्द्वयवर्जितस्यबार्हस्पत्यत्वाद्बृहस्पतेरेवस्तुतिः सइत् सएव राजा मूर्धाभिषिक्तोन्योवाराजमानः प्रतिजन्यानि जन्यंयुद्धं प्रतिबलानीत्यर्थः प्रत्यर्थिजनपदानिवा तानि विश्वा सर्वाणि शुष्मेणबलेन वीर्येणशरीरसामर्थ्येनवा अभि अभिगम्याक्रम्य तस्थौ तिष्ठति सइत्युक्तंकइत्याह—योबृहस्पतिंबृहतांमहतांमन्त्राणांपालयितारमेवमुक्तलक्षणंपुरोहितंवा सुभृतं सुष्ठुहविःस्तोत्रादिनान्नाच्छादनादिनावाबिभर्ति भरति वल्गूयति स्तौति वन्दते नमस्करोतिच पूर्वभाजमितरेभ्यःप्रथमसंभक्तारंकृत्वाएवंयःकरोतिसएवतस्थाविति ॥ ७ ॥

अथाष्टमी—

सइत्क्षेतिसुधितओकसिस्वेतस्माइळापिन्वतेविश्वदानीम् ।
तस्मैविशःस्वयमेवानमन्तेयस्मिन्ब्रह्माराजनिपूर्वएति ॥ ८ ॥

सः । इत् । क्षेति । सुऽधितः । ओकसि । स्वे । तस्मै । इळा । पिन्वते । विश्वऽदानीम् । तस्मै । विशः । स्वयम् । एव । नमन्ते । यस्मिन् । ब्रह्मा । राजनि । पूर्वः । एति ॥ ८ ॥

सइत्सएवक्षेति निवसति सुधितः सुष्ठुतृप्तःसन् कुत्र स्वेस्वकीयेएव ओकसि सदने सएवसमृद्धोनिर्बाधः सन् सुखेनास्ते तस्मैइळाभूमिर्विश्वदानीं सर्वकालंपिन्वते वर्धतेफलैः तस्मै विशःप्रजाः स्वयमेवनमन्ते प्रणताभवन्ति दण्डनमन्तरेणस्वयमेवदत्तकराभवन्ति यस्मिन्राजनि ब्रह्मापूर्वःप्रथमंपूज्यःसन्नेति गच्छति वर्ततेइत्यर्थः ॥ ८ ॥

अथनवमी—

अप्रतीतोजयतिसंधनानिप्रतिजन्यान्युतयासजन्या ।
अवस्यवेयोवरिवःकृणोतिब्रह्मणेराजातमवन्तिदेवाः ॥ ९ ॥

अप्रतिऽइतः । जयति । सम् । धनानि । प्रतिऽजन्यानि । उत । या । सऽजन्या । अवस्यवे । यः । वरिवः । कृणोति । ब्रह्मणे । राजा । तम् । अवन्ति । देवाः ॥ ९ ॥

सएवाप्रतीतोन्यैरप्रतिगतःसन्यानिधनानिप्रतिजन्यानिप्रातिस्पर्धिजनसंबन्धीनि । उतापिच सजन्याजनसंबन्धीनिधनानिसंजयति योराजाअवस्यवेअवसीयसेधनरहितायरक्षणमिच्छतेवा ब्रह्मणेब्राह्मणायप्रीणनमिच्छते बृहस्पतयेवावरिवोधनंकृणोति करोति ददाति सउक्तप्रकारेणमहान्भवति तमेवदेवाअवन्ति रक्षन्ति ॥ ९ ॥

इन्द्रश्चसोमममितिदशमीतृतीयसवनेब्राह्मणाच्छंसिनःप्रस्थितयाज्या सूत्रितंच—इन्द्रश्चसोमंपिबतंबृहस्पतआवोवहन्तुसप्तयोरघुष्यदइति ।

अथदशमी—

इन्द्रश्चसोमंपिबतंबृहस्पतेस्मिन्यज्ञेमन्दसानावृषण्वसू ।
आवांविशन्त्विन्दवःस्वाभुवोस्मेरयिंसर्ववीरंनियच्छतम् ॥ १० ॥

इन्द्रः । च । सोमम् । पिबतम् । बृहस्पते । अस्मिन् । यज्ञे । मन्दसाना । वृषण्वसू इति वृषण्ऽवसू । आ । वाम् । विशन्तु । इन्दवः । सुऽआभुवः । अस्मे इति । रयिम् । सर्वऽवीरम् । नि । यच्छतम् ॥ १० ॥

हेबृहस्पते त्वमिन्द्रश्च सोमंपिबतं कीदृशौयुवाम् अस्मिन्यज्ञेमन्दसानाहृष्यन्तौ वृषण्वसू वर्षितृधनौ यजमानेभ्योदीयमानधनावित्यर्थः वां युवां स्वाभुवः सुष्ठु सर्वतोभवन्तःकृत्स्नशरीरव्यापनसमर्थाइत्यर्थः तादृशाइन्दवः सोमाः आविशन्तु युवयोःशरीरंप्रविशन्तु अस्मेअस्मभ्यं रयिंधनंसर्ववीरं सर्वपुत्राद्युपेतंनियच्छतं दत्तम् ॥ १० ॥

अथैकादशी—

बृहस्पतइन्द्रवर्धतंनःसचासावांसुमतिर्भूत्वस्मे ।
अविष्टंधियोजिगृतंपुरंधीर्जजस्तमर्योवनुषामरातीः ॥ ११ । २७ ॥

बृहस्पते । इन्द्र । वर्धतम् । नः । सचा । सा । वाम् । सुऽमतिः । भूतु । अस्मे इति । अविष्टम् । धियः । जिगृतम् । पुरम्ऽधीः । जजस्तम् । अर्यः । वनुषाम् । अरातीः ॥ ११ ॥ २७ ॥

हेबृहस्पते हेइन्द्र युवां नोस्मान्वर्धतं वर्धयतं प्रवृद्धान्कुरुतं सासुमतिःयुवयोरनुग्रहबुद्धिरस्मेअस्मासु सचा सह भूतुभवतु धियःकर्माण्यविष्टंरक्षतं पारंनयतं पुरंधीः पुरंशरीरंधीयतेस्थाप्यतेयाभिर्मतिभिस्ताःस्तुतीर्जिगृतं प्रबुध्यतं वनुषांसंभक्तॄणामस्माकमर्योगन्त्रीररातीः शत्रूनित्यर्थः जजस्तं युध्यतं क्षपयतमित्यर्थः छन्दस्यरातिशब्दःस्त्रीलिङ्गः एवंस्तुतिं निगमय्याभीष्टंप्रार्थितवान् ॥ ११ ॥

॥ इतितृतीयस्यसप्तमेसप्तविंशोवर्गः ॥ २७ ॥

॥ वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् ॥ पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥१॥

श्रीमत्सायणमश्रीशोदाशतय्यास्तृतीयके ॥ अष्टकेसप्तमाध्यायंव्याकार्षीदतिपेशलम् ॥ २ ॥

॥ इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेणसायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येतृतीयाष्टकेसप्तमोध्यायःसंपूर्णः ॥ ७ ॥

## ॥ श्रीगणेशायनमः ॥



यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत् ॥ निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥ १ ॥

अथाष्टमंव्याख्यातुमारभते इदमुत्यदित्येकादशर्चंषष्ठंसूक्तं वामदेवस्यार्षं त्रैष्टुभमुषोदेवताकम् इदमुषस्यन्तित्वत्यनुक्रान्तम् । प्रातरनुवाकेउषस्येक्रतौत्रैष्टुभेछन्दस्याश्विनशस्त्रेचेदंसूक्तम् । सूत्रितंच—उषोवाजेनेदमुत्यदिति ।

तत्रप्रथमा—

ओम् इदमुत्यत्पुरुतमंपुरस्ताज्ज्योतिस्तमसोवयुनावदस्थात् ।
नूनंदिवोदुहितरोविभातीर्गातुंकृणवन्नुषसोजनाय ॥ १ ॥

इदम् । ऊँ इति । त्यत् । पुरुऽतमम् । पुरस्तात् । ज्योतिः । तमसः ।
वयुनऽवत् । अस्थात् । नूनम् । दिवः । दुहितरः । विऽभातीः ।
गातुम् । कृणवन् । उषसः । जनाय ॥ १ ॥

इदमुपुरतोदृश्यमानमिदं त्यत्तत् अस्माभिःस्तुत्यं सर्वप्रसिद्धं पुरुतममत्यन्तप्रभूतं ज्योतिस्तेजोवयुनावत् वेतःकान्तिकर्मणइदं प्रकृष्टकान्तिमत् अथवा वयुनमितिप्रज्ञानाम प्रज्ञोपेतं सर्वस्यप्रज्ञापकमित्यर्थः कीदृक्तेजः पुरस्तात्पूर्वस्यांदिशितमसोन्धकारादस्थात्उदतिष्ठत् एवं सति नूनं सत्यं दिवआदित्यस्यदुहितरोदुहितृस्थानीयाविभातीर्विभानंकुर्वतीरुषसोजनाय यजमानानांगातुंगमनं गमनादिव्यापारसामर्थ्यंकृणवन्नकुर्वन् ॥ १ ॥

अथद्वितीया—

अस्थुरुचित्राउषसःपुरस्तान्मिताइवस्वरवोध्वरेषु ।
व्यूव्रजस्यतमसोद्वारोच्छन्तीरव्रञ्छुचयःपावकाः ॥ २ ॥

अस्थुः । ऊँ इति । चित्राः । उषसः । पुरस्तात् । मिताःऽइव ।
स्वरवः । अध्वरेषु । वि । ऊँ इति । व्रजस्य । तमसः ।
द्वारा । उच्छन्तीः । अव्रन् । शुचयः । पावकाः ॥ २ ॥

चित्राश्चायनीयाउषसःपुरस्तात्पूर्वस्यांदिश्यस्थुः तिष्ठन्ति व्याप्ताइत्यर्थः तत्रदृष्टान्तः—अध्वरेषुमिताःखाताःस्वरवोयूपाइव तेयथावेद्याःपुरतोभासन्तेतद्वत् यद्यपिस्वरुशब्दोयूपच्छेदपतितप्रथमशकलवाची यःप्रथमःशकलःपरापतेत् सस्वरुःकार्यइत्युक्तत्वात्तथाप्यत्रमितशब्दश्रवणाच्चषालवन्तःस्वरवइत्यादौतथादर्शनाच्चात्रयूपवचनः ताःव्रजस्यवारकस्यतमसोद्वारा द्वाराणि व्युच्छन्तीः शुचयोदीप्ताःपावकाः शोधिकाअव्रन् व्यवृण्वन् ॥ २ ॥

अथतृतीया—

उच्छन्तीरद्यचितयन्तभोजान्राधोदेयायोषसोमघोनीः ।
अचित्रेअन्तःपणयःससन्त्वबुध्यमानास्तमसोविमध्ये ॥ ३ ॥

उच्छन्तीः । अद्य । चितयन्त । भोजान् । राधःऽदेयाय ।
उषसः । मघोनीः । अचित्रे । अन्तरिति । पणयः । ससन्तु ।
अबुध्यमानाः । तमसः । विऽमध्ये ॥ ३ ॥

अद्यास्मिन्दिने उच्छन्तीस्तमोविवासयन्त्योमघोनीर्धनवत्यउषसोभोजान्भोजयितॄन्यजमानान्तेषांराधोदेयाय सोमादिधनदानाय चितयन्त प्रज्ञापयन्ति अचित्रे अचायनीये तमसोविमध्ये अत्यन्तगाढान्धकारेइत्यर्थः अन्तःतत्रपणयोवणिजइवादातारःअबुध्यमानाः ससन्तु स्वपन्तु ॥ ३ ॥

अथचतुर्थी—

कुवित्सदेवीःसनयोनवोवायामोबभूयादुषसोवोअद्य ।
येनानवग्वेअङ्गिरेदशग्वेसप्तास्येरेवतीरेवदूष ॥ ४ ॥

कुवित् । सः । देवीः । सनयः । नवः । वा । यामः । बभूयात् ।
उषसः । वः । अद्य । येन । नवऽग्वे । अङ्गिरे । दशऽग्वे ।
सप्तऽआस्ये । रेवतीः । रेवत् । ऊष ॥ ४ ॥

---

१ ऋ० सं० ३. १. ४.।

हेदेवीर्द्योतमानाउषसः वोयुष्मान्सनयः पुराणोनवोवायामोगमनसाधनः सरथः अद्या-स्मिंन्यागदिने कुविद्बहुवारंबभूयात् भवेद्वृच्छेदित्यर्थः येनरथेन हेरेवतीर्धनवत्योयूयंनवग्वेद-शग्वे सप्तास्ये सप्तच्छन्दोयुक्तमुखे अङ्गिरेअङ्गिरोगणे यद्वैतेत्रयोप्यङ्गिरसः तेषांगणेतथान्यत्र नवग्वोनुदशग्वोअङ्गिरस्तंमइति । रेवद्धनवद्यथाभवतितथाऊष विभातंकृतवत्यः वसेर्व्युच्छनक-र्मणोलिटोमध्यमबहुवचनस्येदंरूपम् ॥ ४ ॥

अथपञ्चमी—

**यूयंहिदेवीर्ऋतयुग्भिरश्वैःपरिप्रयाथभुवनानिसद्यः ।**
**प्रबोधयन्तीरुषसःससन्तंद्विपाच्चतुष्पाच्चरथायजीवम् ॥५॥१॥**

यूयम् । हि । देवीः । ऋतयुक्ऽभिः । अश्वैः । परिऽप्रयाथ ।
भुवनानि । सद्यः । प्रऽबोधयन्तीः । उषसः । ससन्तम् । द्विऽपात् ।
चतुःऽपात् । चरथाय । जीवम् ॥ ५ ॥ १ ॥

हेदेवीर्द्योतमानाउषसोयूयंहिखलु । ऋतयुग्भिर्यज्ञगामिभिरश्वैःभुवनानिसद्यःपरिप्रयाथ परितःप्रकृष्टंगच्छथ किंकुर्वत्यः ससन्तंस्वपन्तं द्विपाच्चतुष्पान्मनुष्यगवादिलक्षणंजीवंचरथायचरणाय गमनादिव्यवहारायप्रबोधयन्तीः प्रबोधयन्त्यःसत्यः परिप्रयाथ ॥ ५ ॥

॥ इतितृतीयस्याष्टमेप्रथमोवर्गः ॥ १ ॥

अथषष्ठी—

**क्वस्विदासांकतमापुराणीययाविधानाविदधुर्ऋभूणाम् ।**
**शुभंयच्छुभ्राउषसश्चरन्तिनविज्ञायन्तेसदृशीरजुर्याः ॥ ६ ॥**

क्व । स्वित् । आसाम् । कतमा । पुराणी । यया । विऽधाना ।
विऽदधुः । ऋभूणाम् । शुभम् । यत् । शुभ्राः । उषसः । चरन्ति ।
न । वि । ज्ञायन्ते । सऽदृशीः । अजुर्याः ॥ ६ ॥

---

१ ऋ० सं० ८. २. . २।

आसामुषसांमध्ये कस्विदभूद्यकतमापुराणीपुरातनी यया ऋभूणांसंबन्धीनिविधाना चमसादिनिर्माणानि वि धुरकुर्वन्नभवः यत् याश्चोषसः शुभ्रादीप्ताः शुभंचरन्ति शोभांदीप्तिं कुर्वन्ति ताअजुर्याअशीर्णानित्यनूतनानविज्ञायन्ते यतःसदृशीःसदृश्यः सर्वेष्वपिदिवसेषुएक-रूपाः अतोयतन्यएताःएताःपुराण्यइतिनज्ञायन्ते उषसांसादृश्यं सदृशीरद्यसदृशीरिदुश्वइत्य-त्रप्रतिपादितम् ॥ ६ ॥

अथसप्तमी—

ताघाताभद्राउषसंःपुरासुरभिष्टिद्युम्नाऋतजातसत्याः ।
यास्वीजानःशंशमानउक्थैःस्तुवञ्छंसन्द्रविणंसद्यआपं ॥७॥

ताः । घ । ताः । भद्राः । उषसः । पुरा । आसुः । अभिष्टिऽद्युम्नाः ।
ऋतजातऽसत्याः । यासु । ईजानः । शशमानः । उक्थैः । स्तुवन् ।
शंसन् । द्रविणम् । सद्यः । आप ॥ ७ ॥

ताघ चेतिप्रसिद्धौ ताःखलु उपकारिण्यः ताभद्राः कल्याण्यः स्तुत्यावा उषसःपुरापूर्व-मासुरभवन् अभिष्टिद्युम्नाः अभिगमनमात्रेणद्युम्नंधनंयासांताः ऋतजातसत्याः ऋतार्थयज्ञार्थं जाताश्चताः सत्याः सत्यफलाश्चतादृश्यः यासूषःसु ईजानोयागंकुर्वाणः उक्थैः शस्त्रैः शश-मानः शंसमानः स्तुवन्सामभिःस्तोत्रंनिष्पादयन् शंसन्शस्त्राणिकुर्वन् द्रविणंधनं सद्यःआप प्राप्नोति ताभद्राइतिसंबन्धः ॥ ७ ॥

अथाष्टमी—

ताआचरन्तिसमनापुरस्तात्समानतःसमनापप्रथानाः ।
ऋतस्यदेवीःसदसोबुधानागवांनसर्गाउषसोजरन्ते ॥ ८ ॥

ताः । आ । । चरन्ति । समना । पुरस्तात् । समानतः । समना ।
पप्रथामाः । ऋतस्य । देवीः । सदसः । बुधानाः । गवाम् ।
न । सर्गाः । उषसः । जरन्ते ॥ ८ ॥

१ ऋ० सं० २. १. ५. ।

ताउषसः आसर्वतश्चरन्ति समनासमेताःपुरस्तात्पूर्वस्यांदिशिसमानतःसमानाद्देशादेकरूपादन्तरिक्षात्समनासर्वतःपप्रथानाः प्रथमानाऋतस्ययज्ञस्य सदसः सदः तत्रत्यमृत्विग्यविरादिकमित्यर्थः बुधानाबोधयन्त्यः अन्तर्भावितण्यर्थोयम् एवंमहानुभावाउषसः जरन्तेस्तूयन्ते गवांसर्गान उदकानांसृष्टयइव गवांसर्गानिरश्मयइतिहिश्रुतिः । तायथासर्वत्रप्रसङ्गादुपकारकत्वाच्चस्तूयन्तेतद्वत् ॥ ८ ॥

अथनवमी–

ताइन्न्वे३वसमनासमानीरमीतवर्णाउषसश्चरन्ति ।
गूहन्तीरभ्वमसितंरुशद्भिःशुक्रास्तनूभिःशुचयोरुचानाः ॥९॥

ताः । इत् । नु । एव । समना । समानीः । अमीतऽवर्णाः ।
उषसः । चरन्ति । गूहन्तीः । अभ्वम् । असितम् । रुशत्ऽभिः ।
शुक्राः । तनूभिः । शुचयः । रुचानाः ॥ ९ ॥

ताएवोषसः इदितिपूरणः नु अद्य समना समानाः एकधेत्यर्थः समानीरेकरूपाः अमीतवर्णाः अहिंसितवर्णाअपरिमितवर्णावाउषसश्चरन्तिसर्वतः किंकुर्वत्यः अभ्वं महन्नामैतत् अतिमहदसितंकृष्णरूपंगूहन्तीः गोपयन्त्यः रुशद्भिः रोचमानैः तनूभिः स्वशरीरैः शुक्रादीप्ताः शुचयःशुद्धाः रुचानाः रोचमानाः रोचयन्त्योवा ॥ ९ ॥

अथदशमी–

रयिंदिवोदुहितरोविभातीःप्रजावन्तंयच्छतास्मासुदेवीः ।
स्योनादावःप्रतिबुध्यमानाः सुवीर्यस्यपतयः स्याम ॥ १० ॥

रयिम् । दिवः । दुहितरः । विऽभातीः । प्रजाऽवन्तम् । यच्छत ।
अस्मासु । देवीः । स्योनात् । आ । वः । प्रतिऽबुध्यमानाः ।
सुऽवीर्यस्य । पतयः । स्याम ॥ १० ॥

---

१ ऋ० सं० ३. ८. ३. ।

हेदिवोदुहितरः द्योतमानस्यादित्यस्यदुहितृस्थानीयाः विभातीः विभात्यः विशेषेण भानंकुर्वत्यः अस्मासु प्रज्ञावन्तंरयिंपुत्राद्युपेतंधनंयच्छत दत्त हेदेवीर्देव्यः स्योनात्सुखात् निमित्तभूताद्वोयुष्मान्प्रतिबुध्यमानाः प्रतिबोधयन्तोवयं सुवीर्यस्यपतयःस्याम पुत्रादिसहितस्यधनस्यपालकाभवेम आपूरणः ॥ १० ॥

अथैकादशी–

तद्वोदिवोदुहितरोविभातीरुपंब्रुवउषसोयज्ञकेतुः ।
वयंस्यामयशसोजनेषुतद्द्यौश्चधत्तांपृथिवीचदेवी ॥ ११ ॥ २ ॥

तत् । वः । दिवः । दुहितरः । विऽभातीः । उप । ब्रुवे । उषसः । यज्ञऽकेतुः । वयम् । स्याम । यशसः । जनेषु । तत् । द्यौः । च । धत्ताम् । पृथिवी । च । देवी ॥ ११ ॥ २ ॥

हेदिवोदुहितरः हेउषसः विभातीः विविधभानाः वोयुष्मान् तदुत्तरार्धप्रथमपादेन वक्ष्यमाणंफलं यज्ञकेतुः यज्ञएवकेतुःप्रज्ञापकोयस्यतादृशोहमुपब्रुवे उपेत्यब्रवीमि अथ बहुतदुच्यते वयं स्तुवन्तोजनेषु अस्मत्समानेषुमध्येयशसःकीर्तेरन्नस्यवास्वामिनःस्याम तद्यशः द्यौः पृथिवीचदेवी धत्तां धारयताम् तद्वोदिवइतिव्युष्टायांजपेत् ॥ ११ ॥

॥ इतितृतीयस्याष्टमेद्वितीयोवर्गः ॥ २ ॥

प्रतिष्येतिसप्तर्चंसप्तमंसूक्तं गायत्रमुषोदेवताकं प्रतिष्यासप्तगायत्रमित्यनुक्रमणिका प्रातरनुवाकेउषस्येक्रतौगायत्रेछन्दस्याश्विनशस्त्रेचेदंशस्यम् अथोषस्यःप्रतिष्यासूनरीतिहिसूत्रितम् ।

तत्रप्रथमा–

प्रतिष्यासूनरीजनीव्युच्छन्तीपरिस्वसुः । दिवोअदर्शिदुहिता ॥ १ ॥

प्रति । स्या । सूनरी । जनी । विऽउच्छन्ती । परि । स्वसुः । दिवः । अदर्शि । दुहिता ॥ १ ॥

स्या सा प्रस्तूयमाना सूनरी सुष्ठुप्राणिनांनेत्री जनी जनयित्री फलानां स्वसुः स्वसृस्थानीयायारात्रेःपरि उपरिभागे रात्रिपर्यवसानकाले व्युच्छन्ती • तमोविवासयन्ती स्वसास्वंक्षे ज्यायस्याइत्युक्तं दिवोद्योतमानस्यादित्यस्यदुहितोषाः प्रत्यदर्शि प्रतिदृश्यतेसर्वैः ॥ १ ॥

अथद्वितीया–

अश्वे॑वचि॒त्रारु॑षीमा॒तागवा॑मृ॒ताव॑री । सखा॑भूद॒श्विनो॑रु॒षाः ॥ २ ॥

अश्वा॑ऽइव । चि॒त्रा । अरु॑षी । मा॒ता । गवा॑म् । ऋ॒तऽव॑री । सखा॑ । अ॒भू॒त् । अ॒श्विनोः॑ । उ॒षाः ॥ २ ॥

अश्वेवचित्रा चायनीया अरुषी आरोचमाना गवांरश्मीनांमाता निर्मात्री ऋतावरीयज्ञवत्युषाः अश्विनोः सखा समानख्याना सहस्तूयमानाभूत् भवति अश्विनोरुषसा सहस्तूयमानत्वात्सखित्वंपरस्परम् ॥ २ ॥

अथतृतीया–

उ॒तसखा॑स्य॒श्विनो॑रु॒तमा॒तागवा॑मसि । उ॒तोषो॒वस्व॑ईशिषे ॥ ३ ॥

उ॒त । सखा॑ । अ॒सि॒ । अ॒श्विनोः॑ । उ॒त । मा॒ता । गवा॑म् । अ॒सि॒ । उ॒त । उ॒षः॒ । वस्वः॑ । ई॒शि॒षे॒ ॥ ३ ॥

उतापिचाश्विनोः सखा सख्यासि उतापिच गवांरश्मीनांमाताअसि उतापिच हेउषः वस्वोधनस्येशिषे ईश्वरीभवसि ॥ ३ ॥

अथचतुर्थी–

या॒व॒यद्द्वे॑षसन्त्वाचिकि॒त्वित्सू॑नृतावरि । प्रति॒स्तोमै॑रभुत्स्महि ॥४॥

य॒व॒यत्ऽद्वे॑षसम् । त्वा॒ । चि॒कि॒त्वि॒त् । सू॒नृ॒ता॒ऽव॒रि॒ । प्रति॑ । स्तोमैः॑ । अ॒भु॒त्स्म॒हि॒ ॥ ४ ॥

---

१ ऋ० सं० २. १. ८. ।

यवयद्द्वेषसं यवयन्तोवियुज्यमानाद्वेषांसिद्वेष्टारोयस्यास्तादृशीपृथक्क्रियन्ते द्वेषांस्यन-येतिवारात्रौहननायोद्युक्ताद्वेषिणउषःकालेहिपलायन्ते तादृशीचिकित्वित् ज्ञापयन्तीं त्वा त्वां सूनृतावरि सूनृतेतिवाङ्नाम तद्वतिदेवि स्तोमैःस्तुतिभिःप्रत्यभुत्स्महि प्रतिबोधयामः स्तुमइत्यर्थः ॥ ४ ॥

अथपञ्चमी–

प्रतिभद्राअदृक्षतगवांसर्गानरश्मयः।आेषाअप्राउरुज्रयः ॥५॥

प्रति। भद्राः। अदृक्षत। गवाम्। सर्गाः। न। रश्मयः। आ। उषाः। अप्राः। उरु। ज्रयः ॥ ५ ॥

भद्राः स्तुत्याःरश्मयःप्रत्यदृश्यन्त प्रतिदृश्यन्ते गवामुदकानांसर्गान वर्षधाराइव इयमुषाउरुज्रयोमहत्तेजः आप्राः आपूरयत् ॥ ५ ॥

अथषष्ठी–

आपप्रुषीविभावरिव्यावर्ज्योतिषातमः।उषोअनुस्वधामव ॥ ६ ॥

आऽपप्रुषी। विभाऽवरि। वि। आवः। ज्योतिषा। तमः। उषः। अनु। स्वधाम्। अव ॥ ६ ॥

हेविभावरि विभावत्युषः त्वमापप्रुषी आपूरयन्ती तेजसाजगज्ज्योतिषा तेजसा तमोन्धकारंव्यावः व्यावृणोः किंच स्वधां हविर्लक्षणमन्नम् अनुलक्षीकृत्याव रक्ष ॥ ६ ॥

आद्यांतनोषीत्येषादेवानांहविष्पूषसोनुवाक्या । सूत्रितंच–आद्यांतनोषिरश्मिभिरावहन्तीपोष्यावार्याणीति ।

सैषासप्तमी–

आद्यांतनोषिरश्मिभिरान्तरिक्षमुरुप्रियम्।
उषःशुक्रेणशोचिषा ॥ ७ ॥ ३ ॥

आ। द्याम्। तनोषि। रश्मिऽभिः। आ। अन्तरिक्षम्। उरु। प्रियम्। उषः। शुक्रेण। शोचिषा ॥ ७ ॥ ३ ॥

हेउषः रश्मिभिर्द्यांदिवमातनोषि उरु विस्तीर्णं प्रियमन्तरिक्षं रश्मिभिरातनोषि शुक्रेणदीप्तेनशोचिषाप्रकाशेनयुक्तासत्येवंकरोषि ॥ ७ ॥

॥ इतितृतीयस्याष्टमेतृतीयोवर्गः ॥ ३ ॥

तद्देवस्येतिसप्तर्चमष्टमंसूक्तं वामदेवस्यार्षं जागतं सावित्रं तथाचानुक्रम्यते तद्देवस्यसा-वित्रंतुजागतमिति । आभिप्लविकेतृतीयेहनिवैश्वदेवशस्त्रेसावित्रनिविद्धानं तथाचसूत्रितं—त-द्देवस्यघृतेनद्यावापृथिवीइतितिस्रइति ।

तत्रप्रथमा—

तद्देवस्यसवितुर्वार्यंमहद्वृणीमहेअसुरस्यप्रचेतसः ।
छर्दिर्येनदाशुषेयच्छतित्मनातन्नोमहाँउदयान्देवोअक्तुभिः ॥१॥

तत् । देवस्य । सवितुः । वार्यम् । महत् । वृणीमहे । असुरस्य । प्रऽचेतसः । छर्दिः । येन । दाशुषे । यच्छति । त्मना । तत् । नः । महान् । उत् । अयान् । देवः । अक्तुऽभिः ॥ १ ॥

सवितुः प्रेरकस्यदेवस्यवार्यंवरणीयंमहत्पूज्यंतद्धनंवृणीमहे प्रार्थयामः असुरस्य असु-र्बलं तद्वतःप्रचेतसःप्रकृष्टमतेः देवस्येतिसंबन्धः येनधनेनयुक्तःसन् छर्दिः गृहनामैतत् गृहोपलक्षितंधनजातं दाशुषे हविर्दत्तवते यजमानाय त्मनाआत्मनैवयच्छति तच्छर्दिः महान्देवः सविता अक्तुभीरात्रिभिः एतदह्नामप्युपलक्षणं सर्वैर्दिवसैः सर्वेषुदिवसेषुनोस्माक-मुदयान् उद्यच्छतु करोत्वित्यर्थः यद्वा छर्दिरितितेजोनाम तत्तेजःउद्यच्छत्विति ॥ १ ॥

अथद्वितीया—

दिवोधर्ताभुवनस्यप्रजापतिःपिशङ्गंद्रापिंप्रतिमुञ्चतेकविः ।
विचक्षणःप्रथयन्नापृणन्नुर्वजीजनत्सवितासुम्नमुक्थ्यम् ॥ २ ॥

दिवः । धर्ता । भुवनस्य । प्रजाऽपतिः । पिशङ्गम् । द्रापिम् । प्रति । मुञ्चते । कविः । विऽचक्षणः । प्रथयन् । आऽपृणन् । उरु । अजीजनत् । सविता । सुम्नम् । उक्थ्यम् ॥ २ ॥

दिवोद्युलोकस्यधर्ता धारकः नकेवलंदिवएव अपितु भुवनस्यकृत्स्नस्यापिलोकस्य धर्ता प्रजापतिः प्रजानांप्रकाशवृष्ट्यादिनापालयिता कविः प्राज्ञोदेवः पिशङ्गं द्रापिं हिर-ण्मयंकवचं प्रतिमुञ्चते आच्छादयति प्रत्युदयं विचक्षणः विविधंद्रष्टा सएवदेवःप्रथयन् प्रख्यापयन्तेजःआपृणन्नापूरयन्परितः उरु प्रभूतंसुम्नंसुखमुक्थ्यंस्तुत्यमजीजनदुत्पादयति ॥ २ ॥

अथतृतीया—

आप्राऽरजांसिदिव्यानिपार्थिवाश्लोकंदेवःकृणुतेस्वायधर्मणे ।
प्रबाहूअस्राक्सविितासवीमनिनिवेशयन्प्रसुवन्नक्तुभिर्जगत्॥३॥

आ । अप्राः । रजांसि । दिव्यानि । पार्थिवा । श्लोकम् । देवः ।
कृणुते । स्वाय । धर्मणे । प्र । बाहू इति । अस्राक् । सविता ।
सवीमनि । निऽवेशयन् । प्रऽसुवन् । अक्तुऽभिः । जगत् ॥ ३ ॥

अयंदेवः सविता दिव्यानि द्युसंबन्धीनिपार्थिवा पृथिवीसंबन्धीनिरजांसि लोकान् तिस्रःखलु द्यावःपृथिव्यश्च तिस्रोभूमीर्धारयंस्त्रीरुँतद्यूनितिहिश्रुतम्¹ । आप्राः आपूरयति स्वाभिर्भाभिर्देवः स्वायधर्मणेस्वकीयायधारणाय श्लोकं प्रशस्तिंकृणुते करोति सविता सवीमनिप्रसवेअनुज्ञायांनिमित्तायां बाहूस्वीयौप्रास्राक्प्रसृजति प्रसारयतीत्यर्थः किंकुर्वन्नक्तुभिःकान्तिभिर्जगन्निवेशयन्स्वस्वकार्येस्थापयन्प्रसुवन्प्रेरयन् अथवा अक्तुभिरितिरात्रिनाम तदुपलक्षितैःसर्वेष्वपिदिनेष्वेवंकरोतीत्यर्थः ॥ ३ ॥

अथचतुर्थी—

अदाभ्योभुवनानिप्रचाकशद्व्रतानिदेवःसविताभिरक्षते ।
प्रास्राग्बाहूभुवनस्यप्रजाभ्योधृतव्रतोमहोअज्मस्यराजति॥४॥

अदाभ्यः । भुवनानि । प्रऽचाकशत् । व्रतानि । देवः । सविता ।
अभि । रक्षते । प्र । अस्राक् । बाहू इति । भुवनस्य । प्रऽजाभ्यः ।
धृतऽव्रतः । महः । अज्मस्य । राजति ॥ ४ ॥

सवितादेवः अदाभ्योन्यैरहिंसितःसन्भुवनानि प्रचाकशद्दीपयन् व्रतानि कर्माणि प्राणिनामभिरक्षते भुवनस्यलोकस्यप्रजाभ्यस्तत्रत्याभ्योबाहूस्वीयौप्रास्राक्प्रसारयति स्वस्वकर्मणेनुजानातीत्यर्थः सर्वव्यापाराणांसूर्याधीनत्वात् सवितावैप्रसवानामीशेइतिहिश्रुतिः² । धृतव्रतोधृतकर्मासतथाकुर्वन्महोमहतः अज्मस्य जगतोराजति ईश्वरोभवति ॥ ४ ॥

¹ ऋ० सं० २. ७. ७. । ² ऐ० ब्रा० १. ३०. ।

अथपञ्चमी–

त्रिरन्तरिक्षंसविताम॑हित्वनात्रीरजांसिपरिभूस्त्रीणिरोच॒ना ।
ति॒स्रोदिवः॑पृथि॒वीस्ति॒स्रइ॑न्वति॒त्रिभि॑र्व्र॒तैर॒भिनो॑रक्षति॒त्मना॑ ॥५॥

त्रिः । अ॒न्तरि॑क्षम् । स॒वि॒ता । म॒हि॒ऽत्व॒ना । त्री । रजांसि । प॒रि॒ऽभूः । त्रीणि । रो॒च॒ना । ति॒स्रः । दिवः॑ । पृ॒थि॒वीः । ति॒स्रः । इ॒न्व॒ति॒ । त्रि॒ऽभिः । व्र॒तैः । अ॒भि । नः॒ । र॒क्ष॒ति॒ । त्मना॑ ॥ ५ ॥

अयंसविता त्रिः त्रिभेदमन्तरिक्षम् अन्तराक्षान्तंभवति जगदित्यन्तरिक्षं परिभूः परिभवितासन् महित्वना महत्त्वेनइन्वतिव्याप्नोति वायुविद्युद्वरुणाख्यास्त्रयोलोकाअन्तरिक्षभेदाः सवायुलोकंसवरुणलोकमित्यादिश्रुतेः । त्रीरजांसि रञ्जनात्मकानि त्रीणिक्षित्यन्तरिक्षद्युलक्षणान्त्रीन्लोकानिन्वति पूर्वमन्तरिक्षस्यैवावान्तरभेदउक्तः इहतु सामान्याकारेणेतिनपुनरुक्तिः त्रीणिरोचनारोचनानिरोचमानानग्निवाय्वादित्यानुक्तस्थानत्रयस्वामित्वेनेन्वति पूर्वमन्तरिक्षस्यावान्तरभेदउक्तः अथ द्युपृथिव्योरवान्तरभेदउच्यते–तिस्रोदिवः इन्द्रप्रजापतिसत्याख्यांस्त्रीन्लोकानिन्वति तथा तिस्रःपृथिवीरिन्वति क्षित्यवान्तरभेदान्लोकानिन्वति एवंसर्वत्रव्याप्तोदेवः त्रिभिर्व्रतैःकर्मभिरुष्णवर्षहिमाख्यैर्नोस्मान् त्मना आत्मनैव स्वीयानुग्रहबुद्ध्यैवाभिरक्षति अभिरक्षतु परिपालयतु ॥ ५ ॥

अथषष्ठी–

बृहत्सु॑म्नःप्रसवी॒तानि॒वेश॑नो॒जग॑तःस्था॒तुरु॒भय॑स्य॒योव॒शी ।
सनो॑दे॒वःस॑वि॒ताशर्म॑यच्छत्व॒स्मेक्षया॑यत्रि॒वरू॑थ॒मंह॑सः ॥ ६ ॥

बृ॒हत्ऽसु॑म्नः । प्र॒ऽस॒वि॒ता । नि॒ऽवेश॑नः । जग॑तः । स्था॒तुः । उ॒भय॑स्य । यः । व॒शी । सः । नः॒ । दे॒वः । स॒वि॒ता । शर्म॑ । य॒च्छ॒तु॒ । अ॒स्मे इति॑ । क्षया॑य । त्रि॒ऽवरू॑थम् । अंह॑सः ॥ ६ ॥

योबृहत्सुम्नः प्रभूतधनः प्रभूतसुखोवा प्रसविताप्रकर्षेणानुज्ञाताकर्मणां निवेशनः सर्वैर्गन्तव्यः जगतोजङ्गमस्य स्थातुःस्थावरस्योभयस्य योवशी समहान्सवितादेवोस्मभ्यंशर्मसुखंयच्छतुददातु कीदृशं शर्म त्रिवरूथं त्रीणिवरूथानिगृहाणिस्थानानि क्षित्यादीनियस्यतत्तादृशमस्मे अस्माकमंहसःपापस्यक्षयायभवत्वितिशेषः ॥ ६ ॥

राजक्रये आगन्देवइत्येषानुवचनीया सूत्रितंच—आगन्देवऋतुभिर्वर्धतुक्षयमित्यर्धर्चमारमेदिति ।

सैषासप्तमी—

आगन्देवऋतुभिर्वर्धतुक्षयंदधातुनःसवितासुप्रजामिषम् ।
सनःक्षपाभिरहभिश्चजिन्वतुप्रजावन्तंरयिमस्मेसमिन्वतु ॥७॥४॥

आ । अगन् । देवः । ऋतुऽभिः । वर्धतु । क्षयम् । दधातु । नः ।
सविता । सुऽप्रजाम् । इषम् । सः । नः । क्षपाभिः । अहऽभिः । च ।
जिन्वतु । प्रजाऽवन्तम् । रयिम् । अस्मे इति । सम् । इन्वतु ॥७॥४॥

देवः सविता ऋतुभिःसह आगन्नागच्छतु गमेर्लेङिरूपं किंच क्षयं गृहं वर्धतु वर्धयतु नोस्माकंसुप्रजांशोभनपुत्राद्युपेतामिषमन्नंदधातु ददातु सएवनोस्मान्क्षपाभीरात्रिभिः अहभिश्च सर्वेषुदिनेष्वित्यर्थः जिन्वतु प्रीणयतु धनान्यस्मेअस्मासु प्रजावन्तंरयिंसमिन्वतु व्याप्नोतु प्रापयत्वित्यर्थः ॥ ७ ॥

॥ इतितृतीयस्याष्टमेचतुर्थोवर्गः ॥ ४ ॥

अभूद्देवइतिषळृचंनवमंसूक्तं वामदेवस्यार्षसावित्रम् अन्त्यात्रिष्टुप् शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः तथाचानुक्रमणिका—अभूद्देवःषट्त्रिष्टुबन्तामिति । अग्निष्टोमेवैश्वदेवशस्त्रेसावित्रनिविद्धानमिदं तथाचसूत्रम् अभूद्देवएकयाचदशभिश्चस्वभूतइति । आद्यासावित्रग्रहस्यानुवाक्या तथाचसूत्रं—सावित्रेणग्रहेणचरन्त्यभूद्देवःसवितावन्द्योनुनइति ।

सैषाप्रथमा—

अभूद्देवःसवितावन्द्योनुनइदानीमह्नउपवाच्योनृभिः ।
वियोरत्नाभजतिमानवेभ्यःश्रेष्ठंनोअत्रद्रविणंयथादधत् ॥ १ ॥

अभूत् । देवः । सविता । वन्द्यः । नु । नः । इदानीम् । अह्नः ।
उपऽवाच्यः । नृऽभिः । वि । यः । रत्ना । भजति । मानवेभ्यः ।
श्रेष्ठम् । नः । अत्र । द्रविणम् । यथा । दधत् ॥ १ ॥

ससवितादेवः अभूत्प्रादुरासीत् अतोनुक्षिप्रमेवनोस्माकं वन्द्योवन्दनीयोभवति इदानीं यागकाले अह्नःतृतीयसवनेनृभिरस्मदीयैर्होतृभिरुपवाच्यःस्तुत्योभवति , योदेवोमानेवभ्योमनोरपत्येभ्योयजमानेभ्यःतेषामर्थायरत्नारमणीयानिधनानिविभजति संदेवः श्रेष्ठंप्रशस्यंद्रविणंधनंगवादिलक्षणंधनंनोस्मभ्यमत्रास्मिन्कर्माणि यथा दधद्ध्यादित्यर्थः तथा वन्द्यःउपवाच्यश्चाभूदिति ॥ १ ॥

अथद्वितीया–

देवेभ्योहिप्रथमंयज्ञियेभ्योमृतत्वंसुवसिभागमुत्तमम् ।
आदिद्दामानंसवितर्व्यूर्णुषेनूचीनाजीवितामानुषेभ्यः ॥ २ ॥

देवेभ्यः । हि । प्रथमम् । यज्ञियेभ्यः । अमृतऽत्वम् । सुवसि । भागम् । उत्ऽतमम् । आत् । इत् । दामानम् । सवितः । वि । ऊर्णुषे । अनूचीना । जीविता । मानुषेभ्यः ॥ २ ॥

प्रथमंदेवेभ्योहि हिशब्दःप्रसिद्धौ देवेभ्योयज्ञियेभ्योयज्ञार्हेभ्योमृतत्वंतत्साधनमुत्तममुत्कृष्टतमंभागं सोमाज्यादिलक्षणं सुवसि अनुजानासि आदिदनन्तरमेव दामानं हविषांदातारं हेसवितःव्यूर्णुषे प्रकाशयसि मानुषेभ्योयजमानेभ्योजीवितानि अनूचीना अनुक्रमयुक्तानि पितृपुत्रपौत्राइत्यनुक्रमः ईदृशानिजीवितानिपश्चाद्व्यूर्णुषे ॥ २ ॥

अथतृतीया–

अचित्तीयच्चकृमादैव्येजनेदीनैर्दक्षैःप्रभूतीपूरुषत्वता ।
देवेषुचसवितर्मानुषेषुचत्वंनोअत्रसुवतादनागसः ॥ ३ ॥

अचित्ती । यत् । चकृम । दैव्ये । जने । दीनैः । दक्षैः । प्रऽभूती । पुरुषत्वता । देवेषु । च । सवितः । मानुषेषु । च । त्वम् । नः । अत्र । सुवतात् । अनागसः ॥ ३ ॥

हेसवितः वयमचित्ती अप्रज्ञयादैव्येजनेदेवेत्वयिदीनैर्दुर्बलैःपुत्रादिभिर्ऋत्विग्भिर्वा तथा दक्षैः प्रवृद्धैर्वातैः प्रभूती प्रभूत्या ऐश्वर्यमदेनेतियावत् पुरुषत्वता पुरुषवत्तयाच यदागश्चकृम नकेवलंत्वय्येवकृतम् अपितुदेवेष्वन्येषुमानुषेषुवाज्ञानादिभिर्यच्चकृम नःकृतवतोस्मान्त्वमत्रास्मिन्कर्मणिअनागसःअपापात्सुवतात् अनुजानीहि ॥ ३ ॥

देवसुवांहविष्षुसवितुः सत्यप्रसवस्यनप्रमियइतियाज्या तथाचसूत्रं—नप्रमियेसवितुर्दैव्य-स्यतद्बृहस्पतेप्रथमामिति

सैषाचतुर्थी—

नप्रमियेसवितुर्दैव्यस्यतद्यथाविश्वंभुवनंधारयिष्यति ।
यत्पृथिव्यावरिमन्नास्वङ्गुरिर्वर्ष्मन्दिवःसुवतिसत्यमस्यतत् ॥४॥

न । प्रऽमिये । सवितुः । दैव्यस्य । तत् । यथा । विश्वम् ।
भुवनम् । धारयिष्यति । यत् । पृथिव्याः । वरिमन् । आ ।
सुऽअङ्गुरिः । वर्ष्मन् । दिवः । सुवति । सत्यम् । अस्य । तत् ॥४॥

सवितुर्दैव्यस्य देवस्य तत्कर्म नप्रमिये नप्रमीयेत नहिंस्येत हिंसार्हंनभवतीत्यर्थः कृत्यार्थे केन्प्रत्ययः यद्वा दैव्यस्येत्यधिकरणेषष्ठी साचकर्मार्था दैव्यंकर्मेत्यर्थः कथमहिंस्यमित्यतआह-यथाविश्वंभुवनंधारयिष्यतिधारयति विश्वधारणरूपंयत्कर्मास्तितन्नप्रमिये तथास्वङ्गुरिःशोभ-नाङ्गुल्युपलक्षितहस्तोयद्यः पृथिव्याः वरिमन्नाकारश्चार्थे भूम्याउरुत्वेचसुवतिप्रेरयति तथा दिवोद्युलोकस्यवर्ष्मन्नुरुत्वेचसुवति अस्यदेवस्ययदुक्तंकर्मसत्यमबाध्यमिति ॥ ४ ॥

अथपञ्चमी—

इन्द्रज्येष्ठान्बृहद्भ्यःपर्वतेभ्यःक्षयाँएभ्यःसुवसिपस्त्यावतः ।
यथायथापतयन्तोवियेमिरएवैवतस्थुःसवितःसवायते ॥ ५ ॥

इन्द्रऽज्येष्ठान् । बृहत्ऽभ्यः । पर्वतेभ्यः । क्षयान् । एभ्यः ।
सुवसि । पस्त्यऽवतः । यथाऽयथा । पतयन्तः । विऽयेमिरे ।
एव । एव । तस्थुः । सवितरिति । सवाय । ते ॥ ५ ॥

हेसवितः इन्द्रज्येष्ठान् इन्द्रःपरमैश्वर्ययुक्तः त्वमेवेन्द्रोवाज्येष्ठोज्यायान् पूज्योयेषांतेता-दृशाः तान्बृहद्भ्योमहद्भ्यः पर्वतेभ्योप्यधिकान्सुवसिप्रेरयासि किंचैभ्योयजमानेभ्यः पस्त्याव-तोगृहवतः क्षयान्निवासान्ग्रामनगरादीन्सुवसि प्रेरयसि यथायथा पतयन्तोगच्छन्तस्त्वां वियेमिरे विनियम्यन्ते त्वया तेतवसवायानुज्ञायै एवैव एवमेव नियमनमनतिक्रम्यतस्थुस्ति-ष्ठन्ति ॥ ५ ॥

अथषष्ठी—

येतेत्रिरहंन्त्सवितःसवासोदिवेदिवेसौभंगमासुवन्ति ।
इन्द्रोद्यावापृथिवीसिन्धुरद्भिरादित्यैर्नोअदितिःशर्मयंसत् ॥ ६ ॥५॥

ये । ते । त्रिः । अहंन् । सवितरिति । सवासः । दिवेऽदिवे ।
सौभंगम् । आऽसुवन्ति । इन्द्रः । द्यावापृथिवी इति । सिन्धुः ।
अत्ऽभिः । आदित्यैः । नः । अदितिः । शर्म । यंसत् ॥ ६ ॥ ५ ॥

येयजमानाः हेसवितः तेत्वदर्थं सवासः सवाः सोमाः द्वितीयार्थेप्रथमा सोमात् यद्वा सवासः सवनानि प्रातरादीनि प्रतित्रिरहन् अभिषुण्वन्ति नकेवलमेकस्मिन्नेवाहनि सवनत्रयेषु अपितु दिवेदिवे प्रतिदिनं सौभगं सौभाग्यजनकमासुवन्ति अभिषुण्वन्ति तेभ्योनोस्मभ्यमिन्द्रः शर्मयंसत् यच्छतु द्यावापृथिव्यौच अद्भिर्विशिष्टासिन्धुःसिन्ध्वभिमानिदेवताच आदित्यैःसहिता-दितिश्चशर्मयंसत् सावित्रेसूक्ते इन्द्रादीनांनिपातभाक्त्वात्तेषांप्रार्थनानाविरुध्यते ॥ ६ ॥

॥ इतितृतीयस्याष्टमेपञ्चमोवर्गः ॥ ५ ॥

कोवस्त्रातेतिदशर्चंदशमंसूक्तं वामदेवस्यार्षं विश्वेदेवदेवताकम् अष्टम्याद्यास्तिस्रोगायत्र्यः शिष्टाअनादेशपरिभाषयात्रिष्टुभः तथाचानुक्रम्यते—कोवोदशवैश्वदेवंत्रिगायत्र्यन्तंत्विति । विनियोगोलैङ्गिकः ।

तत्रप्रथमा—

कोवंस्त्रातावसवःकोवरूताद्यावाभूमीअदितेत्रासीथांनः ।
सहीयसोवरुणमित्रमर्तात्कोवोध्वरेवरिवोधातिदेवाः ॥ १ ॥

कः । वः । त्राता । वसवः । कः । वरूता । द्यावाभूमी इति ।
अदिते । त्रासीथाम् । नः । सहीयसः । वरुण । मित्र । मर्तात् ।
कः । वः । अध्वरे । वरिवः । धाति । देवाः ॥ १ ॥

हेवसवः सर्वस्यवासयितारोदेवाः वोयुष्माकंकस्त्राताऽस्ति यतोयूयंवसवः अतइत्यभिप्रायः कश्चवरूता संभक्तास्ति यद्वावोयुष्माकंमध्येकस्त्रातारक्षकोदेवः कश्चवरूतावारयितादुःखानांक-

रणीयोवाभवति हेद्यावाभूमी नोस्मान्त्रासीथां रक्षतं हेअदिते अखण्डनीये एतदपिद्यावापृथिव्योर्विशेषणं संख्याव्यत्ययः यदीदंपृथग्देवतामन्त्रणंस्यात्तर्हिनिघातोनस्यात् आमन्त्रितंपूर्वमविद्यमानवदितिपूर्वस्याविद्यमानवत्त्वेनास्यैवपादादित्वात् अदितेमित्रवरुणोतमृळ आदित्यारुद्रावसवःसुदानवश्चेतिवत् । तस्यैवविशेषणत्वेनामन्त्रितेसमानाधिकरणेइत्याविद्यमानवत्त्वप्रतिषेधादग्नेपावकरोचिषेतिवदस्यनिघातःसिध्यति तस्मात् द्यावाभूमी इत्येतस्यविशेषणं हेवरुण हेमित्र युवांसहीयसोमर्तात् अभिभवितुर्मनुष्यात् नःत्रासीथां हेदेवावोयुष्माकमध्वरेयागेकोवरिवोधनं धाति ददाति यद्वा वोयुष्माकंमध्येकोवरिवोधाति धारयति तं रक्षतम् ॥ १ ॥

अथद्वितीया—

प्रयेधामानिपूर्व्याण्यर्चान्वियदुच्छान्वियोतारोअमूराः ।
विधातारोवितेदधुरजस्राऋतधीतयोरुरुचन्तदस्माः ॥ २ ॥

प्र । ये । धामानि । पूर्व्याणि । अर्चान् । वि । यत् । उच्छान् ।
विऽयोतारः । अमूराः । विऽधातारः । वि । ते । दधुः । अजस्राः ।
ऋतऽधीतयः । रुरुचन्त । दस्माः ॥ २ ॥

येदेवाः पूर्व्याणिपुरातनानिधामानिस्थानानि वा प्राचानर्चन्तिप्रयच्छन्तिस्तोतृभ्यः यद्येच वियोतारोदुःखानाममिश्रयितारः अमूराअमूढाःव्युच्छान्व्युच्छन्ति तमोविवासयन्ति देवाः ते विधातारः फलानांकर्तारः अजस्रानित्याः विदधुः कुर्वन्त्यभिमतम् किंच ऋतधीतयः सत्यकर्माणोदस्माः दर्शनीयास्ते रुरुचन्त रोचन्ते ॥ २ ॥

अथतृतीया—

प्रपस्त्या३मदितिंसिन्धुमर्कैःस्वस्तिमीळेसख्यायदेवीम् ।
उभेयथानोअहनीनिपातउषासानक्ताकरतामदब्धे ॥ ३ ॥

प्र । पस्त्याम् । अदितिम् । सिन्धुम् । अर्कैः । स्वस्तिम् । ईळे ।
सख्याय । देवीम् । उभे इति । यथा । नः । अहनी इति ।
निऽपातः । उषसानक्ता । करताम् । अदब्धे इति ॥ ३ ॥

---

१ ऋ० सं० २. ७. ८. । २ ऋ० सं० ८. २. १४. । ३ ऋ० सं० ४. १, १९.

पस्त्यां सर्वैर्गन्तव्यामदितिमदीनां देवमातरं तांदेवीं सिन्धुं स्यन्दनशीलां नद्यभिमानिदेवीं स्वस्ति सुखनिवासामेतन्नामिकांदेवीं सख्यायानुकूल्यायाश्वैः मन्त्रैरीळेस्तौमि उभे अहनी द्यावापृथिव्यौ तथा नोस्मान्निपातः नितरांपातः तथास्तौमि उषासानक्ताहोराञ्राभिमानिदेवते अदब्धे अदम्भनीयेकरतां कुरुताम् अभिमतमितिशेषः ॥ ३ ॥

अथचतुर्थी—

व्यर्यमावरुणश्चेतिपन्थामिषस्पतिःसुवितंगातुमग्निः ।
इन्द्राविष्णूनृवदुषुस्तवानाशर्मनोयन्तममवद्वरूथम् ॥ ४ ॥

वि । अर्यमा । वरुणः । चेति । पन्थाम् । इषः । पतिः । सुवितम् ।
गातुम् । अग्निः । इन्द्राविष्णू इति । नृऽवत् । ऊँ इति ।
सु । स्तवाना । शर्म । नः । यन्तम् । अमऽवत् । वरूथम् ॥ ४ ॥

अर्यमादेवोनोस्माकंपन्थां यज्ञादिमार्गंविचेति ज्ञापयति तथा वरुणश्चविचेति इषोन्नस्यहविर्लक्षणस्यपतिःपालकोग्निः सुवितंसुखकरं गातुं गमनंमार्गं वा स्वर्गादेर्विचेति इन्द्राविष्णू सु सुष्ठुस्तवानास्तूयमानौ नृवन्मनुष्यवन्मनुष्योपेतं वरूथं वरणीयम् अमवद्बलोपेतं शर्म गृहं सुखंवा नोस्माकं यन्त यच्छतम् ॥ ४ ॥

अथपञ्चमी—

आपर्वतस्यमरुतामवांसिदेवस्यत्रातुरव्रिभगस्य ।
पात्पतिर्जन्यादंहसोनोमित्रोमित्रियादुतनउरुष्येत् ॥ ५॥६ ॥

आ । पर्वतस्य । मरुताम् । अवांसि । देवस्य । त्रातुः । अव्रि ।
भगस्य । पात् । पतिः । जन्यात् । अंहसः । नः । मित्रः ।
मित्रियात् । उत । नः । उरुष्येत् ॥ ५ ॥ ६ ॥

पर्वतस्येन्द्रसखस्यैतन्नामकस्य देवस्य मरुतांचत्रातुःरक्षकस्य भगस्यदेवस्यचावांसिरक्षणानि आ अव्रि आवृणे किंच पतिर्वरुणोदेवः जन्याज्जनसंबन्धादंहसःपापान्नोस्मान्पातु रक्षतु उतापिच मित्रश्चमित्रियान्मित्रभावेननोस्मानुरुष्येद्रक्षतु ॥ ५ ॥

॥ इतितृतीयस्याष्टमेषष्ठोवर्गः ॥ ६ ॥

नूरोदसीअहिनाबुध्न्येनस्तुवीतदेवीअप्येभिरिष्टैः ।
समुद्रंनसंचरणेसनिष्यवोघर्मस्वरसोनद्योअपव्रन् ॥ ६ ॥

नु । रोदसी इति । अहिना । बुध्न्येन । स्तुवीत । देवी इति ।
अप्येभिः । इष्टैः । समुद्रम् । न । सम्ऽचरणे । सनिष्यवः ।
घर्मऽस्वरसः । नद्यः । अप । व्रन् ॥ ६ ॥

हेरोदसी द्यावापृथिव्यौ युवाम् अहिनाबुध्न्येनअहिर्बुध्न्यनामकेनदेवेनसह नु क्षिप्रमप्येभिः आपनीयैरिष्टैः कामैर्निमित्तभूतैःस्तुवीत स्तुवे सनिष्यवोधनानांसंभक्तुमिच्छन्तः संचरणेसंचाराय समुद्रमध्यगमनाय समुद्रंन समुद्रमिव तंयथास्तुवन्तितद्वत् यस्मादेतेदेवाः घर्मस्वरसोदीप्तध्वनयोनद्योनदीरपव्रन् अपवृण्वन्तीति परोक्षइव अथवा तेदेवानदीरपवृण्वन्त्वित्याशीः तस्मात्स्तुवइतिसंबन्धः ॥ ६ ॥

अथसप्तमी—

देवैर्नोदेव्यदितिर्निपातुदेवस्त्रातात्रायतामप्रयुच्छन् ।
नहिमित्रस्यवरुणस्यधासिमर्हामसिप्रमियंसान्वग्नेः ॥ ७ ॥

देवैः । नः । देवी । अदितिः । नि । पातु । देवः । त्राता । त्रायताम् ।
अप्रऽयुच्छन् । नहि । मित्रस्य । वरुणस्य । धासिम् । अर्हामसि ।
प्रऽमियम् । सानु । अग्नेः ॥ ७ ॥

अदितिर्देवी अदीनादेवमाता देवैरन्यैर्मित्रादिभिःसहनोस्मान्निपातु पालयतु तथा त्रातापालकोदेवइन्द्रइत्यर्थः सोप्यप्रयुच्छन् अप्रमाद्यन् त्रायतां वयंच मित्रस्यवरुणस्याग्नेश्च सानुं समुच्छ्रितं धासिम् अन्नं सोमादिलक्षणं प्रमियं हिंसितुंनह्यर्हामसि अर्हामः समर्थाभवामः किंत्वनुष्ठानेनसंबन्धितुमर्हामेत्यर्थः ॥ ७ ॥

अथाष्टमी—

अग्निरीशेवसव्यस्याग्निर्महःसौभगस्य । तान्यस्मभ्यंरासते ॥ ८ ॥

अग्निः । ईशे । वसव्यस्य । अग्निः । महः । सौभगस्य । तानि ।
अस्मभ्यम् । रासते ॥ ८ ॥

अग्निर्देवोवसव्यस्य धनसमूहस्येशेईष्टेदातुं तथाग्निर्महोमहतः सौभगस्य सुभगत्वस्याधीशे अतस्तानिधनानिसौभाग्यंचास्मभ्यं रासते ददातु ॥ ८ ॥

अथनवमी–

उषोमघोन्यावहसूनृतेवार्यापुरु । अस्मभ्यंवाजिनीवति ॥ ९ ॥

उषः । मघोनि । आ । वह । सूनृते । वार्या । पुरु । अस्मभ्यम् ।
वाजिनीऽवति ॥ ९ ॥

हेउषः हेमघोनि धनवति हेसूनृते प्रियसत्यरूपवागभिमानिनि हेवाजिनीवति अन्नवति देवि अस्मभ्यं वार्या वरणीयानि पुरु बहूनि धनानि आवह प्रापय ॥ ९ ॥

अथदशमी–

तत्सुनःसविताभगोवरुणोमित्रोअर्यमा ।
इन्द्रोनोराधसागमत् ॥ १० ॥ ७ ॥

तत् । सु । नः । सविता । भगः । वरुणः । मित्रः । अर्यमा । इन्द्रः ।
नः । राधसा । आ । गमत् ॥ १० ॥ ७ ॥

येनराधसा धनेनसह सविताभगोवरुणोमित्रोर्यमेन्द्रः प्रत्येकमागमदागच्छन्तियद्वा तद्राधोधनं तेदेवानोस्मभ्यं सु सुष्ठु प्रयच्छन्तु इतिशेषः ॥ १० ॥

॥ इतितृतीयस्याष्टमेसप्तमोवर्गः ॥ ७ ॥

महीद्यावापृथिवीइतिसप्तर्चमेकादशंसूक्तं वामदेवस्यार्षं द्यावापृथिव्यं पूर्वत्रत्रिगायत्र्यन्तंत्वित्युक्तत्वात्पञ्चम्याद्यास्तिस्रोगायत्र्यः शिष्टास्त्रिष्टुभः महीसप्तद्यावापृथिव्यामित्यनुक्रमणिका । व्यूळ्हेदशरात्रेपञ्चमेहानिवैश्वदेवशस्त्रेआदितश्चतुर्ऋचंद्यावापृथिव्यनिविद्धानीयं तथाचसूत्रं–महीद्यावापृथिवीइतिचतस्रऋभुर्विभ्वेति ।

तत्रप्रथमा–

महीद्यावापृथिवीइहज्येष्ठेरुचाभवतांशुचयद्भिरर्कैः ।
यत्सींवरिष्ठेबृहतीविमिन्वन्नुवद्धोक्षापप्रथानेभिरेवैः ॥ १ ॥

मही इति॑ । द्यावा॑पृथि॒वी इति॑ । इ॒ह । ज्येष्ठे॒ इति॑ । रु॒चा । भ॒व॒ता॒म् । शु॒च॒यत्ऽ॑भिः । अ॒र्कैः । यत् । सी॒म् । वरि॑ष्ठे॒ इति॑ । बृ॒ह॒ती इति॑ । वि॒ऽमि॒न्वन् । रु॒वत् । ह॒ । उ॒क्षा । प॒प्रथा॑नेभिः । एवैः॑ ॥ १ ॥

इहयज्ञे मही महत्यौ ज्येष्ठे प्रशस्ये द्यावापृथिवी द्यावापृथिव्यौ रुचादीप्त्यायुक्ते शुचयद्भिर्दीपयद्भिरर्कैर्मंत्रैःसोमादिहविर्भिर्वायुक्तेभवतां यद्यस्मात्सींसर्वतोवरिष्ठेउरुतरेबृहती महत्यौद्यावापृथिव्यौ विमिन्वन्परिच्छिन्दन् स्थापयन्नुक्षा सेक्ता पर्जन्यः पप्रथानेभिः प्रथमानैरेवैर्गमनशीलैर्मरुद्भिर्मेघैर्वासह रुवत् रौतिशब्दंकरोति हेतिपूरणः तस्माद्रुचाभवतामितिसंबन्धः ॥ १ ॥

अथद्वितीया—

दे॒वीदे॒वेभि॑र्यज॒तेयज॑त्रै॒रमि॑नतीतस्थतु॒रु॒क्षमा॑णे ।
ऋ॒तावरी॑अ॒द्रुहा॑दे॒वपु॑त्रेय॒ज्ञस्य॑ने॒त्रीशु॒चय॑द्भि॒र॒र्कैः ॥ २ ॥

दे॒वी इति॑ । दे॒वेभिः॑ । य॒ज॒ते इति॑ । यज॑त्रैः । अमि॑नती॒ इति॑ । त॒स्थ॒तुः॒ । उ॒क्षमा॑णे॒ इति॑ । ऋ॒तव॑री॒इत्यृ॒तऽव॑री । अ॒द्रुहा॑ । दे॒वपु॑त्रे॒ इति॑ दे॒वऽपु॑त्रे । य॒ज्ञस्य॑ । ने॒त्री इति॑ । शु॒च॒यत्ऽ॑भिः । अ॒र्कैः ॥ २ ॥

देवी देव्यौ यजते यष्टव्यौ अमिनती प्रजाअहिंसत्यौ उक्षमाणेसिञ्चत्यौ ऋतावरी ऋतवत्यौ अद्रुहा अद्रोग्ध्र्यौ द्रोहमकुर्वत्यौ देवपुत्रे देवोत्पादिके यज्ञस्यनेत्री निर्वाहयित्र्यौ द्यावापृथिव्यौ देवेभिर्देवैःयजत्रैःयष्टव्यैःसहिते शुचयद्भिः शोचयद्भिरर्कैः मन्त्रैर्हविर्भिर्वायुक्तेतस्थतुः तिष्ठतः स्यातामित्यर्थः ॥ २ ॥

अथतृतीया—

सइत्स्व॒पाभुव॑नेष्वा॒सयइ॒मेद्यावा॑पृथि॒वीज॒जान॑ ।
उ॒र्वीग॑भी॒रेरज॑सीसु॒मेकेअ॑वं॒शेधीरः॒शच्या॒समैर॑त् ॥ ३ ॥

सः॒ । इत् । सु॒ऽअपाः॑ । भुव॑नेषु । आ॒स॒ । यः । इ॒मे इति॑ । द्यावा॑पृथि॒वी इति॑ । ज॒जान॑ । उ॒र्वी इति॑ । ग॒भी॒रे इति॑ । रज॑सी॒ इति॑ । सु॒मेके॒ इति॑ सु॒ऽमेके॑ । अ॒वं॒शे । धीरः॑ । शच्या॑ । सम् । ऐ॒र॒त् ॥ ३ ॥

सइत्सएव स्वपाः शोभनकर्मासन्भुवनेष्वास आस्ते यइमेद्यावापृथिवी द्यावापृथिव्यौ जजानोत्पादितवान् यश्चप्रजापतिः उर्वी उर्व्यौ विस्तीर्णे गभीरे, अविचले सुमेके शोभन रूपे अवंशे उत्पत्तिरहिते अनाधारेवान्तरिक्षेधीरोधीमान् शच्या कुशलकर्मणासमैरत् सम्यक्मेरितवान् सएवस्वपाइति ॥ ३ ॥

अथचतुर्थी—

नूरोदसीबृहद्भिर्नोवरूथैःपत्नीवद्भिरिषयन्तीसजोषाः । उरूचीविश्वेयजतेनिपातंधियास्यामरथ्यःसदासाः ॥ ४ ॥

नु । रोदसी इति । बृहत्ऽभिः । नः । वरूथैः । पत्नीवत्ऽभिः । इषयन्ती इति । सऽजोषाः । उरूची इति । विश्वे इति । यजते इति । नि । पातम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥ ४ ॥

हेरोदसी द्यावापृथिव्यौ नु क्षिप्रं पत्नीवद्भिःपत्नीसहितैः बृहद्भिर्महद्भिः वरूथैर्गृहैर्धनैर्वा सहइषयन्ती अस्माकमन्नमिच्छन्त्यौ सजोषाः परस्परंसङ्गते उरूची उर्वञ्चने विश्वे व्याप्ते यजते यष्टव्ये सत्यौ नोस्मान्निपातं नितरांरक्षतं धियेत्यादिगतम् ॥ ४ ॥

प्रवामित्यादिगायत्रत्र्यृचोव्यूढेदशरात्रेवैश्वदेवशस्त्रेद्यावापृथिव्यनिविद्धानीयत्वेनप्रक्षेप्यः तथाचसूत्रं—प्रवांमहिद्यवीइतित्र्यृचाविति ।

अथपञ्चमी—

प्रवांमहिद्यवीअभ्युपस्तुतिंभरामहे।शुचीउपप्रशंस्तये ॥ ५ ॥

प्र । वाम् । महि । द्यवी इति । अभि । उपऽस्तुतिम् । भरामहे । शुची इति । उप । प्रऽशंस्तये ॥ ५ ॥

हेद्यावापृथिव्यौ द्यवी द्योतमाने वां युवाभ्यामुपस्तुतिं स्तोत्रं महि महत्प्रभूतम् अभिप्रभरामहे प्रकर्षेणसंपादयामः शुचीशुद्धेयुवां प्रशस्तये प्रशंसितुम् उप उपसर्गश्रुतेरुचितक्रियाध्याहारः उपगच्छामइतिशेषः ॥ ५ ॥

अथषष्ठी—

पुनानेतन्वामिथःस्वेनदक्षेणराजथः।ऊह्याथेसनादृतम् ॥ ६ ॥

पुनाने इति । तन्वा । मिथः । स्वेन । दक्षेण । राजथः ।
ऊह्याथे इति । सनात् । ऋतम् ॥ ६ ॥

हेदेव्यौ तन्वा स्वकीययामूर्त्या स्वेनदक्षेणबलेनच मिथःप्रत्येकंपुनाने शोधयन्त्यौ यज्ञं यजमानंवा युवांराजथः ईशानेभवथः यद्वा तन्वा स्वस्वशरीरैकदेशेन मिथःपरस्परं पुनाने शोधयन्त्यौद्यौःस्वीयेनासारेणभुवं साच स्वकीयेनकार्श्येन चन्द्रमसिस्थितेन दिवमितिविवेकः सनात्सदाकालम् ऋतंयज्ञमूह्याथेवहथः ॥ ६ ॥

अथसप्तमी—

महीमित्रस्यंसाधथस्तरंन्तीपिप्रंतीऋतम् । परियज्ञंनिषेदथुः ॥७।८॥
मही इति । मित्रस्य । साधथः । तरन्ती इति । पिप्रती इति ।
ऋतम् । परि । यज्ञम् । नि । सेदथुः ॥ ७ ॥ ८ ॥

मही महत्यौ द्यावापृथिव्यौ मित्रस्य मित्रभूतस्य स्तोतुरभिमतंसाधथः साधयथः ऋतमन्नंतरन्ती तारयन्त्यौ पिप्रती पूरयन्त्यौ यज्ञंपरिपरितोनिषेदथुराश्रयथः ॥ ७ ॥

॥ इतितृतीयस्याष्टमेऽष्टमोवर्गः ॥ ८ ॥

क्षेत्रस्यपतिनेत्यष्टर्चैद्वादशंसूक्तंवामदेवस्यार्षम् आद्याचतुर्थीषष्ठीसप्तम्योनुष्टुभः पञ्चमीपुरउष्णिक् आद्यश्चेत्पुरउष्णिगितिहितल्लक्षणं शिष्टास्तिस्रस्त्रिष्टुभः आद्यास्तिस्रः क्षेत्रपतिदेवताकाः चतुर्थीशुनाख्यदेवताका पञ्चम्यष्टम्यौशुनासीरदेवताके षष्ठीसप्तम्यौसीतादेवताके तथाचानुक्रमणिका—क्षेत्रस्याष्टौतिस्रःक्षैत्रपत्याःशुनायैकापरापुरउष्णिक्सान्त्यांचशुनासीराभ्यामुपान्त्येसीतायैते चानुष्टुभावाद्याश्चतुर्थीचेति । क्षेत्रकर्षणे अनेनसूक्तेनप्रत्यृचंजुहुयाज्जपेद्वा तथाचसूत्रितं—क्षेत्रस्यपतिनावयमितिप्रत्यृचंजुहुयाज्जपेद्वेति । अप्तोर्यामेहोतुरतिरिक्तोक्थे आश्विनशस्त्रादूर्ध्वंचत्वार्यतिरिक्तोक्थ्यानि तत्राद्यापरिधानीया सूत्रितंच—क्षेत्रस्यपतिनावयमितिपरिधानीयेति ।

तत्रप्रथमा—

क्षेत्रंस्यपतिनावयंहितेनैवजयामसि ।
गामश्वंपोषयित्न्वासनोमृळातीदृशे ॥ १ ॥

क्षेत्रस्य । पतिना । वयम् । हितेनऽइव । जयामसि । गाम् ।
अश्वम् । पोषयित्नु । आ । सः । नः । मृळाति । ईदृशे ॥ १ ॥

वयंयजमानाः क्षेत्रस्यपतिना देवेन रुद्रं क्षेत्रपतिंब्रूमःप्राहुः केचिदग्निम् अथापरेस्वतन्त्र एववाकश्चित्क्षेत्रस्यपतिरुच्यतेइति हितेनेव इवशब्दएवार्थे सर्वप्राणिहितेनैवतेन अथवा मित्रेणेव यथासख्युःसाहाय्येसन्स्वकार्यंसाधयतितद्वत् जयामसि जयामः क्षेत्रं सदेवोगामश्वंचपोषयित्नु पोषयितृ गवाश्वलक्षणंधनम् आहरत्वितिशेषः उपसर्गश्रुतेर्योग्यक्रियाध्याहारः; सएवदेवोनोस्मानीदृशे उक्तलक्षणेधने दातव्येसति मृळाति सुखयाति अत्रक्षेत्रस्य पतिनेत्यादिनिरुक्तंजानीयात् ॥ १ ॥

अप्तोर्यामेमैत्रावरुणस्यातिरिक्तोक्थेपरिधानीया सूत्रितंच—क्षेत्रस्यपतेमधुमन्तमूर्मिमितिपरिधानीयेति ।

सैषाद्वितीया—

क्षेत्रस्यपतेमधुमन्तमूर्मिंधेनुरिवपयोअस्मासुधुक्ष्व ।
मधुश्चुतंघृतमिवसुपूतमृतस्यनःपतयोमृळयन्तु ॥ २ ॥

क्षेत्रस्य । पते । मधुऽमन्तम् । ऊर्मिम् । धेनुःऽइव । पयः ।
अस्मासु । धुक्ष्व । मधुऽश्चुतम् । घृतम्ऽइव । सुऽपूतम् ।
ऋतस्य । नः । पतयः । मृळयन्तु ॥ २ ॥

हेक्षेत्रस्यपते त्वं मधुमन्तं माधुर्योपेतम् ऊर्मिं प्रवृद्धमुदकं धेनुःपयइव सायथादुग्धे तथास्मासुधुक्ष्व मधुश्चुतं मधुस्राविसुपूतंघृतमिवेत्युपमा तादृशमुदकमित्यर्थः ऋतस्ययज्ञस्योदकस्य वापतयः स्वामिनोनोस्मान्मृळयन्तु सुखयन्तु यद्वा ऋतस्यैतत्कर्मणिषष्ठी ऋतंमृळयन्तुप्रयच्छन्तु मृडतिरत्रदानकर्मा ॥ २ ॥

ब्राह्मणाच्छंसिनोतिरिक्तोक्थेपरिधानीयैषा मधुमतीरोषधीर्द्यावआपइतिपरिधानीयेतिसूत्रितत्वात् ।

---

१ नि० १०. १५.

सैषातृतीया—

मधुमतीरोषधीर्द्यावआपोमधुमन्नोभवत्वन्तरिक्षम् ।
क्षेत्रस्यपतिर्मधुमान्नोअस्त्वरिष्यन्तोअन्वेनंचरेम ॥ ३ ॥

मधुऽमतीः । ओषधीः । द्यावः । आपः । मधुऽमत् । नः ।
भवतु । अन्तरिक्षम् । क्षेत्रस्य । पतिः । मधुऽमान् । नः ।
अस्तु । अरिष्यन्तः । अनु । एनम् । चरेम ॥ ३ ॥

ओषधीरोषध्यः व्रीहिप्रियङ्ग्वादयोनोस्मभ्यं मधुमतीर्मधुमत्योभवन्तु तथा द्यावः तिस्रो-दिवइत्युक्तत्वाद्बहुवचनंयुक्तं तथाआपः अन्तरिक्षंच नोमधुमद्भवतु किंच क्षेत्रस्यपतिरपिमधु-मान्नोअस्तु अरिष्यन्तः अन्यैरहिंसिष्यन्तः वयम् एनं क्षेत्रपतिमन्वनुसृत्यचरेम संचरेम सुखेन ॥ ३ ॥

अथचतुर्थी—

शुनंवाहाःशुनंनरःशुनंकृषतुलाङ्गलम् ।
शुनंवरत्राबध्यन्तांशुनमष्ट्रामुदिङ्गय ॥ ४ ॥

शुनम् । वाहाः । शुनम् । नरः । शुनम् । कृषतु । लाङ्गलम् । शुनम् ।
वरत्राः । बध्यन्ताम् । शुनम् । अष्ट्राम् । उत् । इङ्गय ॥ ४ ॥

वाहाः बलीवर्दाः शुनं सुखनामैतत् सुखंयथाभवतितथावहन्त्वितिशेषः तथा नरो नेतारोमनुष्याः कर्षकाः शुनंकुर्वन्तु तथालाङ्गलमपिशुनंकृषतु वरत्राः वरणेनत्रायमाणाःप्र-ग्रहाः शुनंबध्यन्ताम् अष्ट्रां प्रतोदं शुनमुदिङ्गय प्रेरय शुनाख्योवाय्विन्द्रयोरन्यतमः सुखकृद्दे-वःतदनुग्रहादेतत्सर्वंभवत्वितितस्यश्रुतिसामान्येनस्तुतिः ॥ ४ ॥

शुनासीरीयेपर्वणि शुनासीरदेवताकस्य हविषोनुवाक्यैषा अन्स्यात्रुग्याज्या सूत्रितञ्च—शुनासीराविमांवाचंजुषेथांशुनंनः फालाविकृषन्तुभूमिमिति ।

सैषापञ्चमी—

शुनासीराविमांवाचंजुषेथांयद्दिविचक्रथुःपयः ।
तेनेमामुपसिञ्चतम् ॥ ५ ॥

शुनासीरौ । इमाम् । वाचम् । जुषेथाम् । यत् । दिवि ।
चक्रथुः । पयः । तेन । इमाम् । उप । सिञ्चतम् ॥ ५ ॥

शुदेवाःशुनदेवतेतिशौनकः अतःशुनइन्द्रःसीरोवायुः यद्वा शुनोवायुःशुक्षिप्रंशुनातिएत्यन्तरिक्षेसीरआदित्यःसरणादितियास्कः । हे शुनासीरौ तौ युवां इमांवक्ष्यमाणांमदीयांवाचंजुषेथां सेवेथां यत्पयोदिविचक्रथुः तेनेमांभूमिमुपसिञ्चतम् ॥ ५ ॥

अथषष्ठी—

अर्वाचीसुभगेभवसीतेवन्दामहेत्वा ।
यथानःसुभगाससियथानःसुफलाससि ॥ ६ ॥

अर्वाची । सुऽभगे । भव । सीते । वन्दामहे त्वा । यथा । नः ।
सुऽभगा । अससि । यथा । नः । सुऽफला । अससि ॥ ६ ॥

हेसुभगे सीते त्वमर्वाची अर्वागञ्चनाभव त्वा त्वां वन्दामहे स्तुवीमहि यथानःसुभगाससि शोभनधनाभवसि यथानःसुफलाससितथावन्दामहे ॥ ६ ॥

अथसप्तमी—

इन्द्रःसीतांनिगृह्णातुतांपूषानुयच्छतु ।
सानःपयस्वतीदुहामुत्तरामुत्तरांसमाम् ॥ ७ ॥

इन्द्रः । सीताम् । नि । गृह्णातु । ताम् । पूषा । अनु । यच्छतु ।
सा । नः । पयस्वती । दुहाम् । उत्तराम्ऽउत्तराम् । समाम् ॥ ७ ॥

इन्द्रोदेवः सीतांसीराधारकाष्ठांनिगृह्णातु तांसीतांपूषादेवोनियच्छतु नियमयतु सा द्यौःपयस्वतीउदकवतीदुहांदुह्यात् कदेतितदुच्यते उत्तरामुत्तरांसमामुत्तरमुत्तरंसंवत्सरम् ॥ ७ ॥

अस्याअष्टम्याविनियोगः शुनासीराविमावित्यत्रोक्तः ।

अथाष्टमी—

शुनंनःफालाविकृषन्तुभूमिंशुनंकीनाशाअभियन्तुवाहैः ।
शुनंपर्जन्योमधुनापयोभिःशुनासीराशुनमस्मासुधत्तम् ॥ ८ ॥ १ ॥

१ नि० ९. ४०. ।

शुनम् । नः । फालाः । वि । कृषन्तु । भूमिम् । शुनम् । कीनाशाः ।
अभि । यन्तु । वाहैः । शुनम् । पर्जन्यः । मधुना । पयःऽभिः ।
शुनासीरा । शुनम् । अस्मासु । धत्तम् ॥ ८ ॥ ९ ॥

नोभूमिंफालाः भूमिविदारककाष्ठाः शुनंविकृषन्तु शुनंयथाभवतितथाकीनाशाबलीवर्दरक्षकाः वाहैर्बलीवर्दैरभियन्तु अभिगच्छन्तु शुनंयथाभवतितथापर्जन्योमधुनामधुरैःपयोभिरुदकैःसिञ्चतु हेशुनासीरा इन्द्रवायू वाय्वादित्यौवा शुनंसुखमस्मासुधत्तंधारयतम् ॥ ८ ॥

॥ इतितृतीयस्याष्टमेनवमोवर्गः ॥ ९ ॥

समुद्रादूर्मिरित्येकादशर्चंत्रयोदशंसूक्तम् अन्त्याजगती शिष्टास्त्रिष्टुभः अग्निसूर्याब्गोघृतानामन्यतमादेवता वामदेवऋषिः अत्रानुक्रमणिका—समुद्रादेकादशाग्नेयंजगत्यन्तंसौर्यंवापंवागव्यंवाघृतस्तुतिर्वेति । विषुवतीदंसूक्तमाज्यं तथाचसूत्रं—समुद्रादूर्मिरित्याज्यंत्यंसुमेषमिति? । व्यूह्ळेदशरात्रेसप्तमेहनिइदमेवसूक्तमाज्यं सूत्रितंच—अथच्छन्दोमाः?समुद्रादूर्मिरित्याज्यमिति ।

तत्रप्रथमा—

समुद्रादूर्मिर्मधुमाँउदारदुपांशुनासममृतत्वमानट् ।
घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः ॥ १ ॥

समुद्रात् । ऊर्मिः । मधुऽमान् । उत् । आरत् । उप । अंशुना । सम् ।
अमृतऽत्वम् । आनट् । घृतस्य । नाम । गुह्यम् । यत् । अस्ति ।
जिह्वा । देवानाम् । अमृतस्य । नाभिः ॥ १ ॥

संमोदन्तेस्मिन्यजमानाइतिसमुद्रोग्निःपार्थिवः अथवा समुद्रवन्त्यापोस्मादितिव्युत्पत्त्या वैद्युतोग्निः तस्मादूर्मिः ऊर्मिवदुपर्युपर्युद्भूतोमधुमान्माधुर्योपेतफलसमूहः उदारत् उद्गच्छति अथवा वैद्युतादूर्म्युत्पादकोरसउदारदुद्भूतः अथवा समुद्रात्समुद्रवणसाधनादादित्यादूर्मीरसउदकलक्षणउदारत् आदित्याज्जायतेवृष्टिरितिश्रुतेः । यद्वा समुद्रादुक्तव्युत्पत्तेरन्तरिक्षादूर्मिरुदकमुदारत् अथवा समुद्रादुक्तलक्षणाद्गवामूधसःसकाशादूर्मिरुज्ज्वलःक्षीररसः एतद्घृतपक्षेपि समानं यद्यपिघृतंक्षीराज्जायते तथापि तस्योधसउत्पत्तेरेवमुपचर्यते शिष्टंवाक्यमग्न्यादिपक्षेषु पक्षेष्वपिसमानम् अंशुनादीप्त्यांशेनवा अमृतत्वंमोक्षमुपसमानट् उपेतिपूरणः प्राप्नोतिनरः घृतस्यदीप्तस्यक्षरद्द्रव्यरूपस्यवा गुह्यंनाम गोपनीयं नमनसाधनंयदस्तितद्ब्रवीमि तद्देवानांजि-

ह्वा आस्वादकजिह्वास्थानीयंभवति तदेवामृतस्यनाभिर्बन्धकंभवति तदुभयंघृतस्यनामेत्यर्थः एवंसर्वमन्त्रेषुतत्तत्पक्षानुसारेणयोज्यम् ॥ १ ॥

अथद्वितीया–

वयंनामप्रब्रवामाघृतस्यास्मिन्यज्ञेधारयामानमोभिः ।
उपब्रह्माशृणवच्छस्यमानंचतुःशृङ्गोवमीद्गौरएतत् ॥ २ ॥
वयम् । नाम । प्र । ब्रवाम । घृतस्य । अस्मिन् । यज्ञे । धारयाम ।
नमःऽभिः । उप । ब्रह्मा । शृणवत् । शस्यमानम् । चतुःऽशृङ्गः ।
अवमीत् । गौरः । एतत् ॥ २ ॥

वयंयजमानाः घृतस्यनाम प्रब्रवाम स्तुमः अस्मिन्यज्ञेनमोभिर्नमस्कारैर्हविर्भिर्वाधारयामच ब्रह्मापरिवृढोदेवःशस्यमानंस्तूयमानमिदमुपशृणवच्छृणुयात् चतुःशृङ्गः चत्वारिशृङ्गाणिवेदचतुष्टयरूपाणियस्यसःआदित्याग्निपक्षेएवमितरेष्वपियास्कोक्तव्युत्पत्त्याशृङ्गशब्दोव्याख्येयः गौरोगौरवर्णः तादृशोदेवएतत्कर्मजगद्वा अवमीदुद्गिरति निर्वहतीत्यर्थः ॥ २ ॥

अथतृतीया–

चत्वारिशृङ्गात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य ।
त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँआविवेश ॥ ३ ॥
चत्वारि । शृङ्गा । त्रयः । अस्य । पादाः । द्वे इति । शीर्षे इति ।
सप्त । हस्तासः । अस्य । त्रिधा । बद्धः । वृषभः । रोरवीति ।
महः । देवः । मर्त्यान् । आ । विवेश ॥ ३ ॥

यद्यपिसूक्तस्याग्निसूर्यादिपञ्चदेवतात्मकत्वात्पञ्चधायंमन्त्रोव्याख्येयः तथापि निरुक्ताद्युक्तरीत्या यज्ञात्मकाग्नेः सूर्यस्यचप्रकाशकत्वेनतत्परतयाव्याख्यायते–अस्ययज्ञात्मकस्याग्नेःचत्वारिशृङ्गाश्चत्वारोवेदाःशृङ्गस्थानीयाः यद्यप्यापस्तम्बेनयज्ञंव्याख्यास्यामः सत्रिभिर्वेदैर्विधीयतइत्युक्तंतथाप्याथर्वणस्येतरानपेक्षयैवैकाग्निसाध्यानांकृत्स्नकर्मणामभिधायकत्वात् तदपेक्षयाचत्वारिशृङ्गेत्युक्तं त्रयोअस्यपादाः सवनानित्रीण्यस्यपादाः प्रवृत्तिसाधनत्वात्पादाइत्युच्यन्ते द्वेशीर्षे ब्रह्मौदनंप्रवर्ग्यश्चइष्टिसोमप्राधान्येनेदमुक्तं सप्तहस्तासः सप्तच्छन्दांसिहस्तामुख्यसाधनं छन्दांस्यपिदे-

वताप्रीणनस्यमुख्यसाधनमिति हस्तव्यवहारः त्रिधाबद्धः मन्त्रब्राह्मणैस्त्रिप्रकारंबद्धः बन्धनमस्यबन्निष्पाद्यत्वात् वृषभः फलानांवर्षिता रोरवीति भृशंशब्दायते ऋग्यजुःसामोक्तैः शस्त्रयागस्तुतिरूपैः होत्राद्युत्पादितैर्ध्वनिभिः असौरौति एवंमहोदेवः एषयज्ञात्मामहानुभावोदेवः मर्त्यानाविवेश मर्त्यैर्यजमानैर्निष्पाद्यत्वात् प्रवेशउपचर्यते अत्रयास्कः—चत्वारिशृङ्गेतिवेदावा एतउक्ताइत्यादिनानिरवोचत्तदत्रानुसंधेयम् । अथसूर्यपक्षेव्याख्यायते—अस्यादित्यस्यचत्वारि शृङ्गाणिचतस्रोदिशएताःश्रयणार्हत्वाच्छृङ्गाणीत्युपचर्यन्ते त्रयोअस्यपादाः त्रयोवेदाः पादस्थानीयाभवन्तिगमनसाधनत्वात् तथाहि ऋग्भिःपूर्वाह्णेदिविदेवईयतेइत्युपक्रम्यवेदैरशून्यस्त्रिभिरेतिसूर्यः इतिहिवेदत्रयेणगतिराम्नाता द्वेशीर्षे अहश्चरात्रिश्चेतिद्वेशिरसी सप्तहस्तासोअस्य सप्तरश्मयः षड्विधलक्षणाऋतवएकःसाधारणइतिसप्तहस्ताभवन्ति त्रिधाबद्धः त्रिषुस्थानेषुक्षित्यादिषु अग्न्याद्यात्मकत्वेनसंबद्धः ग्रीष्मवर्षाहेमन्ताख्यैस्त्रिभिस्त्रेधाबद्धोवा वृषभोवर्षिता रोरवीति शब्दंकरोतिवृष्ट्यादिद्वारा समहोमहान्देवोमर्त्यानाविवेश तन्नियन्तृतया सूर्यआत्माजगतस्तस्थुषश्चेतिहिश्रुतम् । एवमबादिपक्षेपियोज्यम् । शाब्दिकास्तुशब्दब्रह्मपरतयाचत्वारिशृङ्गेतिचत्वारिपदजातानिनामाख्यातेचोपसर्गनिपाताश्चेत्यादिनाव्याचक्षते । अपरेत्वन्यपरतया । तत्सर्वंमन्त्रद्रष्टव्यम् ॥ ३ ॥

अथचतुर्थी—

त्रिधाहितंपणिभिर्गुह्यमानंगविदेवासोघृतमन्वविन्दन् ।
इन्द्रएकंसूर्यएकंजजानवेनादेकंस्वधयानिष्टतक्षुः ॥ ४ ॥

त्रिधा । हितम् । पणिऽभिः । गुह्यमानम् । गवि । देवासः । घृतम् ।
अनु । अविन्दन् । इन्द्रः । एकम् । सूर्यः । एकम् । जजान । वेनात् ।
एकम् । स्वधया । निः । ततक्षुः ॥ ४ ॥

पणिभिरसुरैर्गवि गोषु त्रिधा क्षीरदध्याज्यभेदेनत्रिप्रकारंहितं निहितं गुह्यमानं गोपितं घृतं दीप्तं रसरूपंवाद्रव्यं देवासोदेवाःअन्वविन्दन्नलभन्त तत्रेन्द्रएकंक्षीरंजजानोदपादयत् सूर्यएकंजजानवेनात्कान्तिमतोग्नेर्गमनवतोवायोर्वैकंघृतं स्वधयान्नेननिमित्तेनद्रव्येणवासाधनेननिष्टतक्षुः निरपादयन्देवाः ॥ ४ ॥

---

१ नि० १३. ७. । २ तै० ब्रा० ३. १२. ९. । ३ ऋ० सं० १. ८. ७. ।

अथपञ्चमी–

एताअर्षन्तिहृद्यात्समुद्राच्छतव्रंजारिपुणानावचक्षे ।
घृतस्यधाराअभिचाकशीमिहिरण्ययोवेतसोमध्यआसाम् ५।१०

एताः । अर्षन्ति । हृद्यात् । समुद्रात् । शतऽव्रजाः । रिपुणा । न ।
अवऽचक्षे । घृतस्य । धाराः । अभि । चाकशीमि । हिरण्ययः ।
वेतसः । मध्ये । आसाम् ॥ ५ ॥ १० ॥

एताआपोघृतधारावा अर्षन्त्यधःपतन्ति शतव्रजाः अपरिमितगतयः सत्यः हृद्यात् हृदयङ्गमात्समुद्रादन्तरिक्षात् रिपुणाजलमोकप्रतिबन्धकारिणाशत्रुणावृत्रेणनावचक्षे नावदर्शनाययथाअदृष्टंभवतितथाअर्षन्ति ताघृतस्यधाराः अभिचाकशीमिअभिपश्यामि कुत्रेतितदुच्यते हिरण्ययोहिरण्मयोवेतसः अप्सुंभवोग्निर्वैद्युतः आसामपांमध्येवर्ततइतिशेषः अत्रघृतस्यधारा अभिचाकशीमीत्यनेनचरमपादेनहोमाधारोग्निर्वैद्युतोग्निरादित्योवोक्तः ॥ ५ ॥

॥ इतितृतीयस्यषष्ठेदशमोवर्गः ॥ १० ॥

अथषष्ठी–

सम्यक्स्रवन्तिसरितोनधेनाअन्तर्हृदामनसापूयमानाः ।
एतेअर्षन्त्यूर्मयोघृतस्यमृगाइवक्षिपणोरीषमाणाः ॥ ६ ॥

सम्यक् । स्रवन्ति । सरितः । न । धेनाः । अन्तः । हृदा । मनसा ।
पूयमानाः । एते । अर्षन्ति । ऊर्मयः । घृतस्य । मृगाःऽइव ।
क्षिपणोः । ईर्षमाणाः ॥ ६ ॥

अस्याग्नेरुपरिसम्यक्स्रवन्ति क्षरन्ति घृतधाराः किमिव सरितोनधेनाः प्रीणयित्र्यो नद्यइव किंच अन्तर्हृदामनसा हृदयमध्यगतेनचित्तेन भावनासचिवेनेतियावत् तेनपूयमानाः शुद्धाःकृताः किंतदेवोच्यते–एतेघृतस्योर्मयोरसाअर्षन्तिगच्छन्ति जुह्वाःसकाशादग्नेरुपरिपतन्ति किमिव क्षिपणोःक्षेपकाद्व्याधादीषमाणाः पलायमानामृगाइव तेयथा कक्षंप्रविशन्ति तद्वत् अनेनशैघ्र्यमुक्तंभवति ॥ ६ ॥

अथसप्तमी—

सिन्धोरिवप्राध्वनेशूघनासोवातप्रमियःपतयन्तियह्वाः ।
घृतस्यधाराअरुषोनवाजीकाष्ठाभिन्दन्नूर्मिभिःपिन्वमानः ॥ ७ ॥

सिन्धोःऽइव । प्रऽअध्वने । शूघनासः । वातऽप्रमियः । पतयन्ति ।
यह्वाः । घृतस्य । धाराः । अरुषः । न । वाजी । काष्ठाः । भिन्दन् ।
ऊर्मिऽभिः । पिन्वमानः ॥ ७ ॥

सिन्धोःस्यन्दमानायानद्याःसकाशादिव उदकानीव प्राध्वनेप्रवणवतिदेशे शूघनासः आशुगन्त्र्यः आशुइतिचशुइतिचक्षिप्रनामनीभवतइतिनिरुक्तम् । वातप्रमियः वायुवत्प्रकृष्टवेगाः यह्वाःमहत्योघृतस्यधाराःपतयन्ति गच्छन्ति अग्नेरुपरि घृतमुदकमितिपक्षेसिन्धोरिवेत्यत्रेवशब्दोनर्थकः स्यन्दनसाधनादन्तरिक्षादुक्तलक्षणाघृतधाराउदकधाराःपतयन्ति गच्छन्ति भूमौ किंच घृतसंस्त्यायाःकाष्ठाः मर्यादाभूतान्परिधीन्भिन्दन्नूर्मिभीरसैःपिन्वमानोवर्धमानोभवति उदकमितिपक्षेकाष्ठाःक्रान्त्वास्थितादिशोभिन्दन्नूर्मिभिस्तरङ्गैःपिन्वमानोभवति तत्रदृष्टान्तः—अरुषोनवाजी आरोचमानोगर्वेणगमनशीलोश्वइव सयथाकाष्ठाभिन्दन्पिन्वमानश्चभवतितद्वत् ॥ ७ ॥

अथाष्टमी—

अभिप्रवन्तसमनेवयोषाःकल्याण्यः१स्मयमानासोअग्निम् ।
घृतस्यधाराःसमिधोनसन्तताजुषाणोहर्यतिजातवेदाः ॥ ८ ॥

अभि । प्रवन्त । समनाऽइव । योषाः । कल्याण्यः । स्मयमानासः ।
अग्निम् । घृतस्य । धाराः । सम्ऽइधः । नसन्त । ताः । जुषाणः ।
हर्यति । जातऽवेदाः ॥ ८ ॥

घृतस्यधाराः अमुमग्निंसमनेव समानमनस्कायोषायोषितःपतिमिवाभिप्रवन्त अभिनमयन्ति निमग्नंकुर्वन्ति कीदृश्यस्ताः कल्याण्योभद्ररूपाः स्मयमानासोहसन्त्यः किंच ताः समिधःसम्यग्दीपयित्र्यःसत्योनसन्त व्याप्नुवन्ति ताएवधाराजुषाणःप्रीयमाणःसेवमानोवाअयं जातवेदाः हर्यति कामयते घृतशब्दस्योदकमितिपक्षे अग्निजातवेदःशब्दाभ्यावैद्युतोग्निरादित्योवागृह्यते तदेवमुदकधाराअभिप्रवन्त नसन्तच सचताःहर्यतीति ॥ ८ ॥

---

नि० ६. १. ।

अथनवमी–

कन्याइववहतुमेतवाउंअञ्ज्यंञ्जानाअभिचाकशीमि ।
यत्रसोमःसूयतेयत्रयज्ञोघृतस्यधाराअभितत्पवन्ते ॥ ९ ॥

कन्याःऽइव । वहतुम् । एतवै । ऊँ इति । अञ्जि । अञ्जानाः ।
अभि । चाकशीमि । यत्र । सोमः । सूयते । यत्र । यज्ञः । घृतस्य ।
धाराः । अभि । तत् । पवन्ते ॥ ९ ॥

कन्याइव अनूढाबालिकाः तायथावहतुमुद्वाहंप्राप्तुम् एतवै ऊँ एतुंपतिंगन्तुम् अञ्जि अञ्जकमाभरणंतेजोवाअञ्जानाव्यञ्जयन्त्यःएवंकुर्वन्त्यः कन्याइव स्वभर्तृभूतमध्वरंवैद्युतंवाग्निमादित्यंवावहतुमेतुमञ्जिव्यञ्जकंतदीयंरूपमञ्जानाः व्यञ्जयन्तीःतादृशीर्घृतस्यधाराः अभिचाकशीम्यभिपश्यामि घृतेनोदकेनचभौमस्यवैद्युतस्यचाग्नेःप्रज्वलनंप्रसिद्धं किंच ताधाराः यत्रसोमः सूयते यत्रचेतरोयज्ञस्तायतेतत्तंयज्ञमभिलक्ष्यपवन्ते उपगच्छन्तिखलु ॥ ९ ॥

अथदशमी–

अभ्यर्षतसुष्टुतिंगव्यमाजिमस्मासुभद्राद्रविणानिधत्त ।
इमंयज्ञंनयतदेवतानोघृतस्यधारामधुमत्पवन्ते ॥ १० ॥

अभि । अर्षत । सुऽस्तुतिम् । गव्यम् । आजिम् । अस्मासु ।
भद्रा । द्रविणानि । धत्त । इमम् । यज्ञम् । नयत । देवता ।
नः । घृतस्य । धाराः । मधुऽमत् । पवन्ते ॥ १० ॥

हेमदीयाऋत्विजः गव्यं गोसमूहरूपं गोसंबन्धिनंवा आजिं संघातमभ्यर्षत अभिगच्छन्त अभिगमयतवा सुष्टुतिंशोभनांस्तुतिम् अत्रगोशब्देन उदकानिगावोवोच्यन्ते तत्संघातोभिप्रेतः अस्मासुयजमानेषु भद्रा स्तुत्यानि द्रविणानि धत्त धारयत स्तुत्याखलुफलंलप्स्यते किञ्च नोस्मदीयमिमंयज्ञंदेवता अत्रयष्टव्यान्देवान्नयत प्रापयत घृतस्यधाराः मधुमद्यथातथापवन्तेगच्छन्ति ॥ १० ॥

धामन्तइत्येषाउत्तरसूक्तस्याद्यावाध्यायोत्सर्जनोपाकरणयोर्विनियुक्ते धामन्तेविश्वमितिप्रतीकमुक्त्वातदन्तेइतिद्व्यृचाइतिसूत्रितत्वात् ।

सैषैकादशी—

धामंन्तेविश्वंभुवंनमधिंश्रितमन्तःसंमुद्रेहृद्य१ंन्तरायुंषि ।
अपामनींकेसमिथेयआभृंतस्तमंश्यामधुंमन्तंतऊर्मिम् ॥ ११ ॥ ११ ॥

धामंन् । ते । विश्वंम् । भुवंनम् । अधिं । श्रितम् । अन्तरितिं ।
समुद्रे । हृदि । अन्तः । आयुंषि । अपाम् । अनींके । सम्ऽइथे । यः ।
आऽभृंतः । तम् । अश्याम् । मधुंऽमन्तम् । ते । ऊर्मिम् ॥ ११ ॥ ११ ॥

तेत्वदीयेधामन्धामनि तेजःस्थाने विश्वंभुवनं कृत्स्नंभूतजातमधिश्रितं तदपिचधामकुत्रकुत्रास्तइत्युच्यते अन्तःसमुद्रे बडबाग्नित्वेनान्तरिक्षस्यमध्ये सूर्यमण्डलत्वेन हृद्यन्तः सर्वप्राणिनांहृदयेवैश्वानरत्वेनायुष्यन्नेसर्वप्राण्याहारत्वेन यद्वा आयुषीत्येतद्धृद्विशेषणं जठराग्निनाखल्वायुर्ध्रियते अपामनीके उदकसंस्त्यायेवैद्युताग्नित्वेनसमिथेसंग्रामेच शौर्याग्निरूपेण एवं सर्वेषुस्थानेषु वर्तमानं धाम तस्मिन्धामनि यऊर्मिः धृतरूपउदकरूपोवारसआभृतः आहृतः स्थापितः तेत्वदीयंतं रसंमधुमन्तं माधुर्योपेतम्अश्याम व्याप्नुयाम ॥ ११ ॥

॥ इतितृतीयस्याष्टमेएकादशोवर्गः ॥ ११ ॥

॥ इतिचतुर्थेमण्डलेपञ्चमोनुवाकः ॥ ५ ॥

॥ इत्थंश्रीबुक्कभूपालसाम्राज्यैकधुरन्धरः ॥ विद्यातीर्थगुरोर्दृष्ट्याप्राप्तसर्वज्ञवैभवः ॥ १ ॥
श्रीमत्सायणमन्त्रीशःसकलागमतत्त्ववित् ॥ दाशतय्यांमाधवीयवेदार्थस्यप्रकाशने ॥ २ ॥
चतुर्थमण्डलंसम्यग्वामदेवेनवीक्षितम् ॥ अष्टोत्तरैस्तुपञ्चाशत्सूक्तैःपञ्चशतैरपि ॥ ३ ॥
एकोनयानवत्याचयुक्तैर्मन्त्रैश्चसंमितम् ॥ व्याकार्षीत्सुखबोधार्थंपश्यतैताद्विमत्सराः ॥ ४ ॥

॥ इतिवामदेवंचतुर्थमण्डलंसमाप्तम् ॥ ४ ॥

## ॥ श्रीगणेशायनमः ॥



आत्रेयेपञ्चमेमण्डलेषडनुवाकाःतत्रप्रथमेनुवाकेचतुर्दशसूक्तानि तत्राबोध्यग्निरितिद्वादशर्चं प्रथमंसूक्तम् अत्रेयमनुक्रमणिका—अबोधिद्वादशबुधगविष्ठिराविति । पञ्चमेमण्डलेनुक्तगोत्रमात्रेयं विद्यादितिपरिभाषितत्वादात्रेयौबुधगविष्ठिरावृषी अनादेशपरिभाषयात्रिष्टुप् मण्डलादिपरिभाषयाग्निर्देवता प्रातरनुवाकेआग्नेयेक्रतौत्रैष्टुभेछन्दसिआश्विनशस्त्रेचैतदादिचत्वारिसूक्तानि तथाचसूत्रितम्—अबोध्यग्निःसमिधेतिचत्वारीति । अध्यायोत्सर्जनोपाकरणयोर्धामन्तेविश्वमितिद्व्यृचत्वेनविनियोगउक्तः ।

तत्रप्रथमा—

ॐअबोध्यग्निःसमिधाजनानांप्रतिधेनुमिवायतीमुषासम् ।
यह्वाइवप्रवयामुज्जिहानाःप्रभानवःसिस्रतेनाकमच्छ ॥ १ ॥

अबोधि । अग्निः । सम्ऽइधा । जनानाम् । प्रति । धेनुम्ऽइव ।
आऽयतीम् । उषसम् । यह्वाःऽइव । प्र । वयाम् । उत्ऽजिहानाः ।
प्र । भानवः । सिस्रते । नाकम् । अच्छ ॥ १ ॥

अयमग्निर्जनानामध्वर्य्वादीनांसमिधासमिद्भिरबोधिप्रबुद्धोभूत् धेनुमिव अग्निहोत्रार्थं धेनुंप्रतियथाप्रातर्बुध्यतेतद्वत् आयतीमागच्छन्तीमुषसंप्रति उषःकालेइत्यर्थः अथप्रबुद्धस्याग्नेर्भानवोज्वालायह्वाः महान्तोवयांशाखांप्रोज्जिहानाः प्रोद्गमयन्तोवृक्षाइव प्रोज्जिहानाः स्वाधिष्ठानंत्यजन्तोनाकमन्तरिक्षम् अच्छाभिमुख्येनप्रसिस्रतेप्रसरन्ति ॥ १ ॥

अथद्वितीया—

अबोधिहोतायजथायदेवानूर्ध्वोअग्निःसुमनाःप्रातरस्थात् ।
समिद्धस्यरुशदर्शिपाजोमहान्देवस्तमसोनिरमोचि ॥ २ ॥

अबोधि । होता । यजथाय । देवान् । ऊर्ध्वः । अग्निः ।
सुऽमनाः । प्रातः । अस्थात् । सम्ऽइद्धस्य । रुशत् । अदर्शि ।
पाजः । महान् । देवः । तमसः । निः । अमोचि ॥ २ ॥

अयंहोताहोमनिष्पादकोग्निः देवान्यष्टव्यान्यजथाय यष्टुमबोधि बुध्यते सोग्निःप्रातःकालेसुमनाःशोभनमनस्कःयजमानानुग्रहबुद्धिःसन् ऊर्ध्वोस्थात् उत्तिष्ठति समिद्धस्यास्यरुशद्रोचमानंपाजोबलंज्वालालक्षणमदर्शि दृश्यते अथ तथाभूतोमहान्देवस्तमसान्धकारान्निरमोचि निर्मुक्तोभूत् ॥ २ ॥

अथतृतीया—

**यदींगणस्यरशनामजीगःशुचिरङ्क्तेशुचिभिर्गोभिरग्निः ।**
**आद्दक्षिणायुज्यतेवाजयन्त्युत्तानामूर्ध्वोअधयज्जुहूभिः ॥ ३ ॥**

यत् । ईम् । गणस्य । रशनाम् । अजीगरिति । शुचिः । अङ्क्ते ।
शुचिऽभिः । गोभिः । अग्निः । आत् । दक्षिणा । युज्यते ।
वाजऽयन्ती । उत्तानाम् । ऊर्ध्वः । अधयत् । जुहूभिः ॥ ३ ॥

यद्यदा ईमयमग्निर्गणस्यसंघात्मकस्यजगतः रशनांरज्जुरिव व्यापारप्रतिबन्धकंतमः अजीगः गिरति गृह्णातिवा समिद्धोग्निर्भवतीत्यर्थः तदा शुचिर्दीप्तोग्निः शुचिभिर्गोभिर्दीप्तैरश्मिभिः अङ्क्ते व्यनक्ति विश्वंजगत् आदनन्तरमेवदक्षिणावृद्धावाजयन्ती अन्नमिच्छन्ती आज्यधारायुज्यतेयुक्ताभवति अथवा दक्षिणाप्रवृद्धाज्यधारायुज्यते तांचधारामुत्तानाम् ऊर्ध्वतानामुपरिविस्तृताम् ऊर्ध्वउन्नतःसन् जुहूभिरधयत् पिबति ॥ ३ ॥

अथचतुर्थी—

**अग्निमच्छादेवयतांमनांसिचक्षूंषीवसूर्येसञ्चरन्ति ।**
**यदींसुवातेउषसाविरूपेश्वेतोवाजीजायतेअग्रेअह्नाम् ॥ ४ ॥**

अग्निम् । अच्छ । देवऽयताम् । मनांसि । चक्षूंषिऽइव । सूर्ये । सम् ।
चरन्ति । यत् । ईम् । सुवाते इति । उषसा । विरूपेइतिविऽरूपे ।
श्वेतः । वाजी । जायते । अग्रे । अह्नाम् ॥ ४ ॥

अग्निमच्छ अग्निंदेवम् आभिमुख्येन देवयतांदेवानात्मनइच्छतांयजमानानांमनांसि संचरन्ति देवायष्टव्यास्तदर्थं कदायंवर्धिष्यतीतिध्यायन्तीत्यर्थः चक्षूंषीव सर्वेषांप्राणिनां यथासूर्येसंचरन्तितद्वत् यद्यदाईमेनमग्निमुपसासह विरूपे द्यावापृथिव्यौ सुवाते जनयतः तदानींश्वेतः प्रकृष्टवर्णोपेतोवाजीवेजनवानग्निरह्नामग्रेप्रातःकाले जायते उत्पद्यते प्रवर्धतइत्यर्थः ॥ ४ ॥

अथपञ्चमी—

जनिष्टहिजेन्योअग्रेअह्नांहितोहितेष्वरुषोवनेषु ।
दमेदमेसप्तरत्नादधानोग्निर्होतानिषसादायजीयान् ॥ ५ ॥

जनिष्ट । हि । जेन्यः । अग्रे । अह्नाम् । हितः । हितेषु । अरुषः ।
वनेषु । दमेऽदमे । सप्त । रत्ना । दधानः । अग्निः । होता ।
नि । ससाद । यजीयान् ॥ ५ ॥

अयमग्निर्जेन्यः उत्पादनीयः अह्नामग्रे उदयकाले जनिष्ट प्रादुरभूत् पश्चात् हि तेषु वनेषुवनोत्थेषुकाष्ठेषु अरुषआरोचमानःसन् हितः स्थापितः पश्चाद्दमेदमे तत्तद्यागगृहे सप्तरत्नारमणीयाः सप्तज्वालाः दधानोधारयमाणः अथवा यजमानेभ्यः सप्तविधानिरत्नानिदधानोग्निर्होताहोमनिष्पादकः सन् यजीयान्यष्टव्यः सन्निषसाद निषण्णोभवति ॥ ५ ॥

जीवतियजमानेमृतइतिशब्दोयदिस्यात्तदानींसुरभिमतीष्टिः कार्या तत्रेयमनुवाक्या सूत्रितंच—अग्निर्होतान्यसीदद्यजीयान्साध्वीमकर्देववीतिंनोअद्येति ।

सैषाषष्ठी—

अग्निर्होतान्यसीदद्यजीयानुपस्थेमातुःसुरभाउलोके ।
युवाकविःपुरुनिःष्ठऋतावाधर्ताकृष्टीनामुतमध्यइद्धः ॥६॥१२॥

अग्निः । होता । नि । असीदत् । यजीयान् । उपऽस्थे । मातुः ।
सुरभौ । ऊँ इति । लोके । युवा । कविः । पुरुनिःऽस्थः ।
ऋतऽवा । धर्ता । कृष्टीनाम् । उत । मध्ये । इद्धः ॥ ६ ॥ १२ ॥

अयमग्निर्होताहोमनिष्पादकः यजीयान्यष्टव्यश्वसन् न्यसीदत् निषसाद कुत्रेतितदु- च्यते—मातुःसर्वस्यनिर्मातुर्भूम्याउपस्थेउत्सङ्गेतत्रापिसुरभौ आज्यादिसौरभ्ययुक्तेलोकेसर्वैर्द्रष्टव्ये स्थाने वेदिलक्षणे उतापिच युवा नित्यतरुणः सर्वत्रमिश्रितोवा कविर्मेधावी पुरुनिष्ठः बहुस्थानः ऋतावा यज्ञवान् धर्ता सर्वस्यधारकः एवंभूतःसन्कृष्टीनामृत्विग्यजमानानांमध्ये इद्धः दीप्तः सन्वर्ततइतिशेषः ॥ ६ ॥

॥ इतितृतीयस्याष्टमेद्वादशोवर्गः ॥ १२ ॥

अथसप्तमी—

प्रणुत्यंविप्रमध्वरेषुसाधुमग्निंहोतारमीळतेनमोभिः ।
आयस्ततानरोदसीऋतेननित्यंमृजन्तिवाजिनंघृतेन ॥ ७ ॥

प्र । नु । त्यम् । विप्रम् । अध्वरेषु । साधुम् । अग्निम् । होतारम् । ईळते । नमःऽभिः । आ । यः । ततान । रोदसी इति । ऋतेन । नित्यम् । मृजन्ति । वाजिनम् । घृतेन ॥ ७ ॥

त्यंतमग्निंनमोभिःस्तुतिभिर्नुक्षिप्रम् ईळते स्तुवन्ति कीदृशंतं विप्रं मेधाविनमध्वरेषुसाधुं फलसाधकं होतारं होमनिष्पादकं योदेवोरोदसीद्यावापृथिव्यौ ऋतेनोदकेन आततान विस्तारितवान् अग्नौप्रास्ताहुतेरादित्यद्वारावृष्ट्युत्पादकत्वात् अथवा ऋतेनसत्यभूतेनहविषा दिवं तथाभूतेनवृष्ट्यादिफलेनभुवंचाततान वाजिनमन्नवन्तंदेवंयजमानाः नित्यंघृतेनोदकेना- ज्येनवामृजन्ति परिचरन्ति ॥ ७ ॥

अथाष्टमी—

मार्जाल्योमृज्यतेस्वेदमूनाःकविप्रशस्तोअतिथिःशिवोनः ।
सहस्रशृङ्गोवृषभस्तदोजाविश्वाँअग्नेसहसाप्रास्यन्यान् ॥ ८ ॥

मार्जाल्यः । मृज्यते । स्वे । दमूनाः । कविऽप्रशस्तः । अतिथिः । शिवः । नः । सहस्रऽशृङ्गः । वृषभः । तत्ऽओजाः । विश्वान् । अग्ने । सहसा । प्र । असि । अन्यान् ॥ ८ ॥

मार्जाल्यः संमार्जनीयोयमग्निः मृज्यतेपरिचर्यतेस्वेस्वकीयेस्थाने कीदृशोयं दमूनादानमनादान्तमनावाकविप्रशस्तः कविभिर्मेधाविभिःप्रशस्तः प्रकर्षेणस्तुत्यः नोस्माकमतिथिरतिथिवत्पूज्यः शिवः सुखकरश्च सहस्रशृङ्गोपरिमितज्वालः वृषभोवर्षिताफलानां तदोजाः यत्प्रसिद्धंबलंतेजोवास्तितदेवौजोयस्यतादृशः सर्वबलस्वरूपइत्यर्थः अथप्रत्यक्षवादः हेअग्ने विश्वान्न्यान्स्वव्यतिरिक्तान्सर्वान्सहसाबलेनप्रासि प्रेतिपरेत्यर्थे परामवसि व्याप्तुंवाप्रभवसि ॥ ८ ॥

अथनवमी–

प्रसृद्योअंग्नेअत्येष्यन्यानाविर्यस्मैचारुतमोबभूथं ।
ईळेन्योंवपुष्योंविभावांप्रियोविशामतिथिर्मानुषीणाम् ॥ ९ ॥

प्र । सद्यः । अग्ने । अति । एषि । अन्यान् । आविः । यस्मै ।
चारुऽतमः । बभूथ । ईळेन्यः । वपुष्यः । विभाऽवा । प्रियः ।
विशाम् । अतिथिः । मानुषीणाम् ॥ ९ ॥

हेअग्ने त्वंयज्ञमासाद्य सद्यस्तदानीमेवान्यान्स्वसमानान् अत्येषि अतिक्रामसि यस्मै चारुतमःसन् आविर्बभूथ किंच त्वमीळेन्यःस्तुत्योवपुष्योवपुष्करोदीप्तिकरोवा विभावा विशिष्टदीप्तिमान्प्रियः प्रियभूतोविशांसर्वेषांप्राणिनां तथाअतिथिः पूज्योमानुषीणांप्रजानां भवसि ॥ ९ ॥

अथदशमी–

तुभ्यंभरन्तिक्षितयोंयविष्ठबलिमंग्नेअन्तिंतओतदूरात् ।
आभन्दिष्ठस्यसुमतिंचिकिद्धिबृहत्तेंअग्नेमहिशर्मभद्रम् ॥१०॥

तुभ्यम् । भरन्ति । क्षितयः । यविष्ठ । बलिम् । अग्ने । अन्तितः ।
आ । उत । दूरात् । आ । भन्दिष्ठस्य । सुऽमतिम् । चिकिद्धि ।
बृहत् । ते । अग्ने । महि । शर्म । भद्रम् ॥ १० ॥

हेयविष्ठ युवतमाग्ने तुभ्यं क्षितयोमनुष्याभरन्ति संपादयन्ति किंबलिंपूजांहविर्लक्षणाम् अन्तितोन्तिकात् उतापिच दूरात् आइतिचार्थे किंच भन्दिष्ठस्य अतिशयेनस्तोतुः सुमतिंस्तुतिमाचिकिद्धि आजानीहि हेअग्ने ते तव शर्मसुखमस्मभ्यंदातव्यंबृहन्महद्भद्रंस्तुत्यंच ॥ १० ॥

अथैकादशी—

आद्यरथंभानुमोभानुमन्तमग्नेतिष्ठंयजतेभिःसमन्तम् ।
विद्वान्पथीनामुर्वन्तरिक्षमेहदेवान्हविरद्यायवक्षि ॥ ११ ॥

आ । अद्य । रथम् । भानुऽमः । भानुऽमन्तम् । अग्ने । तिष्ठ । यजतेभिः । सम्ऽअन्तम् । विद्वान् । पथीनाम् । उरु । अन्तरिक्षम् । आ । इह । देवान् । हविःऽअद्याय । वक्षि ॥ ११ ॥

हेभानुमोदीप्तिमन्नग्ने अद्यास्मिन्यागदिने भानुमन्तं दीप्तिमन्तं समन्तं समीचीनप्रान्तोपेतं रथं यजतेभिर्यष्टव्यैर्देवैःसहातिष्ठारोह विद्वान्यष्टव्यदेवपरिज्ञानवांस्त्वं पथीनां देवयजनमार्गान्प्रति द्वितीयार्थेषष्ठी उर्वन्तरिक्षंप्रभूतेन्तरिक्षे देवान्यष्टव्यान्हविरद्याय हविर्भक्षणायेहावाक्षि आवहसि ॥ ११ ॥

अथद्वादशी—

अवोचामकवयेमेध्यायवचोवन्दारुवृषभायवृष्णे ।
गविष्ठिरोनमसास्तोममग्नौदिवीवरुक्ममुरुव्यञ्चमश्रेत् ॥१२।१३॥

अवोचाम । कवये । मेध्याय । वचः । वन्दारु । वृषभाय । वृष्णे । गविष्ठिरः । नमसा । स्तोमम् । अग्नौ । दिविऽइव । रुक्मम् । उरुऽव्यञ्चम् । अश्रेत् ॥ १२ ॥ १३ ॥

वयमात्रेयाः कवये मेधाविने मेध्याय मेधार्हाय वृषभाय वर्षकायफलानां वृष्णे सेक्त्रे यूने वन्दारु वन्दनशीलंवचः स्तोत्रम् अवोचाम अथऋषिरात्मानंपरोक्षेणैवनिर्दिश्यस्तुतिमुपसंहरति गविष्ठिरोयमृषिर्नमसानमस्कारेणहविषावायुक्तंस्तोमंस्तोत्रमग्नौ अश्रेत् श्रयतिस्म दिविरुक्मंरोचमानमुरुव्यञ्चम् उरुगमनमादित्यमिव ॥ १२ ॥

॥ इतितृतीयस्यषष्ठेत्रयोदशोवर्गः ॥ १३ ॥

कुमारंमातेतिद्वादशर्चंद्वितीयंसूक्तम् अत्रेःपुत्रःकुमारऋषिःजरनाम्नःपुत्रोवृशोवा उभौवात्रऋषी । कमेतंविज्योतिषेत्यनयोस्तुवृशएवनोभौ नकुमारः अन्त्यापङ्क्तिःपञ्चाशदक्षराशक्करी शिष्टास्त्रिष्टुभः अग्निर्देवता अत्रानुक्रमणिका—कुमारंकुमारोवृशोवाजारउभौवाशक्कर्यन्तंकंवीत्यृचोस्तु वृशएवेति । प्रातरनुवाकाश्विनशस्त्रयोरस्यापिसूक्तस्यविनियोगउक्तःपूर्वसूक्तेनसह ।

तत्रप्रथमा—

कुमारंमातायुवतिःसमुब्धंगुहाबिभर्तिनददातिपित्रे ।
अनीकमस्यनमिनज्जनासःपुरःपश्यन्तिनिहितमरतौ ॥ १ ॥

कुमारम् । माता । युवतिः । सम्ऽउब्धम् । गुहा । बिभर्ति ।
न । ददाति । पित्रे । अनीकम् । अस्य । न । मिनत् । जनासः ।
पुरः । पश्यन्ति । निऽहितम् । अरतौ ॥ १ ॥

शाट्यायनब्राह्मणोक्तइतिहासइहोच्यते ॥ राजात्रैवृष्णइक्ष्वाकुर्ह्यरुणोभवदस्यच ॥ १ ॥ पुरोहितोवृशोजारऋषिरासीत्तदाखलु ॥ संगृह्णन्तिरथात्राज्ञांरक्षणायपुरोहिताः ॥ २ ॥ त्र्यरुणस्यवृशोरश्मिसंजग्राहपुरोहितः ॥ कुमारोवर्त्मनिक्रीडन्नथचक्रेणघातितः ॥ ३ ॥ छिन्नः कुमारश्चक्रेणममाराथपुरोहितः ॥ त्वंहन्तास्येतिराजानंराजाचापिपुरोहितम् ॥ ४ ॥ त्वंहन्तास्यकुमारस्यनाहमित्यब्रवीत्तदा ॥ यतस्त्वंरथवेगस्यनियन्तातस्त्वयाहतः ॥ ५ ॥ रथस्वामीयतोराजन् तस्मात्त्वंतस्यघातकः ॥ एवंविवदमानौताविक्ष्वाकून्प्रष्टुमागतौ ॥ ६ ॥ तौपप्रच्छतुरिक्ष्वाकून्केनासौनिहतोद्विजाः ॥ तेब्रुवन्नथयन्तारंहन्तारंवृशसंज्ञकम् ॥ ७ ॥ सवृशोवार्शसाम्नातंकुमारं समजीवयत् ॥ एवमाख्यायतत्रैवपुनरन्यदुदीरितम् ॥ ८ ॥ यतइक्ष्वाकवोरागाद्धन्तारमृषिमब्रुवन् ॥ तस्मात्तेषांगृहेष्वग्नेस्तेजोनिर्गतमेपुच ॥ ९ ॥ गृहेपाकादयोनासन्तत्कारणमचिन्तयन् ॥ वृशंकुमारहन्तारंयदवोचामतेननः ॥ १० ॥ अपक्रामद्धरोवह्नेराह्वयामवृशंवयम् ॥ इतिनिश्चित्यतमृषिमाह्वयामासुरादरात् ॥ ११ ॥ सआगत्यततःशीघ्रंतेषामग्नेर्हरोभवेत् ॥ इतिवार्शेनसाम्नासावकामयतपूर्ववत् ॥ १२ ॥ एवंगायन्सऋषिर्ब्रह्महत्यांभार्याजातांत्रसदस्योर्नृपस्य ॥ पिशाचवेषांहरआदायचाग्नेर्गृहान्नीत्वाकशिपौस्थापयन्तीम् ॥ १३ ॥ दृष्ट्वासम्यक्तद्धरस्तोषयित्वासाम्नापश्चाद्योजयामासचाग्निम् ॥ ततःसतेजाःसंजातोभवत्पाकादिपूर्ववत् ॥ एवंशाट्यायनेनोक्तंताण्डकोक्तमथोच्यते ॥ १४ ॥ वृशःपुरोधाअभवत्त्रसदस्योर्महीपतेः ॥ सरथंधावयन्राजाब्राह्मणस्यकुमारकम् ॥ १५ ॥ चिच्छेदरथचक्रेणप्रमादात्सोब्रवीद्वृशम् ॥ पुरोहितेवर्तमाने त्वयिमांहन्तिरागता ॥ १६ ॥ एषात्वयापनेतव्याऋषिमित्यब्रवीन्नृपः ॥ सऋषिर्वार्शसाम्नातंकुमारमुदजीवयत् ॥ १७ ॥ माताकुमारस्योत्पादयित्रीयुवतिर्यौवनोपेताकुमारंपथिसंचरन्तंसमुब्धंचक्रेणहतं गुहा गुहायां बिभर्तिधारयति नददातिपित्रेतस्यजनकाय यद्वा मातासर्वस्य निर्मात्री पृथिवी समुब्धं सम्यक्निगूढं गुहाबिभर्तिनददातिपित्रे अस्यकुमारस्यानीकंरूपं मिनत्

हिंसितं जनासोजना: नपश्यन्ति किन्तु अरतौ अरमणेदेशेनिहितंस्थितं पुरः पुरोदेशेपश्यन्ति अथवा अयंवृशेनपुनरुज्जीवितःकुमारआत्मानमपरोक्षतयावक्तिकथयति जारोवा तंजीवयित्वावक्ति अथवासूक्तस्याग्नेयत्वात्कुमारइत्यग्निरुच्यते तंमाता अरणिर्युवतिर्निश्रयन्ती समुब्धं निगूढं गुहायांबिभर्ति पित्रे उत्पादकाय यजमानायनददाति अस्याग्नेर्मिनत्हिंसत् दाहकमनीकंतेजो जनानपश्यन्ति किंतु अरतावरण्यांहितंपश्यन्ति ॥ १ ॥

अथद्वितीया–

कमेतंत्वंयुवतेकुमारंपेषीबिभर्षिमहिषीजजान ।
पूर्वीर्हिगर्भःशरदोववर्धापश्यञ्जातंयदसूतमाता ॥ २ ॥

कम् । एतम् । त्वम् । युवते । कुमारम् । पेषी । बिभर्षि । महिषी । जजान । पूर्वीः । हि । गर्भः । शरदः । ववर्ध । अपश्यम् । जातम् । यत् । असूत । माता ॥ २ ॥

अत्राग्नेरुत्पाद्यमानत्वात्कुमारशब्देनव्यवहारः हेयुवते त्वंकमेतंकुमारं पेषी हिंसिकापिशाचिकासती बिभर्षि एवंवृशाख्योमहर्षिः कशिपुनाच्छन्नमग्नेर्हरोब्रूते त्वया अनुत्पादितत्वाद्धारणमनुचितमित्यर्थः महिषीमहतीपूजनीया अरणिरेनंजजानाजनयत् तदेवाह गर्भः शिशोर्ग्राहकः अरण्याःसंबन्धीगर्भोहियस्मात्पूर्वीःशरदः गताननेकान्संवत्सरान्ववर्ध ववृधे अहंचततोजातम् अपश्यम् यद्यस्मान्माता अरणिरसूत उदपादयत् राजकुमारपक्षे हेयुवते भूदेवि कमेतंकुमारंपेषीसतीबिभर्षि अवशिष्टंकुमारजननपरतयायोज्यम् । एवमुत्तरत्रापिकुमाराग्निहरसोःपरत्वेनयथोचितंव्याख्येयम् ॥ २ ॥

अथतृतीया–

हिरण्यदन्तंशुचिवर्णमारात्क्षेत्रादपश्यमायुधामिमानम् ।
ददानोअस्माअमृतंविपृक्वत्किंमामनिन्द्राःकृणवन्ननुक्थाः ॥ ३ ॥

हिरण्यऽदन्तम् । शुचिऽवर्णम् । आरात् । क्षेत्रात् । अपश्यम् । आयुधा । मिमानम् । ददानः । अस्मै । अमृतम् । विपृक्वत् । किम् । माम् । अनिन्द्राः । कृणवन् । अनुक्थाः ॥ ३ ॥

हिरण्यदन्तं हिरण्यसदृशदन्तस्थानीयज्वालोपेतं शुचिवर्णप्रदीप्तवर्णम् आयुधा आयुधानि आयुधस्थानीयान्विस्फुलिङ्गान्ज्वालावामिमानंनिर्मिमाणम् अग्निमारात्समीपे क्षेत्रात् क्षेत्रे देशे अपश्यं पश्येयम् एवंवृशःकामयते अहमस्माअग्नयेअमृतमविनाश्यमृतत्वसाधनंवाविपृक्तत् सर्वतोव्याप्तं हविःस्तोत्रंवाददानोदातास्मि मामनिन्द्राः इन्द्रःपरमैश्वर्योग्निः तद्रहिताअनिन्द्राः इन्द्रमयजन्तइत्यर्थः अनुक्थाः अस्तुतयः इन्द्रमस्तुवन्तश्च किंकृणवन् किंकुर्युः ॥ ३ ॥

अथचतुर्थी–

**क्षेत्रा॑दपश्यंसनु॒तश्चर॑न्तंसु॒मद्यू॒थंनपु॒रुशोभ॑मानम् ।**
**नताअ॑गृभ्र॒न्नज॑निष्ट॒हिषःप॑लि॑क्नी॒रिद्यु॑व॒तयो॑भवन्ति ॥ ४ ॥**

क्षेत्रा॑त् । अ॒प॒श्य॒म् । स॒नु॒तरिति॑ । चर॑न्तम् । सु॒ऽमत् । यू॒थम् । न ।
पु॒रु । शोभ॑मानम् । न । ताः । अ॒गृ॒भ्र॒न् । अज॑निष्ट । हि । सः ।
प॒लि॑क्नीः । इत् । यु॒व॒तयः॑ । भ॒व॒न्ति॒ ॥ ४ ॥

अहंवृशः इदानींक्षेत्रात्क्षेत्रे सनुतः अन्तर्हितनामैतत् निगूढंचरन्तम् आरण्यं यूथंन गवांसमूहमिव सुमत्स्वयमेव पुरुबहु शोभमानमपश्यं पश्यामि पुराहरसः पिशाच्याक्रमणकाले ताज्वालानिर्वीर्यानागृभ्रन्नागृह्णन्तनरः इदानींसोग्निरजनिष्टहि हरसाप्रादुरभूत्खलु अतएवहेतोः पलिक्नीरित् पलिक्न्यः पलिताःज्वालाएवेदानींयुवतयोभवन्ति ॥ ४ ॥

अथपञ्चमी–

**केमे॑मर्य॒कंवियव॑न्त॒गोभि॒र्नयेषां॑गो॒पाअर॑णश्चि॒दास॑ ।**
**यईंजगृ॒भुरव॒तेसृ॒जन्त्वाजा॑तिप॒श्वउप॑नश्चि॒कि॒त्वान् ॥ ५ ॥**

के । मे॒ । म॒र्य॒कम् । वि । य॒व॒न्त॒ । गोभिः॑ । न । येषा॑म् । गो॒पाः ।
अर॑णः । चि॒त् । आस॑ । ये । ई॒म् । ज॒गृ॒भुः । अव॑ । ते । सृ॒ज॒न्तु॒ ।
आ । अ॒जा॒ति॒ । प॒श्वः । उप॑ । नः॒ । चि॒कि॒त्वान् ॥ ५ ॥

के मे मदीयं मर्यकं मर्त्यसंघं राष्ट्रं गोभिःसहवियवन्त वियुक्तमकुर्वन् गाःभृत्यांश्च वियोजयन् येषांगोपाः अस्माकंगोपयिता अरणश्चिदभिगन्तानासबभूव सोयमग्निः येद्वेषिणः

ईमेनंजनसङ्घंराष्ट्रंजगृहुः गृह्णन्ति तेअवसृजन्तु नश्यन्तु किंच चिकित्वांश्चेतनावानस्माद्विपयज्ञा-नवानग्निर्नोस्माकंपश्वःपशूनुप आअजाति उपागच्छति ॥ ५ ॥

अथषष्ठी–

व॒सां राजा॑नं वस॒तिं जना॑ना॒मरा॑तयो॒ नि द॑धु॒र्मर्त्ये॑षु ।
ब्रह्मा॒ण्यत्रे॒रव॒ तं सृ॑जन्तु निन्दि॒तारो॒ निन्द्या॑सो भवन्तु ॥ ६ ॥ १४ ॥

व॒साम् । राजा॑नम् । व॒स॒तिम् । जना॑नाम् । अरा॑तयः । नि । द॒धुः ।
मर्त्ये॑षु । ब्रह्मा॑णि । अत्रेः॑ । अव॑ । तम् । सृ॒ज॒न्तु॒ । नि॒न्दि॒तारः॑ ।
निन्द्या॑सः । भ॒व॒न्तु॒ ॥ ६ ॥ १४ ॥

वसां वसतां प्राणिनां राजानंस्वामिनं जनानांप्राणिनां वसतिम् आवासभूतम् ञ्यरुणम् उक्तलक्षणमग्निंवा अरातयोनिदधुरगोपयन् मर्त्येषुलोकेषुमध्ये अत्रेरत्रिगोत्रस्यवृशस्य ब्रह्माणि मन्त्राःस्तोत्राणिवा तंकुमारमग्निंवा अवसृजन्तु यद्वा वृशस्यब्रह्माणि अत्रेःअत्रिगोत्रं कर्मणिषष्ठी तंकुमारवमसृजन्तु विसृजन्तु निन्दितारोस्मन्निन्द्यासोस्माभिर्निन्द्याभवन्तु अत्रेर्ब्रह्माणीत्येतदुपजीव्य वृशमप्यात्रेयंवदन्ति आत्रेयःकुमारइतिपक्षे सएवप्राणमयमात्मानमवसृजन्त्वित्याशास्ते ॥ ६ ॥

॥ इतितृतीयस्याष्टमेचतुर्दशोवर्गः ॥ १४ ॥

अञ्जःसवआहवनीयोपस्थानेशुनश्चिच्छेपमित्येषा अग्निमाहवनीयमुपस्थापयांचकार शुन-श्चिच्छेपंनिदितंसहस्रादितिब्राह्मणम्[१] ।

सैषासप्तमी–

शुन॑श्चि॒च्छेपं॒ निदि॑तं स॒हस्रा॒द्यूपा॑दमुञ्चो॒ अश॑मिष्ट॒ हि षः ।
ए॒वास्मद॑ग्ने॒ वि मु॑मुग्धि॒ पाशा॒न्होत॑श्चिकित्व इ॒ह तू नि॒षद्य॑ ॥ ७ ॥

शु॒नः॒ऽशेप॑म् । चि॒त् । निऽदि॑तम् । स॒हस्रा॑त् । यूपा॑त् । अ॒मु॒ञ्चः॒ ।
अश॑मिष्ट । हि । सः । ए॒व । अ॒स्मत् । अ॒ग्ने॒ । वि ।
मु॒मु॒ग्धि॒ । पाशा॑न् । होत॒रिति॑ । चि॒कि॒त्वः॒ । इ॒ह । तु । नि॒ऽसद्य॑ ॥ ७ ॥

---

१ ऐ० ब्रा० ७. १६. ।

हेअग्ने निदितंनितरांबद्धं शुनःशेपमृषिं सहस्रादनेकरूपाद्यूपादमुञ्चः अमोचयः चिदिति पूरणः शुनःशेपमितिपदस्यमध्येपदान्तरस्यसंहितायांव्यत्ययेनावस्थितिः सऋषिरशमिष्टहि शान्तवान्खलु यद्वा सहियस्मादशमिष्ट स्तुतिकर्मैतत् अस्तावीत् तस्मादमुञ्चइतिसंबन्धः एव एवमस्मदस्मत्तः पाशान्विमुमुग्धि विमोचय हेहोतर्हेचिकित्वः चेतनावन्नग्ने इहतु वेद्यांनिषद्यावस्थाय ॥ ७ ॥

अथाष्टमी–

हृणीयमानोअपहिमदैयेःप्रमेदेवानांव्रतपाउवाच ।
इन्द्रोविद्वाँअनुहित्वाचचक्षतेनाहमग्नेअनुशिष्टआगाम् ॥ ८ ॥

हृणीयमानः । अप । हि । मत् । ऐयेः । प्र । मे । देवानाम् ।
व्रतऽपाः । उवाच । इन्द्रः । विद्वान् । अनु । हि । त्वा । चचक्ष ।
तेन । अहम् । अग्ने । अनुऽशिष्टः । आ । अगाम् ॥ ८ ॥

हेअग्ने हृणीयमानः क्रुध्यंस्त्वं मत् मत्तः अपैयेर्हि अपागाः खलु ईङ्गतावित्यस्मात्श्यन्विकरणाल्लङि मध्यमेछान्दसेपरस्मैपदे अडागमेवृद्धौव्यत्ययेनश्यनोकारस्यएकारेचकृतेरूपम् मेमह्यंदेवानां व्रतपाः कर्मणःपालकः इन्द्रःप्रोवाचहि सएवविद्वान्त्वामनुचचक्ष त्वांददर्श तेनानुशिष्टोहं हेअग्ने त्वामागामिति एवंवृशआह ॥ ८ ॥

अथनवमी–

विज्योतिषाबृहताभात्यग्निराविर्विश्वानिकृणुतेमहित्वा ।
प्रादेवीर्मायाःसहतेदुरेवाःशिशीतेशृङ्गेरक्षसेविनिक्षे ॥ ९ ॥

वि । ज्योतिषा । बृहता । भाति । अग्निः । आविः । विश्वानि ।
कृणुते । महिऽत्वा । प्र । अदेवीः । मायाः । सहते । दुःऽएवाः ।
शिशीते । शृङ्गे इति । रक्षसे । विऽनिक्षे ॥ ९ ॥

अयमग्निर्ज्योतिषातेजसाबृहतामहताविभाति विशेषेणदीप्यते अथ तथाभूतःसन्महित्वा स्वमहत्त्वेन विश्वानिसर्वाणिपदार्थजातानि आविष्कृणुते प्रकटीकरोति एवंप्रवृद्धोग्निरदेवीः अदेवनशीलाः आसुरीर्मायाः दुरेवाः दुःखगमनाः प्रसहते अभिभवति किंच

शिशीते तीक्ष्णीकरोति शृङ्गे शृङ्गाणि शृङ्गसदृशीः हिंसिकावाज्वालाः शिशीते तीक्ष्णीकरोति किमर्थं रक्षसे विनिक्षे रक्षसोनाशाय निश्यतिशृङ्गेरक्षसोविनिक्षणनायेतियास्कः ॥ ९ ॥

अथदशमी–

उतस्वानासोदिविषन्त्वग्नेस्तिग्मायुधारक्षसेहन्तवाउ ।
मदेचिदस्यप्ररुजन्तिभामानवरन्तेपरिबाधोअदेवीः ॥ १० ॥

उत । स्वानासः । दिवि । सन्तु । अग्नेः । तिग्मऽआयुधाः । रक्षसे । हन्तवै । ऊँ इति । मदे । चित् । अस्य । प्र । रुजन्ति । भामाः । न । वरन्ते । परिऽबाधः । अदेवीः ॥ १० ॥

उतापिचाग्नेःस्वानासः शब्दंकुर्वाणाःज्वालादिविषन्तु द्युलोकेप्रादुर्भवन्तु किमर्थं तिग्मायुधाः तीक्ष्णायुधस्थानीयाज्वालाः रक्षसेहन्तवाउ रक्षसोहननाय उइतिपूरणः मदेचिद्धर्षेसति अस्याग्नेर्भामाः क्रोधादीप्तयोवा प्ररुजन्ति प्रकर्षेणभङ्गंगच्छन्ति पीडयन्तिवारक्षांसि परिबाधः परितोबाधिकाः अदेवीरदेवनाः आसुर्यः सेनानवरन्ते नवारयन्त्येनम् ॥ १० ॥

अथैकादशी–

एतंतेस्तोमंतुविजातविप्रोरथंनधीरःस्वपाअतक्षम् ।
यदीदग्नेप्रतित्वंदेवहर्याःस्वर्वतीरपएनाजयेम ॥ ११ ॥

एतम् । ते । स्तोमम् । तुविऽजात । विप्रः । रथम् । न । धीरः । सुऽअपाः । अतक्षम् । यदि । इत् । अग्ने । प्रति । त्वम् । देव । हर्याः । स्वःऽवतीः । अपः । एन । जयेम ॥ ११ ॥

हेतुविजात बहुभावमापन्नाग्ने तेत्वदर्थमेतंस्तोमम् एतत्स्तोत्रं विप्रोमेधावी स्तोतारथं न रथमिव धीरःस्वपाः शोभनकर्माहम् अतक्षं समपादयं हेअग्ने देव त्वं यदीत् यद्येव एनंस्तोमंप्रतिहर्याः प्रतिकामयेथाः तर्हिस्वर्वतीः स्वरणवतीर्व्याप्तिमतीरपएनेनजयेमप्राप्नुयाम ॥ ११ ॥

१ नि० ४. १८.

अथद्वादशी—

तुविग्रीवोवृषभोवावृधानोशत्र्वर्यःसमजातिवेदः।
इतीमम्ग्निममृताअवोचन्बर्हिष्मतेमनवेशर्मयंसद्ध-
विष्मतेमनवेशर्मयंसत् ॥ १२ ॥ १५ ॥

तुविऽग्रीवः। वृषभः। ववृधानः। अशत्रु। अर्यः। सम्। अजाति।
वेदः। इति। इमम्। अग्निम्। अमृताः। अवोचन्। बर्हिष्मते।
मनवे। शर्म। यंसत्। हविष्मते। मनवे। शर्म। यंसत् ॥ १२ ॥ १५ ॥

तुविग्रीवोबहुज्वालः प्रभूतग्रीवोवा वृषभोवर्षिताकामानां ववृधानोवर्धमानोग्निरर्यः अरेर्वेदोधनम् अशत्रु अकण्टकं समजाति संयोजयति इतीममर्थमग्निम् अमृताअन्येदेवाअवोचन् यस्मादेवंतस्माद्बर्हिष्मते यागवते मनवे मनुष्याय यजमानाय शर्म सुखं यंसत् यच्छतु हविष्मतेचशर्मयंसत् ॥ १२ ॥

॥ इतितृतीयस्याष्टमेपञ्चदशोवर्गः ॥ १५ ॥

त्वमग्नेवरुणइतिद्वादशर्चंतृतीयंसूक्तम् आत्रेयस्यवसुश्रुतस्यार्षं त्रैष्टुभमाग्नेयं त्वमग्नेवसुश्रुतइत्यनुक्रान्तं प्रातरनुवाकाश्विनशस्त्रयोर्विनियोगः अबोध्यग्निरित्यत्रोक्तः ।

तत्रप्रथमा—

त्वमग्नेवरुणोजायसेयत्त्वंमित्रोभवसियत्समिद्धः।
त्वेविश्वेसहसस्पुत्रदेवास्त्वमिन्द्रोदाशुषेमर्त्याय ॥ १ ॥

त्वम्। अग्ने। वरुणः। जायसे। यत्। त्वम्। मित्रः। भवसि।
यत्। सम्ऽइद्धः। त्वे इति। विश्वे। सहसः। पुत्र। देवाः।
त्वम्। इन्द्रः। दाशुषे। मर्त्याय ॥ १ ॥

हेअग्ने त्वं वरुणस्तमसांवारकोरात्र्यभिमानिदेवोपित्वमेव यद्यदाजायसे किंच त्वंमित्रोहरभिमानीदेवःप्रमीतेस्त्राता यद्यदा समिद्धस्त्वम् उत्पन्नमात्रःसन्तमोनिवारयासि प्रवृद्धःसन्हित-

कारीभवसीत्यर्थः तदा त्वे त्वयि विश्वेसर्वेपिदेवावर्तन्ते त्वद्दत्तेनहविषातेषांजीवनात् तेदेवाः बिभ्यतोग्निंप्राविशन्नितिहिश्रुतेः । हेसहसस्पुत्र बलेनमथ्यमानत्वात् किञ्च त्वमिन्द्रःस्वामी दाशुषे हविर्दात्रेमर्त्याय यजमानायभवसि ॥ १ ॥

विवाहेचतुर्थ्यामाज्याहुतौत्वमर्यमेत्येषा सूत्रितंच—त्वमर्यमाभवसियत्कनीनामितिविवाहे चतुर्थीमिति ।

अथद्वितीया—

त्वमर्यमाभवसियत्कनीनांनामस्वधावन्गुह्यंबिभर्षि ।
अञ्जन्तिमित्रंसुधितंनगोभिर्यद्दम्पतीसमनसाकृणोषि ॥ २ ॥

त्वम् । अर्यमा । भवसि । यत् । कनीनाम् । नाम । स्वधाऽवन् ।
गुह्यम् । बिभर्षि । अञ्जन्ति । मित्रम् । सुऽधितम् । न । गोभिः ।
यत् । दम्पती इति दम्ऽपती । सऽमनसा । कृणोषि ॥ २ ॥

हेअग्ने त्वम्अर्यमाभवसि सर्वेषांनियमितासि यद्यदा कनीनांकन्यकानांसंबन्ध्यसि किंच हेस्वधावन् हविर्लक्षणान्नवन् गुह्यंगोपनीयंनामबिभर्षि वैश्वानरइति तन्नाम सुधितं सुष्ठुनिहितं मित्रंन मित्रमिवगोभिः विकारेप्रकृतिशब्दः गोविकारैःक्षीरादिभिःअञ्जन्ति अनक्ति यद्य-स्माद्दम्पती जायापती समनसा समानमनस्कौ कृणोषि करोषि ॥ २ ॥

अथतृतीया—

तवश्रियेमरुतोमर्जयन्तरुद्रयत्तेजनिमचारुचित्रम् ।
पदंयद्विष्णोरुपमंनिधायितेनपासिगुह्यंनामगोनाम् ॥ ३ ॥

तव । श्रिये । मरुतः । मर्जयन्त । रुद्र । यत् । ते । जनिम । चारु ।
चित्रम् । पदम् । यत् । विष्णोः । उपऽमम् । निऽधायि । तेन । पासि ।
गुह्यम् । नाम । गोनाम् ॥ ३ ॥

---

१ तै० सं० ६. ३. २ ।

अनयाग्नेर्माध्यमिकीमूर्तिरुच्यते हेअग्ने तवश्रिये श्रयणाय मरुतःअपोन्तरिक्ष्यामर्जयन्त मार्जयन्ति हेरुद्र वृष्टयारुद्रवद्द्रविततरग्ने ते तव यज्जनिम जन्म वैद्युतलक्षणं चारु चरणीयं चित्रं चायनीयंच तत्कथमितिचेदुच्यते- विष्णोर्व्यापनशीलस्यदेवस्योपममुपमेयं गुह्यम् अगम्यं यत्पदंनिधायि अनेनान्तरिक्षमुक्तं उपमेयमिवविष्णोर्मध्यमंपदं तस्मान्नान्तरिक्षंपश्यन्तीतिब्राह्मणम् । तेनगोनामुदकानांगुह्यंनामनामानिपासि रक्षसि ॥ ३ ॥

अथचतुर्थी-

**तवंश्रियासुदृशोदेवदेवाःपुरूदधानाअमृतंसपन्त ।**
**होतारमग्निंमनुषोनिषेदुर्दशस्यन्तउशिजःशंसमायोः ॥ ४ ॥**

तव । श्रिया । सुऽदृशः । देव । देवाः । पुरु । दधानाः । अमृतम् । सपन्त । होतारम् । अग्निम् । मनुषः । नि । सेदुः । दशस्यन्तः । उशिजः । शंसम् । आयोः ॥ ४ ॥

हेदेवाग्ने सुदृशः तवश्रिया समृद्ध्यादेवाः इन्द्रादयः पुरु अत्यधिकं दधानाः त्वयिप्रीतिंधारयन्तः अमृतंसपन्त स्पृशन्ति होतारंहोमनिष्पादकमग्निं मनुषोमनुष्यानिषेदुः परिचरन्तिऋत्विजः किंकुर्वन्तः दशस्यन्तः हविर्वितरन्तः शंसं फलमुशिजःकामयमानस्यायोर्मनुष्यस्ययजमानस्यार्थम् ॥ ४ ॥

अथपञ्चमी-

**नत्वद्धोतापूर्वोअग्नेयजीयान्नकाव्यैःपरोअस्तिस्वधावः ।**
**विशश्चयस्याअतिथिर्भवासिसयज्ञेनवनवद्देवमर्तान् ॥ ५ ॥**

न । त्वत् । होता । पूर्वः । अग्ने । यजीयान् । न । काव्यैः । परः । अस्ति । स्वधाऽवः । विशः । च । यस्याः । अतिथिः । भवासि । सः । यज्ञेन । वनवत् । देव । मर्तान् ॥ ५ ॥

हेअग्ने त्वत्त्वत्तोन्योनास्ति होता पूर्वःपूरकः पुराणोवा यजीयानतिशयेनपूज्यः यष्टा वा काव्यैःस्तोत्रैःस्तुत्यः परः परस्तात्परस्मिन्नपिकालेनास्ति हेदेव हेस्वधावः अन्नवन्

१ तै० सं० ५. ६. ८.।

यस्याविशःप्रजायाऋत्विग्रूपायाअतिथिर्भवासि अतिथिवत्पूज्योभवसि सयज्ञेन मर्तान्दुरेवृ
वनवत् वृश्चति हिनस्ति यद्वा मर्तान्परिचारकान्वनवत्संभजेत् ॥ ५ ॥

अथषष्ठी–

**वयमग्नेवनुयामत्वोतावसूयवोहविषाबुध्यमानाः ।**
**वयंसमर्येविदथेष्वह्नांवयंरायासहसस्पुत्रमर्तान् ॥ ६ ॥ १६ ॥**

वयम् । अग्ने । वनुयाम । त्वाऽऊताः । वसुऽयवः । हविषा ।
बुध्यमानाः । वयम् । सऽमर्ये । विदथेषु । अह्नाम् । वयम् । राया ।
सहसः । पुत्र । मर्तान् ॥ ६ ॥ १६ ॥

हेअग्ने वयंयजमानाः त्वोताः त्वयारक्षिताःसन्तः वनुयाम शत्रून्पीडयाम संभजेमहि वाधनं कीदृशावयं वसूयवोवसुकामाः हविषा त्वां बुध्यमानाबोधयन्तः वयंसमर्ये समरणे जयेम शत्रूनितिशेषः विदथेषुयागेषुप्राप्नुयामबलं यद्वा वनुयामेत्येतदनुषज्यते अह्नांसर्वेष्वहःसु किंचवयं हेसहसस्पुत्र बलस्यपुत्र पालकवाग्ने रायाधनेनसहमर्तान्पुत्रभृत्यादीन्लभेमहि ॥ ६ ॥

॥ इतितृतीयस्याष्टमेषोडशोवर्गः ॥ १६ ॥

अथसप्तमी–

**योनआगोअभ्येनोभरात्यधीदघमघशंसेदधात ।**
**जहीचिकित्वोअभिशस्तिमेतामग्नेयोनोमर्चयतिद्वयेन ॥ ७ ॥**

यः । नः । आगः । अभि । एनः । भराति । अधि । इत् । अघम् ।
अघऽशंसे । दधात । जहि । चिकित्वः । अभिऽशस्तिम् । एताम् ।
अग्ने । यः । नः । मर्चयति । द्वयेन ॥ ७ ॥

योमर्त्यः आगः अपराधम् एनःपापंचनोस्मभ्यमभिभराति अभितःकरोति तस्मिन्नघशंसे अघंपापम् अधिदधात ददात्वग्निः इत्पूरणः आगोपराधंयोमह्यमिदंकरोतितस्माएवाग्निस्तत्करोत्वित्यर्थः अथप्रत्यक्षेणोच्यते–हेअग्ने एतामभिशस्तिंजहि उत्तरत्रयच्छब्दश्रवणात् तदानुगुण्येनैनमभिशंसकमितिव्याख्येयं योभिशस्ता नोस्मान्द्वयेनोक्तेनागसैनसावामर्चयतिबाधतेतमिति ॥ ७ ॥

अथाष्टमी–

त्वामुस्याव्युषिदेवपूर्वेंदूतंकृण्वानअयजन्तहव्यैः ।
संस्थेयदंग्नईयसेरयीणांदेवोमर्तैर्वसुंभिरिध्यमानः ॥ ८ ॥

त्वाम् । अस्याः । विऽउषि । देव । पूर्वें । दूतम् । कृण्वानाः ।
अयजन्त । हव्यैः । सम्ऽस्थे । अग्ने । यत् । ईयसे । रयीणाम् ।
देवः । मर्तैः । वसुंऽभिः । इध्यमानः ॥ ८ ॥

हेअग्ने त्वामस्यारात्रेः व्युषि व्युष्टायाम् उषसीत्यर्थः पूर्वे पुरातनायजमानाः दूतंदेवानांप्रेरकं कृण्वानाः कुर्वाणाः अयजन्तहव्यैर्हविर्भिःसाधनैः रयीणां हविर्लक्षणानां संस्थे संस्थाने आसादनेसति हेअग्ने यद्यदाईयसे गच्छसि देवोद्योतमानोमर्तैर्मनुष्यैर्ऋत्विग्भिर्वसुभिर्वासकैरिध्यमानःसमिध्यमानःसन् ॥ ८ ॥

अथनवमी–

अवंस्पृधिपितरंयोधिविद्वान्पुत्रोयस्तेसहसःसूनऊहे ।
कदाचिंकित्वोअभिचंक्षसेनोग्नेकदाँऋतचिद्यातयासे ॥ ९ ॥

अव । स्पृधि । पितरम् । योधि । विद्वान् । पुत्रः । यः । ते । सहसः ।
सूनो इति । ऊहे । कदा । चिकित्वः । अभि । चक्षसे । नः ।
अग्ने । कदा । ऋतऽचित् । यातयासे ॥ ९ ॥

हेसहसःसूनो बलस्यपुत्राग्ने त्वमवस्पृधि पारय योधि पृथक्कुरुपापात् यःपुत्रः पुत्रस्थानीयः तव योयजमानः ते त्वांपितरंपालकं पितृभूतं विद्वान् जानन्नूहे वहतिहविः तमेवंकुर्विति ऋषिरात्मानंपरोक्षेणाह हव्यवाळग्निरजरःपितानइतिहिवक्ष्यति । यद्वा पितृपुत्रभावोव्यत्यस्तः पितरंपितृवद्रक्षकं यजमानमवस्पृधि योधिच यस्त्वंपुत्रः पुत्रवत्सदारक्षणीयः त्वंपुत्रोभवसियस्तेविधदितिहिश्रुतिः । हेचिकित्वः चेतनावन्नग्ने कदानोस्मानभिचक्षसे अभिपश्यसि कदाचऋताचित् यज्ञस्योदकस्यवाचेतयिता यातयासे प्रेरयसिसन्मार्गेण ॥ ९ ॥

---

१ ऋ० सं० ३. ८. १८. ।  २ ऋ० सं० २. ५. १८. ।

अथदशमी—

भूरिनामवन्दमानोदधातिपितावसोयदितज्जोषयासे ।
कुविद्देवस्यसहसाचकानःसुम्नमग्निर्वनतेवावृधानः ॥ १० ॥

भूरि । नाम । वन्दमानः । दधाति । पिता । वसो इति । यदि । तत् । जोषयासे । कुवित् । देवस्य । सहसा । चकानः । सुम्नम् । अग्निः । वनते । ववृधानः ॥ १० ॥

भूरिप्रभूतंनामत्वदीयंनामवन्दमानःसंदधाति धारयति सामर्थ्योद्धविः अथवा नाम हविः प्रभूतंधारयतिदातुं पितापालकस्त्वं हेवसोवासकाग्ने यदितद्धविःजोषयासे सेवसे देवस्यव्यवहर्तुर्यजमानस्यकुविद्बहुहविःसहसाबलेनयुक्तःसन्चकानःकामयमानः यद्वा कर्मणिषष्ठी देवंयजमानंकामयमानोग्निर्ववृधानोवर्धमानोयजमानंवर्धयन्वा सुम्नं सुखं वनते प्रयच्छति ॥ १० ॥

अथैकादशी—

त्वमङ्गजरितारंयविष्ठविश्वान्यग्नेदुरितातिपर्षि ।
स्तेनाअदृश्रन्रिपवोजनासोज्ञातकेतावृजिनाअभूवन् ॥ ११ ॥

त्वम् । अङ्ग । जरितारम् । यविष्ठ । विश्वानि । अग्ने । दुःऽइता । अति । पर्षि । स्तेनाः । अदृश्रन् । रिपवः । जनासः । अज्ञातऽकेताः । वृजिनाः । अभूवन् ॥ ११ ॥

अङ्ग हेस्वामिन् यविष्ठ युवतमाग्ने जरितारंस्तोतारमनुग्रहीतुं विश्वानिदुरिता दुरितानि अतिपर्षि अतिपारयसि स्तेनास्तस्कराअदृश्रन् दृश्यन्ते रिपवोजनासः शत्रुभूतामनुष्याः अज्ञातकेताःअप्रज्ञातचिह्नाः वृजिनाअस्माभिर्वर्जिताअभूवन्भवन्ति ॥ ११ ॥

अथद्वादशी—

इमेयामासस्त्वद्रिगभूवन्वसवेवातदिदागोअवाचि ।
नाहायमग्निरभिशस्तयेनोनरीषतेवावृधानःपरादात् ॥ १२।१७ ॥

इमे । यामासः । त्वद्रिक् । अभूवन् । वसवे । वा । तत् । इत् ।
आगः । अवाचि । न । अह । अयम् । अग्निः । अभिऽशस्तये ।
नः । न । रिषते । ववृधानः । परा । दात् ॥ १२ ॥ १७ ॥

इमेयामासोगन्तारः स्तोमाः त्वद्रिक् त्वदभिमुखाअभूवन्भवन्ति वा अथवा वसवे वासकाय तदागोपराधमाशासनरूपमवाचि उक्तवानहमग्निमिदंदेहीतियाचनमेवापराधः इदितिपूरणः यद्वा तदिदंवक्ष्यमाणंशत्रुभिःकृतमागः किंचायमग्निर्ववृधानः स्तुत्यावर्धमानःसन्नाह नैवाभिशस्तयेनिन्दकायनोस्मान्परादात्परादद्यात् तथा रिषतेहिंसकायनैवपरादात् ॥ १२ ॥

॥ इतितृतीयस्याष्टमेसप्तदशोवर्गः ॥ १७ ॥

त्वामग्नइत्येकादशर्चंचतुर्थंसूक्तम् आत्रेयस्यवसुश्रुतस्यार्षं त्रैष्टुभमाग्नेयम् अनुक्रान्तंच—त्वामग्नएकादशेति । प्रातरनुवाकाश्विनशस्त्रयोर्विनियोगोऽबोध्यग्निरित्यत्रोक्तः ।

तत्रप्रथमा—

त्वामग्नेवसुपतिंवसूनामभिप्रमन्देअध्वरेषुराजन् ।
त्वयावाजंवाजयन्तोजयेमाभिष्यामपृत्सुतीर्मर्त्यानाम् ॥ १ ॥

त्वाम् । अग्ने । वसुऽपतिम् । वसूनाम् । अभि । प्र । मन्दे ।
अध्वरेषु । राजन् । त्वया । वाजम् । वाजऽयन्तः । जयेम ।
अभि । स्याम । पृत्सुतीः । मर्त्यानाम् ॥ १ ॥

हेअग्ने वसूनांवसुपतिंवृत्त्यवृत्तिभ्यांवसूनांबाहुल्यं तत्स्वामित्वंचोक्तं बहूनांधनानांस्वामिनंत्वामध्वरेषुयागेषु अभिप्रमन्दे आभिमुख्येनस्तौमि हेराजन् किंच त्वया अनुकूलेनवाजयन्तोन्नमिच्छन्तोवयंवाजंजयेम किंच मर्त्यानांमरणधर्मकाणां पृत्सुतीः सेनाअभिष्याम अभिभवेम ॥ १ ॥

दर्शपूर्णमासेपत्नीसंयाजेगृहपतेर्याज्यैषा सूत्रितंच—हव्यवाळग्निरजरःपितानइतिपत्नीसंयाजाइति । देवसुवांहविःष्वब्धग्नेरेषैवयाज्या सूत्रितंच—हव्यवाळग्निरजरःपितानस्त्वंचसोमनोवशइति ।

सैषाद्वितीया–

हृव्युवाळुग्निर्जरः पितानोंविुभुर्विुभावांसुदृशींकोअुस्मे ।
सुगार्हपत्याःसमिषोंदिदीह्यस्मद्र्य१ंक्सम्मिमीहिश्रवांसि ॥ २ ॥

हृव्यऽवाट् । अुग्निः । अुजरः । पिता । नः । विुऽभुः । विुभाऽवा ।
सुुऽदृशीकः । अुस्मे इति । सुुऽगार्हपत्याः । सम् । इषः । दिुदीहि ।
अुस्मद्र्यक् । सम् । मिमीहि । श्रवांसि ॥ २ ॥

अयंहव्यवाळग्निरजरः अजीर्णःसन् नःपिताभवत्वितिशेषः किंच विभुर्व्याप्तः विभावा दीप्तिमान् सुदृशीकः शोभनदर्शनः अस्मे अस्माकंभवतु अथप्रत्यक्षवादः सुगार्हपत्याः शोभनगार्हपत्ययुक्तानि इषोन्नानिसन्दिदीहि सम्यक्प्रकाशय ददस्ववा अस्मद्र्यक् अस्मदभिमुखंश्रवांस्यन्नानिसंमिमीहि सम्यक्प्रयच्छ ॥ २ ॥

अथतृतीया–

विुशांकुविंविुश्पतिंमानुंषीणांशुचिंपावुकंघृतपृष्ठमुग्निम् ।
निहोतारंविश्वुविदंदधिध्वेसदुेवेषुवनतेवार्याणि ॥ ३ ॥

विुशाम् । कुविम् । विुश्पतिम् । मानुंषीणाम् । शुचिम् । पावुकम् ।
घृतऽपृष्ठम् । अुग्निम् । नि । होतारम् । विुश्वुऽविदम् । दुधिुध्वे ।
सः । देुवेषु । वुनते । वार्याणि ॥ ३ ॥

मानुषीणांविशां विश्पतिं सर्वासांमनुष्यरूपाणांप्रजानांपालकं स्वामिनंवा कविं मेधाविनं शुचिं विशुद्धं दीप्तंवा पावकमन्येषांशोधकं घृतपृष्ठं प्रदीप्तपृष्ठोपलक्षितशरीरम् अथवा उपरितनभागआज्योपेतंहोतारंहोमनिष्पादकं विश्वविदं विश्वस्यवेत्तारम् अग्निंनिदधिध्वे धारयथ हेऋत्विजः सदेवोदेवेषुमध्येवार्याणिवरणीयानिधनानि वनते संभजतेस्मदर्थं स्वयंवा वार्याणिहवींषिवनते ॥ ३ ॥

अथचतुर्थी–

जुषस्वांग्नइळंयासुजोषायतंमानोरुश्मिभिःसूर्यस्य ।
जुषस्वंनःसुमिधंजातवेदुआचंदेुवान्हुविरद्यायवक्षि ॥ ४ ॥

जुषस्व । अग्ने । इळया । सऽजोषाः । यतमानः । रश्मिऽभिः । सूर्यस्य । जुषस्व । नः । समृऽइधम् । जातऽवेदः । आ । च । देवान् । हविःऽअद्याय । वक्षि ॥ ४ ॥

हेअग्ने जुषस्व सेवस्व स्तुतिं इळयावेदिलक्षणयाभूम्यावाचावासजोषाःसमानप्रीतिः तथासूर्यस्यरश्मिभिः यतमानः प्रयत्नमुषःकालेकुर्वन् किंच हेजातवेदः जातस्यवेदितरग्ने नोस्मदीयांसमिधंजुषस्व सेवस्व आवहच देवान्हविरद्यायहविरदनाय आवाह्यवक्षिवहसि तद्धविः ॥ ४ ॥

अथपवित्रेष्ट्यांस्विष्टकृतोनुवाक्यैषा सूत्रितंच–जुष्टोदमूनाअग्नेशर्धमहतेसौभगायेतिसंयाज्येइति । मरुद्भ्यःपुरोडाशंसप्तकपालमित्यत्रापिस्विष्टकृतोनुवाक्या अत्यासोनयेमरुतःस्वञ्चो जुष्टोदमूनाइतिसूत्रितम् ।

सैषापञ्चमी–

जुष्टोदमूनाअतिथिर्दुरोणइमंनोयज्ञमुपयाहिविद्वान् ।
विश्वाअग्नेअभियुजोविहत्याशत्रूयतामाभराभोजनानि ॥५॥१८॥

जुष्टः । दमूनाः । अतिथिः । दुरोणे । इमम् । नः । यज्ञम् । उप । याहि । विद्वान् । विश्वाः । अग्ने । अभिऽयुजः । विऽहत्य । शत्रुऽयताम् । आ । भर । भोजनानि ॥ ५ ॥ १८ ॥

जुष्टःपर्याप्तोदमूनादानमनादान्तमनावा अतिथिस्तद्वत्पूज्यःसन् इमंनोस्मदीयंयज्ञमुपयाहि उपगच्छ विद्वान्जानन् हेअग्ने विश्वाअभियुजः सर्वानभियोक्तॄन् विहत्य शत्रूयतां तेषांभोजनानि अन्नानि धनान्याभर आहर अतिथिरभ्यतितोगृहान्भवतीत्यादिनिरुक्तंद्रष्टव्यम् ॥ ५ ॥

॥ इतितृतीयस्याष्टमेऽष्टादशोवर्गः ॥ १८ ॥

---

नि० ४. ५. ।

वधेनदस्युंप्रहिचातयस्ववयःकृण्वानस्तन्वेस्वायै ।
पिपर्षियत्सहसस्पुत्रदेवान्त्सोअग्नेपाहिनृतमवाजेअस्मान् ।६।

वधेन । दस्युम् । प्र । हि । चातयस्व । वयः । कृण्वानः ।
तन्वे । स्वायै । पिपर्षि । यत् । सहसः । पुत्र । देवान् । सः ।
अग्ने । पाहि । नृऽतम । वाजे । अस्मान् ॥ ६ ॥

हेअग्ने वधेनायुधेन दस्युमुपक्षपयितारं प्रहिचातयस्व प्रणाशय हीतिपूरणः वयःकृण्वानः तन्वेशरीराय स्वायै स्वीयाय अथवा स्वायैतन्वे यजमानादिरूपाय पुत्राय वयोन्नंकुर्वाणः यद्यस्मात्सहसस्पुत्राग्ने देवान्पिपर्षि तर्पयसि हेनृतम नेनृतमाग्ने सत्वंवाजेसंग्रामे अस्मान्पाहिरक्ष ॥ ६ ॥

अथसप्तमी–

वयंतेअग्नउक्थैर्विधेमवयंहव्यैःपावकभद्रशोचे ।
अस्मेरयिंविश्ववारंसमिन्वास्मेविश्वानिद्रविणानिधेहि ॥ ७ ॥

वयम् । ते । अग्ने । उक्थैः । विधेम । वयम् । हव्यैः । पावक ।
भद्रऽशोचे । अस्मे इति । रयिम् । विश्वऽवारम् । सम् । इन्व ।
अस्मे इति । विश्वानि । द्रविणानि । धेहि ॥ ७ ॥

हेअग्ने ते त्वां वयं उक्थैःशस्त्रैर्विधेम परिचरेम वयंहव्यैर्हविर्भिर्विधेम हेपावक शोधक हेभद्रशोचे कल्याणदीप्ते अग्ने अस्मे अस्मभ्यंविश्ववारं विश्वैर्वरणीयंरयिंधनंसमिन्व प्रापय अस्मे अस्मभ्यंविश्वानि द्रविणानि धेहि स्थापय ॥ ७ ॥

अथाष्टमी–

अस्माकमग्नेअध्वरंजुषस्वसहसःसूनोत्रिषधस्थहव्यम् ।
वयंदेवेषुसुकृतःस्यामशर्मणानस्त्रिवरूथेनपाहि ॥ ८ ॥

अस्माकम् । अग्ने । अध्वरम् । जुषस्व । सहसः । सूनो इति ।
त्रिऽसधस्थ । हव्यम् । वयम् । देवेषु । सुऽकृतः । स्याम ।
शर्मणा । नः । त्रिऽवरूथेन । पाहि ॥ ८ ॥

हेअग्ने अस्माकमध्वरंजुषस्व सेवस्व हेसहसःसूनो बलस्यपुत्र त्रिषधस्थ त्रिषुक्षित्यादिषुस्थानेषुस्थित हव्यंहविर्जुषस्व यद्वा अध्वरंहविरितियोज्यम् अहिंसितंहविरित्यर्थः येयजमानादेवेषुमध्ये सुकृतः शोभनापूर्वकर्तारःस्याम भवेम त्रिवरूथेन वाचिकादिभेदेन त्रिधावरणीयेन शर्मणासुखेन त्रिच्छदिष्केण गृहेण वा नः पाहि रक्ष ॥ ८ ॥

अथनवमी—

विश्वानिनोदुर्गहाजातवेदःसिन्धुंननावादुरितातिपर्षि ।
अग्नेअत्रिवन्नमसागृणानो३ऽस्माकंबोध्यविताजनूनाम् ॥ ९ ॥

विश्वानि । नः । दुःऽगहा । जातऽवेदः । सिन्धुम् । न । नावा ।
दुःऽइता । अति । पर्षि । अग्ने । अत्रिऽवत् । नमसा । गृणानः ।
अस्माकम् । बोधि । अविता । तनूनाम् ॥ ९ ॥

हेजातवेदः नोस्माकं दुर्गहा दुःखेगाह्यानि दुःखेनभोग्यानि विश्वानिदुरितान्यतिपर्षि अतिपारय सिन्धुंननावा नदीं नाविकोयथा तद्वत् हेअग्ने अत्रिवत् अत्रेर्यथा तथानोस्माकं नमसास्तोत्रेणगृणानः स्तूयमानःसन्नोस्माकं तनूनामविता रक्षकोबोधि बुध्यस्व ॥ ९ ॥

पुत्रकामेष्ट्यांयस्त्वेत्येषाप्रधानस्ययाज्या सूत्रितंच—यस्त्वाहृदाकीरिणामन्यमानोग्निस्तुविश्रवस्तममिति ।

सैषादशमी—

यस्त्वाहृदाकीरिणामन्यमानोमर्त्यंमर्त्योजोहवीमि ।
जातवेदोयशोअस्मासुधेहिप्रजाभिरग्नेअमृतत्वमश्याम् ॥ १० ॥

यः । त्वा । हृदा । कीरिणा । मन्यमानः । अमर्त्यम् । मर्त्यः ।
जोहवीमि । जातऽवेदः । यशः । अस्मासु । धेहि । प्रऽजाभिः ।
अग्ने । अमृतऽत्वम् । अश्याम् ॥ १० ॥

योमर्त्योमरणधर्माहम् अमर्त्यमनाशं त्वा त्वां कीरिणा स्तुत्यादिषुविक्षिप्तेनहृदा हृदयेन युक्तोमन्यमानःस्तुवन् जोहवीमि अत्यर्थमाह्वयामि यद्वा स्तोतृवाचकेनकीरिणा शब्देन स्तुतिरुपलक्ष्यते स्तुतियुक्तेनमनसात्वामन्नप्रदंमन्यमानोजोहवीमि हेजातवेदोयशोधनं प्रजांवास्मासुधेहि प्रजाभिस्त्वद्दत्ताभिः हेअग्ने अहममृतत्वं सन्तत्यविच्छेदलक्षणमश्यां प्राप्नुयां प्रजामनुप्रजायसेतदुतेमर्त्यामृतमितिहिश्रुतिः ॥ १० ॥

तस्यामेवपुत्रकामेष्ट्यांयस्मैत्वमित्येषाग्नेःपुत्रवतोनुवाक्या यस्मैत्वंसुकृतेजातवेदोयस्त्वा हृदाकीरिणामन्यमानइतिहिसूत्रितम् ।

**यस्मैत्वंसुकृतेजातवेदउलोकमंग्नेकृणवंःस्योनम् ।**
**अश्विनंसपुत्रिणंवीरवन्तंगोमन्तंरयिंनंशतेस्वस्ति ॥११॥१९॥**

यस्मै । त्वम् । सुऽकृते । जातऽवेदः । ऊँ इति । लोकम् । अग्ने ।
कृणवः । स्योनम् । अश्विनम् । सः । पुत्रिणम् । वीरऽवन्तम् ।
गोऽमन्तम् । रयिम् । नशते । स्वस्ति ॥ ११ ॥ १९॥

हेजातवेदोऽग्ने त्वं यस्मैसुकृते सुकर्मणे यजमानाय उइतिपूरणः लोकंस्योनं सुखकरं कृणवोऽकरोः यद्वा लोकमालोकेनस्योनंकृणवः अनुग्रहेणकुर्वित्यर्थः सयजमानोश्विनंबहश्वोपेतं पुत्रिणं बहुपुत्रोपेतं वीरवन्तं वीरैर्वीर्येणवोपेतं गोमन्तं रयिं धनं नशते प्राप्नोति स्वस्त्यविनश्वरम् ॥ ११ ॥

॥ इतितृतीयस्याष्टमेएकोनविंशोवर्गः ॥ १९ ॥

सुसमिद्धायेत्येकादशर्चंपञ्चमंसूक्तम् आत्रेयस्यवसुश्रुतस्यार्षंगायत्रम् इध्माद्युक्तदेवताकम् आप्रमित्युक्तत्वात्तनूनपाद्वर्जितं सुसमिद्धायाप्रंगायत्रमित्यनुक्रमणिका । अत्रीणामिदमाप्रीसूक्तं समिद्धोअद्येतिवासर्वेषांयथर्षिवेत्युक्तत्वात् ।

तत्रप्रथमा—

**सुसंमिद्धायशोचिषेघृतंतीव्रंजुहोतन । अग्नयेजातवेदसे ॥ १ ॥**

---

१ तै० ब्रा० १. ५. ५. ।

सुऽसमिद्धाय । शोचिषे । घृतम् । तीव्रम् । जुहोतन । अग्नये ।
जातऽवेदसे ॥ १ ॥

सुसमिद्धाय सुष्ठुसमिद्धायैतन्नामकायाग्नये शोचिषे दीप्तिमते घृतमाज्यं तीव्रं प्रभूतं जुहोतन हेऋत्विजः अग्नयेऽन्नादिगुणयुक्तायजातवेदसेजातधनाय ॥ १ ॥

अथद्वितीया–

नराशंसःसुषूदतीमंयज्ञमदाभ्यः । कविर्हिमधुहस्त्यः ॥ २ ॥
नराशंसः । सुसूदति । इमम् । यज्ञम् । अदाभ्यः । कविः । हि ।
मधुऽहस्त्यः ॥ २ ॥

नराशंसः नरैःशंसनीयोयमग्निरिमंयज्ञमिदंहविर्वा सुषूदति सुष्ठुप्रेरयति सर्देवः अदाभ्यः अहिंस्यःकेनापि कविर्मेधावी मधुहस्त्यः मधुरहस्त्यः ॥ २ ॥

अथतृतीया–

ईळितोअग्नआवहेन्द्रंचित्रमिहप्रियम् । सुखैरथेभिरूतये ॥ ३ ॥
ईळितः । अग्ने । आ । वह । इन्द्रम् । चित्रम् । इह । प्रियम् ।
सुऽखैः । रथेभिः । ऊतये ॥ ३ ॥

हेअग्ने ईळितः स्तुतःसन्नावहेन्द्रं चित्रंचायनीयं प्रियमिहास्मिन्यज्ञसुखैरथेभीरथैरूतयेस्मद्रक्षणाय ॥ ३ ॥

अथचतुर्थी–

ऊर्णम्रदाविप्रथस्वाभ्यर्काअनूषत । भवानःशुभ्रसातये ॥ ४ ॥
ऊर्णऽम्रदाः । वि । प्रथस्व । अभि । अर्काः । अनूषत । भव ।
नः । शुभ्र । सातये ॥ ४ ॥

हेऊर्णम्रदाः ऊर्णाकम्बलवत्मृदु हेबर्हिर्विप्रथस्व प्रथय अर्कास्तोतारोभ्यनूषत स्तुवन्ति हेशुभ्र दीप्त सातये धनाय तद्दानायवा नोस्माकंभव ॥ ४ ॥

अथपञ्चमी–

देवींर्द्वारोविश्रंयध्वंसुप्रायणानंऊतयें । प्रप्रंयज्ञंपृंणीतन ॥५।२०॥

देवीः । द्वारः । वि । श्रयध्वम् । सुप्रऽअयनाः । नः । ऊतयें ।
प्रऽप्र । यज्ञम् । पृणीतन ॥ ५ ॥ २० ॥

हेद्वारोयज्ञस्यद्वाराभिमानिन्योहेदेवीर्देव्यः विश्रयध्वं वियुक्ताभवत सुप्रायणाः शोभनगमनसाधनाः नोस्माकमूतयेरक्षायै यज्ञं यजमानं प्रप्रपृणीतन पूरयतकामैः यज्ञमेववाफलैः ॥ ५ ॥

॥ इतितृतीयस्याष्टमेविंशोवर्गः ॥ २० ॥

अथषष्ठी–

सुप्रतींकेवयोवृधांयह्वीऋतस्यंमातरां । दोषामुषासंमीमहे ॥६॥

सुप्रतींके इतिं सुऽप्रतींके । वयःऽवृधां । यह्वी इतिं । ऋतस्यं ।
मातरां । दोषाम् । उषसंम् । ईमहे ॥ ६ ॥

हेअहोरात्रेश्चाभिमानिदेव्यौ सुप्रतीके सुरूपे शोभनाङ्गेवा वयोवृधा अन्नस्यवर्धयित्र्यौ यह्वी महत्यौ ऋतस्ययज्ञस्योदकस्यवामातरा निर्मात्र्यौ तयोर्मध्ये प्रत्येकं दोषां रात्रिदेवीमुषसमहर्देवीम् ईमहे स्तुमः ॥ ६ ॥

अथसप्तमी–

वातंस्यपत्मंन्नीळितादैव्याहोतांरामनुंषः । इमंनोंयज्ञमागंतम् ॥७॥

वातंस्य । पत्मंन् । ईळिता । दैव्यां । होतांरा । मनुंषः । इमम् ।
नः । यज्ञम् । आ । गतम् ॥ ७ ॥

वातस्यपत्मन् लुप्तोपमैषा वायुगमनसदृशगमनार्थमीळिता ईळितौ अस्माभिःस्तुतौ यद्वा वातस्य पतनसाधनेन्तरिक्षेगच्छन्तौ दैव्या देवादग्नेरादित्याच्चसमुद्भूतौ होतारा देवानामाह्वातारौ युवां मनुषोमनुष्यस्य इमंनोस्माकंयज्ञमागतमागच्छतं नोमनुषोयज्ञमितिव्यधिकरणे षष्ठ्यौ अस्माकंयजमानस्ययज्ञमित्यर्थः ॥ ७ ॥

अथाष्टमी–

इळासरस्वतीमहीतिस्रोदेवीर्मयोभुवः । बर्हिःसीदन्त्वस्रिधः ॥८॥

इळा । सरस्वती । मही । तिस्रः । देवीः । मयःऽभुवः । बर्हिः । सीदन्तु । अस्रिधः ॥ ८ ॥

इळापृथिवी सरस्वती सरउदकं तद्वान्त्सरस्वान्वायुः तस्यस्त्रीसरस्वती मही महती भारती भरतस्यादित्यस्यपत्नी अत्र यद्यप्येषानोक्ता तथापि सर्वत्रसहदृष्टत्वात् त्रिसंख्याश्रवणाच्च सा गृह्यते अथवैताः क्षित्यन्तरिक्षद्युस्थानावाग्देव्यः एतामयोभुवः सुखस्यभावयित्र्यः अस्रिधोहिंसिकाः सत्योबर्हिर्बर्हिषिसीदन्तु उपविशन्तु ॥ ८ ॥

अथनवमी–

शिवस्त्वष्टरिहागहिविभुःपोषउतत्मना । यज्ञेयज्ञेनउदव ॥९॥

शिवः । त्वष्टः । इह । आ । गहि । विऽभुः । पोषे । उत । त्मना । यज्ञेऽयज्ञे । नः । उत् । अव ॥ ९ ॥

हेत्वष्टर्देव शिवः सुखकरःसन्निहागहि अस्मद्यज्ञमागच्छ विभुर्व्याप्तस्त्वं पोषे पोषकरणे उत आगत्यच त्मना आत्मना स्वयमेव यज्ञेयज्ञे सर्वेषुयज्ञेषुनोस्मानुदवोत्कृष्टंरक्ष ॥ ९ ॥

अग्निहोत्रउत्तराहुतिस्कन्दने यत्रवेत्थेत्यनयासमिधमादध्यात् सूत्रितंच–यत्रवेत्थवनस्पतइत्युत्तरस्याआहुत्यास्कन्दनइति ।

सैषादशमी–

यत्रवेत्थवनस्पतेदेवानांगुह्यानामानि । तत्रहव्यानिगामय ॥१०॥

यत्र । वेत्थ । वनस्पते । देवानाम् । गुह्या । नामानि । तत्र । हव्यानि । गमय ॥ १० ॥

हेवनस्पते यूपाभिमानिदेव यत्रयस्मिन्स्थानेवेत्थ देवानांगुह्या गुह्यानि नामानि गुह्य नामकानि रूपाणि तत्र हव्यानि गमय प्रापय ॥ १० ॥

अथैकादशी–

स्वाहाग्नयेवरुणायस्वाहेन्द्रायमरुद्भ्यः ।
स्वाहादेवेभ्योहविः ॥ ११ ॥ २१ ॥

स्वाहा । अग्नये । वरुणाय । स्वाहा । इन्द्राय । मरुत्ऽभ्यः ।
स्वाहा । देवेभ्यः । हविः ॥ ११ ॥ २१ ॥

येअग्न्यादयोविश्वेदेवाः तेभ्योदेवेभ्यः इदंहविः स्वाहाकरोमीतिशेषः स्वाहुतंकरोमीत्यर्थः एवंस्वाहाकृतेःस्तुतिः ॥ ११ ॥

॥ इतितृतीयस्याष्टमेएकविंशोवर्गः ॥ २१ ॥

अग्नितंमन्यइतिदशर्चंषष्ठंसूक्तं वसुश्रुतस्यार्षम् आग्नेयं पाङ्क्तम् अग्नितंदशपाङ्क्तमित्यनुक्रमणिका । प्रातरनुवाकेआग्नेयेक्रतौपाङ्क्तेछन्दस्याश्विनशस्त्रेचेदंसूक्तम् अग्नितंमन्यइतिपाङ्क्तमितिहि सूत्रितम् । आश्वमेधिकेमध्यमेहनीदमेवाज्यशस्त्रं सूत्रितंच–अग्नितंमन्यइत्याज्यंतस्यैकाहिकमुपरिष्टादिति । आद्येआभिप्लविकेपृष्ठ्येषुमैत्रावरुणस्यानुरूपस्तृचः सूत्रितंच–अग्नितं मन्येयोवसुराग्नेस्थूरंरयिंभरेति ।

तत्रप्रथमा–

अग्नितंमन्येयोवसुरस्तंयंयन्तिधेनवः ।
अस्तमर्वन्तआशवोस्तंनित्यासोवाजिनइषंस्तोतृभ्यआभर ॥ १ ॥

अग्निम् । तम् । मन्ये । यः । वसुः । अस्तम् । यम् । यन्ति ।
धेनवः । अस्तम् । अर्वन्तः । आशवः । अस्तम् । नित्यासः ।
वाजिनः । इषम् । स्तोतृऽभ्यः । आ । भर ॥ १ ॥

तमग्निमन्ये स्तौमि योग्निर्वसुर्वासकः यमस्तंसर्वेषां गृहवदाश्रयभूतं धेनवोयन्ति गच्छन्ति प्रीणयितुम् अस्तमुक्तलक्षणमर्वन्तोरणवन्तोश्वाः आशवः शीघ्रगामिनोयन्ति तथा नित्यासःनित्यप्रवृत्तयः वाजिनोहविर्लक्षणान्नवन्तोयजमानायमस्तंयन्ति तंमन्ये इषमन्नंस्तोतृभ्योस्मभ्यमाभराग्ने ॥ १ ॥

अथद्वितीया—

सोअग्निर्योवसुंर्गृणेसंयमायन्तिधेनवंः ।
समर्वन्तोरघुद्रुवःसंसुंजातासःसूरयइषंस्तोतृभ्यआभर ॥ २ ॥

सः । अग्निः । यः । वसुः । गृणे । सम् । यम् । आऽयन्ति ।
धेनवंः । सम् । अर्वन्तः । रघुऽद्रुवंः । सम् । सुऽजातासंः । सूरयंः ।
इषम् । स्तोतृऽभ्यः । आ । भर ॥ २ ॥

सः अग्निः सखल्वग्निः योवसुर्वासकोगृणे स्तूयते यंधेनवःसमायन्तिहोमार्थम् अर्वन्तोश्वारघुद्रुवः लघुगमनाःसमायन्ति सुजातासः सुत्कुलोत्पन्नाः सूरयोमेधाविनश्च समायन्ति सखल्वग्निरिति ॥ २ ॥

अथतृतीया—

अग्निर्हिवाजिनंविशेददातिविश्वचर्षणिः ।
अग्नीरायेस्वाभुवंसप्रीतोयातिवार्यमिषंस्तोतृभ्यआभर ॥ ३ ॥

अग्निः । हि । वाजिनंम् । विशे । ददाति । विश्वऽचर्षणिः ।
अग्निः । राये । सुऽआभुवंम् । सः । प्रीतः । याति । वार्यम् ।
इषम् । स्तोतृऽभ्यः । आ । भर ॥ ३ ॥

अग्निर्हि अयमग्निःखलु विशे यजमानाय बाजिनमन्नवन्तंपुत्रमश्वमन्नंवाददाति विश्वचर्षणिः विश्वेचर्षणयोमनुष्यारक्षणीयाअर्चकावायस्यसतथोक्तः यद्वा पश्यातिकर्मैतत् सर्वस्यद्रष्टाग्नीरायेधनार्थिने अथवा द्वितीयार्थेचतुर्थी धनं स्वाभुवं सुष्ठुसर्वत्रव्यासं वार्यं सर्वैर्वरणीयं प्रीतःसन्याति गमयति दातुंवागच्छति इषमित्यादिगतम् ॥ ३ ॥

आभिप्लविकेषूक्थ्येषुतृतीयसवनेस्तोत्रियतृचस्यातेअग्नइधीमहीत्यादिकेप्रथमाद्वितीये सूत्रितंभवति—आतेअग्नइधीमह्युमेसुश्चन्द्रसर्पिषइतिद्वेएकाचेति ।

तत्रत्र्यृचेप्रथमा सूक्तेचतुर्थी—

आतेअग्नइधीमहिद्युमन्तंदेवाजरम् ।
यद्धस्यातेपनीयसीसमिद्दीदयतिद्यवीषंस्तोतृभ्यआभर ॥ ४ ॥

आ । ते । अग्ने । इधीमहि । द्युऽमन्तम् । देव । अजरम् । यत् ।
ह । स्या । ते । पनीयसी । सम्ऽइत् । दीदयति । द्यवि ।
इषम् । स्तोतृऽभ्यः । आ । भर ॥ ४ ॥

हेअग्ने देव द्युमन्तं दीप्तिमन्तमजरमजीर्णं तेत्वाम् आसर्वतइधीमहि दीपयामः यद्ध खलु ते तव स्या सा पनीयसी स्तुत्यासमिद्दीप्तिर्दीदयतिदीप्यते द्यवि द्युलोके ॥ ४ ॥

अथपञ्चमी—

आतेअग्नऋचाहविःशुक्रस्यशोचिषस्पते ।
सुश्चन्द्रदस्मविश्पतेहव्यवाट्तुभ्यंहूयतइषंस्तोतृभ्यआभर ।५।२२।

आ । ते । अग्ने । ऋचा । हविः । शुक्रस्य । शोचिषः । पते ।
सुऽचन्द्र । दस्म । विश्पते । हव्यऽवाट् । तुभ्यम् । हूयते ।
इषम् । स्तोतृऽभ्यः । आ । भर ॥ ५ ॥ २२ ॥

हेशोचिषोदीप्तेःपते स्वामिन्नग्ने शुक्रस्य दीप्तस्य ते तुभ्यमृचामन्त्रेणसहहविर्हूयते हे सुश्चन्द्र सुष्ठुआह्लादक शोभनहिरण्यवा हेदस्म शत्रूणामुपक्षयितः विश्पते विशांप्रजानांपालक हव्यावाट् हविषोवोढः आपूरणः इषंगतम् ॥ ५ ॥

॥ इतितृतीयस्याष्टमेद्वाविंशोवर्गः ॥ २२ ॥

प्रोत्येअग्नयोग्निषुविश्वंपुष्यन्तिवार्यम् ।
तेहिन्विरेतइन्विरेतइषण्यन्त्यानुषगिषंस्तोतृभ्यआभर ॥ ६ ॥

प्रो इति । त्ये । अग्नयः । अग्निषु । विश्वम् । पुष्यन्ति ।
वार्यम् । ते । हिन्विरे । ते । इन्विरे । ते । इषण्यन्ति । आनुषक् ।
इषम् । स्तोतृऽभ्यः । आ । भर ॥ ६ ॥

प्रोप्रैवपुष्यन्तित्येतेअग्नयोधिष्ण्याअग्निषुगार्हपत्यादिषु यद्वालौकिकाअग्नयस्तेजःपदार्थभूताअग्निषुवैदिकेषुविश्वंसर्वं वार्यं वरणीयम् अपेक्षितंधनंपुष्यन्ति तेअग्नयोहिन्विरे प्रीणयन्ति इन्विरेप्रीणयितुंव्याप्नुवन्तिच तेइषण्यन्ति अन्नमिच्छन्ति आनुषक् सर्वत्रानुषक्तं तत्राग्निसामान्याभिप्रायेणैकवचनम् ॥ ६ ॥

अथसप्तमी—

तवत्येअग्नेअर्चयोमहिंव्राधन्तवाजिनः ।
येपत्वभिःशफानांव्रजाभुरन्तगोनामिषंस्तोतृभ्यआभर ॥७॥

तव । त्ये । अग्ने । अर्चयः । महि । व्राधन्त । वाजिनः ।
ये । पत्वऽभिः । शफानाम् । व्रजा । भुरन्त । गोनाम् ।
इषम् । स्तोतृऽभ्यः । आ । भर ॥ ७ ॥

हेअग्ने तव त्वदीयाः त्ये ते अर्चयोरश्मयोमहि महदत्यधिकंवाजिनोवेजनवन्तोन्नवन्तोवाव्राधन्त वर्धन्ते यद्वा लुप्तोपमा वाजिनोश्वाइव ये रश्मयः पत्वभिः पतनैः शफानांखुरवतां गोनांव्रजायूथानि भुरन्त इच्छन्ति आयताज्वालाहोमायकाङ्क्षन्तइत्यर्थः तेवर्धन्ते ॥ ७ ॥

अथाष्टमी—

नवानोअग्नआभरस्तोतृभ्यःसुक्षितीरिषः ।
तेस्यामयआनृचुस्त्वादूतासोदमेदमइषंस्तोतृभ्यआभर ॥ ८ ॥

नवाः । नः । अग्ने । आ । भर । स्तोतृऽभ्यः । सुऽक्षितीः ।
इषः । ते । स्याम । ये । आनृचुः । त्वाऽदूतासः । दमेऽदमे ।
इषम् । स्तोतृऽभ्यः । आ । भर ॥ ८ ॥

हेअग्ने स्तोतृभ्योनोस्मभ्यं नवाः स्तुत्याः नूत्नावासुक्षितीः सुनिवासाः सुप्रजावाइ-षःउक्तलक्षणान्यन्नानि आभर प्रयच्छ येवयंदमेदमे सर्वेषुयागगृहेषु त्वामानृचुरर्चयन्ति ते वयं त्वादूतासः त्वांदूतंफलसूचकंलब्धवन्तःसन्तः स्याम समृद्धाभूयास्म दमेदमेस्यामेतिवा योज्यम् ॥८॥

आभिप्लविकेषूक्थ्येषुतृतीयसवनेवैकल्पिकस्तोत्रियत्र्यृचे उभेसुश्चन्द्रेत्येषातृतीया सूत्रमुक्तम् ।

सैषानवमी—

उभेसुंश्चन्द्रसर्पिषोदर्वींश्रीणीषआसनिं ।
उतोनउत्पुंपूर्याउक्थेषुंशवसस्पतइषंस्तोतृभ्यआभंर ॥ ९ ॥

उभे इतिं । सुऽचन्द्र । सर्पिषः । दर्वी इतिं । श्रीणीषे । आ । सनिं ।
उतो इतिं । नः । उत् । पुपूर्याः । उक्थेषु । शवसः ।
पते । इषंम् । स्तोतृऽभ्यः । आ । भर ॥ ९ ॥

हेसुश्चन्द्र शोभनाह्लादन शोभनहिरण्यवाग्ने उभे सर्पिषःपूर्णे दर्वी जुहूपभृतावा-सन्यास्ये श्रीणीषे श्रयसि पचसिवा उतोअपिच नोस्मानुक्थेषु यागेषूत्पुपूर्याः उत्पूरयफलैः हेशवसस्पतेबलस्यपालयितः ॥ ९ ॥

अथदशमी—

एवाँअग्निमंजुर्यमुर्गीर्भिर्यज्ञेभिरानुषक् ।
दधंदस्मेसुवीर्यंमुतत्यदाश्वश्व्यमिषंस्तोतृभ्यआभंर ॥१०।२३॥

एव । अग्निम् । अजुर्यमुः । गीःऽभिः । यज्ञेभिः । आनुषक् ।
दधत् । अस्मे इतिं । सुऽवीर्यम् । उत । त्यत् । आशुऽअश्व्यम् ।
इषंम् । स्तोतृऽभ्यः । आ । भर ॥ १० ॥ २३ ॥

एवैवम् उक्तरीत्या अग्निं गीर्भिःस्तुतिभिःयज्ञेभिर्यज्ञैस्तत्साधनैर्हविर्भिर्वा अनुषगनुषक्तं संबद्धम् अजुः गच्छन्ति तथाकृत्वा यमुः यमयन्ति स्थापयन्ति हविर्भिर्यजन्तीत्यर्थः एवमात्रे-याःस्वान्परोक्षतयानिर्दिशन्ति । अजुर्यमुरित्यत्राख्यातमाख्यातेनक्रियासातत्यइतिसमासः किं

चास्मे अस्मासु सुवीर्यंशोभनपुत्रादिकम् उतापिच त्यत्तदाश्वश्व्यम् आशवः अश्वायेस्यभ-वन्तिसआश्वश्वः तस्यभावःआश्वश्व्यं तदपिदधत् धारयति ॥ १० ॥

॥ इतितृतीयस्याष्टमेत्रयोविंशोवर्गः ॥ २३ ॥

सखायःसंवइतिदशर्चंसप्तमंसूक्तम् आत्रेयइषऋषिः अन्त्यापङ्क्तिः शिष्टाःपङ्क्त्यन्तपरिभाषया-नुष्टुभः तथाचानुक्रान्तम्—सखायइषःपङ्क्त्यन्तमिति । प्रातरनुवाकेआग्नेयेक्रतावानुष्टुभेछन्दस्या-श्विनशस्त्रेचोत्तमावर्जमिदंसूक्तं सूत्रितंच—सखायःसंवस्त्वामग्नेहविष्मन्तइतिसूक्तेइति ।

तत्रप्रथमा—

सखायःसंवःसम्यञ्चमिषंस्तोमंचाग्नये ।
वर्षिष्ठायक्षितीनामूर्जोनप्त्रेसहस्वते ॥ १ ॥

सखायः । सम् । वः । सम्यञ्चम् । इषम् । स्तोमम् । च ।
अग्नये । वर्षिष्ठाय । क्षितीनाम् । ऊर्जः । नप्त्रे । सहस्वते ॥ १ ॥

हेसखायः सखिभूताऋत्विजःवोयूयं संस्कुरुत उपसर्गश्रुतेर्योग्यक्रियाध्याहारः किंच सम्यञ्चमिषमन्नंस्तोमंस्तोत्रंचाग्नयेवर्षिष्ठायातिशयेन प्रवृद्धाय क्षितीनां यजमानानामर्थाय वर्षि-ष्ठाय प्रवृद्धतमाय ऊर्जोनप्त्रे बलस्यनपातयित्रे तत्पुत्रायवा सहस्वते बलवते संस्कुरुतेति ॥ १ ॥

अथद्वितीया—

कुत्राचिद्यस्यसमृतौरण्वानरोनृषदने ।
अर्हन्तश्चिद्यमिन्धतेसंजनयन्तिजन्तवः ॥ २ ॥

कुत्र । चित् । यस्य । सम्ऽऋतौ । रण्वाः । नरः । नृऽसदने ।
अर्हन्तः । चित् । यम् । इन्धते । सम्ऽजनयन्ति । जन्तवः ॥ २ ॥

सोग्निः कुत्रचिद्वर्ततइतिशेषः कुत्रास्ते यस्याग्नेःसमृतौ संप्राप्तौ रण्वाः रममाणानरोनेता-रऋत्विजः नृषदने यागगृहे अर्हन्तश्चित् चिदितिपूजायाम् अर्हन्तःपूज्याः पूजयन्तोवासन्तः यमिन्धतेदीपयन्ति तदर्थंसंजनयन्तिचारण्यांजन्तवःप्राणिनःसकुत्रेतिसंबन्धः ॥ २ ॥

अथतृतीया—

संयदिषोवनामहेसंहव्यामानुषाणाम् ।
उतद्युम्नस्यशवसऋतस्यरश्मिमाददे ॥ ३ ॥

सम् । यत् । इषः । वनामहे । सम् । हव्या । मानुषाणाम् ।
उत । द्युम्नस्य । शवसा । ऋतस्य । रश्मिम् । आ । ददे ॥ ३ ॥

यद्यदाइषोन्नानि संवनामहे संभजामहे यदाच मानुषाणां मनुष्याणामस्माकंहव्या हवींषि अग्निःसंसेवते उत तदानींद्युम्नस्यद्योतमानस्यान्नस्य शवसाबलेन सामर्थ्येन ऋतस्योदकस्य ग्राहकं रश्मिमाददे आदत्तेग्निः फलजनकंतेजःस्वीकृतवानित्यर्थः यद्वा ऋतस्ययज्ञस्य रश्मिं रश्मिवद्ग्राहकं स्तवमाददे स्वीकरोति ॥ ३ ॥

अथचतुर्थी—

सस्माकृणोतिकेतुमानक्तंचिद्दूरआसते ।
पावकोयद्वनस्पतीन्प्रस्मामिनात्यजरः ॥ ४ ॥

सः । स्म । कृणोति । केतुम् । आ । नक्तम् । चित् । दूरे । आ ।
सते । पावकः । यत् । वनस्पतीन् । प्र । स्म । मिनाति । अजरः ॥ ४ ॥

सस्म सखल्वग्निः कृणोति करोति केतुंप्रज्ञानमासर्वतः कस्येत्युच्यते चिदप्यर्थे नक्तंचिद्रात्रावपि दूरे आसते आइतिचार्थे दूरेपिवर्तमानायमनुष्याय कदा यद्यदापावकोयमग्निरजरोजीर्णोनभिभाव्यःसन् वनस्पतीनेधांसि प्रमिनाति प्रकर्षेणदहति स्मेतिपूरणः ॥ ४ ॥

अथपञ्चमी—

अवस्मयस्यवेषणेस्वेदंपथिषुजुह्वति ।
अभीमहस्वजेन्यंभूमापृष्ठेवरुरुहुः ॥ ५ ॥ २४ ॥

अव । स्म । यस्य । वेषणे । स्वेदम् । पथिषु । जुह्वति । अभि ।
ईम् । अह । स्वऽजेन्यम् । भूम । पृष्ठाऽइव । रुरुहुः ॥ ५ ॥ २४ ॥

यस्याग्नेर्वेषणे परिचर्यायां पथिषु होममार्गेषुरश्मिषु स्वेदं स्रवदाज्यमवाधोमुखंजुह्वत्यध्वर्येवः तदानीमीमेनमग्निमभिरुरुहुरह अभ्यारोहन्त्येवाज्यधाराः अहइतिविनिग्रहार्थीयः स्वजेन्यं स्वोत्पन्नंभूम बहुभवतीतिभूमापत्यम् तत्पृष्ठेव पितुःपृष्ठदेशानिव पुत्रायथापितुरङ्कमारोहन्तितद्वत् ॥ ५ ॥

॥ इतितृतीयस्याष्टमेचतुर्विंशोवर्गः ॥ २४ ॥

अथषष्ठी–

यंमर्त्यः॑पुरु॒स्पृहं॑वि॒दद्विश्व॑स्य॒धाय॑से ।
प्रस्वाद॑नंपि॒तूनामस्त॑तातिंचिदा॒यवे॑ ॥ ६ ॥

यम् । मर्त्यः॑ । पु॒रु॒ऽस्पृह॑म् । वि॒दत् । विश्व॑स्य । धाय॑से । प्र । स्वाद॑नम् । पि॒तूनाम् । अस्त॑ऽतातिम् । चि॒त् । आ॒यवे॑ ॥ ६ ॥

यमग्निं पुरुस्पृहं बहुभिःस्पृहणीयमग्निं विदत् वेत्ति मर्त्योयजमानोविश्वस्य धायसे सर्वव्यापारार्थं पितूनामन्नानां प्रस्वादनं प्रकर्षेणस्वादूकर्तारम् अस्ततातिम् अस्तेगृहेनिवासकर्तारमायवे अन्नार्थंयजमानार्थंवा ॥ ६ ॥

अथसप्तमी–

सहि॒ष्मा॒धन्वाक्षि॑तं॒दाता॒नदा॒त्याप॒शुः ।
हिरि॑श्मश्रुः॒शुचि॑दन्नृ॒भुरनि॑भृष्टतविषिः ॥ ७ ॥

सः । हि । स्म॒ । धन्व॑ । आऽक्षि॑तम् । दाता॑ । न । दाति॑ । आ । प॒शुः । हिरि॑ऽश्मश्रुः । शुचि॑ऽदन् । ऋ॒भुः । अनि॑भृष्टऽतविषिः ॥ ७ ॥

सहिष्म सखल्वग्निः धन्वनिरुदकदेशम् आक्षितं तृणकाष्ठादिभिराक्षिप्तम्आदाति सर्वतःखण्डयति दहतीत्यर्थः दातातृणादिखण्डयिता पशुर्न पशुरिव पशुर्यथातृणजातंक्रमेण भक्षयतितद्वत् हिरिश्मश्रुः हिरण्यश्मश्रुः शुचिदन्दीप्तदन्तः ऋभुरुरुभवन्महानित्यर्थः अनिभृष्टतविषिः अपीडितबलः ॥ ७ ॥

अथाष्टमी–

शुचिःष्मयस्माअत्रिवत्प्रस्वधितीवरीयते ।
सुषूरसूतमाताक्राणायदानशेभगम् ॥ ८ ॥

शुचिः । स्म । यस्मै । अत्रिऽवत् । प्र । स्वधितिःऽइव । रीयते ।
सुऽसूः । असूत । माता । क्राणा । यत् । आनशे । भगम् ॥ ८ ॥

अयमग्निः शुचिष्म दीप्तःखलु यस्मैअग्नये अत्रिवदत्रिरिवयजमानः हविर्दातुं प्ररीयते प्रगच्छाति यद्वास्मेतिपूरणः शुचिर्यस्मै प्रथमार्थेचतुर्थी दीप्तोयोत्रिवत् अत्तितृणमितिअत्रिः पशुः सइव सयथातृणानिखादमानोगच्छतितद्वन्दहतीत्यर्थः स्वधितिरिव परशुरिव छिन्दन्सुषूःसुप्रसवामातारणिरसूत क्राणाकुर्वाणाजगदुपकारं यद्यस्माद्यइतिवा योग्निर्भगमन्नमानशे अश्नुते ॥ ८ ॥

अथनवमी–

आयस्तेसर्पिरासुतेग्नेशमस्तिधायसे ।
ऐषुद्युम्नमुतश्रवआचित्तंमर्त्येषुधाः ॥ ९ ॥

आ । यः । ते । सर्पिःऽआसुते । अग्ने । शम् । अस्ति । धायसे । आ ।
एषु । द्युम्नम् । उत । श्रवः । आ । चित्तम् । मर्त्येषु । धाः ॥ ९ ॥

हेसर्पिरासुते घृतारव्यान्नाग्ने यस्त्वमासर्वतोभवसि तादृशायधायसे सर्वस्यधात्रे ते तुभ्यं शमस्ति सुखमस्ति स्तुतेःसकाशात् तथाचेत् एषुमर्त्येषु स्तोतृष्वात्रेयेषु द्युम्नं यशआधाः आधेहि उतापिच श्रवोन्नमाधाः चित्तंत्वदीयानुग्रहबुद्धिमप्याधाः ॥ ९ ॥

अथदशमी–

इतिचिन्मन्युमध्रिजस्त्वादातमापशुंददे ।
आदग्नेअपृणतोत्रिःसासह्याद्दस्यूनिषःसासह्यान्नॄन् ॥ १० ॥ २५ ॥

इति। चित्। मन्युम्। अध्रिजः। त्वाऽदातम्। आ। पशुम्। ददे। आत्। अग्ने। अपृणतः। अत्रिः। ससह्यात्। दस्यून्। इषः। ससह्यात्। नॄन् ॥ १० ॥ २५ ॥

इतिचिदित्थंकृतप्रकारेण मन्युं मननसाधनं स्तोत्रम् अध्रिजः अधृतमन्यैरग्निव्यतिरिक्तैः अधृष्यंवा जनयिता ऋषिस्त्वादातं त्वयादातव्यं पशुमाददे आदत्ते आददीतवा आदनन्तरमेवाग्नेरपृणतोअददतःदस्यून् अत्रिः तद्धोत्रइषःसासह्यात् भृशमभिभवेत् इषःएष्टॄन्नॄन्विरोधिनः सासह्यात् पुनरुक्तिरादरार्था ॥ १० ॥

॥ इतितृतीयस्याष्टमेपञ्चविंशोवर्गः ॥ २५ ॥

त्वामग्नइतिसप्तर्चमष्टमंसूक्तम् आत्रेयस्यैषस्यार्षं जागतमाग्नेयं त्वामग्नेसप्तजागतमित्यनुक्रमणिका प्रातरनुवाकेआग्नेयेक्रतौजागतेछन्दस्याश्विनशस्त्रेचेदंसूक्तं तथाचसूत्रं—जनस्यगोपास्त्वामग्नऋतायवइति ।

तत्रप्रथमा—

त्वामग्नऋतायवःसमीधिरेप्रत्नंप्रत्नासऊतयेसहस्कृत ।
पुरुश्चन्द्रंयजतंविश्वधायसंदमूनसंगृहपतिंवरेण्यम् ॥ १ ॥

त्वाम्। अग्ने। ऋतऽयवः। सम्। ईधिरे। प्रत्नम्। प्रत्नासः। ऊतये। सहःऽकृत। पुरुऽचन्द्रम्। यजतम्। विश्वऽधायसम्। दमूनसम्। गृहऽपतिम्। वरेण्यम् ॥ १ ॥

हेसहस्कृत बलस्यकर्तरग्ने प्रत्नं पुरातनं त्वां प्रत्नासः पुरातनाः ऋतायवोयज्ञकामाऋषयः ऊतये स्वरक्षणाय समीधिरे सम्यग्दीपितवन्तः कीदृशंत्वां पुरुश्चन्द्रं बहुधनमतिशयेनाह्लादकंवा यजतं यष्टव्यं विश्वधायसं बहन्नं दमूनसं दानमनसं गृहपतिं यजमानगृहस्यपालकं वरेण्यं वरणीयम् ॥ १ ॥

अथद्वितीया—

त्वामग्नेअतिथिंपूर्व्यंविशःशोचिष्केशंगृहपतिंनिषेदिरे ।
बृहत्केतुंपुरुरूपंधनस्पृतंसुशर्माणंस्ववसंजरद्विषम् ॥ २ ॥

त्वाम् । अग्ने । अतिथिम् । पूर्व्यम् । विशः । शोचिःऽकेशम् ।
गृहऽपतिम् । नि । सेदिरे । बृहत्ऽकेतुम् । पुरुऽरूपम् । धनऽस्पृतम् ।
सुऽशर्माणम् । सुऽअवसम् । जरत्ऽविषम् ॥ २ ॥

हेअग्ने त्वांविशोयजमानाः गृहपतिं गृहस्वामिनं निषेदिरे गार्हपत्यरूपेणस्थापितवन्त-इत्यर्थःकीदृशंत्वाम् अतिथिमतिथिवत्पूज्यं पूर्व्यं पुरातनं शोचिष्केशं दीप्तज्वालं बृहत्केतुं प्रभूतप्रज्ञानं पुरुरूपमाहवनीयादिरूपेणबहुरूपं धनस्पृतं धनानांस्पर्तारं सुशर्माणं शोभनसुखं स्ववसं सुरक्षणं जरद्विषं जरतांवृक्षाणांव्यापकं जीर्णोदकंवा ॥ २ ॥

अग्नीनांपरस्परसंसर्गे विविचयेऽग्नयेकाचिदिष्टिः तत्रत्वामग्नेमानुषीरितियाज्या सूत्रितंच—त्वामग्नेमानुषीरीळतेविशोऽग्नआयाहिवीतयइति ।

सैषातृतीया—

त्वामग्नेमानुषीरीळतेविशोहोत्राविदंविविचिंरत्नधातमम् ।
गुहासन्तंसुभगविश्वदर्शतंतुविष्वणसंसुयजंघृतश्रियम् ॥ ३ ॥

त्वाम् । अग्ने । मानुषीः । ईळते । विशः । होत्राऽविदम् । विविचिम् ।
रत्नऽधातमम् । गुहा । सन्तम् । सुऽभग । विश्वऽदर्शतम् ।
तुविऽस्वनसम् । सुऽयजम् । घृतऽश्रियम् ॥ ३ ॥

हेअग्ने सुभग शोभनधन त्वां मानुषीर्विशः मानुषसंबन्धिन्यः सर्वाःप्रजाः ईळते स्तुवन्ति कीदृशं त्वां होत्राविदं होमानां सप्तहोत्रकाणांवावेत्तारं विविचिं विवेचकं सदसतोः रत्नधातमं रमणीयानांधनानांदातृतमं गुहा गुहायाम् अरण्यां हृदयेषु वा सन्तं सर्वदावर्तमानं विश्वदर्शतं विश्वैर्द्रष्टव्यं तुविष्वणसं प्रभूतध्वनिं सुयजं सुष्ठुयष्टारं घृतश्रियं घृतंश्रयन्तम् ॥ ३ ॥

अथचतुर्थी—

त्वामग्नेधर्णसिंविश्वधावयंगीर्भिर्गृणन्तोनमसोपसेदिम ।
सनोजुषस्वसमिधानोअङ्गिरोदेवोमर्तस्ययशसासुदीतिभिः ॥ ४ ॥

त्वाम् । अग्ने । धर्णसिम् । विश्वधा । वयम् । गीःऽभिः । गृणन्तः ।
नमसा । उप । सेदिम । सः । नः । जुषस्व । सम्ऽइधानः । अङ्गिरः ।
देवः । मर्तस्य । यशसा । सुदीतिऽभिः ॥ ४ ॥

हेअग्ने धर्णसिं सर्वस्यधारकंत्वां वयमात्रेयाः विश्वधा बहुप्रकारेण गीर्भिर्गृणन्तस्तुवन्तोनमसानमस्कारेणोपसेदिमोपसन्नाभवेम सत्वंनोस्मान् जुषस्व सेवस्व धनादिभिःसमिधानःसम्यग्दीप्तःदीप्यमानोस्माभिः हेअङ्गिरः सर्वत्रगन्तरङ्गिरसःपुत्रवा देवोदीप्यमानस्त्वं मर्तस्य यजमानस्य यशसासुदीतिभिः ज्वालाभिःसह जुषस्व ॥ ४ ॥

अथपञ्चमी—

त्वमंग्नेपुरुरूपोविशेविंशेवयोदधासिप्रत्नथापुरुष्टुत ।
पुरूण्यन्नासहंसाविराजसित्विषिःसातेतित्विषाणस्यनाधृषे ।५।

त्वम् । अग्ने । पुरुऽरूपः । विशेऽविंशे । वयः । दधासि । प्रत्नऽथा ।
पुरुऽस्तुत । पुरूणि । अन्ना । सहसा । वि । राजसि । त्विषिः ।
सा । ते । तित्विषाणस्य । न । आऽधृषे ॥ ५ ॥

हेअग्ने त्वंपुरुरूपःसन् विशेविशे सर्वस्मैयजमानाय प्रत्नथा पुराणइव वयोन्नंदधासि धारयासि हेपुरुष्टुत बहुभिःस्तुत्य पुरूणिबहून्यन्नानिचरुपुरोडाशादीनि सहसा बलेन विराजसि ईश्वरोभवसि स्वीकर्तुं तित्विषाणस्यदीप्तस्य ते तव सा प्रसिद्धात्विषिर्दीप्तिर्नाधृषे अन्यैरधृष्याभवति ॥ ५ ॥

अथषष्ठी—

त्वामंग्नेसमिधानंयविष्ठ्यदेवादूतंचक्रिरेहव्यवाहनम् ।
उरुज्रयंसंघृतयोनिमाहुतंत्वेषंचक्षुर्दधिरेचोदयन्मति ॥ ६ ॥

त्वाम् । अग्ने । सम्ऽइधानम् । यविष्ठ्य । देवाः । दूतम् । चक्रिरे ।
हव्यऽवाहनम् । उरुऽज्रयसम् । घृतऽयोनिम् । आऽहुतम् ।
त्वेषम् । चक्षुः । दधिरे । चोदयत्ऽमति ॥ ६ ॥

'हेयविष्ठयुवतमाग्ने समिधानं सम्यगिध्यमानं त्वां' देवाः हव्यवाहनं हविषांवोढारं दूतं चक्रिरे कृतवन्तः त्रयाणामग्नीनांमध्ये हव्यवाहनःखलु पूर्वेदेवैर्हविर्वहनायदूतःकृतः हव्यवाहनोदेवानामितिहिश्रुतिः । किंच उरुज्रयसं प्रभूतवेगं घृतयोनिं घृतमेवयोनिःकारणं यस्यतम् आहुतं त्वां चोदयन्मति चोदयन्तीमतिर्यस्यतच्चोदयन्मति त्वेषं दीप्तं चक्षुः उक्त-लक्षणं सर्वप्रकाशकं चक्षुःस्थानीयंकृत्वा दधिरे देवामनुष्याश्च मत्याहिचक्षुर्धोयते ॥ ६ ॥

अथसप्तमी-

त्वामग्नेप्रदिवआहुतंघृतैःसुम्नायवःसुषमिधासमीधिरे ।
सवावृधानओषधीभिरुक्षितो३भिज्रयांसिपार्थिवावितिष्ठसे।७।२६

त्वाम् । अग्ने । प्रऽदिवः । आऽहुतम् । घृतैः । सुम्नऽयवः । सुऽसमिधा । सम् । ईधिरे । सः । ववृधानः । ओषधीभिः । उक्षितः । अभि । ज्रयांसि । पार्थिवा । वि । तिष्ठसे ॥ ७ ॥ २६ ॥ ॐ ॥

हेअग्ने घृतैराहुतं त्वां प्रदिवः पुरातनाः सुम्नायवः सुखमिच्छन्तोयजमानाः सुषमिधा शोभनेनेध्मेन समीधिरे सम्यग्दीपितवन्तः सत्वं वावृधानः वर्धमानः ओषधीभिरुक्षितः सिक्तः ज्रयांस्यन्नानि पार्थिवा पार्थिवान्पृथ्वान् यद्वा पार्थिवेतिज्रयोविशेषणं पार्थिवानि चरु-पुरोडाशादिकान्यभिवितिष्ठसे अभिव्यज्यवर्तसे ॥ ७ ॥

॥ इतितृतीयस्याष्टमेषड्विंशोवर्गः ॥ २६ ॥

॥ वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

॥ इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेणसायणा-चार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येतृतीयाष्टकेष्टमोध्यायः ॥ ३ ॥ ८ ॥

## ॥ इतितृतीयाष्टकःसमाप्तः ॥ ३ ॥